नेपाल-संस्कृत-विश्वविद्यालयग्रन्थमालायाः पञ्चपञ्चाशत्तमं पुष्पम्

नवमीसिंहविरचितः

# तन्त्रचिन्तामणिः

(उत्तरभागः)

ग्रन्थसम्पादकः

**प्रा. विद्यानाथ उपाध्यायः**

प्रकाशनप्रयुक्तः सम्पादकसन्दोहः

सहप्रा.डा. माधवप्रसादलामिछाने – संयोजकः

उपप्रा. दुर्गामणिसिग्देलः – सदस्यः

उपप्रा. केशवकोइराला – सदस्यः

प्रकाशकः



**नेपालसंस्कृतविश्वविद्यालयः**

वि.सं. २०८१

प्रकाशकः

**नेपालसंस्कृतविश्वविद्यालयः**
बेलझुण्डी, दाङ

**प्रकाशनम्**
प्रथमसंस्करणम् – वि.सं. २०८१ (वैशाखपूर्णिमा)

**प्रकाशितपुस्तकानि** – ३०० प्रतिरूपाणि



**ISBN : 978-9937-1-6854-0**

मूल्य : रू. ....

**मुद्रकः**
नेपाल सरकार, सञ्चार तथा सूचना प्रविधि मन्त्रालय, मुद्रण विभाग
सिंहदरबार, काठमाडौं



# नेपाल संस्कृत विश्वविद्यालय
# Nepal Sanskrit University

बेलझुन्डी, दाङ
Beljhundi, Dang



उपकुलपतिको कार्यालय | Office of the Vice-Chancellor

Reference No.
पत्रसङ्ख्या : ३१५ (फा.नं. )
चलानी नम्बर : ३५०

मिति/Date : २०८१।०२।०६

विषय (Subject) :- **सम्मति**

नेपालका तन्त्रसाधक एवं तन्त्रविद् महामात्य नवमीसिंहद्वारा विभिन्न तन्त्रग्रन्थहरुको अनुशीलन गरी ती ग्रन्थहरुका महत्त्वपूर्ण विषयहरुलाई समेटेर सङ्ग्रहग्रन्थका रुपमा तयार पारिएको **तन्त्रचिन्तामणि** तन्त्रशास्त्रको महत्त्वपूर्ण ग्रन्थ हो ।

नेपाल परापूर्वकालदेखि नै तन्त्रसाधनाभूमिका रुपमा प्रसिद्ध छ । तन्त्रशास्त्रको अध्ययन, अध्यापन, अभ्यास र प्राचीन तन्त्रग्रन्थहरुको संरक्षण गर्ने भूमिका रुपमा नेपालको ख्याति रहँदै आएको छ । विश्वमा अन्यत्र नपाइने तन्त्रसम्बन्धी महत्त्वपूर्ण ग्रन्थहरु आज पनि नेपालमा सुरक्षित रहेका छन् । वि.सं. २०५४ मा यसै विश्वविद्यालयको अनुसन्धानकेन्द्रको ग्रन्थसम्पादन कार्यक्रमअन्तर्गत न्याय तथा तन्त्रशास्त्रका विशिष्ट विद्वान् प्रा. श्रीविद्यानाथ उपाध्यायद्वारा वैदुष्यपूर्ण भूमिका एवं अनुसन्धानपूर्ण मूलपाठसहित यस ग्रन्थको पूर्वभाग सम्पादन भई प्रकाशितसमेत भएको सन्दर्भमा यसै ग्रन्थको उत्तरभाग हाल प्रकाशित हुनु खुसीको कुरा हो । यस ग्रन्थको प्रकाशनबाट तन्त्रशास्त्रका विद्यार्थी, विद्वान्, जिज्ञासु र अनुसन्धाताहरु लाभान्वित हुने छन् भन्ने कुरामा म विश्वस्त छु ।

अन्त्यमा यस ग्रन्थका सम्पादक प्रा. श्रीविद्यानाथ उपाध्यायप्रति हार्दिक कृतज्ञता प्रकट गर्नुका साथै यस ग्रन्थको प्रकाशनोपयोगी सम्पादनका क्रममा विभिन्न मातृकाहरुको अनुशीलनद्वारा ग्रन्थलाई आकर्षक र यथासम्भव शुद्धरुपमा प्रकाशित गर्नुहुने सम्पादकसमूहका संयोजक सहप्रा. डा.माधवप्रसाद लामिछाने, उपप्रा. दुर्गामणि सिग्देल र केशव कोइरालाप्रति कृतज्ञतापूर्वक धन्यवादज्ञापन गर्दछु ।

भवदीय

यादव लामिछाने

(प्रा.डा. यादवप्रकाश लामिछाने)
उपकुलपति

उपकुलपति
...संस्कृत विश्वविद्याल...

फोन: ०८२-५२०९६४, ०८२-५२०९६५, फ्याक्स: ०८२-५२०९६४, पोस्ट बक्स नं.: ५००३
Tel. No.: 082-520964, 082-520965, Fax 082-520964, P.O. Box.No.: 5003, Website: www.nsu.edu.np



# नेपाल संस्कृत विश्वविद्यालय
# Nepal Sanskrit University

बेलझुण्डी, दाङ

Beljhundi, Dang



**शिक्षाध्यक्षको कार्यालय** | Office of the Rector

Referemnce No. : | **दिनाङ्क**/ Date २०६१/०२/०६

**पत्र सङ्ख्या :** (फा.नं. )

**चलानी नम्बर :**

**विषय** (Subject) :

## प्रकाशकीय

नेपालका ऐतिहासिक पुरुष महामात्य नवमीसिंहद्वारा विरचित तन्त्रचिन्तामणिका राष्ट्रिय अभिलेखालयमा र व्यक्तिगत सङ्ग्रहालयमा रहेका विभिन्न पाण्डुलिपिहरूको परिशीलन गरी प्रा.श्रीविद्यानाथ उपाध्यायद्वारा विस्तृत एवं सारगर्भित भूमिकाका साथ सम्पादित तन्त्रचिन्तामणि (पूर्व भाग) को प्रकाशन वि.सं. २०५४ मा यसै विश्वविद्यालयबाट भएको सन्दर्भमा यस ग्रन्थको उत्तरभाग हाल प्रकाशित हुनु ज्यादै हर्षको विषय हो ।

तन्त्रको गम्भीर अध्ययन नगरेका सामान्य व्यक्तिहरूमा तन्त्र मारण, मोहन, उच्चाटन, वशीकरण, क्षणिक चमत्कार, झारफुक, लामाधामी र जादूको विद्या हो भन्ने अपधारणा विद्यमान छ तर यथार्थमा तन्त्रशास्त्र वैदिक सिद्धान्तकै लौकिक प्रस्तार हो र पुरुषार्थचतुष्टयको प्राप्तिका लागि अत्यन्त उपयोगी सर्वसुलभ सर्वग्राह्य क्रियाप्रधान विज्ञान हो ।

नेपाल संस्कृत विश्वविद्यालयले यस प्रकृतिका वाङ्मयिक अनुसन्धानमूलक कृतिहरुको प्रकाशनलाई निरन्तरता दिने उद्देश्य लिएको छ । प्रस्तुत ग्रन्थ त्यही परम्पराको नैरन्तर्य हो । विश्वविद्यालयका संस्थापक शिक्षाध्यक्ष प्रा.उपाध्यायज्यूको स्तुत्य कर्मको प्रकाशनले नवीन पुस्तालाई खोज र अनुसन्धानमा प्रवृत्त हुने प्रेरणा अवश्य मिल्ने छ ।

**तन्त्रचिन्तामणि** नामक ग्रन्थको पूर्वभागमा बीस प्रकाश रहेको छ भने उत्तरभागमा पनि एक्काइसदेखि चालीस प्रकाशसम्म बीस प्रकाश नै रहेको छ । यस ग्रन्थको प्रकाशनोपयोगी सम्पादनमा संलग्न सम्पादक समूहका संयोजक सहप्रा. डा. श्रीमाधवप्रसाद लामिछाने, सम्पादक उपप्रा. श्रीदुर्गामणि सिग्देल र श्रीकेशव कोइराला लगायत सम्वद्ध सबैप्रति कृतज्ञताज्ञापन गर्दै धन्यवाद दिन चाहन्छु । पुनश्च: यसको सुन्दर प्रकाशन गरिदिने मुद्रण विभागका सम्वद्ध सबैप्रति सहर्ष धन्यवादज्ञापन गर्दछु ।

प्रा. डा. भीमप्रसाद खतिवडा
शिक्षाध्यक्ष
नेपाल संस्कृत विश्वविद्यालय
**शिक्षाध्यक्ष**
नेपाल संस्कृत विश्वविद्यालय

फोन नं. : ०८२-४०००३४ फ्याक्स : ०८२-४००००४, पोष्ट बक्स नं. : ५००३
Tel. No. : 082-400034, Fax : 082-400004, P.O.Box No. : 5003, Website : www.nsu.edu.np, Email : rectoroffice@nsu.edu.np/nfo@nsu.edu.np



# नेपाल संस्कृत विश्वविद्यालय
# Nepal Sanskrit University

बेलझुण्डी, दाङ

Beljhundi, Dang

कुलसचिवको कार्यालय | Office of the Registrar




Reference No.:

पत्र संख्या :

चलानी नम्बर :

मिति :- २०७८।१०।०८

**विषय : शुभकामना ।**

राजा भूपालेन्द्र मल्लको शासनकालमा महामात्य रहेका प्रसिद्ध तन्त्रसाधक नवमीसिंहले विभिन्न प्रकारका तन्त्रग्रन्थहरूको गम्भीर अनुशीलन गरी ती ग्रन्थहरूका विषयवस्तुलाई समेटेर सङ्ग्रहग्रन्थका रूपमा **तन्त्रचिन्तामणि** नामक ग्रन्थको प्रणयन गरेका हुन् । यस ग्रन्थको पूर्वभाग वि.सं. २०५४ मा न्याय तथा तन्त्रशास्त्रका विशिष्ट विद्वान् प्रा. श्री विद्यानाथ उपाध्यायद्वारा विद्वत्तापूर्ण भूमिका एवं अनुसन्धानपूर्ण मूलपाठसहित सम्पादन भई नेपाल संस्कृत विश्वविद्यालयबाट प्रकाशित भइसकेको छ । हाल यस ग्रन्थको उत्तरभाग प्रकाशित हुनु खुसीको कुरा हो ।

यस ग्रन्थका सम्पादक आदरणीय गुरू प्रा.श्री विद्यानाथ उपाध्यायप्रति हार्दिक कृतज्ञता प्रकट गर्नुका साथै यस ग्रन्थको प्रकाशनोपयोगी सम्पादनका क्रममा यस ग्रन्थका विभिन्न हस्तलिखित ग्रन्थहरूको अनुशीलन गरी ग्रन्थलाई यथासम्भव शुद्धरूपमा प्रकाशित गर्न मनोयोगपूर्वक कार्य गर्ने सम्पादकसमूहका संयोजक सहप्रा. डा. माधवप्रसाद लामिछाने, उपप्रा. दुर्गामणि सिग्देल र केशव कोइराला लगायत सम्वद्ध सबैप्रति कृतज्ञतापूर्वक धन्यवादज्ञापन गर्दछु । साथै लामो समय पश्चात् यस्ता बहुमूल्य कृति प्रकाशन गर्न पाएकोमा नेपाल संस्कृत विश्वविद्यालय गौरवान्वित भएको छ । अन्त्यमा यस ग्रन्थको सुन्दर प्रकाशनका लागि मुद्रण विभागका सम्बद्ध सबैप्रति सहर्ष धन्यवाद ज्ञापन गर्दछु ।

प्रा. माधव अधिकारी

(कुलसचिव)

कुलसचिव (रजिष्ट्रार)

नेपाल संस्कृत विश्वविद्यालय


फोन नं.:०८२-४०००३३ फ्याक्स : ०८२-४००००४ पोष्ट बक्स नं. : ५००३

Tel. No. : 082-400033 Fax : 082-400004 P.O. Box No. : 5003, Website:www.nsu.edu.np, Email: registraroffice@nsu.edu.np/i nfo@nsu.edu.np

# प्रास्ताविकम्

अथ परमेश्वरस्य परमकारुणिकस्य परात्परगुरोः श्रीपशुपतिभट्टारकस्य जगज्जनन्याः श्रीगुह्येश्वर्याश्च प्रसादतो नैपालकप्राक्तनधराधिपस्य भूपालेन्द्रमल्लस्य महामात्येन नवमीसिंहेन विरचितस्य तन्त्रचिन्तामणेरुत्तरभागो नेपालसंस्कृतविश्वविद्यालयेनाधुना प्रकाश्यत इति मोदस्य विषयः ।

जीवानामाध्यात्मिकाधिदैविकाधिभौतिकत्रिविधशूलविमोचनेच्छया भगवान् पशुपतिः स्वयं निर्गुणो निराकारोऽपि सद्योजातवामदेवतत्पुरुषाघोरेशानकालाग्निरुद्राख्यः षड्वक्त्रात्मकं मान्त्रं कलेवरं बिभ्राणो भेदप्रधानान् दश शैवागमान्, भेदाभेदप्रधानान् अष्टादश भैरवागमान् अभेदप्रधानानि चतुःषष्टितन्त्राणि च समवतारयदित्येतान्येव गुरुपरम्परया अद्यावधि लोके विश्रुतानि ।

तन्त्राणि संख्याविलोकनविधया नैकान्यपि तेषां मूलमुद्देश्यमेकमेव ब्रह्मावाप्ति-प्रयोजनभूतं निःश्रेयसम् किन्तु केचन लोकैषणापरायणाः सिद्धिकाङ्क्षिण ऐहिकसुखभोगमेव सर्वस्वं मन्यमानाः परेषामनिष्टं कामयमाना अपि तन्त्रोक्तप्रयोगाणां दुरुपयोगं विदधतीति तेषां परिणामो नैव श्रेयसे भवेद् अभिचारकर्माण्यपि तन्त्रोक्तानि कामक्रोधादिरिपुषट्कनिवारणायैवेति नास्ति सन्देहलेशोऽपि ।

अथ तन्त्रं वैदिकमवैदिकं वेति कश्चन विवादः समालोचकैः प्रस्तूयते । किन्तु तन्त्रं वेदमूलमपि वेदाधिकतया ज्ञेयमिति निर्णीतं विबुधैः। तन्त्रोक्तसाधनापद्धतेरथर्ववेदसंहि-तासूपदेशः, तन्त्रेषु औपनिषन्महावाक्यानुभवाधायकप्रयोगवर्णनम्, तान्त्रिकदेवतानां वेदवेदान्तवेद्यत्वनिवेदनं, मपञ्चकद्रव्याणां वैदिकमन्त्रैः शोधनविधानं, तान्त्रिकमन्त्रेषु प्रणवस्य समावेश इत्यादिकं नाल्पं प्रमाणं तन्त्राणां वेदाविरुद्धत्वप्रतिपादकमिति तन्त्रस्यावैदिकत्वाक्षेपः प्रलापभूत एव ।

तान्त्रिकोपासनायामधिकारो न केवलं ब्राह्मणानामपि तु शूद्रसामान्या-न्तचातुर्वर्णिकस्यैव । किन्तु सर्वेषां सर्वत्रैवाधिकार इत्यपि नैव येषां यादृशी परम्परा, यादृग् गुरुपदेशः तादृशैवाधिकारस्तेषामिति तथैव प्रयोगः सफलः सुखावहश्चेति कुलपरम्परां गुरूपदेशं चातिक्रम्य फलश्रुतिं निशम्यैव विहितः प्रयोगः सिद्धिहानिद इति साधकानामवधानविषयः । सद्गुरोः सच्छिष्येण सुदीक्षितेनाधिकारतो मन्त्रः

सुप्रयुक्त एव कामधुग् देवताप्रसादहेतुः ।

तन्त्रचिन्तामणिः प्रकृतं ग्रन्थरत्नं नैपालकमल्लवंशोद्भवनृपतेर्भूपालेन्द्रस्य महामात्येन नवमीसिंहेन विरचितं तान्त्रिकोपासनापरायणानां हितावहं स्वनामान्वर्थत्वं भजते । ग्रन्थोऽयं चत्वारिंशत्प्रकाशनिबद्धस्तत्र प्रथमो भागो विंशतिप्रकाशनिगूढः । पूर्वभागे तन्त्रसिद्धान्तानां समासेन निरूपणम्, उत्तरभागे च तद्देवतानामर्चाक्रमा व्यासेन निरूपिता इति संकेतः । नवमीसिंहो हि भूपालेन्द्रमल्लभूपतेर्महामात्यपदमलङ्कृतवान् राजनीतिविशारदोऽपि तन्त्रशास्त्रे निष्णातः श्रद्धावान् उपासकश्चेति अस्य वैशिष्ट्यम् ।

तन्त्रचिन्तामणेः प्रतिपाद्यविषयाः, ग्रन्थकृत्परिचयः, तन्मातृकाश्चाधिकृत्य विस्तृता भूमिका ग्रन्थस्यास्यैव प्रथमभागे नैपालकराष्ट्रभाषायां सहैव प्रकाशिता इत्यत्र संक्षेपेणैव चर्चा विहिता । ग्रन्थस्यास्योत्तरभागप्रकाशने नेपालसंस्कृतविश्वविद्यालयस्य वर्तमानपदाधिकारीणामुत्साहः प्रशंसनीयः । अतस्तान् कार्तज्ञं व्याहरामि । सम्पादकसन्दोहाय सहायकमित्रवृन्दाय प्रकाशनसहयोगिसंस्थायै च कृतज्ञतां प्रकाशयन् विरमामि ।

**प्रा. विद्यानाथ उपाध्यायः**
वि.सं. २०८१ वैशाखपूर्णिमा ।

# सम्पादकसन्दोहस्य भावाभिव्यक्तिः

नवमीसिंहेन अनेकविधतन्त्राणां सारमाहृत्य प्रणीतेऽस्मिन् तन्त्रचिन्तामणौ (उत्तरभागे) एकविंशतितमे प्रकाशे श्यामाया विशेषक्रमः प्रकाशितः । अस्मिन् प्रकाशे स्नानम्, स्नानलक्षणम्, स्नानकालः, वीरासनम्, मन्त्राचमनम्, भूतशुद्धिः, वर्णन्यासः, षोढान्यासः, गुह्यषोढान्यासः, तत्त्वन्यासः, बीजन्यासः, मन्त्रवर्णन्यासः, अन्तर्यागः, बहिर्यागः, कामकलाध्यानञ्चेति विषयाः प्राधान्येन निर्दिष्टाः सन्ति । द्वाविंशे प्रकाशे कर्पूरस्तवः, अस्य पुरश्चरणम्, जगन्मङ्गलकवचम्, शतनाम, ककारादिसहस्रनाम, श्रीकालीसहस्रनाम चेति विषयाः प्रकाशिताः । त्रयोविंशतितमे प्रकाशे महाकालादिमितानित्यान्तक्रमनिर्णयो निर्दिष्टः । चतुर्विंशतितमे प्रकाशे उग्रतारैकजटानीलसरस्वतीनामेकतमक्रमः प्रकाशितः । प्रकाशेऽस्मिन्नेतेषां क्रमेण मन्त्रान्, पीठपूजा, पीठमन्त्रः, वैरोचनादीनां ध्यानम्, बलिदानम्, जपः, कुल्लुकायाः आवश्यकता, नित्यजपसंख्या, मन्त्रध्यानम्, स्तोत्रमित्यादिविषयाः प्रकाशिताः । पञ्चविंशे प्रकाशे श्रीवज्रवैरोचनविद्यायाः क्रमः, मन्त्राचमनम्, षोढान्यासः, अस्या यन्त्रम्, पीठपूजा, ध्यानम्, क्रोधभैरवस्य मन्त्रः, षडङ्गन्यासः, ध्यानम्, स्तुतिः, कवचमित्यादिविषया निर्दिष्टाः । षड्विंशतितमे प्रकाशे श्रीविद्यायाः क्रमो निर्दिष्टः । अस्मिन् प्रकाशे ऋष्यादिन्यासः, दण्डिन्यादिमुद्रा, श्रीचक्रलेखनप्रकारम्, मकरन्दस्तोत्रम्, महात्रिपुरसुन्दरीकवचम्, त्रिपुरभैरवस्य मन्त्रः, ध्यानमित्यादिविषयाः प्रकाशिताः । सप्तविंशतितमे प्रकाशे त्रिपुरभैरव्याः क्रमः, महालक्ष्मीक्रमः, मातङ्गीक्रमः, भुवनेश्वरीक्रमः, धूमावतीक्रमः, बगलामुखीक्रमः प्रकाशितः । अष्टाविंशतितमे प्रकाशे चक्रपूजा, बलिदानप्रकारः, निमन्त्रणप्रकारम्, मण्डलम्, पूजाद्रव्यम्, पूजा, काम्यादौ ध्यानविशेषः, कौलिकार्चनम्, दूतियागः, शक्तीनां जातिविशेषः, विद्याविशेषे शक्तिविशेषः, चक्रस्य विशेषाचारः प्रकाशितः । एकोनत्रिंशे प्रकाशे यन्त्रनिर्माणप्रतिष्ठा, त्रिलोहानां संस्था, परिमाणः, संख्या, प्रस्तारः, यन्त्राणां ध्यानम्, सर्वसाधारणयन्त्रसंस्कारः, कौलिकादेर्विशेषः प्रकाशितः । त्रिंशे प्रकाशे अचलमाला, अस्या ध्यानम्, मालाफलम्, महामालाधिकारिणः, निर्माणप्रकारः, मालाग्रथनाधिकारिणश्चेति विषयाः प्रकाशिताः । एकत्रिंशे प्रकाशे जपर हस्यम्, मन्त्राणां सूतकादिनिर्णयः, मन्त्रविद्ययोर्भेदः, मन्त्रशिखा, मन्त्रचैतन्यम्, कालीकुल्लुका, ताराकुल्लुका, छिन्नाकुल्लुका, सुन्दरीकुल्लुका, भैरवीकुल्लुका,

मन्त्रावयवज्ञानम्, मन्त्रार्थम्, वीरपुरश्चरणम्, ग्रहणपुरश्चरणम्, अन्यप्रकारेण पुरश्चरणम्, सालसपुरश्चरणम्, मन्त्रसिद्धिदीपः, सावरमन्त्रपुरश्चरणम्, षोढान्यासपुरश्चरणम्, सहस्रनामस्तवकवचानां पुरश्चरणञ्चेत्यादयो विषयाः प्रकाशिताः। द्वात्रिंशत्तमे प्रकाशे द्वित्रिपुरश्चरणैर्मन्त्राणामसिद्धत्वे सति पुनस्तत्रोपायः, चितासाधनम्, वीरसाधनम्, प्रकारान्तरेण वीरसाधनञ्चेति विषयाः प्रकाशिताः । त्रयस्त्रिंशत्तमप्रकाशे कुलवारादिनिर्णयः, तिथिनिर्णयः, वीररात्र्यादिनिर्णयः, रहस्या-रहस्यभेदेन ग्रहणार्चनम्, दमनारोपणम्, पवित्रारोहणमित्यादयो विषयाः प्रकाशिताः। चतुस्त्रिंशत्तमे प्रकाशे शारदी तथा वासन्ती अर्चा प्रकाशिता। पञ्चत्रिंशत्तमे प्रकाशे बलिदानम्, बलिदानफलम्, जातिभेदाः, पशुलक्षणम्, निषिद्धबलिः, अनुकल्पश्चेत्यादयो विषयाः प्रकाशिताः । षट्त्रिंशत्तमे प्रकाशे कुमारीपूजनविधिः, कुमारीलक्षणम्, जातिभेदफलञ्चेति विषयाः प्रकाशिताः । सप्तत्रिंशत्तमे प्रकाशे साधारणकाम्यार्चनविधिः, प्रयोगादौ शुभाशुभविवेकगणेशप्रदीपः, विशेषकाम्यः, आसनलक्षणानि, होमद्रव्यम्, होमद्रव्यसंख्या चेति विषयाः प्रकाशिताः। अष्टत्रिंशत्तमे प्रकाशे श्यामाया विशेषप्रयोगः, ताराया विशेषप्रयोगः, छिन्नाया विशेषप्रयोगः, त्रिपुरसुन्दर्या विशेषप्रयोगः, त्रिपुरभैरव्या विशेषप्रयोगः, महालक्ष्म्या विशेषप्रयोगः, मातंग्या विशेषप्रयोगः, भुवनेश्वर्या विशेषप्रयोगः, धूमावत्या विशेषप्रयोगः, बगलाया विशेषप्रयोगश्चेत्यादयो विषयाः प्रकाशिताः । एकोनचत्वारिंशत्तमे प्रकाशे श्यामायास्तारायाश्च सर्वफलप्रद–साम्राज्यमुद्रिकादिधारणात्मकयन्त्रम्, काली–तारा–छिन्नमस्तैकसर्वसिद्धिप्रद–धारणयन्त्रम्, भैरव्या धारणयन्त्रञ्चेति विषयाः प्रकाशिताः। चत्वारिंशत्तमे प्रकाशे सर्वोपयुक्ततया मातृकावर्णानां प्रत्येकं ध्यानादिकम्, दशविद्याया मन्त्रभेदान्, दशविद्याया मन्त्रसंख्या, सन्ततिप्रदादिनानाविधप्रयोगः, वन्ध्यात्वप्रशमनप्रयोगः, श्रुतिधरमन्त्रः, सम्पत्तिप्रदमन्त्रः, रोगशान्तिमन्त्रः, शीतलाया मन्त्रः, विषहरमन्त्रः, कृत्याशान्तिमन्त्रः, अञ्जनसाधनम्, अञ्जनसिद्धिः, जातिस्मरणमन्त्रः, जलोत्पत्तिकारकगङ्गामन्त्रः, वृष्टिकारकमन्त्रः, देवतावेशमन्त्रः, मुक्त्युपायः, अन्त्येष्टिश्चेत्यादयो विषयाः प्रकाशिताः।

नेपाल-संस्कृत-विश्वविद्यालयस्योपकुलपतिः प्रा.डा. श्रीयादवप्रकाश लामिछाने महानुभावः, शिक्षाध्यक्षः प्रा.डा. श्रीभीमप्रसादखतिवडामहाभागः, कुलसचिवः प्रा.श्रीमाधवअधिकारीमहाभागश्च ग्रन्थस्यास्योत्तरभागस्य प्रकाशने समुत्साहपूर्वकं व्यवस्थापनं कृतवन्त इति तेषां सन्निधौ हार्दं कार्तज्ञमावेदयामः।

कार्यसम्पादनविधौ मूल्यवन्तं परामर्शं प्रदेभ्यः प्रा. श्रीविद्यानाथोपाध्यायमहोदयेभ्यो

वयं कार्तज्ञं समर्पयामः।

मुद्रणविधौ आत्मीयभावनया कार्यसम्पादितवते मुद्रणविभागपरिवाराय कार्तज्ञज्ञापनपुरःसरं सहर्षं धन्यवादमर्पयामः।

अन्ते च प्रकाशनकर्मणि सञ्जातानां त्रुटीनां कृते विद्वज्जनसन्निधौ क्षमायाचनपूर्वकं वाग्व्यापाराद् विरमामः।

यद्यत्र किञ्चित् स्खलितं प्रमादेन भ्रमेण वा।
तन्त्रज्ञास्तच्छोधयन्तु कस्य न स्खलितं मनः॥

२०८१ वैशाखपूर्णिमा
काष्ठमण्डपः।

विद्वद्वशंवदाः
**सहप्रा. डा. माधवप्रसादलामिछाने**
**उपप्रा. दुर्गामणिसिग्देलः**
**उपप्रा.केशवकोइराला**

# विषयसूची

# एकविंशतितमः प्रकाशः

सर्वसाधारणं धीरो उक्तमेव पुरा मया।
कल्पानि दशविद्यानां क्रमेण कथयामि तु ॥ १ ॥

**अथ श्यामाया विशेषक्रममाह**

स्नानं सन्ध्यादिकं सर्वं पूर्ववत्समुपाद्य च।
अबहिर्मानसो योगी योगभूमिं[1] तथा विशेत् ॥ २ ॥

**अथ स्थानमाह**

एकलिङ्गे श्मशाने च शून्यागारे चतुष्पथे।
तत्रस्थः साधयेद्योगी विद्यां त्रिभवमोचिनीम् ॥ ३ ॥

**एतेषां लक्षणमाह**

पञ्च क्रोशान्तरे यत्र न लिङ्गान्तरमीष्यते।
तदेकलिङ्गमाख्यातं तत्र सिद्धिरनुत्तमा ॥ ४ ॥
दह्यन्ते व्यसवो यत्र शवकीलक संकुले।
गृध्रगोमायुकाकाद्यैर्पांसुलुब्धैर्यदावृतम् ॥ ५ ॥
तच्छ्मशानमिति ख्यातं पिशाचगणसेवितम्।
काकादिगृध्रसंयुक्तं कृमि छेत्रादि[2] संयुतम् ॥ ६ ॥
नागरैर्दूरनिर्मुक्तं साध्वसोद्वेगकारणम्।
सौघसंरूढघासाढ्यं शून्यागारं तदुच्यते ॥ ७ ॥
चतुर्णां च पथां यत्र संयोगो युगपद् भवेत्।
तच्चतुष्पथमित्युक्तं रजन्यामिष्टदायकम् ॥ ८ ॥
पूर्वपूर्वमिदं शस्तं जघन्यच्चोत्तरोत्तरम्।

---

१ यागभूमिं पाठो मा. ख स एव उचितः।

२ शस्तं पा मा पा. स एवोचितः।

उज्जते पर्वते वाऽपि निर्जनं वा चतुष्पथे ॥ ९ ॥
देवागारे देवशून्ये विल्वमूले नदीतटे ।
स्वगृहे निर्जनारामे तथा चाश्वत्थसन्निधौ ॥ १० ॥
तदभावे दिव्यगेहे सिन्दूरादिभिरङ्कि‌ते ।
खड्गशूलगदाकर्त्री चामरव्यजनादिभिः ॥ ११ ॥
वितानधूपसङ्कीर्णे कृष्णागुरुसुवासिते ।
युवतीनां सुरापीनां वेश्यानां लास्यशोभिते ॥ १२ ॥
शङ्खघण्टारवाकीर्णे दीपावलिविराजिते ।
एवं पुत्रगृहे पूजा कालिकायाः सुशोभना ॥ १३ ॥

## अथ कालमाह

सर्व एव शुभः कालो नाशुभो विद्यते क्वचित् ।
न विशेषो दिवा रात्रौ सन्ध्यायामथ वा निशि ॥ १४ ॥
बलिपूजादिकं सर्वं रात्रौ तु क्रियते यदि ।
तत्तद्दक्षयतां याति कालिकायाः प्रसादतः ॥ १५ ॥
गते तु प्रथमे यामे तृतीयप्रहरावधि ।
कुलपूजा प्रकर्तव्या कुलशास्त्रविशारदैः ॥ १६ ॥
जलशङ्खं करे कृत्वा गत्वा द्वारं महेश्वरि ।
क्षालयेध्दस्तपादौ च वक्ष्यमाणेन वर्त्मना ॥ १७ ॥
ॐ वज्रोदके हूँ फट् स्वाहा मन्त्रेण मन्त्रवित् ।
जलमानीय सव्येन आसनं शोधयेत्ततः ॥ १८ ॥
प्रणवं पूर्वमुधृत्य लज्जाबीजं तथैव च ।
ततो विशुध्दान्ते सर्वपापानि शमयेति च ॥ १९ ॥
अशेषान्ते विकल्पं स्यादपनयति ततः परम् ।
कूर्चबीजं भवेन्मन्त्रः पादप्रक्षालने प्रिये ॥ २० ॥
वेदाद्यञ्च तथा माया स्वाहेत्याचमने मतम् ।
तत आचमनं कृत्वा सामान्यार्घ्यं प्रकल्पयेत् ॥ २१ ॥
त्रिकोणवृत्तभूबिम्बं त्रिकोणं रचयेत्ततः ।
आधारशक्तिं सम्पूज्य तत्राधारं विनिक्षिपेत् ॥ २२ ॥
अस्त्रमन्त्रेण संशोध्य हृन्मन्त्रेण प्रपूरयेत् ।
निःक्षिपेत्तीर्थमावाह्य गन्धाद्यं प्रणवेन तु ॥ २३ ॥

दर्शयेद्धेनुमुद्रां वै सामान्यार्घ्यमिदं स्मृतम्।
सामान्यार्घ्येण देवेशि पूजयेद्द्वारपार्श्वगान्॥ २४॥
गणेशं क्षेत्रपालं च वटुकं योगिनीं तथा।
गङ्गां च यमुनां चैव लक्ष्मीं वाणीं ततो विशेत्॥ २५॥
गां बीजाद्यं गणेशानां वामाद्यं वटुकं तथा।
क्षमाद्यं क्षेत्रपालं च यामाद्यं योगिनीं ततः॥ २६॥
ऊर्ध्वे वामे दक्षिणे च अधश्चैवं प्रकीर्त्तिताः।
प्रणवं पूर्वमुद्धृत्य सर्वविघ्नान् ततः परम्॥ २७॥
उत्सारय ततो हूँ फट् स्वाहा च तदनन्तरम्।
अनेनैव च मन्त्रेण विघ्नानुत्सारयेत्सुधीः॥ २८॥
प्रणवं पूर्वमुद्धृत्य रक्ष रक्ष तदनन्तरम्।
हूँ फट् स्वाहेति मन्त्रेण पूजाभूमिं च शोधयेत्॥ २९॥
ततः प्रवृत्तवज्रादौ प्रणवं पूर्वमुद्धरेत्।
वर्मद्वयं ततश्चैव फट् स्वाहा तदनन्तरम्॥ ३०॥
अनेनैव च मन्त्रेण कुर्याद्भूम्यभिमन्त्रणम्।
अधिष्ठानेऽपि पुष्पस्य प्रणवं पूवमुद्धरेत्॥ ३१॥
शताभिषेकेति पदं शताभीति ततः परम्।
षेकेति च पदं प्रोक्तं हूँ फट् स्वाहा ततः परम्॥ ३२॥
अनेन मनुना देव्याः पुष्पाधिष्ठानमेव च।
प्रणवं पुष्पकेतुश्च तथा राजार्हतेऽपि च ॥ ३३॥
शताय सम्यगित्युक्त्वा संबुद्धाय ततः परम्।
पुष्पे पुष्पे महापुष्पे सुपुष्पे पुष्पसम्भवे॥ ३४॥
पुष्पे च यावकीर्ण हूँ फट् स्वाहा च ततः परम्।
विशुद्धं पुष्पमेतेन जलं पूर्ववदाहरेत्॥ ३५॥
मृदुमचूडमासीनश्चान्येषु कोमलेषु वा।
विष्टरेषु समासीन साधयेत्सिद्धिमुत्तमाम्॥ ३६॥
मृतासनं विना देवि यो जपेत्कालिकां नरः।
तावत्कालं नारकीस्यादाहूतसंप्लवम्॥ ३७॥
ऋषिच्छन्द विद्यायाथ कुशान्तत्रैव दापयेत्।
मायाबीजं समुच्चार्य आधारशक्तिपूर्वकम्॥ ३८॥
कमलासन मालिख्य ङेन्तमोन्तः प्रपूजयेत्।

आकारान्तं सुरेखे च वज्ररेखे ततः परम् ॥ ३९ ॥
हूँ फट् स्वाहेति कुर्याद्वै मण्डलं तु शवासने ।
वीरासनेनोपविशेत् संपूज्यासनमेव च ॥ ४० ॥

## अथ वीरासनं यथा

एकपादमथैकस्मिन्विन्यस्योरुणि संस्थितः ।
इतरस्मिन्नथो चोरुं वीरासनमुदाहृतम् ॥ ४१ ॥

## अथ मन्त्राचमनमाह

उपविश्यासने मन्त्राचमनं सर्वसिद्धिदम् ।
कालिकाभिः स्त्रिभिः पीत्वा काल्यादिभिरुपस्पृशेत् ॥ ४२ ॥
द्वाभ्यामोष्ठौ द्विरुन्मृज्य चैकेन क्षालयेत्करम् ।
आस्य घ्राणेक्षणश्रोत्रनाभ्युरस्कं भुजौ स्पृशेत् ॥ ४३ ॥
आचम्यैवं भवेद्यस्तु वत्सरान्तां प्रपश्यति ।
ततः षोडश वर्षीयां नारीमानीय यत्नतः ॥ ४४ ॥
युवतिं वा मदोन्मत्तां सुवेशां चारुहासिनीम् ।
सदा रसे साभिलाषां सिन्दुराङ्कितमालिकाम् ॥ ४५ ॥
साधके प्रेमशीलान्तां वामे संस्थापयेद्बुधः ।
विना हेतुकमास्वाद्य क्षोभयुक्तो महेश्वरि ॥ ४६ ॥
न पूजां न जपं कुर्यान्नध्यानं नापि चिन्तनम् ।
तस्मात् भुक्त्वा च पीत्वा च पूजयेत्परमेश्वरीम् ॥ ४७ ॥
कूर्चं वियद्बिन्दुयुतं शक्त्यस्त्राय फडित्यपि ।
अनेन मनुना कुर्याद्दिग्बन्धं छोटिकादिभिः ॥ ४८ ॥
प्रणवं पूर्वमुद्धृत्य तदनन्तरमेव च ।
हूँ फट् स्वाहा मनुः प्रोक्तः कायवाक्चित्तशोधने ॥ ४९ ॥
रक्ष रक्ष हूँ फट् स्वाहा मन्त्रः स्यादात्मरक्षणे ।
ततः कृताञ्जलिपुटो वामदक्षिणपार्श्वयोः ॥ ५० ॥
गुरुं गणपतिं नत्वा पुरतः स्वेष्टदेवताम् ।
सुगन्धिपुष्पाण्यादाय चन्दनाक्तानि मन्त्रवित् ॥ ५१ ॥
ह्सौँ मन्त्रेण करयोरस्त्रमन्त्रेण मर्दयेत् ।

तत्पुष्पं वामहस्तेन समादाय च मस्तकम् ॥ ५२ ॥
भ्रामयेत्परितस्तारं जपन्नाघ्राय तत्पुनः ।
हौँ ॐ पूर्वं पठेच्छ्लोकमिमं स च निगद्यते ॥ ५३ ॥
ते सर्वे विलयं यान्तु ये मां हिंसन्ति हिंसकाः ।[३]
मृत्युरोगभयक्लेशाः पतन्तु रिपुमस्तके ॥ ५४ ॥
अस्त्रमन्त्रेण नाराचमुद्रयेशदिशि त्यजेत् ।
भूतशुद्धिं ततः कुर्यादात्मानं कुण्डलीयुतम् ॥ ५५ ॥
जीवं हंसेन संयोज्य शिवं च मध्यनाड्यया ।
पापं कुक्षिस्थितं क्रूरं वाय्वाग्निमनिलाक्षरैः ॥ ५६ ॥
शोधयेद्दाहयेदन्तः प्रक्षाल्य रेचयेद्बहिः ।
सोऽहं मन्त्रेण तामेव यथास्थानं समानयेत् ॥ ५७ ॥
ततः शुद्धशरीरोऽसौ जीवन्यासं समाचरेत् ।
अथास्या मन्त्रभूतशुद्धिमाह –
भूतशुद्धिं ततः कुर्यात्स्वमन्त्राक्षरयोगतः ॥ ५८ ॥
यथा काली तथा तारा यथा तारा तथोन्मुखी ।
भूतशुद्ध्यादिकं सर्वं तारिणीवत्समाचरेत् ॥ ५९ ॥
प्राणायामत्रयं कुर्याद्विद्यया तदनन्तरम् ।
भैरवोऽस्या[४] ऋषिः प्रोक्त उष्णिक्छन्द उदाहृतः ॥ ६० ॥
देवता कालिका प्रोक्ता लज्जाबीजं तु बीजकम् ।
शक्तिस्तु कूर्चबीजं स्यात्कीलकं तु चाद्यबीजकम् ॥ ६१ ॥
विनियोगो महेशानि चतुर्वर्गस्य सिद्धये ।
अङ्गन्यासकरन्यासौ यथावदभिधीयते ॥ ६२ ॥
षड्दीर्घभाजा बीजेन प्रणवाद्येन कल्पयेत् ।
प्रणवं चाद्यबीजं च षड्दीर्घस्वरभेदितम् ॥ ६३ ॥
कुर्यात्षडङ्गविन्यासं मूलखण्डत्रयेण च ।
वर्णन्यासं ततः कुर्याद्दिव्यभावफलप्रदम् ॥ ६४ ॥
हृद्वाहुपादयुग्मेषु सबिन्दून्मातृकाक्षरान् ।
पङ्क्तिशो विन्यसेत्पश्चाद् व्यापकन्यासमाचरेत् ॥ ६५ ॥
दोर्भ्यां च व्यापकं कुर्यान्मूलविद्यां समुच्चरन् ।

---

३ मा. ख हिंसन्ति पाठः पूर्णः, मा. क. खण्डितः ।

४ मा ख श्लोकः ६० (ख), ६१ (क), ६२ (क) न प्राप्यते ।

पादादि च शिरो अन्तं शिर आदि पदान्तकम् ॥ ६६ ॥
सकृदेवं प्रविन्यस्य साधकस्तन्मयो भवेत् ।

**अथ वर्णन्यासः**

हृदये विन्यसेद्वाऽपि अकारादि दशाक्षरम् ॥ ६७ ॥
एकारादि दश चैव परन्तु दक्षिणे भुजे ।
भुजे वामे प्रविन्यस्य ङकारादिदशाक्षरम् ॥ ६८ ॥
परन्तु दक्षिणे जङ्घे लकारादिदशं न्यसेत् ।
मकारादि क्षकारान्तं वामजङ्घे प्रविन्यसेत् ॥ ६९ ॥
इति वर्णन्यासः

**अथ षोढान्यासः**

वक्ष्ये षोडात्मकं न्यासं दुर्लभं भुवनत्रये ।
यं कृत्वा साधकश्रेष्ठो भवेद्भैरवसन्निभः ॥ ७० ॥
विन्यसेन्मातृकां पूर्वं न्यासोऽयं प्रथमः स्मृतः ।
श्रिया संपुटितं वर्णं वर्णसंपुटितां श्रियम् ॥ ७१ ॥
एवं क्रमेण विन्यस्य द्वितीयोऽयं समीरितः ।
कामसंपुटितां लक्ष्मीं लक्ष्मी संपुटितं च तम् ॥ ७२ ॥
विन्यसेन्मातृकास्थाने तृतीयोऽयं समीरितः ।
लज्जया संपुटां लक्ष्मीं श्रिया संपुटितां ह्रियम् ॥ ७३ ॥
पूर्ववन्विन्यसेन्मन्त्री न्यासस्तूर्य उदाहृतः ।
मुखवृत्तसमारूढलज्जाद्वन्द्वं नमोद्वयम् ॥ ७४ ॥
शशाङ्कशकलारूढं कामं शक्रपदे स्थितम् ।
मूल सम्पुटितं कृत्वा तत्पुटं च मनुं तथा ॥ ७५ ॥
विन्यसेदुक्तमार्गेण न्यासोऽयं पञ्चमो भवेत् ।
अनुलोमविलोमेन लिपिस्थानेषु केवलम् ॥ ७६ ॥
मूलं विन्यस्य मेधावी मूलमष्टोत्तरं शतम् ।
सञ्जप्य व्यापयेद्देहे न्यासः षष्ठोऽयमीरितः ॥ ७७ ॥
कालिकामन्त्रराजस्य षोढा न्यासोऽयमीरितः ।
एनं न्यासं ततः कुर्यात्स मन्त्री भैरवोपमः ॥ ७८ ॥

विषोऽपमृत्युहरणं ग्रहरोगविनाशनम् ।
दुष्टाः सर्वे विनश्यन्ति शत्रवो यान्ति मित्रताम् ॥ ७९ ॥
कवितालहरी तस्य द्राक्षारसपरम्परा ।
अणिमाद्यष्टसिद्धिस्तु तस्य हस्ते व्यवस्थिता ॥ ८० ॥
कायिकं वाचिकं वाऽपि मानसं यच्च दुष्कृतम् ।
सर्वं तस्य विनाशत्वं याति न्यासस्य चिन्तनात् ॥ ८१ ॥
ब्रह्महत्या क्षयं याति यत्किञ्चिदुपपातकम् ।
यद्रूपं दृश्यते यस्तु स तद्रूपं च गच्छति ॥ ८२ ॥
यं नमन्ति महादेवि षोढापुटितविग्रहा ।
अल्पायुः स भवेत्सद्यो देवता कम्पते भिया ॥ ८३ ॥
स हरः स हरिः साक्षात्स देवी नात्र संशयः ।
तारायाश्च ततोन्मुख्या इदं न्यासं समाचरेत् ॥ ८४ ॥
अणिमाद्यष्टसिद्धीनामीश्वरश्च भवेन्नरः ।

## अथ गुह्यषोढान्यासः

**ईश्वर उवाच**

श्रृणु देवि प्रवक्ष्यामि गुह्यषोढामिमां प्रिये ॥ ८५ ॥
न प्रकाश्यमिदं क्वापि यदीच्छेदात्मनो हितम् ।
कर्पूरं मातृकावर्णैः पुटितं मातृकास्थले ॥ ८६ ॥
तेनैव पुटितं वर्णं न्यासेदत्रैव पार्वति ।
कूर्चबीजयुगं देवि विन्यस्तव्यं प्रयत्नतः ॥ ८७ ॥
शक्तिबीजं तथा देवि विन्यसेन्मूलमादितः ।
दक्षिणे कालिकेत्यादि पूर्वबीजत्रयं न्यसेत् ॥ ८८ ॥
कूर्चबीजद्वयं देवि लज्जाबीजद्वयं पुनः ।
विन्यस्तव्यं तथा देवि मिलितं वह्निजायया ॥ ८९ ॥
ततस्तत्सकरं न्यास व्यापकत्वेन देवते ।
द्वाविंशत्यक्षरे मन्त्रे षोढान्यास इहोदितः ॥ ९० ॥
अयन्तु सिद्धिदो लोके तथा देवासुरेषु च ।
अवश्यं प्रत्यहं कार्यं न पूजा न जपस्तथा ॥ ९१ ॥
कृतेऽपि साधकश्रेष्ठो महादेवसमो भवेत् ।

इति ते कथितं किञ्चिद्रहस्यं घोरदक्षिणे ॥ ९२ ॥
न प्रकाश्यं कदाचित्तु देवेषु च तथा नरे।

**अथ तत्त्वन्यासः**

आत्मविद्याशिवैस्तत्त्वैस्तत्त्वन्यासं समाचरेत्। ९३ ॥

**अथ बीजन्यासः**

ब्रह्मरन्ध्रे भ्रुवोर्मध्ये ललाटे नाभिदेशके।
गुह्ये वक्त्रे तु सर्वाङ्गे सप्तबीजानि विन्यसेत् ॥ ९४ ।

**अथ मन्त्रवर्णन्यासः**

शिरसि नयनभाले भ्रूयुगे कर्णगण्डे,
वदनसनजिह्वास्कन्धदेशे गले च।
भुजहृदयसपार्श्वे पृष्ठनाभौ च रुद्रे,
कटिगुदकरपादे सर्वतो मन्त्रवर्णान् ॥ ९५ ॥
मूलेन व्यापकन्यासं नवधा कारयेत्प्रिये।
पञ्चधा नवधा वाऽपि मूलेन सप्तधा तथा ॥ ९६ ॥
ततः स्त्रीवेशधारी स्यात्सिन्दुराङ्किकतभालकः।
श्रृङ्गारोज्जववेशाढ्यस्ताम्बूलपूरिताननः ॥ ९७ ॥
एवं वेशादिकं सर्वं वनिताम्मपि कारयेत्।
पीठन्यास्ततः पश्चादाधारशक्तिपूर्वकम् ॥ ९८ ॥
प्रकृतिं कमठं चैव शेषं पृथ्वीं तथैव च।
सुधाम्बुधिं मणिद्वीपं चिन्तामणिगृहं तथा ॥ ९९ ॥
श्मशानं पारिजातं च तन्मूले रत्नवेदिकाम्।
तस्योपरि मणेः पीठं न्यासेत्साधकपुङ्गवः ॥ १०० ॥
चतुर्दिक्षु मुनीन् देवान् शवाँश्च शवमुण्डकान् ॥
धर्मादींश्चाप्यधर्मादीन् पादगात्रचतुष्टये ॥ १०१ ॥
हृदिपद्मे तथा पद्मं सूर्यसोमौ महेश्वरि।
वैश्वानरं तथा सत्त्वं रजश्चैव तमस्तथा ॥ १०२ ॥
आत्मानं चैव विन्यस्य शक्तिर्हृत्पद्मके न्यसेत्।

इच्छाज्ञानक्रिया चैव कामिनी कामदायिनी ॥ १०३ ॥
रती रतिप्रियाऽऽनन्दा कर्णिकायान्मनोन्मनी ।
वाग्भवं प्रथमं चोक्त्वा परायै तदनन्तरम् ॥ १०४ ॥
अपरायै परापरायै ह्यौर्वाच्यमतः परम् ।
सदाशिवमहाप्रेतङेन्तं पद्मासनं ततः ॥ १०५ ॥
नम इत्येव मन्त्रोऽयं पीठन्यास उदाहृतः ।
पीठपूजां ततः कुर्यात्प्रधान नवशक्तिभिः ॥ १०६ ॥
उग्रोग्रचण्डा चामुण्डा प्रचण्डा विकटोत्कटा ।
सङ्कटा चैव चण्डोग्रा तथा मङ्गलचण्डिका ॥ १०७ ॥

### अत्रान्तर्यजनम्

एवं देहमये पीठे चिन्तयेदिष्टदेवताम् ।

### अथ बहिर्यागः

एवं विन्यस्तदेहः सन् यन्त्रराजं समुद्धरेत् ॥ १०८ ॥
ताम्रपात्रे कपाले वा श्मशानकाष्ठनिर्मिते ।
शनिभौमदिने वाऽपि शरीरे मृतसम्भवे ॥ १०९ ॥
स्वर्णे रौप्ये तथा लोहे चक्रमर्च्यं विधानतः ।
आ सुरेखे वज्ररेखे हूँ फट् च वह्निबल्लभा ॥ ११० ॥
मन्त्रेणानेन विलिखेद्यन्त्रराजं मनोहरम् ।
स्वयम्भूकुसुमं कुण्डगोलोत्थं रोचनागुरुः ॥ १११ ॥
काश्मीरमृगनाभी च मद्यं च मलयोद्भवम् ।
एष गन्धः समाख्यातः सर्वदा चण्डिकाप्रियः ॥ ११२ ॥
एतेन गन्धयोगेन योनिचक्रं समालिखेत् ।
मतभेदेन श्रीकाल्या यन्त्राणि संश्रृणु प्रिये ॥ ११३ ॥
आदौ शक्तिं समुत्पाद्य शक्तीनां तु चतुष्टयम् ।
बाह्याबाह्यक्रमेणैव मध्ये बिन्दुं लिखेच्छिवे ॥ ११४ ॥
इदं विलिख्य देवेशि भूपुरैकेन संयुतम् ।
क्वचिद्भूपुरशब्देन चतुरस्रं प्रकीर्तितम् ॥ ११५ ॥
अत्र भूपुरशब्देन चतुर्द्वारात्मकं भवेत् ।

त्रिकोणत्रयमालिख्य षट्कोणं च ततोपरि[५] ॥ ११६ ॥
वृत्ताष्टदलवृत्तं च भूपुरेण समन्वितम् ।
बिन्दुमध्ये च श्रीमाया कालीयन्त्रं सुसिद्धिदम् ॥ ११७ ॥
मतमन्यच्छृणु प्राज्ञे योनिचक्रं लिखेत्सुधीः ।
योनिद्वयं ततो लिख्य षट्कोणं च ततो भवेत् ॥ ११८ ॥
ततश्चाष्टदलं पद्मं भूगृहेन समन्वितम् ।
यन्त्रमेतन्महेशानि महासाम्राज्यदायकम् ॥ ११९ ॥
आदौ योनिं समालिख्य योनिं च तद्बहिर्लिखेत् ।
योनित्रयं तद्बहिस्तु ततो वृत्तं समालिखेत् ॥ १२० ॥
ततश्चाष्टदलं पद्मं वृत्तं चैव ततोपरि[६] ।
धरणीगृहमालिख्य यन्त्रमेतन्मयोरितम् ॥ १२१ ॥
शक्तिमाद्यां समुत्पाद्य ततः शक्तिद्वयं लिखेत् ।
वह्निशक्तिं समुपाद्य बाह्यशक्ति विभेदयेत ॥ १२२ ॥
ग्रन्थिभेदक्रमेणैव  वह्निं प्रस्तारयेदधः ।
अग्निभेदक्रमेणैव शक्त्यूर्ब चापि भेदयेत् ॥ १२३ ॥
ऊर्ध्वं वह्निविभेदेन अधोग्निं[७] च विभेदयेत् ।
त्रयं योनेर्द्वयं वह्नेः कालीयन्त्रं सुसिद्धिदम् ॥ १२४ ॥
षट्कोणवृत्ताष्टदलं षडस्रं वज्रलाञ्छितम् ।
तद्बहिर्भूपुरं यन्त्रमावृत्तित्रयसंयुतम् ॥ १२५ ॥
शक्त्यग्निभ्यां च षट्कोणं तत्र योनित्रयं भवेत् ।
वृत्तमष्टदलं पद्मं भूश्चतुर्द्वारभूषितम् ॥ १२६ ॥
यन्त्रं श्रीदक्षिणाकाल्या मध्ये मायाविभूषितम् ।
मतभेदेन बीजानां निर्णयः कथ्यते श्रृणु ॥ १२७ ॥
कं विराड्रूपमित्युक्तं तद्रूपः कालिकामनुः ।
यन्त्रं तु गृहमित्युक्तं बिन्दुस्था परमेश्वरी ॥ १२८ ॥
ब्रह्मरूपो भवेद् बिन्दुस्तत्र बिन्दुं विभावयेत् ।
विराड्रूपं वह्नियुतं ततः कामकलायुतम् ॥ १२९ ॥
नादबिन्दुयुतं चेत्स्याच्चित्च्छक्तिः परिकीर्तिता ।

---

५ ततः परं पाठ उचितः ।

६ ततः परं पाठ उचितः ।

७ ह्यधोग्निं पाठ उचितः ।

विराड्बीजं क्रमेणैव बीजयन्त्रे विभावयेत् ॥ १३० ॥
पीठपूजां ततः कुर्यादाधारशक्तिपूर्विकाम् ।
ततो हृदयपद्मान्तस्फुरन्तीं विद्युदाकृतिम् ॥ १३१ ॥
देवेशेत्यादिमन्त्रेण विन्द्वानावाह्येत्सुधीः[८] ।
ततः कामकलाध्यानादावाह्य कालिकां शिवाम् ॥ १३२ ॥
कूर्माख्यमुद्रया पुष्पैश्चक्रमध्ये निधापयेत् ।

## कामकलाध्यानम्

मुखं बिन्दुवदाकारं तदधः कुचयुग्मकम् ॥ १३३ ॥
सर्वविद्यामृतापूर्णं[९] सर्वगोविभवप्रदम् ।
सर्वार्थसाधकं सर्वजनरञ्जनकारकम् ॥ १३४ ॥
तदधः सपरार्द्धं च सुपरिष्कृतमण्डलम् ।
सर्वदेवादिभूतं च सर्वदेवनमस्कृतम् ॥ १३५ ॥
सर्वाह्लादनसम्पूर्णं सर्वरञ्जनकारकम् ।
सर्वार्थसाधकं सर्वदेववश्यप्रवर्तकम् ॥ १३६ ॥
एतत्कामकलाध्यानं सुगोप्यं साधकोत्तमैः ।

## कूर्ममुद्रा यथा

वामहस्तस्थतर्जन्या दक्षिणस्य कनिष्ठया ॥ १३७ ॥
तथा दक्षिणतर्जन्यां वामाङ्गुष्ठं नियोजयेत् ।
उन्नतं दक्षिणाङ्गुष्ठं वामस्य मध्यमादिकाः ॥ १३८ ॥
अङ्गुलीर्योजयेत्पृष्ठे दक्षिणस्य करस्य च ।
वामस्य पितृतीर्थेन मध्यमानामिका तथा ॥ १३९ ॥
अधोमुखे च ते कुर्याद्दक्षिणस्य च हस्ततः ।
एवं विधः सर्वसिद्धिं ददाति करकच्छपः ॥ १४० ॥
कुर्यात्तु हृदयासन्नं निमील्य नयनद्वयम् ।
समं कार्यशिरोग्रीवं कृत्वा स्थिरंतरो बुधः ॥ १४१ ॥
ध्यानं समारभेन्मन्त्री सर्वपापप्रणासनम् ।

---

८ विन्दावावाहयेत्सुधीः पाठ उचितः ।
९ मा. ख. सर्वविद्यापूतापूर्वं सर्वदेवनमस्कृतं पाठः ।

## अथ ध्यानम्

देव्या ध्यानमथो वक्ष्ये सर्वदेवोपशोभितम् ॥ १४२ ॥
अञ्जनाद्रिनिभां देवीं करालवदनां शिवाम् ।
मुण्डमालावलीकीर्णां मुक्तकेशीं स्मिताननाम् ॥ १४३ ॥
महाकालहृदम्भोजस्थितां पीनपयोधराम् ।
विपरीतरतासक्तां घोरदंष्ट्रां शिवेन वै ॥ १४४ ॥
नागयज्ञोपवीतां च चन्द्रार्धकृतशेखराम् ।
सर्वालङ्कारयुक्तां च मुक्तामणिविभूषिताम् ॥ १४५ ॥
मृतहस्तसहस्रैस्तु बद्धकाञ्चीं दिगम्बराम् ।
शिवाकोटिसहस्रैस्तु योगिनीभिर्विराजिताम् ॥ १४६ ॥
रक्तपूर्णमुखाम्भोजां मद्यपानप्रमत्तिकाम् ।
वह्न्यर्कशशिनेत्रां च रक्तविष्फुरिताननाम् ॥ १४७ ॥
विगतासु किशोराभ्यां कृतकर्णावतंसिनीम् ।
करालवदनां घोरां मुक्तकेशीं चतुर्भुजाम् ॥ १४८ ॥
कालिकां दक्षिणां दिव्यां मुण्डमालाविभूषणाम् ।
सद्यश्छिन्नशिरः खड्गवामोर्ध्वाधः कराम्बुजाम् ॥ १४९ ॥
अभयं वरदं चैव दक्षिणाधोर्ध्वपाणिकाम् ।
महामेघप्रभां श्यामां तथैव च दिगम्बराम् ॥ १५० ॥
कण्ठावसक्तमुण्डाली गलद्रुधिरचर्चिताम् ।
कर्णावतंसतां नीतशवयुग्मभयानकाम् ॥ १५१ ॥
घोरदंष्ट्रां करालास्यां पीनोन्नतपयोधराम् ।
शवागं करसङ्घातैः कृतकाञ्चीं हसन्मुखीम् ॥ १५२ ॥
सृक्कद्वय गलद्रक्तधाराविष्फुरिताननाम् ।
घोररूपां महारौद्रीं श्मशानालयवासिनीम् ॥ १५३ ॥
दन्तुरां दक्षिणां दिव्यां मुक्तलम्बकचोच्चयाम् ।
शवरूपमहादेवहृदयोपरिसंस्थिताम् ॥ १५४ ॥
शिवाभिर्घोररावाभिश्चतुर्दिक्षु समन्विताम् ।
महाकालेन च समंभुपविष्टां रतातुराम् ॥ १५५ ॥
मुखप्रसन्ननयनां स्मेराननसरोरुहाम् ।
एवं सञ्चिन्त्य कालीन्तु श्मशानालयवासिनीम् ॥ १५६ ॥

ध्यात्वा देवीं समावाह्य योनिमुद्रां च दर्शयेत्।
खड्गमुण्डवराभातिं महायोनिंन्तु दर्शयेत् ॥ १५७ ॥

## अथ क्रमेण खड्गादिमुद्रामाह

कनिष्ठानामिके वध्वा स्वाङ्गुष्ठेनैव दक्षतः।
शेषाङ्गुली तु प्रसृते संस्पृष्टे खड्गमुद्रिका ॥ १५८ ॥
अन्तराङ्गुष्ठमुष्ठिं च कृत्वा वामकरस्य च।
मध्यमाभ्यां दक्षिणस्य त्वथालम्ब्य प्रयत्नतः ॥ १५९ ॥
मध्यमेनाथ तर्जन्यामङ्गुष्ठाग्राग्निभो ह्यतु।
दक्षिणं योजयेत्पाणिं वाममुष्ठौ तु साधकः ॥ १६० ॥
दर्शयेद्दक्षिणे भागे मुण्डमुद्रेयमुच्यते।
अधः स्थितो दक्षहस्तः प्रसृतो वरमुद्रिका ॥ १६१ ॥
ऊर्ध्वं कृतो वामहस्तः प्रसृतोऽभयमुद्रिका।
तर्जन्यनायिके मध्ये कनिष्ठे च क्रमादपि ॥ १६२ ॥
करयो र्योजयेच्चैव कनिष्ठामूलभेदतः।
अङ्गुष्ठाग्रं तु निक्षिप्य महायोनिः प्रकीर्तिता ॥ १६३ ॥

अथ विश्वस्योभयात्मकत्वाच्छक्तिं विना शिवस्य शिवं विना शक्तेश्चोपासनायां फलाभावादुभयोरेकदैव यजनमाह।
तथा च।
प्रकृत्या तु विना देवि न संसारः क्वचिद्भवेत्।
पुरुषं च विना देवि न विद्या सिद्धिदायिनी ॥ १६४ ॥
कालिकायां महाकालः सुन्दर्यां ललितेश्वरः।
तारायां च तथाऽक्षोभ्यश्छिन्नायां विकरालकः ॥ १६५ ॥
भुवनायां महादेवो धूमायां कालभैरवः।
नारायणे महालक्ष्म्यां भैरव्यां बटुकः स्मृतः ॥ १६६ ॥
मातङ्ग्यां तु मतङ्गः स्यादथवा स्यात्सदाशिवः।
मृत्युञ्जयस्तु बगलाविद्यायां परिकीर्तितः ॥ १६७ ॥
तस्मात्कारणतो देवि द्वितयं पूजयेच्छिवे।
महाकालं यजेत्पूर्वं पश्चाद्देवीं प्रपूजयेत् ॥ १६८ ॥
महाकालं यजेद्देव्या दक्षिणे धूम्रवर्णकम्।
विभ्रतं दण्डखट्वाङ्गं दंष्ट्राभीममुखं शिशुम् ॥ १६९ ॥

व्याघ्रचर्मावृतकटिं तुन्दिलं रक्तवाससम् ।
त्रिनेत्रमूर्ध्वकेशं च मुण्डमालाविभूषितम् ॥ १७० ॥
जटाभारलसच्चन्द्रखण्डमुग्रं ज्वलन्निव ।
इति ध्यात्वा महाकालमन्त्रेणैव प्रपूजयेत् ॥ १७१ ॥
कवचं स्फौं समुध्दृत्य याँ लाँ राँ वाँ च ओँ[१०] ततः ।
महाकालभैरवेति सर्वविघ्नाशयेति च ॥ १७२ ॥
नाशयेति पुनः प्रोच्य मायां लक्ष्मीं समुद्धरेत् ।
फट् स्वाहयः समायुक्तो मन्त्रः सर्वार्थसाधकः ॥ १७३ ॥
ततो देवीं पुनर्ध्यात्वा सर्वोपचारतः सुधीः ।
पूजयेन्मूलमुच्चार्य दक्षिणां कालिकां बुधः ॥ १७४ ॥
ताम्बूलान्ते त्रि सन्तर्प्य नत्वा योनिं प्रदर्शयेत् ।
देवि वामोर्ध्वाधो हस्ते खण्डं मुण्डं च पूजयेत् ॥ १७५ ॥
देव्या दक्षहस्तोर्ध्वाधः पूजयेदभयं वरम् ।
विज्ञाप्य च ततो देव्याः परिवारास्तथाऽर्चयेत् ॥ १७६ ॥
ततः षडङ्गपूजान्ते गुरुपङ्क्तिं प्रपूजयेत् ।
पाद्यादिना तथा पश्चात्पूजयेदङ्गदेवताः ॥ १७७ ॥
सर्वमन्त्रेषु पुरतः सर्वत्र सिद्धिदायकाः ।
दिव्यौघा गुरवो देव सिध्दौघा गुरवस्तथा ॥ १७८ ॥
मानवौघाः समासेन कथयामि तवाग्रतः ।
तत्रासौ कालिका देवी तस्याः श्रृणु गुरुक्रमम् ॥ १७९ ॥
महादेवी महादेवस्त्रिपुरा चैव भैरवः ।
दिव्यौघा गुरुवः प्रोक्ताः सिद्धौघान् कथयामि ते ॥ १८० ॥
ब्रह्मानन्दश्च पूर्णश्च चलचित्तश्चलम्बलः[११] ।
क्रोधतश्चैव .............[१२] वरदः स्मरदीपनः ॥ १८१ ॥
माया मायावती चैव मानवौघान् श्रृणु प्रिये ।
विमलः कुशलश्चैव भीमसेनः सुधाकरः ॥ १८२ ॥
मीनो गोरक्षनाथश्च भोडादेवः प्रजापतिः ।
मूलदेवो रन्तिदेवो विघ्नेशो वै हुताशनः ॥ १८३ ॥

---

१० मा. ख यां रां लां वां पाठः

११ चलचित्तश्च लोचन इति पाठः मा. ख ।

१२ मा. ख कुमारः इति अधिकः पाठः ।

समयानन्द सन्तोषौ कालिकागुरवः स्मृताः।
दिव्या देवान्तिके नित्यं सिद्धा भूमाविहापि च॥ १८४॥
मानवौघा मानवेषु मम रूपधराः सदा।
आनन्दनाथ शब्दान्ता गुरवः सर्वसिद्धिदाः॥ १८५॥
स्त्रियोऽपि गुरुरूपाश्चेदम्बान्ताः परिकीर्तिताः।
मानवौघान्तिके देवि स्वगुरुं परिपूजयेत्॥ १८६॥
निजगुरुं पुरो ध्यात्वा ततो गुरुचतुष्टयम्।
पूजयित्वा यजेद्देवं न च सङ्कोचमाचरेत्॥ १८७॥
गुरं परगुरुञ्चैव परापरगुरुन्तथा।
परमेष्ठिगुरुञ्चैव कथिता गुरवस्तव॥ १८८॥

## अथ गुरुणां स्थानमाह

विद्यापृष्ठे महेशानि गुरवः सन्ति सर्वदा।
काल्यास्त्रिपङ्क्तिमार्गेण देवीपृष्ठक्रमेण च॥ १८९॥
दिव्यादिक्रमयोगेन तदधः स्वगुरुत्रयम्।
दक्षोदीच्य प्रतीच्यां च रेखात्रितयकं चरेत्॥ १९०॥
दिव्यौघो देवतापृष्ठे तदन्यो तु स्थलद्वये।
विद्याया भेदभागे तु स्वगुरुं पूजयेच्छिवे॥ १९१॥
सर्वं त्वयि महेशानि गुरुस्थानं प्रकीर्तितम्।

## अथ एतस्यावश्यकतामाह

गुरुपूजां विना वत्स यदि पूजां समारभेत्॥ १९२॥
तद्दोषशमने वत्स शक्तिपूजां समारभेत्।
निर्गुणं यत्र यद्वा स्यात्सगुणं कुलपूजनात्॥ १९३॥
कुलावलोकने चैव स्यात्क्वच प्रोक्तमार्जनम्।
क्व स्नानं क्व च वाक् शुद्धिः क्व च मांसविशोधनम्॥ १९४॥
दीक्षाप्रभुः कुलीनश्च कुलं वा वटुकेश्वरः।
तद्देहे गुरुमानीय कुलरूपं गुरुं स्मरेत्॥ १९५॥
कुलं यथा गुरुस्तत्र न तथा कुलसाधकः।
गुरुक्रमं च कथितं गोपनीयं प्रयत्नतः॥ १९६॥

पशोरग्रे न चैवैषां नाम ग्राह्यं कथंचन।
अथ आवरणदेवताः पञ्चदशकोणेषु। तथा च।
ततश्च सर्वकोणेषु देवीमावाह्य पूजयेत्॥ १९७॥
ततः पूर्वादिकोणेषु वामावर्तेन पूजयेत्।
कालीं कपालिनीं कुल्लां प्रथमे तु त्रिकोणके॥ १९८॥
नीलां घनां बलाकां च द्वितीये तु त्रिकोणके।
कुरुकुल्काविरोधिन्यौ विप्रचित्तां तृतीयके॥ १९९॥
उग्रामुग्रप्रभां दीप्तां चतुर्थे तु त्रिकोणके।
मात्रां मुद्रां मितां चैव त्रिकोणे पञ्चमे यजेत्॥ २००॥
सर्वाः श्यामा असिकरा मुण्डमालाविभूषणाः।
तर्जनीं वामहस्तेन धारयन्त्यश्च सस्मिताः॥ २०१॥
त्रिस्त्रिः पूजा प्रकर्तव्याः सर्वासामपि साधकैः।

**अथाष्टदले**

ब्रह्माद्याः पूजयेत्पत्रे पत्राग्रे भैरवान् यजेत्॥ २०२॥
लोकपालाँस्ततो बाह्ये तदास्त्राणि च तद्बहिः।
बहिर्मण्डलतश्चापि ब्राह्मी नारायणी तथा॥ २०३॥
माहेश्वरी च चामुण्डा कौमारी चापराजिता।
बाराही च तथा पूज्या नारसिंही तथैव च॥ २०४॥
तारं पाशं तदा श्री च ब्राह्मी श्रीपादुकां ततः।
पूजयामि ततश्चैव ध्यायेत्तां ब्राह्मणः प्रियाम्॥ २०५॥
ब्रह्माणीं हंसमारूढां स्वर्णवर्णां चतुर्भुजाम्।
चतुर्वक्त्रां त्रिनेत्रां च कूर्चञ्च पङ्कजं तथा॥ २०६॥
दण्डं पद्माक्षसूत्रं च दधतीं चारुहासिनीम्।
जटाजूटधरीं देवीं भावयेत्साधकोत्तमः॥ २०७॥
एवं ध्यात्वा ब्रह्मपत्नीं यथाशक्त्या यजेत्प्रिये।
ॐ ईं स्मृत्वा नारायणीं श्रीपादुकां ततः परम्॥ २०८॥
पूजयामीति चोद्धृत्य ध्यायेत्तां वैष्णवीं प्रिये।
नारायणीं महादीप्तां श्यामां गरुडवाहिनीम्॥ २०९॥
नानालङ्कारसंयुक्तां चारुकेशीं चतुर्भुजाम्।
घण्टां शङ्खं कपालं च चक्रं संदधतीं पराम्॥ २१०॥

मधुमत्तमदोल्लोलदृष्टिं सर्वाङ्गसुन्दरीम् ।
इति ध्यात्वा महेशानि यत्नतो भावयेत्ततः ॥ २११ ॥
पूजयित्वा महादेवीं माहेश्वरीं यजेत्पुनः ।
सबिन्दुं ॐ समुच्चार्य माहेश्वरीं ततः प्रिये ॥ २१२ ॥
श्रीपादुकां ततश्चोक्त्वा पूजयामि ततः शिरः ।
ध्यानमस्या वरारोहे ब्रवीमि ते निशामये ॥ २१३ ॥
माहेश्वरीं वृषारूढां शुक्लां त्रिनयनान्विताम् ।
कपालं डमरुं चैव वरदाभयशूलकम् ॥ २१४ ॥
टङ्कं च दधतीं देवीं नानाभरणभूषिताम् ।
पूजयेच्च यथा शक्त्या ध्यानं कृत्वा महेश्वरीम् ॥ २१५ ॥
ॐ बीजं चामुण्डामुक्त्वा श्रीपादुकां पूजयामि ।
पूजयित्वा महादेवीं ततो ध्यानं समाचरेत् ॥ २१६ ॥
चामुण्डां चण्डहासां प्रकटितवदनां भीमवक्त्रां त्रिनेत्राम्,
नीलाम्भोजप्रभायां प्रमुदितवपुषं नारमुण्डालिमालाम् ।
खड्गं शूलं कपालं नरशिरघटितं खेटकं धारयन्तीं,
प्रेतारूढां प्रमत्तां मधुमदमुदितां भावयेच्चण्डरूपाम् ॥ २१७ ॥
एवं ध्यात्वा यजेद्देवीं चामुण्डां जगदीश्वरीम् ।
ऋँकारेण च कौमारीं संपूज्य ध्यानमाचरेत् ॥ २१८ ॥
कौमारीं कुङ्कुमाभां च त्रिनेत्रां शिखिसंस्थिताम् ।
चतुर्भुजां शक्तिपाशमङ्कुशाभयदायिनीम् ॥ २१९ ॥
नानालङ्कारसंयुक्तां प्रमत्तां परिचिन्तयेत् ।
ध्यानं कृत्वा च कौमारीं यथाशक्त्या प्रपूजयेत् ॥ २२० ॥
वाग्भवेन महादेवीं पूजयेदपराजिताम् ।
सर्वं पूर्वेण विधिना ततो ध्यानं समाचरेत् ॥ २२१ ॥
अपराजितां च पीताभामक्षमुद्रावरप्रदाम् ।
कमलं मातुलिङ्गं च दधतीं परिचिन्तयेत् ॥ २२२ ॥
एवं संपूज्य विधिवत्साधको भक्तितो यजेत् ।
ॐ कारेण सुरेशानि वाराहीं पूजयेत्तदा ॥ २२३ ॥
ध्यानमस्या निबोध त्वं वाराह्याः परमेश्वरि ।
वाराहीं धूम्रवर्णाभां वाराहवदनां शुभाम् ॥ २२४ ॥
फलकं खड्गमुशले हलं वेदभुजैर्धृताम् ।

विधिना पूजयेद्देवीं वाराहीं परमेश्वरीम् ॥ २२५ ॥
विसर्गेण नारसिंहीमर्चयेत्साधकाग्रणीः ।

नारसिंही नृसिंहस्य विभ्रती सदृशं वपुः ॥ २२६ ॥
ध्यानं तस्याः प्रवक्ष्यामि देवि ते तन्निशामय ॥ २२७ ॥
कोपादालोलजिह्वाविरतनिजमुखां सोमसूर्याग्निनेत्रां,
पादादानाभिरक्तामुपरिहृदितां भिन्नदैत्येन्द्रधात्रीम् ।
चक्रं शङ्खं च पाशाङ्कुशकुलिशगदावारणानुद्वहन्तीं,
भीमां तीक्ष्णाग्रदंष्ट्रां मणिमयमुकुटां नित्यमीडे नृसिंहीम् ॥ २२८ ॥
एवं ध्यात्वा पूजयेत्तु यथा शक्त्या महेश्वरि ॥ २२९ ॥।
अथाष्टदलाग्रे भैरवान् भैरव्यश्च ।
असिताङ्गो रुरुश्चण्डः क्रोध उन्मत्त भैरवः ॥ २३० ॥
कपाली भीषणश्चैव संहारश्चाष्टमः स्मृतः ॥ २३१ ॥

## अथैषां ध्यानम्

दधताञ्चनपुञ्जनीलवर्णान् वरवेतालकपालशूलदण्डान्,
लघुदुन्दभिसंयुतान् त्रिनेत्रान् करदण्डैः करिहस्तदण्डचण्डैः ।
गजकृत्तिनिवर्तितोत्तरीयान् भ्रुकुटीसङ्घटितैर्ललाटपट्टैः,
ललितालिकुलाभकुन्तलाग्रान् मुदितान्तःकरणान् स्वयौवनाढ्यान् ॥ २३२ ॥

## एतेषां मन्त्रो यथा

ह्रस्वार्णा बिन्दुसंयुक्ता वाङ्मायापूर्वभूषिताः ।
अथ भैरवाणां स्थाने भैरव्यश्च पूज्याः ।
भैरवीं च महासिंहां धूम्रभीमादिकां च ताम् ॥ २३३ ॥
उन्मत्तभैरवीं पश्चाद्वशीकरणभैरवीम् ।
पत्राग्रेषु यजेन्मत्री मोहनाख्यां च भैरवीम् ॥ २३४ ॥
त्रिधा त्रिधा यजेदेता रक्तमाल्यानुलेपनैः ॥ २३५ ॥

## अथ ध्यानमासाम्

उद्यद्भानुसहस्रकान्तिमरुणक्षौमां शिरोमालिकां,
रक्तालिप्तपयोधरां जपवटीं विद्यामभीतिं वरम् ।

हस्ताब्जैर्दधतीं त्रिनेत्रविलसद्वक्त्रारविन्दश्रियां,
देवीं बद्धहिमांशुरत्नमुकुटां वन्देरविन्दस्थिताम् ॥ २३६ ॥
अथ भूपुरस्योर्ध्वे लोकपालान् पूजयेत् ।
पूर्वारभ्य ईशाानान्तं दिक्पालान् पूजयेत्सुधीः ।
इन्द्रबीजं समुच्चार्य इन्द्राय तदनन्तरम् ॥ २३७ ॥
सुराधिपतये चोक्त्वा साङ्गाय तदनन्तरम् ।
सपरिवाराय च ततः सायुधाय ततोऽप्यनु ॥ २३८ ॥
सवाहनाय च ततो नमस्तेन प्रपूजयेत् ।
लँ रँ यँ क्षँ वँ यँ शँ हँ अँ कँ एवं स्वस्वबीजादिना दिक्पालान् पूजयेत् ॥ २३९ ॥

## ध्यानम्

इन्द्रं सुराधिपं पीतमैरावतगतं विभुम् ।
सहस्रनेत्रं द्विभुजं पीतं वज्रधरं भजे ॥ २४० ॥
अग्निं तेजोधिपं रक्तं श्वेतशक्तिकरं प्रभुम् ।
सुभूषणं मेषवाहं वन्दे रक्तान्तलोचनम् ॥ २४१ ॥
यमं प्रेताधिपं कृष्णं महिषोपरिसंस्थितम् ।
कालदण्डधरं क्रूरं वृतदूतैर्भयानकैः ॥ २४२ ॥
रक्षोधिपं च निऋतिं शवासन समस्थितम् ।
धूम्राभं खड्गहस्तं च पिङ्गश्मश्रुसुकूर्चकम् ॥ २४३ ॥
मकरे संस्थितं विद्युन्निभं पाशकराम्बुजम् ।
शुभ्राङ्गं तुन्दिलं वन्दे वरुणं यादसां पतिम् ॥ २४४ ॥
वायुं प्राणाधिपं धूम्रं रक्ताङ्कुशकरं परम् ।
वातप्रमीसमारूढं धावन्तं वेगतो भजे ॥ २४५ ॥
यक्षपतिं कुबेरं च शुक्लं शूलगदाधरम् ।
नरसिंहासनारूढं मेदलं चित्रिणीयुतम् ॥ २४६ ॥
विद्याधिपं नीलशूलधरं वृषभवाहनम् ।
त्रिनेत्रं भालचन्द्रं च जटाजूटधरं सितम् ॥ २४७ ॥
गौरं नागाधिपं मूर्ध्नि फणामण्डलभूषितम् ।
पीलातुङ्गं चक्रधरमनन्तं विह्यगं भजे ॥ २४८ ॥
लोकाधिपं विधातारं रक्तं पद्मकरं शुभम् ।
हसारूढं वेदपाठं कुर्वन्तं तमहं भजे ॥ २४९ ॥

**तथा**

इन्द्रोक्तविधिना सर्वं पूजयेत्परमेश्वरि ।
रक्षोवरुणयोर्मध्ये शेषनागं प्रपूजयेत् ॥ २५० ॥
ईशानशक्रयोर्मध्ये ब्रह्माणं पूजयेत्ततः ॥

## अथ लोकपालानां मुद्रा यथा

पाणिमूले सुसंलग्ने शाखाः सर्वाः प्रसारिताः ॥ २५१ ॥
लोकेशानामियं मुद्रा तेषां सर्वा सुदर्शयेत् ।

अथ भूपुरस्य बहिः दिक्पालास्त्राणि ।
तद्बहिरर्चयेद्देवि वज्रं शक्तिञ्च दण्डकम् ॥ २५२ ॥
खड्गं पाशमङ्कुशञ्च गदां त्रिशूलमेव च ।
रक्षोवरुणयोर्मध्ये चक्रं पूज्यं तथैव च ॥ २५३ ॥
ईशानशक्रयोर्मध्ये पद्मं संपूजयेत्ततः ।

अथ विशेषाभावे साधारणं क्रमाह परिवाराणाम् ।
नामाद्यवर्णबीजाश्च ङेन्तास्तास्तु नमोऽन्तिकाः ॥ २५४ ॥
श्रीपदं पूर्वमुद्धृत्य पादुकापदमुद्धरेत् ।
पूजयामि नमः पश्चात्पूजयेदङ्गदेवताः ॥ २५५ ॥
ततः पूर्वोक्तरूपां तु ध्यायेच्चैव हि दक्षिणाम् ।
योगिनीं चक्रसहितां महाकालसमन्विताम् ॥ २५६ ॥
देव्यास्तु दक्षिणे भागे महाकालं पुनर्यजेत् ।
पाद्यादिभिर्मूलदेवीं संपूज्य तर्पयेत्ततः ॥ २५७ ॥
ततो देव्यै धूपदीपौ दद्यान्नैवेद्यकं तथा ।
पुष्पाञ्जलित्रयं भक्त्या विशेषार्घ्योदकाक्षतैः ॥ २५८ ॥
देवीवामोर्ध्वाधोहस्ते खड्गं मुण्डञ्च पूजयेत् ।
देव्या दक्षहस्तोर्ध्वाधः पूजयेदभयं वरम् ॥ २५९ ॥
पुनर्मूलं समुच्चार्य साङ्गायै सपरेति च ।
वारायै नामदेव्याश्च चतुर्थ्यन्तमुदीरयेत् ॥ २६० ॥

## अथ बलिदानम्

पूजान्ते भोजनादौ च बलिं दद्यान्महेश्वरि ।

तत्रादौ महाकालबलिदानं तस्य मन्त्रो यथा ।
हूमन्ते च महाकालात् श्मशानाधिप इत्यपि ॥ २६१ ॥
इममन्ते सामिषान्नं बलिं गृह्ण युगं ततः ।
गृह्णापयपदद्वन्द्वं विघ्ननिवारणं ततः ॥ २६२ ॥
कुरु सिद्धिञ्च मे चैव प्रयच्छ स्वाहया युतः ।
महाकालाय देवाय प्रणवाद्येन दापयेत् ॥ २६३ ॥

अथ देव्या बलिदानमन्त्रोऽपि
एह्येहि जगतां माजर्जगतां जननि तथा ।
गृह्ण गृह्ण इमं नित्यं बलिदानमतः परम् ॥ २६४ ॥
सिद्धिं देहि पद द्वन्द्वं ततः शत्रुक्षयं कुरु ।
युगशब्दं समुच्चार्य ततः कूर्चयुगं पुनः ॥ २६५ ॥
हृल्लेखाद्वितयं पूर्वमन्ते च ठ-द्वयं पुनः ।
तदा मन्त्रं समुद्धृत्य फडन्ते वह्निसुन्दरी ॥ २६६ ॥
बलिदानमिदं चित्रं सर्वतन्त्रेषु गोपितम् ।
सर्वासु कालीविद्यासु यथा नाम्ना क्षिपेद्बलिम् ॥ २६७ ॥
बलिभिः साध्यते मुक्तिर्बलिभिः साध्यते दिवम् ।
बलिदानेन सततं जयेच्छत्रून् नृपान्नृपः ॥ २६८ ॥
एवं पूजां पुरा कृत्वा मूलेनैव यथाविधि ।
नैवेद्यादि यथाशक्त्या दद्याद्देव्यै पुनः पुनः ॥ २६९ ॥
ततो नीराजनं कुर्याद्दशवारं प्रदीपकैः ।
ततः समाहितं मन्त्री गुरं नत्वा शिरः स्थितम् ॥ २७० ॥
महाकालमहामन्त्रं जपेदष्टोत्तरं शतम् ।

## ईश्वर उवाच

कुल्लुकां मूर्ध्नि सञ्चित्य हृदि सेतुं विचिन्तयेत् ॥ २७१ ॥
महासेतुं विशुद्धौ च सहस्रारे समुद्धरेत् ।
मणिपूरे तु निर्वाणं महाकुण्डलिनीमतः ॥ २७२ ॥

स्वाधिष्ठाने कामराजं काकिनीं मूर्ध्नि संस्थिताम्।
विचिन्त्य विधिवद्देवि मूलाधारान्तिकाच्छिरे॥ २७३॥
विशुद्धान्तं स्मरेद्देवि विसतन्तुतनीयसीम्।
वेदस्थानाद्धि जिह्वान्तं मूलमन्त्रावृतां विभुः॥ २७४॥

## अथ दीपिनी विद्या।

कान्तातं जीवनीबीजं त्रिपदोपरिभूषितम्।
कलामनुस्वरोपेतं बीजत्रयमुदाहृतम्॥ २७५॥
तुम्बुरुञ्च ततो दद्यात्संहारं च ततः परम्।
विद्यादौ योजयेद्देवि बिन्दुत्रयकलान्वितम्॥ २७६॥
एषा तु दीपिनी विद्या सर्वाम्नायैर्नमस्कृता।
तत्प्रभापटलैर्जिह्वां प्रदीप्तां च विभावयेत्॥ २७७॥
अज्ञात्वा दीपिनीविद्यां योजयेत्कालिकां पराम्।
सोऽचिरान्मृत्युमाप्नोति मृते च नरकं व्रजेत्॥ २७८॥

## अथ मन्त्रध्यानम्

मन्त्रध्यानं प्रवक्ष्यामि जपात्सार्वज्ञदायकम्।
मन्त्रध्यानान्महेशानि सिद्ध्यन्ते ब्रह्महा यतः॥ २७९॥
मूलादि ब्रह्मरन्ध्रान्तं सर्वां विद्यां विभावयेत्।
सूर्यकोटिप्रतीकाशां योगिभिर्दृष्टिपूर्विकाम्॥ २८०॥
देवता-गुरु-मन्त्राणामैक्यं सम्भावयेद्धिया।
शवासनां जपेन्मन्त्रं सन्तुष्टः स्थिरमानसः॥ २८१॥
दन्ताक्ष्यमालया चैव राजदन्तेन मेरुणा।
मूलमन्त्रेणाथ पूर्वं न्यासान् सर्वान्समाचरेत्॥ २८२॥
अष्टोत्तरसहस्रं तु तदर्धं त्रिशतं तु वा।
अष्टोत्तरशतं वाऽपि जपेन्नित्यमनन्यधीः॥ २८३॥
तेजोमयं जपफलं देव्या हस्ते समर्पयेत्।
स्तुवन्प्रदक्षिणां[१३] कृत्य दण्डवत्प्रणमेद् भुवि॥ २८४॥
श्रीजगन्मङ्गलं नाम कवचं प्रपठेत्ततः।

---

१३ स्तुवन् इत्यतः पूर्वमीरितमित्यन्तो भागः (२८४–२९०) मा. ख. मातृकायां न प्राप्यते।

## अथ प्रदक्षिणम्

ततो वै शिरसि पुष्पं दत्त्वाऽष्टाङ्गं प्रणम्य च ॥ २८५ ॥
प्रसार्य दक्षिणं हस्तं स्वयं नम्राननं पुनः ।
दर्शयेद्दक्षिणं पार्श्वं मनसाऽपि प्रदक्षिणः ॥ २८६ ॥
त्रिधा च  वेष्टयेत् सम्यक्कालिकायाः प्रदक्षिणम् ।
स च प्रदक्षिणो ज्ञेयः सर्वदेवौघतुष्टिदः ॥ २८७ ॥
अष्टोत्तरशतं यस्तु कालिकायाः प्रदक्षिणम् ।
सर्वान्कामानवाप्नोति पश्चान्मोक्षमवाप्नुयात् ॥ २८८ ॥
तथैवं मनसा प्रोक्तं वाचिकं कायिकं तथा ।
सकलं पूर्ववत्कार्यं वामदक्षिणभेदतः ॥ २८९ ॥
अयं विशेषः कथितः सामान्यं पूर्वमीरितम् ॥ २९० ॥

*इति तन्त्रचिन्तामणौ श्रीदक्षिणकालिकाया नित्यार्चननिर्णयनामैकाविंशतितमः प्रकाशः ।*



# द्वाविंशतितमः प्रकाशः

**अथ कर्पूरस्तवमाह**

कर्पूरमध्यमान्त्यस्वरपररहितं सेन्दुवामाक्षियुक्तं,
बीजं ते मातरेतत्त्रिपुरहरवधू त्रिःकृतं ये जपन्ति।
तेषां गद्यानि पद्यानि च मुखकुहरादुल्लसन्त्येव वाचः,
स्वच्छन्दं ध्वान्तधाराधररुचिरुचिरं सर्वसिद्धिं नतानाम् ॥ १ ॥

ईशानः सेन्दुवामश्रवणपरिगतो बीजमन्यन्महेशि
द्वन्द्वान्ते मन्दचेता यदि जपति जनो वारमेकं कदाचित्।
जीत्वा वाचामधीशं धनदमपि चिरं मोहयन्नम्बुजाक्षी
बृन्दं चन्द्रार्धचूडे प्रभवति स महाघोरशावावतंसे ॥ २ ॥

ईशो वैश्वानरस्थः शशधरविलसद्वामनेत्रेण युक्तो
बीजं ते द्वन्द्वमन्यद्विगलितचिकुरे कालिके ये जपन्ति।
द्वेष्टारं घ्नन्ति ते च त्रिभुवनमपि ते वश्यभावं नयन्ति
सृक्कद्वन्द्वास्रधाराद्वयधरवदने दक्षिणे त्र्यक्षरे च ॥ ३ ॥

ऊर्ध्वं वामे कृपाणं करकमलतले छिन्नमुण्डं ततोऽधः
सव्येऽभीतिं वरं च त्रिजगदघहरे दक्षिणे कालिके च।
जप्त्वैतं नाम ये वा तव मनुविभवं भावयन्तस्तदर्थम्
तेषामष्टौकरस्थाः प्रकटितवदने सिद्धयस्त्र्यम्बकस्य ॥ ४ ॥

वर्गाद्यं वह्नियुक्तं विधुरतिललितं तत्त्रयं कूर्चयुग्मं
लज्जाद्वन्द्वं च पश्चात्स्मितमुखितदधष्ठद्वयं योजयित्वा।
मातर्ये ये जपन्ति स्मरहरमहिले भावयन्तः स्वरूपं
ते लक्ष्मीलास्यलीला कमलदलदृशः कामरूपा भवन्ति ॥ ५ ॥[1]

---

१ मा. ख. १–५ श्लोका न प्राप्यन्ते।

प्रत्येकं वा द्वयं वा त्रयमपि च परं बीजमत्यन्तगुह्यं
त्वन्नाम्ना योजयित्वा सकलमपि सदा भावयन्तो जपन्ति ।
नेत्रारविन्दे विहरति कमला वक्त्र शुभ्रांशुबिम्बे
वाग्देवी देवि मुण्डस्रगतिशयलसत्कण्ठपीनस्तनाढ्ये ॥ ६६ ॥

गतासूनां बाहुप्रकरकृतकाञ्चीपरिलस-
न्नितम्बां दिग्वस्त्रां त्रिभुवनविधात्रीं त्रिनयनाम्
श्मशानस्थे तल्पे शवहृदि महाकालसुरत-
प्रसक्तां त्वां ध्यायेज्जननि जडचेता अपि कविः ॥ ७ ॥

शिवाभिर्घोराभिः शवनिवहमुण्डास्थिनिवहैः
परं संकीर्णायां प्रकटितचितायां हरवधूं
प्रविष्टां सन्तुष्टामुपरि सुरतेनातियुवतिं
सदा त्वां ध्यायन्तीं क्वचिदपि न तेषां परिभवः ॥ ८ ॥

वदामः किं वा त्वां जननि वयमुच्चैर्जडधियो
न धाता नापीशो हरिरपि न ते वेत्ति परमम् ।
तथापि त्वद्भक्तिर्मुखरयति चास्माकमसिते
तदेतत्क्षन्तव्यं न खलु पशुरोषः समुचितः ॥ ९ ॥

समन्तादापीनस्तनजघनधृग्यौवनवती
रतासक्तो नक्तं यदि जपति भक्तस्तव मनुम् ।
विवासास्त्वां ध्यायन् गलितचिकुरस्तस्य वशगाः
समस्ताः सिद्धौघा भुवि चिरतरं जीवति कविः ॥ १० ॥[२]

समाः स्वस्थीभूतां जपति विपरीतां यदि सदा
विचिन्त्य त्वां ध्यायन्नतिशय महाकालसुरताम् ।
तदा तस्य क्षोणीतलविहरमाणस्य विदुषः
कराम्भोजे वश्या हरबधुमहासिद्धिनिवहाः ॥ ११ ॥

---

२ म. ख. प्रत्येकं वेत्यतो वक्त्रशुभ्रांशुबिम्बे इत्यन्तो भागो न प्राप्यते ।

प्रसूते संसारं जननि भवती पालयति यत्
समस्तं क्षित्यादि प्रलयसमये संहरति च।
अतस्त्वां धाताऽपि त्रिभुवनपतिः श्रीपतिरहो
महेशोऽपि प्रायः सकलमपि संस्तौति भवतीम् ॥ १२ ॥

अनेके सेवन्ते भवदधिकगीर्वाणनिवहात्
विमूढास्ते मातः किमपि न हि जानन्ति परमम्।
समाराध्यामाद्यां हरिहरविरिञ्च्यादिविबुधैः
प्रपन्नोऽस्मि स्वैरं रतिरसमहानन्दनिरताम् ॥ १३ ॥

धरित्री कीलालं शुचिरपि समीरोऽपि गगनं
त्वमेका कल्याणि गिरिशरमणी कालि सकलम्।
स्तुतिः का ते मातस्तव चरणयोर्यामगतिकं
प्रसन्ना त्वं भूयाद् भवमनुरभूयान्मय जनुः ॥ १४ ॥

श्मशानस्थः सुस्थो गलितचिकुरो दिक्पटधरः
सहस्रं त्वर्काणां निजगलितवीर्येण कुसुमं
जपन्त्वत्प्रत्येकं मनुमपि तव ध्याननिरतो
स्वेच्छाचारी स्वैरं स भवति धरित्री परिवृतः ॥ १५ ॥

गृहे संमार्जन्या परिगलितवीर्यं हि कुसुमं
समूलं मध्याह्ने वितरति चितायां कुजदिने।
समुच्चार्य प्रेम्णा मनुमपि सकृत्कालि सततं
गजारूढो याति क्षितिपरिवृढः सत्कविवरः ॥ १६ ॥

स्वपुष्पैराकीर्णं कुसुमधनुषो मन्दिरमहो
पुरो ध्यायन् ध्यायन् यदि जपति भक्तस्तव मनुम्।
सगन्धर्वश्रोणीपतिरिव कवित्वामृतनदी
नदीनः पर्यन्तं परमपदलीनः प्रभवति ॥ १७ ॥

त्रिपञ्चारे पीठे शवशिवहृदि स्मेरवदनां
महाकालेनोच्चैर्मदनरसलावण्यनिरताम् ।
समायुक्तो नक्तं स्वयमपि रतानन्दनिरतो
जनो यो ध्यायेत्त्वां जननि किल स स्यात्स्मरहरः ॥ १८ ॥

सलोमास्थिस्वैरं पललमपि मार्जारमपि वा
परं मौषं मेषं नरमहिषयोश्छागमपि वा
बलिन्ते पूजायां मयि विरलवक्त्रे वितरतां
न किं सिद्धिः सर्वा प्रतिपदमपूर्वा प्रभवति ॥ १९ ॥

वशी लक्षं मन्त्रं प्रजपति हविष्याशनरतो
दिवा मातर्युष्मच्चरणकमलध्याननिरतः ।
परं नक्तं नग्नो निधुवनविनोदेन च मनुम्
जनो लक्षं सम्यक् स्मरहरसमानः क्षितितले ॥ २० ॥

इदं स्तोत्रं मातस्तव मनु समुद्धारणजप-
स्वरूपाख्यं पादाम्बुजयुगलपूजाविधियुतम् ।
निशार्धं वा पूजा समयमधि वा यस्तु पठति
प्रलापस्तस्यापि प्रसरति कवित्वामृतरसः ॥ २१ ॥

कुरङ्गाक्षीवृन्दं तमनुसरति प्रेमतरलं
वशस्तस्य क्षोणीपतिरपि कुबेरप्रतिनिधिः ।
रिपुः कारागारं कलयति च तत्केलिकलया
चिरं जीवन्मुक्तः प्रभवति सुभक्तः प्रतिजनिः ॥ २२ ॥

*इति श्रीमहाकालकृतं कर्पूरस्तोत्रं समाप्तम्*

## अथास्य पुरश्चरणम्

कर्पूराख्यमिदं स्तोत्रं यदुक्तं भवता पुरा ।
षट्कर्मसाधनं तस्य प्रयोगं वद शङ्कर ॥ २३ ॥

### श्रीशिव उवाच

श्रृणु देवि प्रवक्ष्यामि कर्पूरस्तवसाधनम् ।
सकृत्कृतेऽपि देवेशि काली तुष्टा भवेत्सदा ॥ २४ ॥
शनिभौमदिने देवि स्नात्वा प्रयतमानसः ।
सम्पूज्य कालिकां देवीं सङ्कल्पं सम्यगाचरेत् ॥ २५ ॥
कृत्वा षोडादिकं देवि पठेत्स्तोत्रमनुत्तमम् ।
अयुतैक प्रमाणेन तद्दशांशं हुनेत् सुधीः ॥ २६ ॥
तर्पणं चाभिषेकं च ब्राह्मणान् भोजयेत्ततः ।
पश्चात्स्वकार्यसिद्ध्यर्थं प्रयागानाचरेत्तदा ॥ २७ ॥
प्रयोगमात्रे देवेशि ह्यष्टोत्तरसहस्रकम् ।
यो जपेत्सर्वकार्यार्थं कामना भेदभावितः ॥ २८ ॥[३]
आकर्षणे वशीकारे मारणोच्चाटने तथा ।
राज्ञो भये समुत्पन्ने दुर्भिक्षे शत्रुसङ्कटे ॥ २९ ॥
त्रासोत्पन्ने महेशानि रोगशोकभये तथा ।
पठेत्स्तोत्रं महाकाल्या सर्वशान्तिं प्रयच्छति ॥ ३० ॥
कुमारीपूजनं चान्ते कर्तव्यं सुसमाहितः ।
एवं कृते महेशानि सम्यक्सिद्धिर्भवेद्ध्रुवम् ॥ ३१ ॥

## अथ जगन्मङ्गलकवचम्

### भैरव्युवाच

कालीपूजा श्रुता नाथ विद्याश्च विविधाः प्रभो ।
इदानीं श्रोतुमिच्छामि कवचं पूर्वसूचितम् ॥ ३२ ॥
त्वमेव शरणं नाथ त्राहि मां दुःखसङ्कटात् ।

### श्रीभैरव उवाच

रहस्यं श्रुणु वक्ष्यामि भैरवि प्राणबल्लभे ॥ ३३ ॥
श्रीजगन्मङ्गलं नाम कवचं मन्त्रविग्रहम् ।
पठित्वा धारयित्वा च त्रैलोक्यं मोहयेत्क्षणात् ॥ ३४ ॥
नारायणोऽपि यद्धृत्वा नारी भूत्वा महेश्वरम् ।

---

३ मा. क. पत्र १७७ (क), (ख), पत्र १७८ (क), (ख) न प्राप्येते । अतः कामना इत्यादि अग्रिमो भागस्तत्र खण्डितः ।

योगे संक्षोभमन्यद्यद्धृत्वा च रघूद्वहः ॥ ३५ ॥
वरद्वातान् जघानैव रावणादीन् निशाचरान् ।[4]
यस्य प्रसादादीशोऽपि त्रैलोक्यविजयी विभुः ॥ ३६ ॥
धनाधिपः कुबेरोऽपि सुरेशोऽभूच्छचीपतिः ।
एवं हि सकला देवाः सर्वसिद्धीश्वराः प्रिये ॥ ३७ ॥
श्रीजगन्मङ्गलस्यास्य कवचस्य ऋषिः शिवः ।
छन्दोऽनुष्टुब्देवता च कालिका दक्षिणेरिता ॥ ३८ ॥
जगतां मोहने दुष्टविजये भुक्तिमुक्तिषु ।
योषिदाकर्षणे चैव विनियोगः प्रकीर्तितः ॥ ३९ ॥
शिरो मे कालिका पातु क्रींकारेकाक्षरी परा ।
क्रीं क्रीं क्रीं मे ललाटं च कालिका खड्गधारिणी ॥ ४० ॥
हूँ हूँ पातु नेत्रयुग्मं ह्रीं ह्रीं पातु श्रुती मम ।
दक्षिणे कालिके पातु घ्राणयुग्मं महेश्वरि ॥ ४१ ॥
क्रीं क्रीं क्रीं रसनां पातु हूँ हूँ पातु कपोलकम् ।
वदनं सकलं पातु ह्रीं ह्रीं स्वाहा स्वरूपिणी ॥ ४२ ॥
द्वाविंशत्यक्षरी स्कन्धौ महाविद्या शुभप्रदा ।
खड्गमुण्डधराकारी वरदाभयकारिणी ॥ ४३ ॥
विद्याभिः सकलाभिश्च सर्वाङ्गं मेऽभितोऽवतु ।
क्रीं हूँ ह्रीं त्र्यक्षरी पातु चामुण्डा हृदयं मम ॥ ४४ ॥
ऐँ हूँ ॐ ऐँ स्तनद्वन्द्वं ह्रीं फट् स्वाहा ककुस्थलम् ।
अष्टाक्षरी महाविद्या भुजौ पातु सकर्त्रिका ॥ ४५ ॥
क्रीं क्रीं हूँ हूँ ह्रीं ह्रीं करौ पातु षडक्षरी मम ।
क्रीं नाभिमध्यदेशं च दक्षिणे कालिके च तु ॥ ४६ ॥
क्रीं स्वाहा पातु पृष्ठं तु कालिका सा दशाक्षरी ।
हूँ ह्रीं दक्षिणे कालिके क्रीं हूँ पातु कटिद्वयम् ॥ ४७ ॥
कालिका द्वादशाक्षरी स्वाहा ममोरुयुग्मकम् ।
ॐ ह्रीं क्रीं मे स्वाहा पातु कालिका जानुनी सदा ॥ ४८ ॥
काली हृन्नाम विद्येयं चतुर्वर्गफलप्रदा ।
क्रीं हूँ ह्रीं पातु मे गुल्फं दक्षिणे कालिकेऽपि च ॥ ४९ ॥
क्रीं हूँ ह्रीं स्वाहा पातु चतुर्दशाक्षरी मम ।

---

४ मा. क. एतावत् पाठः पृ. १७७, १७८ यत्र भयोर्भवेत् ।

खड्गमुण्डधरी काली वरदाभयधारिणी ॥ ५० ॥
विद्याभिः सकलाभिः सा सर्वाङ्गमभितोऽवतु ।
काली कपालिनी कुल्ला कुरुकुल्ला विरोधिनी ॥ ५१ ॥
विप्रचित्ता तथोग्रोग्रप्रभा दीप्ता घनत्विषः ।
नीला घना बलाका च मात्रा मुद्रा मिता च माम् ॥ ५२ ॥
एताः सर्वाः खड्गकरा मुण्डमालाविभूषणाः ।
रक्षन्तु मां दिग्विदिक्षु ब्राह्मी नारायणी तथा ॥ ५३ ॥
माहेश्वरी च चामुण्डा कौमारी चापराजिता ।
बाराही नारसिंही च सर्वाश्चामितभूषणाः ॥ ५४ ॥
रक्षन्तु सायुधैर्दिक्षु विदिक्षूणां यथा तथा ।
इति ते कथितं दिव्यं कवचं परमाद्भूतम् ॥ ५५ ॥
श्रीजगन्मङ्गलं नाम कवचं मन्त्रविग्रहम् ।
त्रैलोक्याकर्षकं ब्रह्मकवचं मन्मुखोदितम् ॥ ५६ ॥
गुरुपूजां विधायाथ विधिवत्प्रपठेत्ततः ।
कवचं त्रिः सकृद्वाऽपि यावज्जीवं च वा पुनः ॥ ५७ ॥
एतच्छतार्धमावर्त्ये त्रैलोक्यविजयी भवेत् ।
त्रैलोक्यं क्षोभयत्येव कवचस्य प्रसादतः ॥ ५८ ॥
महाकविर्भवेन्मासात्सर्वसिद्धीश्वरो भवेत् ।
पुष्पाञ्जलीन् कालिकायै मूलेनैव पठेत्सकृत् ॥ ५९ ॥
शतवर्षसहस्राणां पूजायाः फलमाप्नुयात् ।
भूर्जे विलिखितं चैतत्स्वर्णस्थं धारयेद्यदि ॥ ६० ॥
शिखायां दक्षिणे बाहौ कण्ठे वा धारयेद्बुधः ।
त्रैलोक्यं मोहयेत्क्रोधात्त्रैलोक्यं चूर्णयेत्क्षणात् ॥ ६१ ॥
पुत्रवान् धनवान् श्रीमान् नानाविद्यानिधिर्भवेत् ।
ब्रह्मास्त्रादीनि शस्त्राणि तद्गात्रस्पर्शनात्ततः ॥ ६२ ॥
नाशमायान्ति देवेशि नात्र कार्या विचारणा ।
काकवन्ध्या च या नारी बन्ध्या वा मृतपुत्रिणी ॥ ६३ ॥
कण्ठे वा वामहस्ते वा कवचस्य च धारणात् ।
बह्वपत्या जीववत्सा भवत्येव न संशयः ॥ ६४ ॥
न देयं परशिष्येभ्यो ह्यभक्तभ्यो विशेषतः ।
शिष्येभ्यो भक्तियुक्तेभ्यश्चान्यथा मृत्युमाप्नुयात् ॥ ६५ ॥

स्पर्द्धामुद्धूय कमला वाग्देवीमन्दिरे मुखे।
पौत्रान्तं स्थैर्यमास्थाय निवसत्येव निश्चितम् ॥ ६६ ॥
इदं कवचमज्ञात्वा यो भजेत्कालिदक्षिणाम्।
शतलक्षप्रजप्तोऽपि तस्य विद्या न सिध्यति ॥ ६७ ॥
सशस्त्रघातमाप्नोति सोऽचिरान्मृत्युमाप्नुयात् ॥ ६८ ॥

*इति श्रीभैरवतन्त्रे भैरवभैरवी संवादे श्यामाकवचं समाप्तम्।*

## अथ शतनाम

**भैरव उवाच**

महाकाल प्रवक्ष्यामि देव्या अष्टोत्तरं शुभम्।
यद्गुह्यं परमं पुण्यं सर्वत्र भयनाशनम् ॥ ६९ ॥
महती चेतना माया महादेवी महेश्वरी।
महाबुद्धिर्महाचण्डा महाकाली महाकला ॥ ७० ॥
महामुद्रा महाबुद्धा महानिद्रा महोद्भवा।
महाशुभ्रा महालक्ष्मीर्महाभागा महोदया ॥ ७१ ॥
महामोहा मोहतुष्टि महामुष्टिर्महाजया।
महाधृतिर्महाघोरा महादंष्ट्रा महाधुतिः ॥ ७२ ॥
महाकान्तिर्महापद्मा महासिद्धा महातपा।
महास्वधा महोत्साहा महाबोधा महासुधा ॥ ७३ ॥
महाबन्धनसंहर्त्री महाभयविनाशिनी।
महानेत्रा महावक्त्रा महाजिह्वा महाभुजा ॥ ७४ ॥
महासहीरुहा पाणिर्महाजोषा महानखा।
महाकान्तिर्महाक्षान्तिर्महाभ्रान्तिर्महामतिः ॥ ७५ ॥
महाश्वासा महासुज्ञा महापर्वतवासिनी।
महाब्रह्ममयी माता महाकाया महारवा ॥ ७६ ॥
महास्वरा श्रीर्महती पार्वती चण्डिका शिवा।
महाकुला महालोला महामाता महाधना ॥ ७७ ॥
महालीला महाशैला महावाहा महाबला।
महाचित्ता महाचित्रा महाहेतुर्यशस्विनी ॥ ७८ ॥

महाविद्या महासाध्या महामेधा महामती ।
महाशूली महादर्पा महादुःस्वप्ननाशिनी ॥ ७९ ॥
महामोक्षप्रदा मोक्षा महादक्षा महावरी ।
महाधूम्रा महावाणी महाशोकविनाशिनी ॥ ८० ॥
महाकाला महाधारा महामाया च खेचरी ।
महाक्षेमकरी क्षम्या महैश्वर्यप्रदायिनी ॥ ८१ ॥
महाविषघ्नी विषहा महादुर्गप्रणाशिनी ।
महादुर्गा महातत्त्वा महाकैलाशवासिनी ॥ ८२ ॥
महासुतन्वी सुभगा महेज्या च महासती ।
महाप्रत्यङ्गिरा नित्या महाप्रेतकरालिनी ॥ ८३ ॥
महाशान्तिर्महामुक्तिर्महामङ्गलकारिणी ।
य इदं कीर्तयेद्भक्त्या विषमस्थो भवेद्युति ॥ ८४ ॥
लोहपञ्जरमध्यस्थस्तस्य नश्यति बन्धनम् ।
राजानो दासतां यान्ति भवेत्सर्वजनप्रियः ॥ ८५ ॥
अचला श्रियमाप्नोति तस्य नश्यन्त्युपद्रवाः ।
सङ्ग्रामे विजयेच्छत्रून् खड्गवत्पन्नगानिव ॥ ८६ ॥
न विषं क्रमते देहे न मृत्युः पावके जले ।
नाकाले मरणं तस्य कदाचित्सम्भविष्यति ॥ ८७ ॥
यं यं कामयते कामं तं तं प्राप्नोति नित्यशः ।
बहुना किमिहोक्तेन सर्वसिद्धिप्रदं नृणाम् ॥ ८८ ॥

*इति श्रीरुद्रयामले भैरवभैरवीसंवादे श्यामाऽष्टोत्तरशतनामस्तोत्रं सम्पूर्णम् ।*

## अथ ककारादि सहस्रनाम

कैलाशशिखरे रम्ये नानादेव गणावृते ।
नानावृक्षलताकीर्णे नानापक्षिरवैर्युते ॥ ८९ ॥
चतुर्मण्डलसंयुक्ते श्रृगालमण्डपस्थिते ।
समाधौ संस्थितं शान्तं क्रीडन्तं योगिनीप्रियम् ॥ ९० ॥
तत्र मौनधरं दृष्ट्वा देवी पृच्छति शङ्करम् ।

**देव्युवाच**

किं त्वया जप्यते नाथ किं त्वया स्मर्यते सदा ॥ ९१ ॥
सृष्टिः कुत्र विलीनाऽस्ति पुनः कुत्र प्रजायते ।
ब्रह्माण्डकारणं किं तत् किमाद्यं कारणं महत् ॥ ९२ ॥
मनोरथमयी सिद्धिर्वाञ्छासिद्धिस्तथा[५] शिव ।
तृतीया कल्पनासिद्धिकोटिसिद्धीश्वरत्वकम् ॥ ९३ ॥
शक्तिपाताष्टदशकं चराचरपुरी गतिः ।
महेन्द्रजालमिन्द्रादिजालानां रचना तथा ॥ ९४ ॥
अणिमा खेचरत्वं च परकायप्रवेशनम् ।
नवीनसृष्टिकरणं समुद्रशोषणं तथा ॥ ९५ ॥
अमायां चन्द्रः संदृश्यो दिवाचन्द्रप्रकाशनम् ।
चन्द्राष्टकं चाष्टदिक्षु तथा सूर्याष्टकं शिव ॥ ९६ ॥
जले जलमयत्वं च वह्नौ वह्निमयत्वकम् ।
ब्रह्मविष्ण्वादिनिर्माणमिन्द्राणां करणं परम् ॥ ९७ ॥
पादुका गुटिका पक्षिवेतालपञ्चकं तथा ।
रसायनं तथा गुप्तिस्तथैव च विलाञ्जनम् ॥ ९८ ॥
महामधुमती सिद्धिस्तथा पद्मावती शिव ।
तथा भोगवती सिद्धिर्यावन्त्यः सन्ति सिद्धयः ॥ ९९ ॥
केन मन्त्रेण तपसा कलौ पापसमाकुले ।
आयुष्य पुण्यरहिते कथं भवति तद्वद ॥ १०० ॥

**शिव उवाच**

विना मन्त्रं विनास्तोत्रं विनैव तपसा प्रिये ।
विना बलिं विनाऽभ्यासं भूतसिद्धिं विना प्रिये ॥ १०१ ॥
सिद्धिराशु भवत्येव तदेव कथ्यते महः ।
अन्ये ब्रह्माण्डगोले तु पञ्चाशच्छून्यमध्यगे ॥ १०२ ॥
पञ्चशून्ये स्थिता तारा सर्वान्ते कालिका स्थिता ।
अनन्तकोटि ब्रह्माण्डं राजदन्ताग्रके शिवे ॥ १०३ ॥
स्थाप्य शून्यालयं कृत्वा कृष्णवर्णं विधाय च ।
महानिर्गुणरूपा तु वाचातीता परा कला ॥ १०४ ॥

---

५ वाञ्छासिद्धि ...... इत्यतः पूर्वभागो मा.क. न प्राप्यते । पत्रे १७७, १७८ मा. क न प्राप्येते ।

क्रीडया शून्यरूपं तु भर्त्तारं तु प्रकल्पयेत्।
सृष्टेरारम्भकार्यार्थं छाया दृष्टा तदा तया ॥ १०५ ॥
इन्छाशक्तिस्तु सा जाता तया कालो विनिर्जितः।
प्रतिबिम्बं तत्र दृष्टं जाता ज्ञानाभिधा तु सा ॥ १०६ ॥
इदमेतत् किं विशिष्टं ज्ञानं विज्ञानकं यदा।
तदा क्रिया द्विधा जाता तदिच्छातो महेश्वरि ॥ १०७ ॥
ब्रह्माण्डगोलं देवेशि राजदन्तस्थितं तु यत्।
सा क्रिया स्थापयामास स्वस्वस्थानक्रमेण च ॥ १०८ ॥
तत्रैव स्वेच्छया देवि सामरस्यपरायणा।
यदिच्छा कथ्यते देवि यथावदवधारय ॥ १०९ ॥
युगादिसमये देवि शिवं परगुणेत्तरम्।
तदिच्छानिर्गुणं शान्तं सच्चिदानन्दविग्रहम् ॥ ११० ॥
शाश्वतं सुन्दरं शुभ्रं सर्वदेवयुतं परम्।
आदिनाथं गुणातीतं काल्या संयुतमीश्वरम् ॥ १११ ॥
विपरीतरतं देवं सामरस्यपरायणम्।
पूजार्थमागतान् देवगन्धर्वाप्सरसां गणान् ॥ ११२ ॥
यक्षिणी किन्नरी मर्त्या स्वर्वेश्याद्या तिलोत्तमा।
वीक्ष्य तन्मायया प्राह सुन्दरि प्राणबल्लभे ॥ ११३ ॥
त्रैलोक्यसुन्दरि प्राणस्वामिनि प्राणरञ्जनि।
किमागतं भवत्याद्य मम भोग्यार्णवो महान् ॥ ११४ ॥
उक्त्वा मौनधरं शम्भुं पूजयत्यप्सरो गणः।

**गन्धर्वा ऊचुः**
संहारात्तारितं देव त्वया विश्वजनप्रिय ॥ ११५ ॥
सृष्टेरारम्भकार्यार्थमुद्यतोऽसि महाप्रभो।
वश्याकृष्यमिदं देव मङ्गलार्थं प्रगायणम् ॥ ११६ ॥
प्रयाणोत्सवकाले तु समारम्भे प्रगायणम्।
युगाद्यारम्भकालो हि वर्तते मृडशङ्कर ॥ ११७ ॥
इन्द्राणीकोटयः सन्ति तस्य प्रसवबिन्दुतः।
ब्रह्माणी वैष्णवीनाञ्च माहेशीकोटिकोटयः ॥ ११८ ॥
नव सामरसादन्दं दर्शनार्थं समुद्भवाः।

सञ्जाताश्चागता देव चास्माकं सौख्यसागर ॥ ११९ ॥
रतिं हित्वा कामिनीनां नान्यं सौख्यं महेश्वर ।
सा रतिर्दृश्यतेऽस्माभिर्महत्सौख्यार्थकारिका ॥ १२० ॥
एवमेव तु चास्माभिः कर्तव्यं भर्तृणा सह ।
एवं श्रुत्वा महादेवो ध्यानावस्थितमानसः ॥ १२१ ॥
ध्यानं हित्वा भावया तु प्रोवाच कालिकां प्रति ।
कालि कालि रुण्डमाले प्रिये भैरवनादिनि ॥ १२२ ॥
शिवारूपधरे क्रूरे घोरदंष्ट्रे भयानके ।
त्रैलोक्यभक्षणकरि सुन्दर्याः सन्ति तेऽग्रतः ॥ १२३ ॥
सुन्दरीवीक्षणं कर्म कार्यं काल प्रिये शिवे ।
ध्यानं मुञ्च महादेवि ता गच्छन्ति गृहं प्रति ॥ १२४ ॥
तव रूपं महाकालि मम कालप्रियंकरम् ।
एतासां सुन्दरं रूपं त्रैलोक्यप्रियकारकम् ॥ १२५ ॥
एवं माया भ्रमाविष्टो महाकालो वदस्विति ।
इदृक्कोलवचः श्रुत्वा कालं प्राह च कालिका ॥ १२६ ॥
माययाऽऽच्छाद्य चात्मानं निजस्त्रीरूपधारिणी ।
इतः प्रभृति स्त्रीमात्रं भविष्यति युगे युगे ॥ १२७ ॥
कल्पाद्यौषधयो देवि दिवावल्लीस्वरूपताम् ।
रात्रौ स्त्रीरूपमासाद्य क्रीडन्ती च परस्परम् ॥ १२८ ॥
अज्ञानं चैव सर्वेषां भविष्यति युगे युगे ।
एवं शापं प्रदत्त्वा तु पुनः प्रोवाच कालिका ॥ १२९ ॥
विपरीतरतं कृत्वा चिन्तयन्ति भजन्ति ये ।
तेषां वरं प्रदास्यामि तत्र नित्यं वसाम्यहम् ॥ १३० ॥
इत्युक्त्वा कालिका विद्या तत्रैवान्तरधीयत ।
त्रिंशत्त्रिखर्वषड्वृन्दनवत्यर्बुदकोटयः ॥ १३१ ॥
दर्शनार्थं तपस्तेपे सा वै कुत्र गता प्रिये ।
मम प्राणप्रिया देवी हा हा प्राणप्रिये शिवे ॥ १३२ ॥
किं करोमि क्व गच्छामि इत्येवं भ्रमसङ्कुलः ।
तदा काल्याः कृपा जाता मम चिन्तापरः शिवः ॥ १३३ ॥
यन्त्रप्रस्तारबुद्धिस्तु काली ददाति सत्त्वरम् ॥
यन्त्रं जातं तदारभ्य पूर्वं चिद्घनगोचराः ॥ १३४ ॥

श्रीचक्रराजप्रस्ताररचनाऽभ्यासतत्परः।
इतस्ततो भ्राम्यमाणस्त्रैलोक्यं चक्रमध्यगम् ॥ १३५ ॥
चक्रपानं दर्शनार्थं कोट्यर्वुदयुगं गतम्।
भक्तप्राणप्रिया देवी महाश्रीचक्रनायिका ॥ १३६ ॥
तत्र बिन्दौ परं रूपं सुन्दरं सुमनोहरम्।
रूपं जातं महेशानि जाग्रत्त्रिपुरसुन्दरी ॥ १३७ ॥
रूपं दृष्ट्वा महादेवो राजराजेश्वरो ह्यभूत्।
तस्या कटाक्षमात्रेण तस्या रूपधरः शिवः ॥ १३८ ॥
विना श्रृङ्गारसंयुक्ता तदा जाता महेश्वरी।
विना काल्यंशतो देवि जगत्स्थावरजङ्गमम् ॥ १३९ ॥
न श्रृङ्गारो न शक्तित्वं क्वापि नास्ति महेश्वरि।
सुन्दर्या प्रार्थिता काली तुष्टा प्रोवाच कालिका ॥ १४० ॥
सर्वेषां नेत्रकेशेषु ममांशोऽत्र भविष्यति।
पूर्वावस्थासु देवेशि ममांशस्तिष्ठति प्रिये ॥ १४१ ॥
साऽवस्था तरुणाख्या तु तदन्तेनैव तिष्ठति।
मद्भक्तानां महेशानि सदा तिष्ठति निश्चितम् ॥ १४२ ॥
शक्तिस्तु कुण्ठिता जाता तथा रूपं न सुन्दरम्।
चिन्ताविष्टाऽति मलिना जाता तत्र तु सुन्दरी ॥ १४३ ॥
क्षणं स्थित्वा ध्यानपरा कालीचिन्तनतत्परा।
तदा काली प्रसन्नाऽभूत् तत्क्षणादेव निश्चितम् ॥ १४४ ॥
वरं ब्रूहि वरं ब्रूहि वरं ब्रूहीति सादरम्।

**सुन्दर्युवाच**

मम शक्तिं परां देहि वरोऽयं प्रार्थितो मया ॥ १४५ ॥
तादृगुपायं कथय येन शक्तिर्भविष्यति।

**काल्युवाच**

मम नाम सहस्रं च मया पूर्वं विनिर्मितम् ॥ १४६ ॥
मत्स्वरूपं ककाराख्यं महासाम्राज्यनामकम्।
वरदानाभिधं नाम क्षणार्धाद्वरदायकम् ॥ १४७ ॥
तत्पठस्व महामाये तव शक्तिर्भविष्यति।

ततः प्रभृति श्रीविद्या तन्नामपाठतत्परा ॥ १४८ ॥
तदेव नामसाहस्रं सुन्दर्याः शक्तिदायकम् ।
कथ्यते परया भक्त्या साधयस्व महेश्वरि ॥ १४९ ॥
मद्यैर्मांसैस्तथा शुक्रैः सर्वैं रक्तैस्तथा प्रिये ।
तर्पयेत्पूजयेत्कालीं विपरीतरतिं चरेत् ॥ १५० ॥
विपरीतरते देवि काली तिष्ठति नित्यशः ।
माध्वीकशुक्रपुष्पा तु मैथुनानुविरागिनी ॥ १५१ ॥
वैष्णवी व्यापका विद्या श्मशानवासिनी परा ।
वीरसाधनसन्तुष्टा वीरस्फालनिनादिनी ॥ १५२ ॥
शिवा बलिप्रहृष्टात्मा शिवारूपादिचण्डिका ।
कामानन्दपरा स्तोत्रप्रिया मत्युग्रमानसा ॥ १५३ ॥
ब्रह्मानन्दपरा सान्द्रमैथुनानन्दतोषिणी ।
योगीन्द्रहृदयागारा दिवानिशि विपर्यया ॥ १५४ ॥
विपरीता दिवानिशि विपरीतरतातुरा ।
क्षणात्तुष्टा च प्रत्यक्षा दन्तमालाजपप्रिया ॥ १५५ ॥
खड्गहस्तो मुक्तकेशो दिगम्बरविभूषितः ।
शय्यास्थो चुम्बनानन्दी वेश्यासङ्गपरायणः ॥ १५६ ॥
पठेत्सहस्रनामाख्यं मेधासाम्राज्यनामकम् ।
यथा दिव्यामृतैर्दिव्या प्रसन्ना क्षणमात्रतः ॥ १५७ ॥
तथानेन समाकाली प्रसन्ना पाठमात्रतः ।
कथ्यते नामसाहस्रं सावधानमना श्रृणु ॥ १५८ ॥
सर्वसाम्राज्यमेधाख्यो नामसाहस्रकस्य च ।
महाकालो ऋषिः प्रोक्तः उष्णिक् छन्दः प्रकीर्तितः ॥ १५९ ॥
देवता दक्षिणाकाली मायाबीजं प्रकीर्तितम् ।
हूँ शक्तिः कालिकाबीजं कीलकं परिकीर्तितम् ॥ १६० ॥
कालिका वरदानादि स्वेष्टार्थे विनियोगता ।
कर्पूरेण षडङ्गानि षड्दीर्घाद्येन कारयेत् ॥ १६१ ॥
ध्यानं च पूर्ववत्कृत्वा साधयेत् स्वेष्टसाधनम् ।

## श्रीकालीसहस्रनाम

ॐ क्रीं काली क्रूं कराली च कल्याणी कमला कला ॥ १६२ ॥

कलावती कलाख्या च कलापूज्या कलात्मिका।
कलाहृष्टा कलापुष्टा कलाकष्टा कलाकरा ॥ १६३ ॥
कलाकोटिसमाभासा कलाकेलिप्रपूजिता।
कलामयी कलाधारा कलापारा कलागमा ॥ १६४ ॥
कलाधारा कमलिनी ककारा करुणाकरी।
ककारवर्णसर्वाङ्गी कलाकोटिविभूषिता ॥ १६५ ॥
ककारकोटिगणिता ककारकोटिभूषणा।
ककारवर्णहृदया ककारमनुमण्डिता ॥ १६६ ॥
ककारवर्णमुकुटा ककारवर्णभूषिता।
क-क-क-कवर्णरूपा ककशब्दपरायणा ॥ १६७ ॥
ककवीरास्फालरता कमलाकरपूजिता।
कमलाकरनाथा च कमलाकररूपधृक् ॥ १६८ ॥
कमलाकरसिद्धिस्था कमलाकरपारदा।
कमलाकरमध्यस्था कमलाकरतोषिता ॥ १६९ ॥
कथंकार परालापा कथंकारपरायणा।
कथंकारपदान्तस्था कथंकारपदाद्यभूः ॥ १७० ॥
कमलाक्षी कमलजा कमलाक्षप्रपूजिता।
कमलाक्षपरोद्युक्ता ककारा कर्वुराक्षरा ॥ १७१ ॥
करतारा करच्छिन्ना करश्यामा कलार्णवा।
करपूज्या कररता करदाकरपूजिता ॥ १७२ ॥
करतोया करामर्शा कर्मनाशा करप्रिया।
करप्राणा करकजा करका करकान्तरा ॥ १७३ ॥
करकाचलरूपा च करकाचलशोभिनी।
करकाचलपुत्री च करकाचलतोषिणी ॥॥ १७४ ॥
करकाचलगेहस्था करकाचलरक्षिणी।
करकाचलसम्मान्या करकाचलकारिणी ॥ १७५ ॥
करकाचलवर्षाढ्या करकाचलरञ्जिता।
करकाचलकान्तारा करकाचलमालिनी ॥ १७६ ॥
करकाचलशोभाढ्या कराकमलरूपिणी।
करामलकसंस्था च करामलकसिद्धिदा ॥ १७७ ॥
करामलकसंपूज्या करामलकतारिणी।

करामलककारी च करामलकलोचनी ॥ १७८ ॥
करामलकमाला च करामलकसेविनी ।
करामलकवद्ध्येया करामलकदायिनी ॥ १७९ ॥
कञ्जनेत्रा कञ्जगतिः कञ्जस्था कञ्जधारिणी ।
कञ्जमालाप्रियकरी कञ्जरूपा च कञ्जजा ॥ १८० ॥
कञ्जजातिः कञ्जगतिः कञ्जहोमपरायणा ।
कञ्जमण्डलमध्यस्था कञ्जाभरणभूषिता ॥ १८१ ॥
कञ्जसम्माननिरता कञ्जोत्पत्तिपरायणा ।
कञ्जराशिसमाकारा कञ्जारण्यनिवासिनी ॥ १८२ ॥
करञ्जवृक्षमध्यस्था करञ्जवृक्षवासिनी ।
करञ्जफलभूषाढ्या करञ्जारण्यवासिनी ॥ १८३ ॥
करञ्जमालाभरणा करवालपरायणा ।
करवालप्रहृष्टात्मा करवालप्रियागतिः ॥ १८४ ॥
करवालप्रियाकाष्ठा करवालप्रहारिणी ।
करवालमयीकर्मा करवालप्रियंकरा ॥ १८५ ॥
कबन्धगृहमध्यस्था कबन्धवरवासिनी ।
कबन्धकाञ्चिकरिणी कबन्धशशिभूषणा ॥ १८६ ॥
कबन्धमालाजयदा कबन्धदेहवासिनी ।
कबन्धासनमान्या च कपालमालधारिणी ॥ १८७ ॥[६]
कपालमालमध्यस्था कपालव्रततोषिता ।
कपालदीपसन्तुष्टा कपालदीपरूपिणी ॥ १८८ ॥
कपालदीपवरदा कपालकज्जलस्थिता ।
कपालमालजयदा कपालजयतोषिणी ॥ १८९ ॥
कपालसिद्धिसन्तुष्टा कपालभोजनोद्यता ।
कपालयुतसंस्थाना कपालकमलालया ॥ १९० ॥
कवित्वामृतसारा च कवित्वामृतसागरा ।
कवित्वसिद्धिसंहृष्टा कवित्वदानकारिणी ॥ १९१ ॥
कविपूज्या कविगतिः कविरूपा कविप्रिया ।
कविब्रह्मानन्दरूपा कवित्वव्रततोषिता ॥ १९२ ॥

---

६ मा. ख. कबन्धमालापरणा कबन्धशशिमध्यगा । कबन्धकूटसंस्थाना कबन्धानतभूषणा । कबन्धनादसन्तुष्टा कबन्धासनधारिणी । इत्यधिकः पाठः ।

कविमानससंस्थाना कविवाञ्छाप्रपूरणी ।
कविकण्ठस्थिता कं ह्रीं कं कं कं कविपूर्त्तिदा ॥ १९३ ॥
कज्जला कज्जलादानमानसा कज्जलप्रिया ।
कपालकज्जलसमा कज्जलेश प्रपूजिता ॥ १९४ ॥
कज्जलार्णवमध्यस्था कज्जलानन्दरूपिणी ।
कज्जलप्रियसन्तुष्टा कज्जलप्रियतोषिणी ॥ १९५ ॥
कपालमालाभरणा कपालकरभूषणा ।
कपालकरभूषाढ्या कपालचक्रमण्डिता ॥ १९६ ॥
कपालकोटिनिलया कपालदुर्गकारिणी ।
कपालगिरिसंस्थाना कपालाचलवासिनी ॥ १९७ ॥
कपालपात्रसन्तुष्टा कपालार्घ्यपरायणा ।
कपालार्घ्यप्रियप्राणा कपालार्घ्यवरोद्यता ॥ १९८ ॥
कपालचक्ररूपा च कपालरूपमात्रगा ।
कदली कदलीरूपा कदलीवनवासिनी ॥ १९९ ॥
कदलीपुष्पसंप्रीता कदलीफलमानसा ।
कदलीहोमसन्तुष्टा कदलीदलनोद्यता ॥ २०० ॥
कदलीगर्भमध्यस्था कदलीवनसुन्दरी ।
कदम्बपुष्पनिलया कदम्बवनमध्यगा ॥ २०१ ॥
कदम्बकुसुमामोदा कदम्बवनतोषिणी ।
कदम्बपुष्पसंपूज्या कदम्बपुष्पहोमदा ॥ २०२ ॥
कदम्बपुष्पमध्यस्था कदम्बफलभोजिनी ।
कदम्बकाननान्तस्था कदम्बाचलवासिनी ॥ २०३ ॥
कच्छपा कच्छपाराध्या कच्छपासनसंस्थिता ।
कर्णपूरा कर्णनाशा कार्णातीकालभैरवी[७] ॥ २०४ ॥
कलप्रीता कलहदा कलहा कलहातुरा ।
कर्णपक्षी कर्णवार्ता कथनी कर्णसुन्दरी ॥ २०५ ॥
कर्णपिशाचिनी कर्णमञ्जरी कपिकच्छुदा ।
कपिकच्छुपरूपाढ्या कपिकच्छुस्वरूपिणी ॥ २०६ ॥
कस्तूरी मृगसंस्थाना कस्तूरीमृगरूपिणी ॥
कस्तूरीमृगसन्तोषा कस्तूरीमृगमध्यगा ॥ २०७ ॥

---

७ मा. ख. कार्णातीकारभैरवी पाठः।

कस्तूरीरसनीलाङ्गी कस्तूरीगन्धतोषिता ।
कस्तूरीपूजकप्राणा कस्तूरीपूजकप्रिया ॥ २०८ ॥
कस्तूरीप्रेमसन्तुष्टा कस्तूरीप्रेमधारिणी ।
कस्तूरीपूजकानन्दा कस्तूरीगन्धरूपिणी ॥ २०९ ॥
कस्तूरीमालिकारूपा कस्तूरीपूजनप्रिया ।
कस्तूरीतिलकानन्दा कस्तूरीतिलकप्रिया ॥ ११० ॥
कस्तूरीहोमसन्तुष्टा कस्तूरीतर्पणोद्यता ।
कस्तूरीमार्जनोद्युक्ता कस्तूरीचक्रपूजिता ॥ २११ ॥
कस्तूरीपुष्पसंयुक्ता कस्तूरीचर्वणोद्यता ।
कस्तूरीगर्भमध्यस्था कस्तूरीचक्रधारिणी ॥ २१२ ॥
कस्तूरीकामोदरता कस्तूरीवनवासिनी ।
कस्तूरीवनसंरक्षा कस्तूरीप्रेमधारिणी ॥ २१३ ॥
कस्तूरीशक्तिनिलया कस्तूरीकुण्डमध्यगा ।
कस्तूरीकुण्डसंस्नाता कस्तूरीकुण्डमज्जना ॥ २१४ ॥
कस्तूर्यर्घ्येण सन्तुष्टा कस्तुरीजीवधारिणी ।
कस्तूरीपरमामोदा कस्तूरीजीवनक्षमा ॥ २१५ ॥
कस्तूरीजातिभावस्था कस्तूरीगन्धचुम्बना ।
कस्तूरीगन्धसंशोभि[८]विराजितकपालभूः ॥ २१६ ॥
कस्तूरीमदनान्तस्था कस्तूरीमदहर्षदा ।
कस्तूरीकवितानाढ्या[९] कस्तूरीगृहमध्यगा ॥ २१७ ॥
कस्तूरीस्पर्शकप्राणा कस्तूरीनिन्दकान्तका ।
कस्तूर्यामोदरसिका कस्तूरीक्रीडनोद्यता ॥ २१८ ॥
कस्तूरीदाननिरता कस्तूरीवरदायिनी ।
कस्तूरीस्थापनाशक्ता कस्तूरीस्थानरञ्जिनी[१०] ॥ २१९ ॥
कस्तूरीकुशलप्रश्ना कस्तूरीस्तुतिवन्दिता ।
कस्तूरीवन्दकाधारा कस्तूरीस्थानवासिनी ॥ २२० ॥
कहरूपा कहाढ्या च कहानन्दा कहात्मभूः ।
कहपूज्या कहेत्याख्या कहहर्षा कहात्मिका ॥ २२१ ॥
कहमाला कण्ठभूषा कहमन्त्रजपोद्यता ।

८ मा./ क संशोभी पाठः ।

९ मा. ख कस्तूरिका विना नाढ्या पाठः ।

१० मा. ख रञ्जनी पाठः ।

कहनामस्मृतिपरा कहनामपरायणा ॥ २२२ ॥
कहपारायणरसा कहदेवी कहेश्वरी।
कहहेतुः कहानन्दा कहनादपरायणा ॥ २२३ ॥
कहमाता कहान्तस्था कहमन्त्रा कहेश्वरा।
कहगोत्रा कहाराढ्या कहध्यानपरायणा ॥ २२४ ॥
कहतन्त्रा कहकहा कहचर्चापरायणा।
कहाचारकहगतिः कहताण्डवकारिणी ॥ २२५ ॥
कहारण्या कहगतिः कहशक्तिपरायणा।
कहराज्यरता कर्मसाक्षिणी कर्मसुन्दरी ॥ २२६ ॥
कर्मविद्या कर्मगतिः कर्मतन्त्रपरायणा।
कर्ममात्रा कर्मयात्रा कर्मशर्मपरायणा ॥ २२७ ॥
कर्मरेखानाशकर्त्री कर्मरेखाविनोदिनी।
कर्मरेखामोहकरी कर्मकीर्तिपरायणा ॥ २२८ ॥
कर्मविद्या कर्मखरा कर्माधारा च कर्मभूः।
कर्मकारी कर्मकरी कर्मकौतुकसुन्दरी ॥ २२९ ॥
कर्मकाली कर्मतारा कर्मच्छिन्ना च कर्मदा।
कर्मचाण्डालिनी कर्मवेदमाता[११] च कर्मभूः ॥ २३० ॥
कर्मकाण्डरताऽनन्ता कर्मकाण्डानुमानिता।
कर्मकाण्डपरीणाहा कमठा कमठाकृतिः ॥ २३१ ॥
कमठाराध्यहृदया कमठाकण्ठसुन्दरी।
कमठासनसंसेव्या कमठीकर्मतत्परा ॥ २३२ ॥
करुणाकरकान्ता च करुणाकरवन्दिता।
कठोराकरमाला च कठोरकुचधारिणी ॥ २३३ ॥
कपर्दिनी कपटिनी कठिनी कङ्कभूषणा।
करमोदः कठिनदा कलभाकरमालया ॥ २३४ ॥
कलभाषामयी कल्पा कल्पना कल्पदायिनी।
कमलस्था कलामाला कमलास्या कणप्रभा ॥ २३५ ॥
ककुद्मिनी कष्टवती कच्छा कच्छार्चिता कजा।
कचर्चिता करतनुः कचसुन्दरधारिणी ॥ २३६ ॥
कठोरकुचसंलग्ना कटिसूत्रविराजिता।

---

११ मा. ख. कर्मदिवमाता पाठः।

कणभक्षप्रिया कन्दा कथा कन्दगतिः कलिः ॥ २३७ ॥
कलिघ्नी कलिदूती च कविनायकपूजिता ।
कशाकक्षानियन्ता च कश्चित्कविवरार्चिता ॥ २३८ ॥
कर्त्री च कर्त्रिकाभूषा करणी कर्णशत्रुपा ।
करणेशी करणदा कलनाञ्जनभूषिता ॥ २३९ ॥
करणेशी करणदा करणाम्बा कलानिधिः ।
कलदा कलनाधारा करिका करका करा ॥ २४० ॥
कलगेया कर्कराशिः कर्कराक्षिप्रपूजिता ।
कन्याराशिः कन्यका च कन्यकाप्रियभाषिणी ॥ २४१ ॥
कन्यादानकरानन्दा कन्यादानग्रहेष्टदा ।
कन्यकादानसन्तुष्टा कन्यादानप्रतोषिणी ॥ २४२ ॥
कर्षणा कक्षदहना कमिता कमितासना ॥
करमालानन्दवर्त्री करमालाप्रतोषिता ॥ २४३ ॥
करमालाशयानन्दा करमालासमागमा ।
करमालासिद्धिदात्री करमालाकराप्रिया ॥ २४४ ॥
करप्रिया करलता करदानपरायणा ।
करनन्दा कलिगतिः कलिपूज्या कलिप्रसः ॥ २४५ ॥
कलनादनिनादस्था कलनादवरप्रदा ।
कलनादसमाजस्था कहोला च कहोलदा ॥ २४६ ॥
कहोलगेहसंस्था च कहोलवरदायिनी ।
कहोलकविताधारा कहोलऋषिमानिता ॥ २४७ ॥
कहोलमानसाराध्या कहोलवाक्यकारिणी ।
कहोलगेहमध्यस्था कहोलवरकारिणी ॥ २४८ ॥
कर्तृरूपा कर्तृमयी कर्तृमाता च कर्तरी ।
कनीया कनकाधारा[१२] कनीनकमयी कथा ॥ २४९ ॥
कनीयानन्दनिलया कनकानन्दतोषिता ।
कनीनककरा कष्टा कथार्णवकरी कनिः[१३] ॥ २५० ॥
करिगम्या करिगतिः करिध्वजपरायणा ।
करिनाथप्रिया कष्ठा कथानकप्रतोषिता ॥ २४१ ॥

---

१२ कनकाराध्या इति पाठान्तरमन्यत्र ।

१३ मा. ख. करिः पाठः ।

कमनीया कमनका कमनीयविभूषणा ।
कमनीयसमाजस्था कमनीयव्रतप्रिया ॥ २५२ ॥
कमनीयगुणाराध्या कपिला कपिलेश्वरी ।
कपिलाराध्यहृदया कपिलावरदायिनी ॥ २५३ ॥
कएईलह्रींस्वरूपा च कएईलह्रींवरप्रदा ।
कएईलह्रीं सिद्धिदात्री कलहह्रींस्वरूपिणी ॥ २५४ ॥
कहह्रीं मन्त्रवर्णा च कहलह्रीं प्रसूकला ।
कवर्गा च कपाटस्था कपाटोच्चाटनक्षमा[१४] ॥ २५५ ॥
कङ्काली च कपाला च कङ्कालप्रियभाषिणी ।
कङ्कालभैरवाराध्या कङ्कालमानसस्थिता ॥ २५६ ॥
कङ्कालमोहनिरता कङ्कालमोहदायिनी ।
कलुषघ्नी कलुषहा कलुषार्त्तिविनाशिनी ॥ २५७ ॥
कलिपूज्या कलादाना कशिपुः कश्यपार्चिता[१५] ।
कश्यपा कश्यपाराध्या कलिपूर्णकलेवरा ॥ २५८ ॥
कलेवरा करिकचा करवर्गा करालिका ।
करालभैरवाराध्या करालभैरवेश्वरी ॥ २५९ ॥
कराला करणाधारा कपर्दीशवरप्रदा ।
कपर्दीशप्रेमरता कपर्दीमालिकायुता ॥ २६० ॥
कपर्दीजपमालाढ्या करवीरप्रसूनदा ।
करवीरप्रियप्राणा करवीरप्रपूजिता ॥ २६१ ॥
कर्णिकारसमाकारा कर्णिकारप्रपूजिता ।
करीषाग्निस्थिता कर्षा कर्षमात्रसुवर्णदा[१६] ॥ २६२ ॥
कलशाकलशाराध्या कषाया करिजानदा ।
कपिला कलकण्ठी च कलिकल्पलता मता ॥ २६३ ॥
कल्पलता कल्पमाता कल्पकारी च कल्पभूः ।
कर्पूरामोदरुचिरा कपूरामोदधारिणी ॥ २६४ ॥
कर्पूरमालाभरणा कपूरवासपूर्त्तिदा ।
कर्पूरमालाजपदा कर्पूरावर्णमध्यगा ॥ २६५ ॥
कर्पूरतर्पणरता कर्पूरवरधारिणी ।

१४ मा. ख. कपाटोद्घाटनक्षमा पाठान्तरमन्यत्र ।
१५ मा. ख. कक्षिपुः कक्षपार्चिता पाठः ।
१६ मा. ख. कर्ष्या कर्ष्यमात्रसुवर्णदा पाठः ।

कपटेश्वरसम्पूज्या कपटेश्वररूपिणी ॥ २६६ ॥
कद्रुः कपिध्वजाराध्या कलापपुष्परूपिणी।
कलापपुष्परुचिरा कलापपुष्पपूजिता ॥ २६७ ॥
क्रकचा च कचाराध्या कथं ब्रूम करालता।
कथंकालविनिर्मुक्ता काली कालप्रियाक्रतुः ॥ २६८ ॥
कामिनी कामिनीपूज्या कामिनीपुष्पधारिणी।
कामिनीपुष्पनिरया कामिनीपुष्पपूर्णिमा ॥ २६९ ॥
कामिनीपुष्पपूजार्हा कामिनीपुष्पभूषणा।
कामिनीपुष्पतिलका कामिनीकुण्डचुम्बना ॥ २७० ॥
कामिनीयोगसन्तुष्टा कामिनीयोगदायिनी।
कामिनीकुण्डसम्मग्ना कामिनीकुण्डमध्यगा ॥ २७१ ॥
कामिनीमानसाराध्या कामिनीमानतोषिता।
कामिनीमानसञ्चारा कालिका कालकालिका ॥ २७२ ॥
कामा च कामदेवी च कामेशी कामसम्भवा।
कामभावा कामरता कामार्त्ता काममञ्जरी ॥ २७३ ॥
काममञ्जीररणिता कामदेवप्रियान्तरा।
कामकाली कामकला कालीकामकलाभिधा ॥ २७४ ॥
कालीकामकलाकाली कालानलसमप्रभा।
कल्पान्तदहना कान्ता कान्तारप्रियभाषिणी ॥ २७५ ॥
कालपूज्या कालरता काममाला च कालिनी।
कालवीरा कालघोरा कालसिद्धा च कालदा ॥ २७६ ॥
कालाञ्जनसमाकारा कालिञ्जननिवासिनी[१७]।
कालऋद्धिः कालबृद्धिः कारागृहविमोचिनी ॥ २७७ ॥
कादिविद्या कादिमाता कादिस्था कादिसुन्दरी।
काशी काञ्ची च काञ्चीशा काशीशवरदायिनी ॥ २७८ ॥
क्रां बीजा चैव कां बीजा क्राँ हृदयाय नमस्कृता।
काम्या काम्यगतिः काम्यसिद्धिदात्रीकसिद्धिभूः ॥ २७९ ॥
कामाक्षा कामरूपा च कामचापविमोचिनी।
कामदेवकलारामा कामदेवकलालया ॥ २८० ॥
कालरात्री कामदात्री कान्ताराचलवासिनी।

१७ मा. ख कालंजरनिवासिनी पाठः।

कालरूपा कालगतिः कामयोगपरायणा ॥ २८१ ॥
कामसम्मर्दनरता कामगेहविकासिनी ।
कामभैरवभार्या च कालभैरवकामिनी ॥ २८२ ॥
कालभैरवयोगस्था कालभैरवभोगदा ।
कामधेनुः कामदोग्ध्री काममाता च कान्तदा ॥ २८३ ॥
कामुका कामुकाराध्या कामुकानन्दवर्धिनी ।
कार्त्तबीजा कार्त्तिकेया कार्त्तिकेयप्रपूजिता ॥ २८४ ॥
कार्या कारणदा कार्यकारिणी कारणान्तरा ।
कान्तिगम्या कान्तिमयी कान्त्या कात्यायनी च का ॥ २८५ ॥
कामसारा च काश्मीरा काश्मीराचारतत्परा ।
कामरूपाचाररता कामरूपप्रियम्बदा ॥ २८६ ॥
कामरूपा कामसिद्धा कामरूपमनोमयी ।
कार्त्तिकी कार्त्तिकाराध्या काञ्चनारप्रसूनभूः[१८] ॥ २८७ ॥
काञ्चनारप्रसूनाभा काञ्चनारप्रपूजिता ।
काचरूपा काचभूमिः कांस्यपात्रप्रभोजिनी ॥ २८८ ॥
कांस्यध्वनिमयी कामसुन्दरी कामचुम्बना ।
काशपुष्पप्रतीकाशा कामद्रुमसमागमा ॥ २८९ ॥
कामपुष्पा कामभूमिः कामपूज्या च कामदा ।
कामदेहा कामगेहा कामराजपरायणा ॥ २९० ॥
कामध्वजसमारूढा कामध्वजसमास्थिता ।
काश्यपी काश्यपाराध्या काश्यपानन्ददायिनी ॥ २९१ ॥
कालिन्दीजलसङ्काशा कालिन्दीजलपूजिता ।
कादेवपूजानिरता कादेवपरमार्थदा ॥ २९२ ॥
कर्मणा कर्मणाधारा कामकार्मणकारिणी ।
कार्मणत्रोटनकरी काकिनी कारणाह्वया ॥ २९३ ॥
काव्यामृता च कालिङ्गा कलिङ्गमदनोद्यता ।
कालागुरुविभूषाढ्या कालागुरुविभूतिदा ॥ २९४ ॥
कालागुरुसुगन्धा च कालागुरुप्रतर्पणा ।
कावेरी नीलसंप्रीता कावेरी तीरवासिनी ॥ २९५ ॥
कालचक्रभ्रमाकारा कालचक्रनिवासिनी ।

---

१८ मा. ख. काञ्चनारप्रसूप्रभुः पाठः ।

कानना काननाधारा कारुः कारुणिकामयी ॥ २९६ ॥
काम्पिल्यवासिनी काव्या कामपत्नी च कामभूः ।
कादम्बरीपानरता तथा कादम्बरीकला ॥ २९७ ॥
कामवन्द्या च कामेशी कामराजप्रपूजिता ।
कामराजेश्वरीविद्या कामकौतुककौमुदी ॥ २९८ ॥
काम्बोत्रजा काङ्क्षितदा काश्या काञ्चनकारिणी ।
काञ्चनाद्रिसमाकारा काञ्जनाद्रिप्रदानदा ॥ २९९ ॥
कामकीर्त्तिः कामकेशी कालिका कान्तरश्रया ।
कामभेदी च कामार्त्तिनाशिनी कामभूमिका ॥ ३०० ॥
कालनिर्णाशिनी काव्यवनिता कामरूपिणी ।
कामस्था काष्ठसन्दीप्तिः काव्यदा काव्यसुन्दरी ॥ ३०१ ॥
काष्ठेशी कारणवरा कामारिपूजनोद्यता ।
काञ्चीनूपुरभूषाढ्या कुङ्कुमाभरणान्विता ॥ ३०२ ॥
कालचक्राकारगतिः कालचक्रमनोभवा ।
कुञ्जमध्या कुञ्जपुष्पा कुञ्जपुष्पप्रिया कुजा ॥ ३०३ ॥
कुञ्जमाता कुजाराध्या कुवारवरधारिणी[१९] ।
कुञ्जरस्था कुशरता कुशेशयविलोचना ॥ ३०४ ॥
कुनरी कुररी क्रुद्धा कुरङ्गी कुटजाह्वया ।
कुम्भीरसविभूषा च कुम्भीरसवधोद्यता ॥ ३०५ ॥
कुम्भकर्णमनोल्लासा कुलचूडामणिः कुला ।
कुलालगृहकन्या च कुलचूडामणिप्रिया ॥ ३०६ ॥
कुलपूज्या कुलाराध्या कुलपूजापरायणा ।
कुलभूषा तथा कुक्षिः कुररीगणसेविनी ॥ ३०७ ॥
कुलपुष्पा कुलरता कुलपुष्पपरायणा ।
कुलवस्त्रा कुलाराध्या कुलकुण्डसमप्रभा ॥ ३०८ ॥
कुलकुण्डसमुल्लासा कुण्डपुष्पपरायणा ।
कुण्डपुष्पप्रहसना कुण्डगोलोद्भवात्मिका ॥ ३०९ ॥
कुण्डगोलाद्भवाधारा कुण्डगोलमयी कुहुः ।
कुण्डगोलप्रियप्राणा कुण्डगोलप्रपूजिता ॥ ३१० ॥
कुण्डगोलमनोल्लासा कुण्डगोलवरप्रदा ।

---

१९ मा. ख. कुठारवरधारिणी पाठः ।

कुलदेवरता क्रुद्धा कुलसिद्धिकरी परम् ॥ ३११ ॥
कुलकुण्डसमाकारा कुलकुण्डसमानभूः ।
कुण्डसिद्धिः कुण्डऋद्धिः कुमारीपूजनोद्यता ॥ ३१२ ॥
कुमारीपूजकप्राणा कुमारीपूजकालया ।
कुमारीकायसन्तुष्टा कुमारीपूजकात्मिका ॥ ३१३ ॥
कुमारीव्रतसन्तुष्टा कुमारीरूपधारिणी ।
कुमारीभोजनप्रीता कुलीनी च कुमारदा ॥ ३१४ ॥
कुमारमाता कुलदा कुलयोनिः कुलेश्वरी ।
कुललिङ्गा कुलानन्दा कुलरम्या कुतर्कधृक् ॥ ३१५ ॥
कुन्ती च कुलकान्ता च कुलमार्गपरायणा ।
कुल्ला च कुरुकुल्ला च कुल्लुका कुलकामदा ॥ ३१६ ॥
कुलीशाङ्गी कुब्जिका च कुब्जिकानन्दवर्धिनी ।
कुलीना कुञ्जरगतिः कुञ्जरेश्वरगामिनी ॥ ३१७ ॥
कुलपाली कुलवती तथैव कुलदीपिका ।
कुलयोगेश्वरी कुण्डा कुङ्कुमारुणविग्रहा[२०] ॥ ३१८ ॥
कुङ्कुमानन्दसन्तोषा कुङ्कुमार्णववासिनी ।
कुङ्कुमाकुसुमप्रीता कुलभूः कुलसुन्दरी ॥ ३१९ ॥
कुन्ददन्ती कुमुदिनी कुशला कुलटालया ।
कुलटालयमध्यस्था कुलटासङ्गतोषिता ॥ ३२० ॥
कुलयचुम्बनोद्युक्ता कुशावर्त्ता कुलार्णवा ।
कुलार्णवाचाररता कुण्डली कुण्डलाकृतिः ॥ ३२१ ॥
कुमतिश्च कुलश्रेष्ठा कुलचक्रपरायणा ।
कूटस्था क्रूरदृष्टिश्च कुन्तला कुन्तलाकृतिः ॥ ३२२ ॥
कुशलाकृतिरूपा च कूर्चबीजधरा च कुः ।
कुकुकुकुशब्दरता क्रूँ क्रूँ क्रूँ क्रूँ परायणा ॥ ३२३ ॥
कुँ कुँ कुँ शब्दनिलया कुक्कुरालयवासिनी ।
कुक्कुरासङ्गसंयुक्ता कुक्कुरानन्तविग्रहा ॥ ३२४ ॥
कूर्चरम्भा कूर्चबीजा कूर्चजापपरायणा ।
कुलिनी कुलसंस्थाना कूर्चकुण्डपरागतिः ॥ ३२५ ॥[२१]

---

२० मा. क. कुङ्कुमारुणविग्रहा पाठो नास्ति ।

२१ मा.ख. श्लो. ३२५ (ख), ३२६ (क), (ख), ३२७ (क) भागः पुनरुक्तः ।

कूर्चबीजा भालदेशा कूर्चमस्तकभूषिता।
कुलवृक्षगता कूर्मा कूर्माचलनिवासिनी ॥ ३२६ ॥
कुलबिन्दुः कुलशिवा कुलशाक्तपरायणा।
कुलबिन्दुमणिप्रख्या कुङ्कुमद्रुमवासिनी ॥ ३२७ ॥
कुचमर्दनसन्तुष्टा कुचजापपरायणा।
कुचस्पर्शनसन्तुष्टा कुचलिङ्गनतत्परा ॥ ३२८ ॥
कुगतिघ्नी कुबेरार्च्या कुचभूः कुलनायिका।
कुगायना कुचधरा कुगीता कुन्ददन्तिका ॥ ३२९ ॥
कुगेया कुहराभासा कुगोपा कुघ्नदारिका।
कीर्त्तिः किरातिनी क्लिन्ना किरणा किन्नरीप्रिया ॥ ३३० ॥
क्रींकारी क्रींजपासक्ता क्रीं हूँ स्त्रीं मन्त्ररूपिणी।
किर्मीरितदृशापाङ्गी[२२] किशोरार्चा किरीटिनी ॥ ३३१ ॥
कीटमाद्या कीटयोनिः कीटमाता च कीशदा।
किंशुका कीटभाषा च क्रियासारा क्रियावती ॥ ३३२ ॥
की की शब्दपरा क्राँ क्रीं क्रूँ क्रैं क्रौं मन्त्ररूपिणी।
काँ कीं क्रूँ क्रैं[२३] स्वरूपा च क्रः फट् मन्त्रस्वरूपिणी ॥ ३३३ ॥
केतकीभूषणानन्दा केतकीभरणान्विता[२४]।
केकरा केशिनी केशी केशीसूदनतत्परा ॥ ३३४ ॥
केशरूपा केशमुक्ता कैकेयी केशिकी तथा।
कैरवा कैरवाह्लादा केशरा केतुरूपिणी ॥ ३३५ ॥
केशवाराध्यहृदया केशवासक्तमानसा।
क्लैव्यनिर्नाशिनी क्लैं च क्लैंबीजजपतोषिता ॥ ३३६ ॥
कोशला कोशलाक्षी च कोशा च कोमला तथा।
कोलापुरनिवासी च कोलासुरविनाशिनी ॥ ३३७ ॥
कोटरूपा कोटरता क्रोधिनी काकरूपिणी।
केका च कोकिला कोटिः कोटिमन्त्रपरायणा ॥ ३३८ ॥
कोट्यनन्तमन्त्रयुता केरूपा केरलाश्श्रया।
केरलाचारनिपुणा केरलेन्द्रगृहास्थिता ॥ ३३९ ॥
केदाराश्रमसंस्था च केदारेश्वरपूजिता।

२२ मा. ख. किमीरितदृशापाङ्क्षी पाठः।

२३ क्राँ क्रीं क्रूँ क्रैं स्वरूपा च इति पाठः समुचितो भाति।

२४ केतक्याभरणान्विता पाठ उचितः।

क्रोधरूपा क्रोशपादा क्रोधमाता च कौशिकी ॥ ३४० ॥
कोदयडधारिणी क्रौंचा कौशल्या कोमलाङ्गना।
कौलिनी कौलिकाधारा कौलिकाननवासिनी ॥ ३४१ ॥
कौतुकी कौमुदी कौला कौमारी कौरवार्चिता।
कौण्डिन्या कौशली क्रोधज्वालाभास्वररूपिणी ॥ ३४२ ॥
कोटिकालानलज्वाला कोटिमार्त्तण्डविग्रहा।
कृत्तिका कृष्णवर्णा च कृष्णा कृत्याक्रियातुरा ॥ ३४३ ॥
कृशाङ्गी कृतकृत्या च क्रः फट् स्वाहास्वरूपिणी।
क्राँ क्राँ हूँ फट् मन्त्रवर्णा क्रीँ क्रीँ हूँ फट् नमः स्वधा ॥ ३४४ ॥
क्रीँ क्रीँ ह्रीँ ह्रीँ तथा हूँ हूँ फट् स्वाहामन्त्ररूपिणी।
इति श्री सर्वसाम्राज्यमेधानामसहस्रकम् ॥ ३४५ ॥
सुन्दरी शक्तिदाताख्यं स्वरूपाभिधमेव च।
कथितं दक्षिणाकाल्याः सुन्दर्याः प्रीतियोगतः ॥ ३४६ ॥
वरदानप्रसङ्गेन रहस्यमपि दर्शितम्।
गोपनीयं सदा भक्त्या पठनीयं परात्परम् ॥ ३४७ ॥
प्रातर्मध्याह्नकाले च सन्ध्यार्धरात्रयोरपि।
पूजाकाले जपान्ते च पठनीयं विशेषतः ॥ ३४८ ॥
यः पठेत्साधकाधीशः कालीरूपो हि वर्षतः।
पठित्वा पाठयेद्वाऽपि श्रृणोति श्रावयेदपि ॥ ३४९ ॥
वाचकं तोषयेद्वापि स भवेत्कालिकातनुः।
सहेला वा सलीला वा यः कश्चिन्मानवः पठेत् ॥ ३५० ॥
सर्वदुःखविनिर्मुक्तस्त्रैलोक्यविजयी कविः।
मृतवन्ध्या काकवन्ध्या कन्यावन्ध्या च वन्ध्यका ॥ ३५१ ॥
पुष्पवन्ध्या शूलवन्ध्या श्रृणुयात्स्तोत्रमुत्तमम्।
सर्वसिद्धिप्रदातारं सत्कविं चिरजीविनम् ॥ ३५२ ॥
पण्डितेन्द्रं कीर्तियुतं लभते नात्र संभवः।
यद्यत्काममुपास्कृत्य कालीं ध्यात्वा जपेत्स्तवम् ॥ ३५३ ॥
तं तं कामकरे कृत्वा मन्त्री भवति निश्चितम्[२५]।
योनिपुष्पैर्लिङ्गपुष्पैः कुण्डगोलोद्भवैरपि ॥ ३५४ ॥
संयोगामृतपुष्पैश्च वस्तुदेवीप्रसूनकैः।

२५ नान्यथा इति पाठान्तरम्।

कालीपुष्पैः पीठतोयैर्योनिक्षालनबिन्दुभिः ॥ ३५५ ॥
कस्तूरीकुङ्कुमैर्देवीं नखकालागुरुक्रमात्।
अष्टगन्धैर्धूपदीपैर्जावायावकसंयुतैः ॥ ३५६ ॥
रक्तचन्दनसिन्दुरैर्मत्स्यमांसादिभूषकैः।
मधुभिः पायसैः क्षीरैः शोधितैः शोणितैरपि ॥ ३५७ ॥
महोपचारै रक्तैश्च नैवेद्यैः षड्रसान्वितैः।
पूजयित्वा महाकालीं महाकालेन लालिताम् ॥ ३५८ ॥
विद्याराज्ञीं कुल्लुकाञ्च जप्त्वा स्तोत्रं पठेच्छिवे।
कालीभक्तस्त्वेकचित्तः सिन्दूरतिलकान्वितः ॥ ३५९ ॥
ताम्बूलपूरितमुखो मुक्तकेशो दिगम्बरः।
शवयोनिस्थितो वीरः श्मशानसुरतान्वितः ॥ ३६० ॥
शून्यालये बिन्दुपीठे पुष्पाकीर्णे शिवावने।
प्रयाणोऽथ प्रभुञ्जानः कालीदर्शनमाप्नुयात् ॥ ३६१ ॥
तत्र यद्यत्कृतं कर्म तदनन्तफलं भवेत्।
ऐश्वर्ये कमलासाक्षात् सिद्धौ श्रीकालिकाम्बिका ॥ ३६२ ॥
कवित्वे तारिणीतुल्यः सौन्दर्ये सुन्दरीसमः।
वसोर्धारासमः काव्ये श्रुतौ श्रुतिधरो यथा ॥ ३६३ ॥
ब्रह्मास्त्र इव दुर्धर्षस्त्रैलोक्यविजयास्त्रवत्।
शत्रुहर्ता कार्यकर्ता भवेच्छिवसमः कलौ ॥ ३६४ ॥
दिग्विदिक्चन्द्रकर्ता च दिवारात्रिविपर्ययाम्।
महादेवसमो योगी त्रैलोक्यस्तम्भकः क्षणात् ॥ ३६५ ॥
गाने च तुम्बुरुः साक्षाद्दाने कर्णसमो भवेत्।
गजाश्वरथपत्तीनां मन्त्राणामधिपः कृती ॥ ३६६ ॥
आयुष्ये तु भुशुण्डीव जरापलितनाशकः।
वर्षषोडशवान् भूयात्सर्वकालं महेश्वरि ॥ ३६७ ॥
ब्रह्माण्डगोले देवेशि न तस्य दुर्लभं क्वचित्।
सर्वहस्तगतं भूयान्नात्र कार्या विचारणा ॥ ३६८ ॥
कुलपुष्पयुतं दृष्ट्वा तत्र कालीं विचिन्त्य च।
विद्याराज्ञीञ्च संपूज्य पठेन्नामसहस्रकम् ॥ ३६९ ॥
मनोरथमयी सिद्धिस्तस्य हस्ते सदा भवेत्।
परदारां समालिङ्ग्य संचुम्ब्य परमेश्वरि ॥ ३७० ॥

हस्ताहस्तिकथायोगं कृत्वा जप्त्वा स्तवं पठेत्।
योनिं वीक्ष्य जपेत्स्तोत्रं कुबेरादधिको भवेत् ॥ ३७१ ॥
कुण्डगोलोद्भवं गृह्य पर्णाकं होमयेन्निशि।
पितृहोमौ महेशानि विधिरेखा विमार्जयेत् ॥ ३७२ ॥
तरुणीं चञ्चलां रम्यां सुन्दरीं कामगर्विताम्।
समानीय प्रयत्नेन संशोध्य न्यासयोगतः ॥ ३७३ ॥
प्रसूनं मञ्चे संस्थाप्य पृथ्वीं विकसितां चरेत्।
मूलचक्रं तु संभाव्य देव्यावरणसंयुतम् ॥ ३७४ ॥
संपूज्य परमेशाानि संबल्यन्तं महेश्वरि।
जप्त्वा स्तुत्वा महेशाानि द्राविणीं संस्मरेच्छिवे ॥ ३७५ ॥
अष्टोत्तरशतैर्योनिं संमन्त्र्य चुम्ब्य यत्नतः।
संयोगी भूय जप्तव्यं सर्वविद्याधिपो भवेत् ॥ ३७६ ॥
शून्यागारे शिवारण्ये शिवदेवालये तथा।
शून्यदेशे तडागे च गङ्गागर्भे चतुष्पथे ॥ ३७७ ॥
श्मशाने पर्वते प्रान्ते एकलिङ्गे शवे मुखे।
मुण्डयोनौ ऋतुस्नातागेह[२६] वेश्यागृहे तथा ॥ ३७८ ॥
कुहिनीगृहमध्ये वा कदलीमण्डपे सदा।
पठेत्सहस्रनामाख्यं स्तोत्रं सर्वार्थसिद्धये ॥ ३७९ ॥
अरण्ये शून्यदुर्गेषु रणे शक्तिसमागमे।
कालीं सञ्चिन्त्य प्रजपेत्पठेन्नामसहस्रकम् ॥ ३८० ॥
सर्वसिद्धीश्वरो भूयाद् वाञ्छासिद्धिं स विन्दति।
मृडचूडकयोर्योनित्वचि वा कोमलेऽपि वा ॥ ३८१ ॥
विष्टरे शववस्त्रे वा पुष्पवस्त्रासनेऽपि वा।
कालीं सञ्चिन्त्य प्रजपेत्ततो नामसहस्रकम् ॥ ३८२ ॥
पञ्चानन्दमयो भूत्वा पठित्वा कालिकास्तवम्[२७]।
मुक्तकेशो दिशावासो मैथुनीशयनस्थितः ॥ ३८३ ॥
जप्त्वा कालीं पठेत्स्तोत्रं खेचरीसिद्धिभाग्भवेत्।
त्रिकुटं योगमासाद्य शुक्रोत्सारणमेव च ॥ ३८४ ॥
जप्त्वा श्रीदक्षिणां कालीं शक्तिपातशतं लभेत्।

---

२६ ऋतुस्नातृगेहे पाठ उचितः।

२७ स्वयं पाठो=न्यत्र।

लतां स्पृशन् जपित्वाऽपि कालिकां चिन्तयन्नपि ॥ ३८५ ॥
आलोकयन्दिशावासां परशक्तिं विशेषतः।
स्तुत्वा श्रीदक्षिणाकालीं योनिं स्वकरगां चरेत् ॥ ३८६ ॥
पठेन्नामसहस्रं यः शिवादप्यधिको भवेत्।
लतारतेषु जप्तव्यं स्तुत्वा कालीं निराकुलः ॥ ३८७ ॥
दशावधानो भवति मासमात्रेण साधकः।
कालरात्र्यां महारात्र्यां वीररात्र्यां विशेषतः ॥ ३८८ ॥
चतुर्दश्यामथाष्टम्यां सङ्क्रमेऽपि महेश्वरि।
कुहुपूर्णेन्दुशुक्रेषु भौमरव्यां निशामुखे ॥ ३८९ ॥
नवम्यां मङ्गलदिने तथा कुलतिथौ शिवे।
कुलर्क्षे तु यत्नेन पठेन्नामसहस्रकम् ॥ ३९० ॥
सौदर्शनो भवेदाशु किन्नरी सिद्धिभाक् भवेत्।
पश्चिमाभिमुखं लिङ्गं वृषशून्यं पुरातनम् ॥ ३९१ ।
तत्र स्थित्वा जपेत्स्तोत्रं सर्वकामाप्तये शिवे।
भौमवारे निशीथे च अमावास्या दिने शुभे ॥ ३९२ ॥
माषभक्तबलिं छागं कृशरान्नं च पायसम्।
दग्धमीनं शोणितं च दधिदुग्धं गुडार्द्रकम् ॥ ३९३ ॥
बलिं दत्त्वा जपेत्तत्र त्वष्टोत्तरसहस्रकम्।
देवगन्धर्वसिद्धौघैः सेवितः सुरसुन्दरीम् ॥ ३९४ ॥
लभेद्देवेशि मासेन तस्य चासनसंहतिः।
हस्तत्रयं भवेदुर्ध्वा नात्र कार्या विचारणा ॥ ३९५ ॥
हेलया लीलया भक्त्या कालीं स्तौति नरस्तु यः।
ब्रह्मादीन् स्तम्भयेद्देवि माहेशी मोहयेत्क्षणम् ॥ ३९६ ॥
ध्रुवमुच्चारयेन्नूनं सृष्टिञ्च नूतनां चरेत्।
मेषमहिषमार्जारछागखरनरादिकैः ॥ ३९७ ॥
खड्गशूकरकापोतैष्टिट्टिभैः शशकैः पलैः।
शोणितैः सास्थिमांसैश्च कारणैर्दुग्धपायसैः ॥ ३९८ ॥
कादम्बरीसिन्धुमद्यैः सुरारिष्टैश्च सासवैः।
योनिक्षालननीरैश्च योनिलिङ्गामृतेन च ॥ ३९९ ॥
स्वजातकुसुमैः पूज्य जपान्ते तर्पयेच्छिवाम्।
सर्व साम्राज्यनाम्ना तु स्तुत्वा नत्वा स्वशक्तितः ॥ ४०० ॥

शक्त्यालापे पठेत्स्तोत्रं कालीरूपो दिनत्रयात् ।
दक्षिणा कालिका तस्य गेहे तिष्ठति नान्यथा ॥ ४०१ ॥
वेश्यालतागृहे गत्वा तस्याश्चुम्बनतत्परः ।
तस्या योनौ मुखं दत्त्वा तद्रसं विलहञ्जपन् ॥ ४०२ ॥
तदन्ते नामसाहस्रं पठेद्भक्तिपरायणः ।
कालिकादर्शनं तस्य भवत्येव त्रियामतः ॥ ४०३ ॥
नृत्यपात्रगृहे गत्वा मकारपञ्चमान्वितः ।
प्रसूनं मञ्चे संस्थाप्य शक्तिन्यासपरायणः ॥ ४०४ ॥
पात्राणां सादनं कृत्वा दिग्वस्त्रां तां समाचरेत् ।
चक्रं तन्मूले संभाव्य तत्र सावरणां यजेत् ॥ ४०५ ॥
शतं भाले शतं केशे शतं सिन्दूरमण्डले ।
शतद्वयं कुचद्वन्द्वे शतं नाभौ महेश्वरि ॥ ४०६ ॥
शतं योनौ महेशानि उत्थाय च शतत्रयम् ।
जपेत्तत्र महेशानि तदन्ते प्रपठेत्स्तुतिम् ॥ ४०७ ॥
शतावधानो भवति मासमात्रेण साधकः ।
मातङ्गिनीं समानीय किं वा कापालिनीं शिवे ॥ ४०८ ॥
दन्तमालां जपे कार्या गले धार्या नृमुण्डजा ।
नेत्रपद्मे योनिचक्रं शक्तिचक्रं[२८] स्ववक्त्रके ॥ ४०९ ॥
कृत्वा जपेन्महेशानि मुण्डयन्त्रं प्रपूजयेत् ।
मुण्डासनस्थितो वीरो मकारपञ्चकान्वितः ॥ ४१० ॥
अन्यामालिङ्ग्य प्रजपेदन्यां सञ्चुम्ब्य वै पठेत् ।
अन्यां संपूजयेत्तत्र त्वन्यां संमर्दयन्पठेत् ॥ ४११ ॥
अन्ययोनौ शिवं दत्त्वा पुनः पूर्ववदाचरेत् ।
अवधानसहस्रेषु शक्तिपातशतेषु च ॥ ४१२ ॥
राजा भवति देवेशि मासपञ्चकयोगतः ।
यवनीशक्तिमानीय गानशक्तिपरायणः ॥ ४१३ ॥
कुलाचारक्रमेणैव तस्या योनिं विकासयेत् ।
तत्र जिह्वां प्रदत्त्वा च जपेन्नामसहस्रकम् ॥ ४१४ ॥
नृकपाले तत्र दीपं लाप्य यत्नेन वै पठेत् ।
महाकविवरो भूयान्नात्र कार्या विचारणा ॥ ४१५ ॥

---

२८ मा. क. शक्तिचक्रं पदं नविद्यते ।

कामार्तां शक्तिमानीय योनौ तु मूलचक्रकम्।
विलिख्य परमेशानि तत्र मन्त्रं लिखेच्छिवे ॥ ४१६ ॥
तल्लिहन् प्रजपेद्देवि सर्वशास्त्रार्थ तत्त्ववित्।
अश्रुतान्यपि शास्त्राणि वेदादीन् पाठयेद्ध्रुवम् ॥ ४१७ ॥
विनाऽभ्यासैर्विनाऽऽयासैर्विना पाठादिभिः प्रिये।
कालीध्यानं मन्त्रचिन्ता नीलसाधनमेव च ॥ ४१८ ॥[२९]
सहस्रनामपाठश्च कालीनाम प्रकीर्तितम्।
भक्तस्य कृत्यमेतावदन्यदभ्युदयं विदुः ॥ ४१९ ॥
वीरसाधनकं कर्म शिवा पूज्या बलिस्तथा।
सिन्दूरतिलको देवि वेश्यालापो निरन्तरम् ॥ ४२० ॥
वेश्यागृहे निशाचारो रात्रौ पर्यटनं तथा।
शक्तिपूजा योनिदृष्टिर्खड्गहस्तो दिगम्बरः ॥ ४२१ ॥
मुक्तकेशो वीरवेषी ताम्बूलपूरिताननः।
कालीभक्तो भवेद्देवि नान्यथा क्षोभमाप्नुयात् ॥ ४२२ ॥
दुग्धस्वादी योनिलेही संविदासवघूर्णितः।
वेश्यालतासमायोगान्मासा कल्पलतां स्वयम् ॥ ४२३ ॥
वेश्याचक्रसमायोगात्कारी चक्रसमः स्वयम्।
वेश्यादेहसमायोगात्कालीदेहमयः स्वयम् ॥ ४२४ ॥
वेश्यामध्यगतं वीरं कदा पश्यामि साधकम्।
एवं वदति सा काली तस्माद्वेश्या वराङ्गना ॥ ४२५ ॥
वेश्याकन्या तथा पीठजातिभेदकुलक्रमात्।
अकुलक्रमभेदेन ज्ञात्वा चैव कुमारिकाम् ॥ ४२६ ॥
कुमारीं पूजयेद् भक्त्या जपान्ते देववत् प्रिये।
पठेन्नामसहस्रं यः कालीदर्शनभाग्भवेत् ॥ ४२७ ॥
भक्त्या पूज्या कुमारी तु वेश्यां कुलसमुद्भवाम्।
वस्त्रहोमादिभिस्तोष्य जप्त्वा स्तोत्रं पठेच्छिवे ॥ ४२८ ॥
त्रैलोक्यविजयी भूयादमाचन्द्रप्रदर्शकः।
यद्यद्दन्नं कुमार्यै तु तदनन्तफलं भवेत् ॥ ४२९ ॥
कुमारीपूजनफलं मया वक्तुं न शक्यते।

---

२९ मा. ख. चतुर्वेदाधिपो भूत्वा त्रिकालज्ञ स्त्रिवर्षतः। चतुर्विधं च पाण्डित्यं तस्य हस्तगतं क्षणात् ॥ शिवाबलिः प्रदातव्यः सर्वदा शून्यमण्डले ॥ इति अधिकः पाठः।

चाञ्चल्याद् गदितं किञ्चित् क्षम्यतामयमञ्जलिः ॥ ४३० ॥
एका चेत् पूजिता बाला द्वितयं पूजितं भवेत् ।
कुमार्यश्च शक्तयश्च सर्वमेतच्चराचरम् ॥ ४३१ ॥
शक्तिमानीय तद्गात्रे न्यासजालं प्रविन्यसेत् ।
स्ववामभागे संस्थाप्य पठेन्नामसहस्रकम् ॥ ४३२ ॥
सर्वसिद्धीश्वरो भूयान्नात्र कार्या विचारणा ।
श्मशानस्थो भवेत्सुस्थो गलितं चिकुरं चरेत् ॥ ४३३ ॥
दिगम्बरः सहस्रं च सूर्यपुष्पं समानयेत् ।
स्ववीर्येण युतं कृत्वा प्रत्येकं प्रजपेद्धुनेत् ॥ ४३४ ॥
पूज्य ध्यात्वा महाभक्त्या क्षमापालो नरः पठन् ।
नखं केशं स्ववीर्यं च यद्यत्संमार्जनीगतम् ॥ ४३५ ॥
मुक्तकेशो दिशावासो मूलमन्त्रपुरस्सरम् ।
कुजवारे मध्यरात्रौ होमं कृत्वा श्मशानके ॥ ४३६ ॥
पठेन्नामसहस्रं यः पृथ्वीशाकर्षणं चरेत् ।
पुष्पयुक्ते भगे देवि संयोगानन्दतत्परः ॥ ४३७ ॥
पुनश्चिकुरमासाद्य मूलमन्त्रं जपेच्छिवे ।
चितावह्नौ मध्यरात्रौ वीर्यमुत्सार्य यत्नतः ॥ ४३८ ॥
कालिकां पूजयेत्तत्र पठेन्नामसहस्रकम् ।
पृथ्वीशाकर्षणं कुर्यान्नात्र कार्या विचारणा ॥ ४३९ ॥
कदलीवनमासाद्य लक्षमात्रं जपेन्नरः ।
मधुमत्याः स्वयं देव्याः सेव्यमानः स्मरोपमः ॥ ४४० ॥
श्रीमधुमतीत्युक्त्वा तथा स्थावरजङ्गमा ।
कर्षणीति समुच्चार्य ठठस्वाहां समुच्चरेत् ॥ ४४१ ॥
त्रैलोक्याकर्षणी विद्या तस्य हस्ते सदा भवेत् ।
नदीं पुरीं च रत्नानि हेमन्त्रिशैलभूरुहान्[३०] ॥ ४४२ ॥
आकर्षयत्यम्बुनिधेः सुमेरोश्च दिगन्ततः ।
अलभ्यानि च वस्तूनि दूराद् भूमितलादपि ॥ ४४३ ॥
वृत्तान्तञ्च पुरस्थानां रहस्यं विद्विषामपि ।
राज्ञां च कथयत्येषां सत्यं सत्त्वरमाविशेत् ॥ ४४४ ॥
द्वितीयवर्षपाठेन भवेत्पद्मवतीपतिः ।

३० हेमस्त्रीशैलभूरुहान् पाठान्तरमन्यत्र ।

ॐ ह्रीं पद्मावती पदं तत्र त्रैलोक्य नाम च ॥ ४४५ ॥
वार्ता च कथयेद् द्वन्द्वस्वाहान्तो मन्त्र ईरितः।
ब्रह्मविष्ण्वादिकानां च त्रैलोक्ये यादृशी भवेत् ॥ ४४६ ॥
सर्वं वदति देवेशि त्रिकालज्ञः कविः शुभः।
त्रिवर्षपाठतो देवि लभेद्भोगवतीं कलाम् ॥ ४४७ ॥
महाकालेन दृष्टोऽपि चिताधूमगतोऽपि च।
तस्य दर्शनमात्रेण चिरजीवी नरो भवेत् ॥ ४४८ ॥
वंमृतसंजीवनीत्युक्त्वा मृतमुत्थापयद्वयम्।
स्वाहान्तो मनुराख्यातः स्प्नसिद्धो भवेत्ततः ॥ ४४९ ॥
ॐ ह्रीं स्वप्नवाराही काली स्वप्ने कथय चोद्धरेत्।
अमुकस्यामुकं देहि क्रीं स्वाहान्तो मनुर्मतः ॥ ४५० ॥
स्वप्नसिद्धा चतुर्वर्षा तस्य स्वप्ने सदा स्थिता।
चतुर्वषस्य पाठेन चतुर्वेदाधिपो नरः ॥ ४५१ ॥
तद्वक्त्रजलसंयोगाद्वृक्षः काव्यं करोति च।
तस्य वाक्यपरिचयान्मूर्त्तिर्वदति भारतीम् ॥ ४५२ ॥
प्रस्तरे तु करं दत्त्वा वदवाणीमिति पदम्।
साधको वाञ्छया कुर्वन् तत्तथैव भविष्यति ॥ ४५३ ॥
ब्रह्माण्डगोलके या च या काचिज्जगतीतले।
समस्ताः सिद्धयो देवि करामलकवद् भवेत् ॥ ४५४ ॥
साधकः स्मृतिमात्रेण यावन्त्यः सन्ति सिद्धयः।
स्वयमायान्ति पुरतो जपादीनां तु का कथा ॥ ४५५ ॥
निदेशवर्त्तिनो भूत्वा वर्तन्ते चेटका इव।
अमायां चन्द्रदर्शश्च चन्द्रग्रहणमेव च ॥ ४५६ ॥
अष्टम्यां पूर्णचन्द्रत्वं चन्द्रसूर्याष्टकं तथा।
अष्टदिक्षु तथा चाष्टौ करोत्येव महेश्वरि ॥ ४५७ ॥
अणिमा खेचरत्वं च चराचर पुरी गतिः।
पादुका खड्गवेतालयक्षिणीगुह्यकादयः ॥ ४५८ ॥
तिलको गुप्ततादृश्य चराचरकथानकम्।
मृतसञ्जीवनी सिद्धिर्गुटिका च रसायनम् ॥ ४५९ ॥
उड्डानसिद्धिर्देवेशि षष्टिसिद्धीश्वरत्वकम्।
तस्य हस्ते भवेद्देवि नात्र कार्या विचारणा ॥ ४६० ॥

केतौ वा दुन्दुभौ वस्त्रे विहारे वेष्टने गृहे।
भित्तौ च फलके पीठे लेख्यं पूज्यं प्रयत्नतः ॥ ४६१ ॥
मध्यचक्रं दशाङ्गोक्तं परितो नामलेखनम्।
तध्दारणान्महेशानि त्रैलोक्यविजयी भवेत् ॥ ४२६ ॥
एको हि शवसाहस्रां निर्जित्य चरणाजिरे।
पुनरायाति च सुखं स्वगृहं प्रति पार्वति ॥ ४६३ ॥
एको हि शतसंदर्शी लोकानां भवति ध्रुवम्।
कलशं स्थाप्य यत्नेन नामसाहस्रकं पठन् ॥ ४६४ ॥
शेषः कार्यो महेशानि सर्वापत्तिनिवारणः।
भूतप्रेतग्रहादीनां राक्षसां ब्रह्मराक्षसाम् ॥ ४६५ ॥
वेतालानां भैरवाणां स्कन्दवैनायकादिकान्।
नाशयेत्क्षणमात्रेण नात्र कार्या विचारणा ॥ ४६६ ॥
भस्माभिमन्त्रितं कृत्वा ग्रहहस्ते विलेपयेत्।
भस्मसंलापनादेव सर्व ग्रहनिवारणम् ॥ ४६७ ॥
नवनीतं चाभिमन्त्र्य स्त्रीणां दद्यान्महेश्वरि।
वन्ध्या पुत्रवती देवि नात्र कार्या विचारणा ॥ ४६८ ॥
कण्ठे वा वामबाहौ वा योनौ वा धारणाच्छिवे।
बहुपुत्रवती नारी सुभगा जायते ध्रुवम् ॥ ४६९ ॥
पुरुषो दक्षिणाङ्गे च धारयेत्सर्वसिद्धये।
कण्ठे बाहौ च शिरसि हृदये नाभिगोचरे ॥ ४७० ॥
कटिस्थाने शिखायां च धारयेत् सर्वसिद्धये।
बलवान् कीर्तिमान् धन्यो धार्मिकः साधकः कृती ॥ ४७१ ॥
बहुपुत्री रथानां च गजानामधिपः सुखी।
कामिनी कर्षणोद्युक्तः क्रीं च दक्षिणकालिके ॥ ४७२ ॥
क्रीं स्वाहा प्रजपेन्मन्त्रमयुतं नाम पाठकः।
आकर्षणं चरेद्देवि जलखेचरभूगताः ॥ ४७३ ॥
वशीकरणकामो हि हूँ हूँ ह्रीं ह्रीं च दक्षिणे।
कालिके पूर्वबीजानि पूर्ववत्प्रजपेत् पठन् ॥ ४७४ ॥
ऊर्वशीमपि वशयेन्नात्र कार्या विचारणा।
क्रीं दक्षिणे कालिके चेति स्वाहायुक्तं जपेन्नरः ॥ ४७५ ॥
पठेन्नामसहस्रं च त्रैलोक्यं मारयेद् ध्रुवम्।

सत्पुत्राय प्रदातव्यं विद्याराज्ञीप्रवेदिने ॥ ४७६ ॥
सुविनीताय शान्ताय दान्तायातिगुणाय च ।
भक्ताय ज्येष्ठपुत्राय गुरुभक्तिपराय च ॥ ४७७ ॥
भक्तभक्ताय योग्याय शक्तिभक्तिपराय च ।
देयं सहस्रनामाख्यं स्वयं काल्या प्रकाशितम् ॥ ४७८ ॥
वैष्णवाय विशुद्धाय शिवाबलिरताय च ।
वेश्यापूजनयुक्ताय कुमारीपूजकाय च ॥ ४७९ ॥
दुर्गाभक्ताय शैवाय महाकालप्रजापिने ।
अद्वैतभावयुक्ताय कालीभक्तिपराय च ॥ ४८० ॥
गुरुदैवतमन्त्राणां महेशस्यापि पार्वति ।
अभेदेन स्मरेन्मन्त्रं स शिवो नात्र संशयः ॥ ४८१ ॥
यो मन्त्रं भावयेन्मन्त्री स शिवः स च गाणपः ।
स शाक्तो वैष्णवः सोऽत्र स एव पूर्णदीक्षितः ॥ ४८२ ॥
अयोग्याय न दातव्यं सिद्धिरोधः प्रजायते ।
वेश्यास्त्रीनिन्दकायाथासुरासंवित्प्रविन्दके ॥ ४८३ ॥
सुरामुखी मनुं स्मृत्वा सुरा चावतरिष्यति ।
वाग्वृत्ता घोरे आः सः परमघोरे च हूँ वदेत् ॥ ४८४ ॥
घोररूपे हश्च घोरमुखी भीमपदं वदेत् ।
भीषण्यमुकषष्ठ्यन्तं हेतुं चमयुतं पि वा[३१] ॥ ४८५ ॥
शिवं वह्नियुगास्त्रं च हूँ हः फट् च मनुर्वदेत् ।
एतस्याः स्मरणादेव दुष्टानां च मुखे सुराः ॥ ४८६ ॥
अवतीर्णा भवेद्देवी नात्र कार्या विचारणा ।
खलाय परतन्त्राय परनिन्दापराय च ॥ ४८७ ॥
भ्रष्टाय दुष्टसत्त्वाय परिवादपराय च ।
शिवाभक्ताय दुष्टाय परदाररताय च ॥ ४८८ ॥
न स्तोत्रं दर्शयेद्देवि शिवहत्याकरो भवेत् ।
कालिकानन्दहृदय कालिकासक्तमानसः ॥ ४८९ ॥
कालभक्तो भवेत्सो हि धन्यरूपः स एव तु ।
कलौ काली कलौ काली कलौ काली तु केवला ॥ ४९० ॥
कलौ काली कलौ काली कलौ काली वरप्रदा ।

---

३१ मा. ख पि च पाठः ।

विल्वपत्रसहस्राणि करवीराणि वै तथा ॥ ४९१ ॥
प्रतिनाम्ना पूजयेद्धि तेन कालीवरप्रदा ।
कमलानां सहस्रं च प्रतिनाम्ना समर्पयेत् ॥ ४९२ ॥
चक्रं संपूज्य देवेशि कालिकावरमाप्नुयात् ।
मन्त्रक्षोभयुते देवि कलशस्थजलेन च ॥ ४९३ ॥
नाम्ना प्रक्षेपयेद्देवि सर्वक्षोभविनाशकृत् ।
तथा मदनकं देवि सहस्रमाहरेद् व्रती ॥ ४९४ ॥
सहस्रनाम्ना संपूज्य कालिकावरमाप्नुयात् ।
चक्रं विलिख्य देहस्थं धारयेत्कालिकातनु ः ॥ ४९५ ॥
काल्यै निवेदितं यद्यत्तच्छेषं भक्षयेच्छिवे ।
दिव्यदेहधरो भूत्वा कालीदेहस्थिता भवेत् ॥ ४९६ ॥
नैवैद्यनिन्दकान् दुष्टान् दृष्ट्वा नृत्यन्ति भैरवाः ।
योगिन्यश्च महावीरा रक्तपानोद्यताः सदा ॥ ४९७ ॥
मांसास्थिचर्वणोद्युक्ता भक्षयन्ति न संशयः ।
तस्मान्न निन्देन्मनसा कर्मणा वचसा किमु ॥ ४९८ ॥
अन्यथा कुरुते यस्तु तस्य पातो भविष्यति ।
क्रमदीक्षाविहीनानां सिद्धिर्भवति नान्यथा ॥ ४९९ ॥
मन्त्रक्षोभश्च वा भूयात्क्षणायुर्वा भवेद्ध्रुवम् ।
पुत्रहारी च स्त्रीहारी राज्यहारी भवेद्ध्रुवम् ॥ ५०० ॥
क्रमदीक्षायुतो देवि क्रमाद्राज्यमवाप्नुयात् ॥
एकवारं पठेद्देवि सर्वपापविनाशनम् ॥ ५०१ ॥
द्विवारं प्रपठेद्यो हि वाञ्छां विन्दति नित्यशः ।
त्रिवारं प्रपठेद्यस्तु वागीशसमतां व्रजेत् ॥ ५०२ ॥
चतुर्वारं पठेद्देवि चातुर्वर्ण्याधिपो भवेत् ।
पञ्चवारं पठेद्देवि पञ्चकर्माधिपो भवेत् ॥ ५०३ ॥
षड्वारं प्रपठेद्देवि षडैश्वर्यमयो भवेत् ।
सप्तवारं पठेद्देवि कामनां चिन्तितां लभेत् ॥ ५०४ ॥
वसुवारं पठेद्देवि दिगीशो भवति ध्रुवम् ।
नववारं पठेद्देवि नवनाथसमो भवेत् ॥ ५०५ ॥
दशवारं कीर्त्तयेद्यो दासार्हः खेचरेश्वरः ।
विंशवारं कीर्त्तयेद्यः सर्वैश्वर्यमयो भवेत् ॥ ५०६ ॥

पञ्चविंशतिवारैस्तु सर्वचिन्ताविनाशकः ।
पञ्चाशद्वारमावृत्य पञ्चभूतेश्वरो भवेत् ॥ ५०७ ॥
शतवारं कीर्त्तयेद्यः शतानन्दसमानधीः ।
शतपञ्चकमावृत्त्य राजराजेश्वरः कलौ ॥ ५०८ ॥
सहस्रावर्त्तनाद्देवि लक्ष्मीरावृणुते स्वयम् ।
त्रिसहस्रं समावृत्त्य त्रिनेत्रसदृशद्युतिः ॥ ५०९ ॥
पञ्चसहस्रावर्तनात्तु कामकोटिविमोहनः ।
दशसहस्रवर्तनात्तु भवेद्दशमुखेश्वरः ॥ ५१० ॥
पञ्चविंशत्सहस्रेण चतुर्विंशतिसिद्धिभुक् ।
लक्षावर्तनमात्रेण लक्ष्मीपतिसमो भवेत् ॥ ५११ ॥
लक्षत्रयावर्तनात्तु महादेवं विजेष्यति ।
लक्षपञ्चकमावृत्य कलापञ्चकसंयुतः ॥ ५१२ ॥
दशलक्षावर्तनात्तु दशविद्याप्तिरुत्तमा ।
पञ्चविंशतिलक्षैस्तु दशविद्येश्वरो भवेत् ॥ ५१३ ॥
पञ्चाशल्लक्षमावृत्य महाकालसमो भवेत् ।
कोटिमावर्त्तयेद्यो हि कालीं पश्यति चक्षुषा ॥ ५१४ ॥
वरदानोद्युक्तपरां महाकालसमन्विताम् ।
प्रत्यक्षं पश्यति शिवे तस्य देहे वसेद्ध्रुवम् ॥ ५१५ ॥
श्रीविद्या-कालिका-तारा-त्रिशक्तिविषये पठेत् ।
त्रिशक्तिविषये देवि क्रमदीक्षा प्रकीर्तिता ॥ ५१६ ॥
क्रमदीक्षायुतो देवि राजा भवति निश्चितम् ।
विधेर्लिपिं तु संमार्ज्य किङ्करत्वं विसृज्य च ॥ ५१७ ॥
महाराज्यमवाप्नोति नात्र कार्या विचारणा ।
क्रमदीक्षाविहीनस्य फलं पूर्णं मयेरितम् ॥ ५१८ ॥
क्रमदीक्षायुतो देवि शिव एव न चापरः ।
क्रमदीक्षासमायुक्तः कल्पोक्तसिद्धिभाग्भवेत् ॥ ५१९ ॥
क्रमदीक्षाविहीनस्य सिद्धिहानिः पदे पदे ।
अहो धन्यवतां मध्ये धन्यः क्रमयुतः कलौ ॥ ५२० ॥
तत्रापि धन्यो देवेशि नामसहस्रपाठकः ।
दशकालीविधौ देवि स्तोत्रमेतत्सदा पठेत्[३२] ॥ ५२१ ॥

---

३२ मा. ख. भवेत् पाठः ।

सिद्धिं विन्दति देवेशि नात्र कार्या विचारणा।
कलौ काली महाविद्या कलौ काली तु सिद्धिदा ॥ ५२२ ॥
कलौ काली सुसिद्धा च कलौ काली वरप्रदा॥
कलौ काली साधकस्य दर्शनार्थं समुद्यता ॥ ५२३ ॥
कलौ काली केवला स्यान्नात्र कार्या विचारणा।
नान्यविद्या नान्यविद्या नान्यविद्या कलौ भवेत् ॥ ५२४ ॥
कलौ कालीं विहायाथ यः कश्चित् सिद्धिकामुकः।
स तु शक्तिं विना देवि रतिसम्भोगमिच्छति ॥ ५२५ ॥
कलौ कालीं विना देवि य कश्चित्कार्यमिच्छति।
स नीलसाधनं त्यक्त्वा परिभ्रमति सर्वतः॥। ५२६ ॥
कलौ कालीं विहायाथ यः कश्चिन्मोक्षमिच्छति।
गुरुध्यानं परित्यज्य सिद्धिमिच्छति साधकः ॥ ५२७ ॥
कलौ कालीं विहायाथ यः कश्चिद्राज्यमिच्छति।
स भोजनं परित्यज्य क्षुन्निवृत्तिमभीप्सति ॥ ५२८ ॥
स धन्यः स च विज्ञानी स एव सुरपूजितः।
स दीक्षितः सुखी साधुः सत्यवादी जितेन्द्रियः ॥ ५२९ ॥
स वेदवक्ता स्वाध्यायी सर्वानन्दपरायणः।
स्वस्मिन् कालीं तु संभाव्य पूजयेज्जगदम्बिकाम् ॥ ५३० ॥
त्रैलोक्यविजयी भूयान्नात्र कार्या विचारणा।
गुरुरूपं शिवं ध्यात्वा शिवरूपं गुरुं स्मरेत् ॥ ५३१ ॥
सदाशिवः स एव स्यान्नात्र कार्या विचारणा।
गोपनीयं गोपनीयं गोपनीयं प्रयत्नतः ॥ ५३२ ॥
रहस्यातिरहस्यं च रहस्यातिरहस्यकम्।
श्लोकार्धपादमात्रं वा पादार्धं च तदर्धकम् ॥ ५३३ ॥
नामार्धं वा पठेद्देवि न वन्ध्यं दिवसं चरेत्।
पुस्तकं पूजयेद् भक्त्या त्वावृत्तिफलसिद्धये ॥ ५३४ ॥
न च मारीभयं तत्र न चाग्निवातसम्भवम्॥
न भूतादिभयं तत्र सर्वत्र सुखमेधते ॥ ५३५ ॥
कुङ्कुमारक्तकेनैव रोचनागुरुयोगतः।
भूर्जपत्रे लिखेत्पुस्तं सर्वकामार्थसिद्धये ॥ ५३६ ॥

*इति गदितमशेषं कालिकावर्णरूपं*

प्रपठति यदि भक्त्या सर्वसिद्धेश्वरः स्यात् ।
अभिनवसुखकामं सर्वविद्याभिरामं
भवति सकलसिद्धिः सर्ववीरासमृद्धिः ॥ ५३७ ॥
इति संक्षेपतः प्रोक्तं किमन्यच्छ्रोतुमिच्छसि ॥ ५३८ ॥

*इति तन्त्रचिन्तामणौ श्रीदक्षिणकालिकाया नित्यार्चनायां स्तवकवचादिनिर्णयनाम द्वाविंशतितमः प्रकाशः ।*[३३]



---

३३ इति श्रीमदादिनाथविरचितायां महाकालसंहितायां कालीकालसंवादेषु सुन्दरीवरदानाख्यं ककारादिसहस्रनामस्तोत्रं सम्पूर्णम् इति पाठो=न्यत्र ।

# त्रयोविंशतितमः प्रकाशः

अथ श्रीदक्षिणकालिकाङ्गत्वेन महाकालादिनित्यानां प्रत्येकोपासनामाह।

**श्रीदेव्युवाच**
महाकालादिनित्यानां निर्णयं द्वितयं वद।

**श्रीशिव उवाच**
महाकालं समारभ्य नित्यानां निर्णयं श्रृणु ॥ १ ॥
महाकालो महाभीमः प्रलयानलसन्निभः।
कालीमाया समुद्भूतः कालीमानसिकः शिवः ॥ २ ॥
महाकालः परं शम्भुः[1] परातीतो गुणाकरः[2]।
तस्य मन्त्रं प्रवक्ष्यामि येन रक्षेज्जगत्त्रयम् ॥ ३ ॥
कूर्चयुग्मं महाभालं प्रसीदेति पदद्वयम्।
लज्जायुग्मं वह्निजाया संयुक्तः षोडशार्णकः ॥ ४ ॥
षोडशार्णा यथा मुख्या सर्वं श्रीचक्रमण्डले।
तथाऽयं सर्वकालीषु महाकालः प्रकीर्तितः ॥ ५ ॥
कालिकाऽस्य ऋषिः प्रोक्तो विराट्च्छन्दः प्रकीर्तितम्।
देवता तु महाकालः सर्वरूपी निरञ्जनः ॥ ६ ॥
कूर्चबीजं तथा माया शक्तिरत्र प्रकीर्तिता।
स्वाहा कीलकमुद्दिष्टं काल्यर्थे विनियोगता ॥ ७ ॥
मायया तु षडङ्गानि ध्यानं श्रृणु वरानने।
कोटिकालानलाभासं चतुर्भुजं[3] त्रिलोचनम् ॥ ८ ॥
श्मशानाष्टकमध्यस्थं मुण्डाष्टकविभूषितम्।
पञ्चप्रेतस्थितं देवं त्रिशूलं डमरुं तथा ॥ ९ ॥
खड्गं च खर्परं चैव वामदक्षिणयोगतः।

---

१ महाकालपरः शम्भुः पाठ उचितः।
२ परातीतगुणाकरः पाठो=न्यत्र।
३ चतुर्बाहुं पाठ उचितः।

विभ्रतं सुन्दरं देशं श्मशानभस्मभूषितम् ॥ १० ॥
नानाशवैः क्रीडमानं कालिकाहृदयस्थितम् ।
लालायन्तं रतासक्तं घोरचुम्बनतत्परम् ॥ ११ ॥
गृद्धगोमायुसंयुक्तं फेरवीगणसंयुतम् ।
जटापटलशोभाढ्यं सर्वशून्यालये स्थितम् ॥ १२ ॥
सर्वशून्यं मुण्डभूषं प्रसन्नवदनं शिवम् ।
भावयेत्परमेशाानि रतियन्त्रं तु यन्त्रकम् ॥ १३ ॥
त्रिकोणसंज्ञा योनिः स्यात्तच्चक्रं कालचक्रकम् ।
योनौ वा हृदये भाले कामिन्याः स्तनमण्डले ॥ १४ ॥
महाकालं यजेद्देवं पञ्चावरणसंयुतम् ।
त्रिकोणे पूजयेद्देवि त्रिकोणे कालिकादिकम् ॥ १५ ॥
षड्दले तु षडङ्गानि नाभौ दिक्शक्तयो मताः ।
हृदये द्वादशादित्यं कण्ठे षोडश नित्यकाः ॥ १६ ॥
द्विपत्रे परमेशाानि कालकालीं प्रपूजयेत् ।
विपरीतरतौ देवि रतौ देवीं प्रपूजयेत् ॥ १७ ॥
शक्तिं स्वभिमुखीं कृत्वा पूजयेत्कालिकां पराम् ।
मूलाधाराद्द्विपन्त्रान्तं तथा चक्राणि कारयेत् ॥ १८ ॥
पूजयेत्परमेशानि गुरुपूजापुरः सरम् ।
पात्रासादनकं कृत्वा कालीवत्परिपूजयेत् ॥ १९ ॥
एवं पूजां विधायाथ लक्षसंख्यं जपेच्छिवे ।
तद्दशांशेन हवनं करवीर प्रसूनकैः ॥ २० ॥
स्वयंभुवाक्तैर्बीजाक्तैः कारणाक्तैश्च वा हुनेत् ।
नित्यं नैमित्तिकं काम्यं कालीवत्सर्वमाचरेत् ॥ २१ ॥
अज्ञानान्तकरी काली विद्याया विधिरुच्यते ।
मूर्तिं ध्यानोदितां ध्यात्वा सर्वावयवशोभिताम् ॥ २२ ॥
मूलाधारे गणपतिं लिङ्गे गणपतिवल्लभाम्[४] ।
नाभौ[५] बटुकनाथं च हृदि बटुकवल्लभाम् ॥ २३ ॥
कण्ठे उड्डयानपीठं च भ्रुवि प्रदीप्तमङ्गलाम् ।
ललाटे करवीरं च अलके अन्नपालकम् ॥ २४ ॥

---

४ गणपवल्लभाम् पाठ उचितः ।

५ मा. ख. श्लो. २३ (ख) ..श्रूयते ।

मूर्ध्नि वै कालिकां चैव चतुर्थ्यन्तां प्रपूजयेत्।
मूर्ध्नि व्योमेश्वरीं वा च[६] ललाटे खेचरीं तथा ॥ २५ ॥
भ्रूमध्ये दिग्चरीं चैव हृदये गोचरीं तथा।
नाभौ च भूचरीं चैव लिङ्गे च खगमूर्तिकाम् ॥ २६ ॥
मूलपत्रे विचित्रां च पूजयेत् साधकोत्तमः।
तथा ललाटे सूर्यं च दक्षनेत्रे कलाधिपम् ॥ २७ ॥
वैश्वानरं वामनेत्रे कण्ठे च कालिकां तथा।
हृदये दासयोनिं च नाभौ च दाससिद्धकम् ॥ २८ ॥
ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा।
वाराह्यैन्द्री च चामुण्डा महालक्ष्मी परा मता ॥ २९ ॥
मन्थानभैरवश्चैव षट्चक्रभैरवस्तथा।
षट्कारभैरवश्चैव रविभक्षकभैरवः ॥ ३० ॥
वीरेशभैरवश्चैव श्रीमन्त्रेश्वरभैरवः।
हंसगभैरवश्च[७] चण्डिकेश्वर भैरवः ॥ ३१ ॥
मूर्ध्नि ललाटे कण्ठे च हृदये नाभिमण्डले।
लिङ्गे च मूलाधारे च सर्वाङ्गे पूजयेत्सुधीः ॥ ३२ ॥
यथाशक्ति जपेद्विद्वान् बलिं दद्याद्यथाविधि।
ॐ क्षौं च क्षत्रपालाय इमं बलिं पदं वदेत् ॥ ३३ ॥
गृह्ण गृह्ण[८] द्वयं युक्तक्षत्रपालबलिर्मतः।
इति पूजाविधिर्देवि श्रीकालीकालयोर्मतः ॥ ३४ ॥
अन्तर्ध्यानविधानेन विपरीतरतिर्मता।
महाकालप्रसङ्गेन रहस्यमपि दर्शितम् ॥ ३५ ॥
गोपनीयं त्वया भद्रे रहस्यातिरहस्यकम्।
गोपनीयं गोपनीयं स्वयोनिरपरैस्तथा ॥ ३६ ॥
काली नित्या च तन्मन्त्रः कथ्यते श्रृणु साम्प्रतम्।
विषबीजं ततो मायां कालीति युगलं वदेत् ॥ ३७ ॥
महाकालीपदं प्रोच्य कौमारीति पदं वदेत्।
भगं देहि पदं देवि ठठयुक्तो मनुर्मतः ॥ ३८ ॥
उनविंशाक्षरी विद्या काली नित्या प्रकीर्तिता।

६ वा=थ पाठ उचितः।

७ मा. ख. हंसगर्भभैरवश्च पाठः।

८ गृह्णद्वयेन संयुक्त इति पाठ उचितः।

परशुरामो ऋषिः प्रोक्तश्छन्दोऽनुष्टुप्प्रकीर्तित ॥ ३९ ॥
देवता कालिका प्रोक्ता मायाबीजं प्रकीर्तितम् ।
कालिका च भवेच्छक्तिः ठयुग्मं कीलकं भवेत् ॥ ४० ॥
कालिकाप्रीणताद्यर्थे विनियोगः प्रकीर्तितः ।
षडङ्गमाचरेद्देवि जातियुक्तेन मायया ॥ ४१ ॥
ततो ध्यायेन्महेशानि चितानिर्वाणमण्डपे ।
श्यामवर्णा महाभीमा घोररावा करालिनी ॥ ४२ ॥
मुण्डमालाविभूषाढ्या दक्षे खड्गं प्रविभ्रती ।
तर्जनीं धारयेद् वामे नृत्यन्ती प्रेतभूमिषु ॥ ४३ ॥
एवं ध्यात्वा महेशानि तद्यन्त्रं श्रृणु पार्वति ।
त्रिकोणयुग्मं देवेशि वृत्ताष्टादलभूपुरम् ॥ ४४ ॥
बिन्दौ कालीं समाराध्य त्रिकोणयुग्मके पुनः ।
गुणत्रयं तत्पुरस्थास्तच्छक्तयः क्रमान्मताः ॥ ४५ ॥
ब्राह्मादि मातरश्चाष्टौ लोकपालाः सशस्त्रकाः ।
भूपुरे पूजयेद्देवि धूपदीपोपचारकैः ॥ ४६ ॥
नैवेद्यं विविधं खाद्यं पञ्चस्वाद्यं विशेषतः ।
निवेदयेत् कालिकायै ततस्तुष्टा भविष्यति ॥ ४७ ॥
नीराजनान्तं कृत्वाऽथ प्रजपेल्लक्षमन्त्रकम् ।
दशांशं पायसेनैव होमं कुर्याद्विधानतः ॥ ४८ ॥
अथवा करवीरेण होमयेत्सर्वसिद्धये ।
सर्वसिद्धेश्वरो देवि भवत्येव न संशयः ॥ ४९ ॥
मन्त्रभेदान् प्रवक्ष्यामि यथावदवधारय ।
नामत्रयं महेशानि प्रत्येकं प्रणवक्रमात् ॥ ५० ॥
मन्त्रत्रयं महेशानि बीजत्रयनियोजनात् ।
विद्यात्रयं पुनर्देवि ध्रुवमायानियोजनात् ॥ ५१ ॥
विद्यात्रयं महेशानि प्रत्येकं नवधा मनुः ।
दुर्भगानां च दीनानां क्रूराणां पापकर्मिणाम् ॥ ५२ ॥
मन्त्रमेनं प्रकथयेत् सर्वैश्वर्यमयो भवेत् ।
लक्ष्मीवान् कीर्तिमान् धन्यो भवत्येव न संशयः ॥ ५३ ॥
सुन्दरीं कामिनीं दृष्ट्वा तस्याश्चैव भगं वदेत् ।
भगशब्देन तद्भगं च सा दासी मन्त्रजापतः ॥ ५४ ॥

व्याकुला सम्भवत्येव स्वेच्छया भोगमिच्छति।
ललाटे हृदये विद्यां योनिमध्ये यथाक्रमम् ॥ ५५ ॥
यस्या सञ्चित्तयेद्विद्यां तन्नामस्मृतिपूर्विकाम्।
माता कर्षयति प्राज्ञः किमन्यैर्बहुजल्पितैः ॥ ५६ ॥
साक्षात् स कालीपुत्रः[९] स्यान्नात्रकार्या विचारणा।
देवेशि कथ्यते गोप्यं यत्र कुत्रापि कीर्तितम् ॥ ५७ ॥
कपालिनी महाविद्या द्वितीया तन्मनुं श्रृणु।
आदौ स कमलं प्रोच्य कामं वह्निपदे स्थितम् ॥ ५८ ॥
इन्दुराबिन्दुभूषाढ्यं बीजं काली स्वरूपकम्।
कपालिनि महाकपालप्रियमानसे वदेत् ॥ ५९ ॥
कपालसिद्धिं मे देहि हूँ फट् स्वाहान्तको मनुः।
त्रिंशद्वर्णार्ध वर्णाढ्यो मन्त्रराजो महोत्तमः ॥ ६० ॥
भैरवोऽस्य ऋषिः प्रोक्तो त्रिष्टुप्छन्द उदाहृतम्।
कपालिनी देवताऽत्र कालिकाबीजमीरितम् ॥ ६१ ॥
स्वाहा शक्तिःसमाख्याता हूँ फट् कीलकमीरितम्।
कपालिनी सिद्धयेऽत्र विनियोगः प्रकीर्तितः ॥ ६२ ॥
षड्दीर्घभाजा बीजेन कुर्यादङ्गानि षट्क्रमात्।
ध्यायेदञ्जनपुञ्जाभामापीनस्तनयुग्मकाम् ॥ ६३ ॥
चन्द्रवक्त्रां च विम्बोष्ठीं मुक्तकेशीं दिगम्बरीम्।
चतुर्मुण्डोपरिगतां शङ्खकङ्कणभूषिताम् ॥ ६४ ॥
खड्गत्रिशूलवरदाभयान्हस्तचतुष्टये।
क्रमात्संविभ्रतीं देवीं गीतहास्यपरायणाम् ॥ ६५ ॥
एवं सञ्चिन्तयेद्देवि महाकापालिनीं पराम्।
त्रिकोणत्रितयं वृत्तं दलाष्टकविभूषितम् ॥ ६६ ॥
भूपुरेण समाकीर्णं चतुर्द्वारोपशोभितम्।
यन्त्रं कपालिनीदेव्या सर्वसाम्राज्यदायकम् ॥ ६७ ॥
महाकालीं महालक्ष्मीं महासरस्वतीं तथा।
रतिं प्रीतिं तथा कान्तिं द्वितीयेत्थं तृतीयके ॥ ६८ ॥
इच्छां ज्ञानं क्रियां चैव त्रिकोणे तु तृतीयके।
मध्ये कापालिनीं पूज्य दलेऽष्टौ मातृकार्चनम् ॥ ६९ ॥

---

९ कालिकापुत्रो नात्र ............ पाठ उचितः।

ततोऽष्टौ भैरवाँश्चैव दिगीशान् सास्त्रकान् यजेत्।
पञ्चोपचारैः संपूज्य कुलाचारपरायणः ॥ ७० ॥
साधकः प्रजपेल्लक्षं हयारिकुसुमैर्हुनेत्।
मांसेन मधुना वाऽपि जुहूयादिष्टसिद्धये ॥ ७१ ॥
तदा कपालिनीदेवी सिद्धिर्भवति निश्चितम्।
पुरश्चर्यां विना देवि कथं सिद्धिः कपालिनी ॥ ७२ ॥
मुण्डासने नरः स्थित्वा सदा तद्गतमानसः।
महामाला महापात्रं महायन्त्रासनादिकम् ॥ ७३ ॥
कृत्वा तु विधिवद्देवि तदा भवति साधकः।
अथान्यदपि वक्ष्यामि कपालिन्याः पराक्रमम् ॥ ७४ ॥
रणवीरकपालानि कुजवारे निशामुखे।
समाहृत्य महेशानि पञ्च पञ्च समन्वितः ॥ ७५ ॥
दिग्बन्धभूतशुद्ध्यादि दिग्पालाद्युपहारकैः।
साधकः सहितो भूत्वा सिन्दूरतिलकाङ्कितः ॥ ७६ ॥
खड्गहस्तो दिशावासो मुक्तकेशो मुदान्वितः।
ईदृशः साधकः सोऽहं कृतिभावसमन्वितः ॥ ७७ ॥
सुदूरे साधकान् स्थाप्य पुष्पवर्त्त्या घृताक्तया।
दीपं संलापयेद्देवि यजेत्तत्र कपालिनीम् ॥ ७८ ॥
भाग्यात्कपालिनीसिद्धिः कदाचित्प्रभविष्यति।
तथापि कलिकाभक्ते भविष्यति भविष्यति ॥ ७९ ॥
कपालं भाग्ययोगेन कदाचिद्यदि लभ्यते।
तदा कपालिनी सिद्धिः कज्जलं तद्धि संग्रहेत् ॥ ८० ॥
तत्कज्जलं कपाले तु कज्जलं स्थाप्य वै जपेत्।
संमोहनाञ्जनं नाम महदञ्जनमीरितम् ॥ ८१ ॥
तत्कपाले महेशानि किन्तद्यन्न करे स्थितम्।
एषा कपालिनी नित्या द्वितीया कालिका च तत् ॥ ८२ ॥
इति संक्षेपतः प्रोक्तं कुल्लां श्रृणु तृतीयकम्।
कालिका कुल्लुका कुल्ला त्रिधा नाम्ना तु या मता ॥ ८३ ॥
तस्मात्कुल्लेति नाम्ना च कुलपूज्यत्वतां गता।
विद्यानां कुलपूज्यत्वात्कुल्लुका परिकीर्तिता ॥ ८४ ॥
कुल्लुका कुलपूज्यत्वात्कुलनाम्ना कुलेश्वरि।

तस्या मन्त्रं प्रवक्ष्यामि यथावदवधारय ॥ ८५ ॥
प्रणवं पूर्वमुद्धृत्य कालिकाबीजमुद्धरेत् ।
कुल्लायै हृन्मनुर्देवि प्रोक्तः सप्ताक्षरो मनु ः ॥ ८६ ॥
भैरवोऽस्य ऋषिः प्रोक्तो गायत्रीच्छन्द ईरितम् ।
कुल्ला काली देवताऽत्र कालिका बीजमीरितम् ॥ ८७ ॥
कुल्ला शक्तिरिति ख्याता नमः कीलकमीरितम् ।
सर्वार्थसाधने चैव विनियोगः प्रकीर्तितः ॥ ८८ ॥
कालिकोक्ते यजेत्पीठे कुमारी यन्त्रमेव हि ।
कुमार्यां पूजयेद्देवि कुल्ला सिद्धा भवेद्ध्रुवम् ॥ ८९ ॥
लक्षद्वयं जपेन्मन्त्रं हविष्याशी दिवाशुचिः ।
अशुचिश्च तथा रात्रौ श्रीकुल्लादर्शनोत्सुकः ॥ ९० ॥
कदाचिदभ्रसदृशीं कदाचिज्ज्योतिसन्निभाम् ।
चतुर्भुजां त्रिनयनां मुकुटाटोपमण्डिताम् ॥ ९१ ॥
शवासनगतां कुल्लां दशमुण्डोपरिस्थिताम् ।
वराभयकरे वामे पुस्तकं स्रक् च दक्षिणे ॥ ९२ ॥
नानाविलासकुशलां कुल्लाम्बां परिचिन्तयेत् ।
एवं चिन्तयतस्तस्य दशविद्यामयी कला ॥ ९३ ॥
भवत्येव महेशानि कुल्लाम्बायाः प्रभावतः ।
करवीरैर्जपापुष्पै हुनेज्जपदशांशतः ॥ ९४ ॥
तद्दशांशं गन्धतोयैस्तर्पयेन्मार्जयेदपि ।
ब्राह्मणान् भोजयेद्देवि तदन्ते तु कुमारिकाम् ॥ ९५ ॥
पूजयेत्परमेशानि कुल्लाविद्याप्रसिध्यति ।
कुल्ला विद्या महेशानि सर्वविद्या प्रकाशिनी ॥ ९६ ॥
यन्त्रमस्यास्ति देवेशि नैमित्ते काम्यकर्मणि ।
त्रिकोणद्वयमुद्धृत्य वृत्ताष्टदलभूषितम् ॥ ९७ ॥
चतुर्द्वारसमायुक्तं भूपुरैकेन संयुतम् ।
मध्ये बीजं न्यसेत्काल्याः बीजयुक्तं महोत्तमम् ॥ ९८ ॥
धृतिं पुष्टिं तथा मेधां प्रज्ञां चैव तथा जयाम् ।
त्रिकोणद्वितये पूज्यौ दलेष्टे मातृभैरवौ ॥ ९९ ॥
लोकपालान् शस्त्रयुक्तान् कुल्लुकावरणे यजेत् ।
अथवा देवदेवेशि कालिकावत्समस्तकम् ॥ १०० ॥

नवरात्रद्वये चैव ग्रहणस्य द्वये तथा।
संक्रमे चोत्तमतिथौ पूजयेद्यन्त्रमुत्तमम्[१०] ॥ १०१ ॥
यदैव कार्यमुत्पन्नं तदैव कुल्लुकार्चनम्।
न विद्या सिद्धिमाप्नोति कुल्लुकार्चनमन्तरा ॥ १०२ ॥
आदिमान्त्यसमायुक्तः स विद्यासिद्धिमाप्नुयात्।
आदिमान्त्यं न जानाति यो गुरुः स तु शिष्यहा ॥ १०३ ॥
आदिमान्त्यक्रियायुक्तो नित्या मन्त्रो हि सिद्ध्यति।
आदिमन्त्यविहीनस्य न स्याद्देवस्य दर्शनम् ॥ १०४ ॥
प्रीतिर्भयं द्वयमिति द्वाभ्यां संथ्यापितं जगत्।
अयं प्रयोगो गोप्तव्यो न कुत्रापि मयेरितः ॥ १०५ ॥
कुललादेव्यादि नित्यासु जपो[११] हि द्वितयावधि।
द्वितयाभ्यां न सिद्धोऽसौ स मन्त्रो न जपक्षमः[१२] ॥ १०६ ॥
कुल्ला नित्या मया प्रोक्ता यस्यामेतत् प्रतिष्ठितम्।
समस्तजगति सारं कुल्लासंक्षेपपूजनम् ॥ १०७ ॥
श्रृणु देवि प्रवक्ष्यामि रहस्यातिरहस्यकम्।
विद्यानां कुलपूज्यत्वात्कुरुकुल्ला कुलाधिकान्[१३] ॥ १०८ ॥
कुल्लाया अपि पूज्यत्वात्कुरुकुल्ला महोदया।
तस्या मन्त्रो महेशानि सर्वमन्त्रोत्तमोत्तमः ॥ १०९ ॥
काली ध्रुवं समुद्धृत्य कुरुकुल्ले पदं वदेत्।
कालीमाया मम परं सर्वजनं पदं ततः ॥ ११० ॥
वशमानय चोच्चार्य काली च कुरुकुल्लुके।
पदमुद्धृत्य देवेशि माया स्वाहान्ततो मनुः ॥ १११ ॥
सप्तविंशत्यर्णसङ्ख्या मन्त्रोऽस्याः सुरपादप।
एतस्य हृन्मनुर्देवि कुरुकुल्ला नवाक्षरी ॥ ११२ ॥
श्रीविद्या विषये भिन्ना कुरुकुल्ला महेश्वरि।
काल्यङ्गविद्या देवेशि श्रीविद्या कुरुकुल्लुका ॥ ११३ ॥
इयं भिन्ना महाविद्या काली नित्या चतुर्थिका।
विना तु हृन्मनुं देवि कुरुकुल्ला न सिध्यति ॥ ११४ ॥

१० यन्त्रमद्भूतम् पाठो=न्यत्र।
११ मा. ख. जयो पाठः।
१२ जयक्षम इति पाठ मा. ख.।
१३ मा. ख. महोदया पाठः।

हृन्मनुं कुरुकुल्लाया ज्ञात्वा यत्नेन पार्वति ।
प्रणवं कूर्चमूद्धृत्य कुरुकुल्ले पदं वदेत् ॥ ११५ ॥
ह्रीं स्वाहान्तो मनुर्देवि कुरुकुल्ला कुमारिका ।
हृन्मनुत्वेन कथितः सर्वमन्त्रोत्तमोत्तमः ॥ ११६ ॥
कालभैरवऋषिश्चास्य वृहतीच्छन्द ईरितम् ।
देवता कुरुकुल्ला च सर्वविद्यामयी परा ॥ ११७ ॥
क्रीं बीजं ह्रीं तथा शक्तिः स्वाहा कीलकमीरितम् ।
कुरुकुल्ला कुमार्यास्तु भैरवो ऋषिरीरितः ॥ ११८ ॥
विराट्छन्दो निगदितं कूर्चबीजं प्रकीर्तितम् ।
स्वाहा शक्तिः समुद्दिष्टा विनियोगो यथेच्छदा ॥ ११९ ॥
कुरुकुल्लां मित्रकुल्लां कुरुकुल्लां हृदयङ्गमाम्[१४] ।
काली क्षुद्रवश्च कुरुकुल्ले क्रीं ह्रीं ह्रूं मम सर्वतः ॥ १२० ॥
जनवशं क्रीं कुरुयुक् कुरुकुल्ले त्रिविष्टपा ।
स्वाहान्तोऽयं मनुर्दिष्टो भैरवो हि विराट् ततः ॥ १२१ ॥
ह्रीं बीजं ततः स्वाहा शक्तिः क्रीं कीलकं मतम् ।
सर्वार्थविनियोगः स्यात्पूर्ववत् क्वापि कीर्तितम् ॥ १२२ ॥
विनियोगः पूर्ववत् स्यात् श्रृणुस्वङ्गादिकल्पनाम् ।
षड्दीर्घकालीबीजेन षडङ्गानि क्रमाच्चरेत् ॥ १२३ ॥
ततो ध्यायेन्महाविद्यां कुरुकुल्लां कुलेश्वरीम् ।
शवोपरिसमासीनां मुण्डमालाविभूषिताम् ॥ १२४ ॥
कपालकर्त्रिकाहस्ताम् खड्गखेटकधारिणीम् ।
अञ्जनाद्रिनिभां दिव्यां मुक्तकेशीं चतुर्भुजाम् ॥ १२५ ॥
पीनोन्नतकुचद्वन्द्वा पीनवक्षो नितम्बनीम् ।
भक्तानन्दकरोद्युक्तां साधकाभीष्टदायिनीम् ॥ १२६ ॥
आसवापूर्णनयनां कामिनीजनमोहिनीम् ।
एवं सञ्चिन्तयेद्देवीं कुरुकुल्लां महोदयाम् ॥ १२७ ॥
एवं ध्यात्वा जपेल्लक्षसङ्ख्यत्रिमधुरान्वितैः ।
होमयेद् विल्वपत्रैश्च विल्वपुष्पैरपि प्रिये ॥ १२८ ॥
दशांशतर्पणं कुर्यात् दशांशेन तु मार्जनम् ।
दशांशविप्रभोज्यं च तेन सिद्धो मनुर्भवेत् ॥ १२९ ॥

---

१४ मा. ख. हृदङ्कमाम् पाठः ।

पूजयेत् कालिकापीठे त्रिकोणमयसोज्ज्वले।
वृत्ताष्टदशभूषाढ्ये भूपुरद्वयशोभिते ॥१३०॥
बिन्दौ बीजं लिखेत्काल्यास्त्रिशक्तित्रयमर्चयेत्।
कालीं तारां छिन्नमस्तां बालां वा बगलां रमाम् ॥१३१॥
उग्रप्रभांमुग्रवीर्यां तृतीयात्तु तृतीयकाम्।
त्रिकोणत्रितये पूजा क्रमेण परिकीर्तिता ॥१३२॥
ब्राह्म्याद्यष्टौ भैरवाँश्च पूजयेद्द्विदलाष्टके।
लोकपालान्तदस्त्रान्ताः[१५] पूजयेत्परमेश्वरि ॥१३३॥
शवे श्मशाने विपिने अरण्ये भूतसंकुले।
पूजयेत् कुरुकुल्लाम्बां सर्वसिद्धिं स बिन्दति ॥१३४॥
यद्यत्प्रार्थयते चित्ते तत्तदाप्नोति साधकः।
समस्तान् पूजयेद्देवि ब्राह्मणाँश्च सुवासिनीम्[१६] ॥१३५॥
विप्राराधनमात्रेण किन्तद्यत्र करेस्थितम्।
तण्डुलेन जयावाप्तिर्गोधुमेन धनागमः ॥१३६॥
मासैः शत्रुर्मृत्युं याति मुद्गैर्मोक्षकलां लभेत्।
तिलतण्डुलहोमेन महाप्रीतिं स विन्दति ॥१३७॥
राजीलवणहोमेन कामिनीं कर्षयेद् ध्रुवम्।
सर्षपैर्लवणैर्देवि कामिनीमनभञ्जनम् ॥१३८॥
सर्पिलवणहोमेन कामिनीमनरञ्जनम्।
हरिद्रया दरिद्राणि नश्यन्त्येव न संशयः ॥१३९॥
रहस्यादतिगोप्या हि नित्या प्रोक्ता विरोधिनी।
पञ्चमीसंज्ञिकां नित्यां यथावदवधारय ॥१४०॥
प्रणवं पूर्वमुद्धृत्य कालीप्रणवमुद्धरेत्।
माया कामस्ततः कूर्चः प्रोक्ता विरोधिनीपदम् ॥१४१॥
शत्रुमुच्चाटय पदं विरोधयद्वयं वदेत्।
शत्रुक्षयकरि प्रोच्य हूँ फट् स्वाहान्वितो मनुः ॥१४२॥
द्वात्रिंशद्वर्णसंयुक्तो मन्त्रराजो महोत्तमः।
महामन्त्रोऽयमाख्यातो ऋषिर्भैरव ईरितः ॥१४३॥
गायत्रीच्छन्द आदिष्टं देवता तु विरोधिनी।

---

१५ तदस्त्रान्तान् पाठ उचितः।

१६ सुवासिनः पाठ उचितः।

कालीबीजं बीजमस्या माया शक्तिः प्रकीर्तिता ॥ १४४ ॥
कामबीजं कीलकं स्याद् विनियोगो यथेच्छया ।
कालीषड्दीर्घबीजेन षडङ्गयुग्ममाचरेत् ॥ १४५ ॥
ध्यायेदञ्जनगिरिनिभां द्विरब्दवर्षदेशिनीम् ।
पीनोन्नतकुचद्वन्द्वां सर्पास्थिमालिकायुताम् ॥ १४६ ॥
चतुर्भुजां त्रिनयनां शवपद्मोपरिस्थिताम् ।
त्रिशिखं नागपाशं च घण्टां च डमरुं तथा ॥ १४७ ॥
संविभ्रतीं महादेवीं क्रमाद्भुजचतुष्टये ।
धूम्रां वरां पीतगात्री मीषत्प्रहसिताननाम् ॥ १४८ ॥
मोहैर्वीरवरं[१७] ब्रूहि सर्वतत्त्वं ददाम्यहम् ।
उपस्थितं ते यत्कार्यं तत्तत्कार्यं करोम्यहम् ॥ १४९ ॥
एवं संवदतीं देवीं चारुहासां मनोहराम् ।
विरोधकरणोद्युक्तां शत्रूणां नाशकारिणीम् ॥ १५० ॥
कालिकोक्ते यजेत्पीठे त्रिकोणत्रयशोभिते ।
वृत्ताष्टदलभूषाढ्ये भूपुरैकेन शोभिते ॥ १५१ ॥
चतुर्द्वारविभूषाढ्ये श्रीबीजोज्ज्वलकर्णिके ।
विरोधिनी कर्णिकायां त्रिकोणत्रितये क्रमात् ॥ १५२ ॥
धूम्रां च पूष्णां ज्वलिनीं ज्वालिनीं विष्फुलिङ्गिनीम् ।
सुश्रीं सुरूपां कपिलां ततो हव्यवहां यजेत् ॥ १५३ ॥
विरोधिनीं मस्तके तु ततो हि दशमीं यजेत् ।
दलाष्टमे भैरवाष्टौ भैरवेण समन्विताम् ॥ १५४ ॥
भूपुरे लोकपालाँश्च तदस्त्राणि च तद्बहिः ।
ततो नीराजनं कृत्वा लक्षसंख्यं जपेन्मनुम् ॥ १५५ ॥
दशांशं जुहुयाद्वह्नौ निम्बवह्नौ यथाविधि ।
अरिष्टमालां कृत्वा च महामुण्डासनी नरः ॥ १५६ ॥
जुहुयादरिनाशाय अरिष्टफलमादरात् ।
विभीतकेन जुहुयात्सर्वशत्रु निवर्हणम् ॥ १५७ ॥
धुत्तूरकुसुमैर्धीमान् शत्रून्विद्वेषयेन्नरः ।
काकोलूकस्य मांसेन[१८] शत्रून् मारयति क्षणात् ॥ १५८ ॥

---

१७ मा. ख. मा भैर्वीरवरं पाठः ।

१८ मांसो हि पाठ उचितः ।

राजवृक्षप्रसूतैश्च तत्काष्ठाग्नौ हुनेत् सुधीः।
विरोधिनी भवेत् सिद्धा धूमावत्यादिसंयुता ॥ १५९ ॥
अर्ककाष्ठादिसंयुक्ता शत्रुविद्वेषकारिणी।
वायव्याभिमुखो भूत्वा कटुजीरकजञ्जलम् ॥ १६० ॥
कोष्ठां पिबेन्महेशानि शत्रुर्ज्वरयुतो भवेत्।
पराभिचारनाशार्थं स्वरक्षार्थं यथाविधि ॥ १६१ ॥
एकान्ते मातृगेहे वा मृतहट्टे शिवालये।
विरोधिनीं जपेद् विद्यां ह्ययुतं चोक्तमार्गतः ॥ १६२ ॥
विभीतकस्य समिधा[१९] हुनेच्छत्रुनिवारणम्।
नाभिमात्रोदके गत्वा मरीचजलयोगतः ॥ १६३ ॥
तर्पयेद्देवतानीरैस्त्रैलोक्यद्वेषणं चरेत्।
अथाकर्षणमन्विच्छन्वल्मीकमृत्समानयेत्[२०] ॥ १६४ ॥
श्मशानमृत्समादाय[२१] गोधूमहिङ्गुजीरकैः।
पुत्तलीसाध्यरूपां च कारयेत्परमेश्वरि ॥ १६५ ॥
नासायां दोरकन्दत्वा प्राणस्थापनपूर्वकम्।
विरोधिनीं जपेत्तत्र करवीरैः समर्चयेत् ॥ १६६ ॥
दुग्धेन पुत्तलीं कृत्वा तापयेत्खदिरानले।
अनेन क्रमयोगेन दिनानि च चतुर्दश ॥ १६७ ॥
यः करोति नरश्रेष्ठः सर्वाकर्षणकारकः।
वनितां मदगर्वाढ्यं समाकर्षति योगतः ॥ १६८ ॥
विचार्याकर्षणं कार्यं भवेद्वा न भविष्यति।
ध्यात्वा साध्यगले पाशं मस्तके त्वरिताङ्गुशम् ॥ १६९ ॥
एवं संचिन्त्य देवेशि त्रैलोक्याकर्षको भवेत्।
रहस्यमपि ते देवि तव प्रीत्या निगद्यते ॥ १७० ॥
विप्रचित्तादिदुष्टानां वधार्थं पूर्वमुद्धृता।
विप्रचित्तेति विख्याता वैप्रचित्तविनाशिनी ॥ १७१ ॥
षष्ठी नित्या महाविद्या तन्मन्त्रं श्रृणु पार्वति।
प्रणवं कमला काम चामुण्डा रावमुच्चरेत् ॥ १७२ ॥
विप्रचित्ते पदं प्रोच्य दुष्टघातिनि चोच्चरेत्।

१९ समिधां पाठ उचितः।

२० वल्मीकमृदमानयेत् पाठ उचितः।

२१ श्मशानमृदमादाय पाठ उचितः।

शत्रून्नाशय चोच्चार्य एतद्दिनावधि प्रिये ॥ १७३ ॥
सिद्धिं मे देहि चोच्चार्य हूँ फट् स्वाहान्तगो मनुः ।
चतुस्त्रिंशद्वर्णयुतो विप्रचित्तो मनुर्महान् ॥ १७४ ॥
ईश्वरोऽस्य ऋषिर्देवि जगतीच्छन्द ईरितम् ।
विप्रचित्ता देवता हि चामुण्डाबीजमीरितम् ॥ १७५ ॥
कमला शक्तिराख्याता कामबीजं तु कीलकम् ।
षड्दीर्घाद्येन कामेन षडङ्गन्यासमाचरेत् ॥ १७६ ॥
सिंहोपरिसमारूढां शवपञ्जरमध्यगाम् ।
चतुर्भुजां त्रिनयनां पीनोन्नतपयोधराम् ॥ १७७ ॥
दिगम्बरां मुक्तकेशीं ललज्जिह्वां भयानकाम् ।
भीमदंष्ट्रां करालास्यां सृक्किणीं रक्तवाहिनीम् ॥ १७८ ॥
खड्गमुण्डकपालत्रिशूलहस्तां महोदरीम् ।
नीलोत्पलनिभां श्यामां भक्तानुग्रहकारिणीम् ॥ १७९ ॥
दैत्यसंहरणोद्युक्तां साधकानामभीतिदाम् ।
एवं संचिन्त्य देवेशीं विप्रचित्तां शिवप्रियाम् ॥ १८० ॥
लक्षमात्रं जपेन्मन्त्रं दशांशं कुमुदैर्हुनेत् ।
अथाष्टगन्धनीरेण तद्दशांशं प्रतर्पयेत् ॥ १८१ ।
मार्जनं तद्दशांशेन दशांशेनाभिषेचनम् ।
तद्दशांशं विप्रभोज्यं विप्रचित्तासुसिद्धये ॥ १८७ ॥
त्रिकोणवृत्तषट्कोणं वृत्ताष्टदलभूषितम् ।
वृत्तभूपुरसंयुक्तं बिन्दुबीजविभूषितम् ॥ १८३ ॥
बिन्दौ यजेद्विप्रचित्तां त्रिकोणे त्रिगुणां यजेत् ।
षट्कोणे तु षडङ्गानि तद्दले मातृभैरवौ ॥ १८४ ॥
भूपुरे लोकपालाँश्च तदस्त्राणि च तद्बहिः ।
ततो निराजनं कृत्वा जपं दैव्यै समर्पयेत् ॥ १८५ ॥
पुरश्चर्यासमायुक्तः प्रयोगाहोए न चान्यथा ।
साकल्यैर्जुहुयाद्देवि शान्तिकर्मणि साधकः ॥ १८६ ॥
मालत्या जुहुयाद्वश्ये केतक्या वाग्विभूतये ।
करवीरैर्वशीकारः किंशुकैः स्तम्भनं भवेत् ॥ १८७ ॥
मोहनं चोड्रपुष्पेण[22] धुत्तूरैर्मारणं दिशेत् ।

---

२२ चोच्चपुष्पेण पाठो मा. ख. ।

वृहत्या तु रिपूच्चारो गिरिकर्ण्या धनागमः ॥ १८८ ॥
काशपुष्पैर्रिपूच्चारो विद्वेषः कर्णिकारजैः ।
नीवारैर्जुहुयाद्देवि धान्यसिद्ध्यर्थमेव हि ॥ १८९ ॥
कलापपुष्पैर्जुहुयात्तुलस्याः सर्वसंपदः ।
कौसुम्भकुसुमैर्देवि कामिनीं वाञ्छितां लभेत् ॥ १९० ॥
मधुपुष्पैश्च जुहुयादभीष्टसिद्धये ध्रुवम् ।
धातक्या जुहुयाद्देवि धनैर्धनपतिर्भवेत् ॥ १९१ ॥
यद्रोगे भेषजं यच्च तेन तद्रोगनाशनम् ।
रहस्यातिरहस्यं च तथापि कथ्यते श्रृणु ॥ १९२ ॥
प्रणवं च बधूबीजं हूँबीजं भुवनां ततः ।
पुनः पूर्वं ततो हूँ फट् उग्रासप्ताक्षरो मनुः ॥ १९३ ॥
भैरवोऽस्य ऋषिः प्रोक्तो बृहती छन्द ईरितम् ।
उग्रा तु सप्तमी नित्या देवता परिकीर्तिता ॥ १९४ ॥
कूर्चबीजं च फट् शक्तिर्बधूः कीलकमीरितम् ।
सर्वाभिष्टादिसिध्यर्थं विनियोगः प्रकीर्तितः ॥ १९५ ॥
षड्दीर्घाद्येन बीजेन मायाख्येन षडङ्गकम् ।
ततो ध्यायेत्परामुग्रां प्रत्यालीढपदस्थिताम् ॥ १९६ ॥
चतुर्भुजां त्रिनयनां मुण्डमालाविभूषिताम् ।
दिगम्बरां करालास्यां घोरदंष्ट्रां भयानकाम् ॥ १९७ ॥
शवोत्सङ्गे क्रीडमानां श्मशानालयवासिनीम् ।
श्यामवर्णां मुक्तकेशीं खड्गेन्दीवरधारिणीम् ॥ १९८ ॥
कपालकर्त्रिकाहस्तां वरदानपरायणाम् ।
उग्रां ध्यायेन्महाविद्यां लक्षयुग्मं जपं चरेत् ॥ १९९ ॥
तद्दशांशेन जुहुयात् कमलैर्घृतसंयुतैः ।
तद्दशांशं तर्पणं च तद्दशांशेन मार्जनम् ॥ २०० ॥
विप्रभोज्यं दशांशेन तेनोग्रा सिद्धिदा ध्रुवम् ।
पर्वते प्रान्तरे घोरे विपिने तटिनीतटे ॥ २०१ ॥
एकलिङ्गे श्मशाने वा पुरश्चरणवान् भवेत् ।
अथास्याः पूजा यन्त्रं च यथावत् कथ्यते श्रृणु ॥ २०२ ॥
त्रिकोणवृत्ताष्टदलं वृत्तभूपुरभूषितम् ।
दलाष्टकविभूषाढ्यं किं वा वज्रविभूषितम् ॥ २०३ ॥

त्रिकोणमध्ये विलिखेत् कूर्चबीजं महोत्तमम्।
तारां नीलामेकजटां तत्त्रिकोणे प्रपूजयेत् ॥ २०४ ॥
ततो दलाष्टके देवि उग्राघोराष्टकं यजेत्।
वैरोचनाष्टकं पूज्य तथा पद्मान्तकान् यजेत् ॥ २०५ ॥
लोकपालान् तदस्त्राणि यथावद्विधिना यजेत्।
ततो नीराजनं कृत्वा जपं देव्यै समर्प्य च ॥ २०६ ॥
शवासने वा सुरते स्थित्वा च सर्वदा जपेत्।
सिन्दूरतिलको नित्यं संविदासवघूर्णितः ॥ २०७ ॥
मुक्तकेशो दिशावासो भक्तियुक्तो जितेन्द्रियः।
महाचीनद्रुमलतां संपाद्य परमेश्वरि ॥ २०८ ॥
त्रिकोणं चैव संवीज्य सदा तद्गतमानसः।
लक्षमात्रं जपेन्मन्त्रमुग्रा सिध्यति निश्चितम् ॥ २०९ ॥
अन्यत्सर्वं तु तारावत् कीर्तितं जगदीश्वरि।
न्यासपूजादिकं ध्यानं पुरश्चर्याविधानकम् ॥ २१० ॥
महोग्रतारावज्ज्ञेयं किं भूयः श्रोतुमिच्छसि ?
प्रणवं पूर्वमुद्धृत्य शिवबीजं समुद्धरेत् ॥ २११ ॥
वह्न्यारूढं नादबिन्दूषष्ठस्वरविभूषितम्।
बीजद्वयं समुच्चार्य उग्रप्रभस्वरूपकम् ॥ २१२ ॥
देवि कालि महादेवि स्वरूपं दर्शयेति च।
हूँ फट् स्वाहा समायुक्तं प्रोक्तमुग्रप्रभामनुः ॥ २१३ ॥
पञ्चविंशतितत्त्वाढ्यः प्रोक्तश्चोग्रप्रभामनुः।
महाकालो ऋषिः प्रोक्तस्त्रिष्टुप्छन्दः प्रकीर्तितम् ॥ २१४ ॥
उग्रप्रभाः महाकाली देवता परिकीर्तिता।
रँ बीजं ॐ तथा शक्तिः फट् कीलकमुदाहृतम् ॥ २१५ ॥
कालिकादर्शनार्थे वै विनियोगः प्रकीर्तितः।
उग्रप्रभाख्यबीजेन षड्दीर्घेन षडङ्गकम् ॥२१६ ॥
ध्यायेदुग्रप्रभां दिव्यां दिव्यनीलोत्पलप्रभाम्।
चतुर्भुजां त्रिनयनां शवपद्मोपरिस्थिताम् ॥ २१७ ॥
दिगम्बरां मुक्तकेशीं पीनोन्नतपयोधराम्।
सुप्रसन्नमुखाम्भोजां शवमांसप्रभोजिनीम् ॥ २१८ ॥
शवानां करसंघातैः कृतकाञ्चीं हसन्मुखीम्।

खड्गमुण्डधरां वामे दशखर्परकर्तृके ॥ २१९ ॥
विभ्रतीं परमानन्दजननीं कालवञ्चनीम् ।
एवं ध्यात्वा महाविद्यां लक्षयुग्मं जपेच्छिवे ॥ २२० ॥
कालिकोक्ते यजेत्पीठे त्रिकोणद्वयकोज्वले ।
वृत्ताष्टदलभूषाढ्ये भूपुरद्वयभूषिते ॥ २२१ ॥
उग्रप्रभाबिन्दुमध्ये कालीं तारां च रोचनीम् ।
प्रथमे प्रयजेद्देवि द्वितीये तारिणीगणम् ॥ २२२ ॥
तारामेकजटां नीलां ततो द्वितीयकोणके ।
दलाष्टके मातृकाष्टौ दलाग्रे भैरवाष्टकम् ॥ २२३ ॥
भूपुरे लोकपालाँश्च तदस्त्राणि च तद्बहिः ।
त्रिस्त्रिः पूजा प्रकर्तव्या सर्वेषामपि देशिकैः ॥ २२४ ॥
एवमुग्रप्रभामिष्ट्वा लक्षयुग्मं जपं चरेत् ।
दशांशं वज्रपुष्पाणि मैरेयाक्तानि होमयेत् ॥ २२५ ॥
तर्पयेत्तद्दशांशेन दुग्धेन मधुनाऽथ वा ।
दध्ना चेक्षुरसेनाऽपि पीठतोयेन वा पुनः ॥ २२६ ॥
तद्दशांशं मार्जनं च दशांशं विप्रभोजनम् ।
कुमारीं पूजयेत्पश्चाच्छक्तिं चापि प्रपूजयेत् ॥ २२७ ॥
उग्रप्रभां पताकायां मूर्त्तिं कृत्वा विधारयेत् ।
रणे देवासुरान् जित्वा त्रैलोक्यविजयी भवेत् ॥ २२८ ॥
दुन्दुभौ कलके खड्गो जप्त्वा चोग्रप्रभां शिवाम् ।
सर्वसिद्धिं समासाद्य कालीरूपो नरो भवेत् ॥ २२९ ॥
मालिनीमण्डलं दृष्ट्वा जपेदुग्रप्रभामनुम् ।
कालिका सिद्धिदा भूयान्नात्र कार्या विचारणा ॥ २३० ॥
योनिं स्वरेतसा लिप्त्वा जपेदुग्रप्रभां पराम् ।
तत्र संचिन्त्य देवेशि साधकः किं न साधयेत् ॥ २३१ ॥
उग्रप्रभाभ्यां कालीं तु कृत्वा मासं जपेच्छिवे ।
मासमात्रप्रयोगेण कालिका वरदा भवेत् ॥ २३२ ॥
सर्वतन्त्रेषु संगुप्ता दीप्ता नित्या महोदया ।
नवमी संख्यका नित्या नित्यासारा महोदया ॥ २३३ ॥
तस्या मन्त्रं प्रवक्ष्यामि यथावदवधारय ।
प्रणवं कालिकाबीजं कौलिनीबीजमेव च ॥ २३४ ॥

कूर्चबीजं समुद्धृत्य दीप्तायै तदनन्तरम्।
सर्वमन्त्रफलं प्रोच्य दायै शब्दं समुच्चरेत् ॥ २३५ ॥
हूँ फट् स्वाहान्तको मन्त्रस्तूनविंशाक्षरः परः।
अर्धसंख्याविहीनेन वीतिसंख्यः प्रकीर्तितः ॥ २३६ ॥
महादेवो ऋषिश्चास्य ऊष्णिक् छन्दः प्रकीर्तितम्।
दीप्ताख्या नवमी नित्या देवता परिकीर्तिता ॥ २३७ ॥
कालीबीजं बीजमस्याः कौलिनी शक्तिरेव हि।
स्वाहा कीलकमित्युक्तं काल्यर्थे विनियोगता ॥ २३८ ॥
काल्या षड्दीर्घयुक्तेन षडङ्गन्यासमाचरेत्।
ध्यायेद्दीप्तां महानीलमणिप्रख्यां महोदरीम् ॥ २३९ ॥
चतुर्भुजां त्रिनयनां मुण्डमालाविभूषिताम्।
दिगम्बरां मुक्तकेशीं घोरदंष्ट्रां करालिकाम् ॥ २४० ॥
शवपद्मे समासीनां पीनोन्नतपयोधराम्।
शवास्थिकृतकेयूर शङ्खकङ्कणभूषिताम् ॥ २४१ ॥
लेलिहानां शवं क्वापि प्रहसन्तीं मदातुराम्।
भक्तानां वरदां नित्यां कालिकाध्यानकारिणीम् ॥ २४२ ॥
नरान्त्रयोगपट्टेन भूषितां योगमार्गगाम्।
खड्गमुण्डधरां वामे सव्येऽभयवरप्रदाम् ॥ २४३ ॥
सुदन्तुरां महारौद्रीं श्मशानालयवासिनीम्।
सर्वं संचिन्त्य दीप्ताभां लक्षमेकं जपेच्छिवे ॥ २४४ ॥
दशांशं नारिकेलेन हवनं समुपाचरेत्।
कदल्या हवनं कार्यं सर्वदीप्तिप्रसिद्धये ॥ २४५ ॥
दशांशं पीठतोयेन हवनं समुपाचरेत्।
तद्दशांशं मार्जनं च गन्धाष्टकजलेन वै ॥ २४६ ॥
तद्दशांशं विप्रभोज्यं भोजयेद्धि कुमारिकाम्।
ततः सिद्धमनुर्मन्त्री प्रयोगार्हो न चान्यथा ॥ २४७ ॥
ब्राह्मे मुहूर्त्ते चोत्थाय गुरुस्मरणपूर्वकम्।
गुरुं ध्यात्वा सहस्रारे पूर्वोक्तध्यानयोगतः ॥ २४८ ॥
मूलाधारात्स्वजिह्वान्तां मूलविद्यां परां स्मरेत्।
सरस्वतीं दीपरूपां मूलबीजस्वरूपिणीम् ॥ २४९ ॥
सम्पूर्णां मातृकां प्रोच्य मूलविद्यां समुच्चरेत्।

पुनर्वै मातृकां प्रोच्य पुनर्विद्यां समुच्चरेत् ॥ २५० ॥
त्रिधापि मन्त्रितो यन्तु क्रमेणानेन सुन्दरि ।
मूलविद्यां ततो ध्यात्वा जिह्वायां दीपरूपिणीम् ॥ २५१ ॥
तेजोरूपां सायुधां वै तज्जलं तु पिवेच्छिवे ।
योगेनानेन देवेशि त्रिकालज्ञो नरो भवेत् ॥ २५२ ॥
विनायासैर्विनाऽभ्यासै र्विना पाठादिना प्रिये ।
चतुर्विधं तु पाण्डित्यं तस्य हस्ते व्यवस्थितम् ॥ २५३ ॥
जातिपुष्पेण देवेशि कवितावशवर्त्तिनी ।
कुण्डपुष्पेण देवेशि सर्वशास्त्रवशीकृतिः ॥ २५४ ॥
दुर्वया शान्तिके होमः गुडुच्या मृत्युवारणे ।
सुरया मोहनं प्रोक्तं रम्भाय स्तम्भमीरितम् ॥ २५५ ॥
आम्रेण वश्यसिद्धिः स्यात् धुत्तुरेण महोदयः ।
उच्चाटनं करीरेण विद्वेषः कर्कटीफलैः ॥ २५६ ॥
मारणं नीलपुष्पेण मरीचेन तु कर्षणम् ।
एवमादिक्रियाः सर्वाः सिद्धमन्त्री समाचरेत् ॥ २५७ ॥
अञ्जनं गुटिकां खङ्गं धातुवादं रसायनम् ।
चरुकं तिलकं वासो दुन्दुभिश्च कपालकम् ॥ २५८ ॥
एवमादि क्रियासिद्धिर्दीप्ता मन्त्रेण वै भवेत् ।
मन्त्रोद्धारं श्रृणु प्राज्ञे येन सिद्धिं स बिन्दति ॥ २५९ ॥
कूर्चयुग्मं महादेवि कालीबीजद्वयं तथा ।
मायाद्वन्द्वं समुद्धृत्य हसकलह्रीं स्वरूपकम् ॥ २६० ॥
अथ नीलपताके च हूँ फडन्ता महेश्वरि ।
नीला नीलपताके च सर्वसिद्धिकरी परा ॥ २६१ ॥
उग्रचण्डा ललज्जिह्वा या सा सिद्धकरालिका ।
पञ्चधा कथिता नीला महानीलपताकिका ॥ २६२ ॥
भैरवोऽस्य ऋषिः प्रोक्तो बृहती छन्द ईरितम् ।
कूर्चबीजस्वरूपं हि शक्तिरित्यभिधीयते ॥ २६३ ॥
हूँ फट् च कीलकं भद्रे काल्यर्थे विनियोगता ।
काली षड्दीर्घबीजेन षडङ्गन्यासमाचरेत् ॥ २६४ ॥
अथ ध्यायेन्महानीलां नीलाञ्जनगिरिप्रभाम् ।
चतुर्भुजां त्रिनयनां मुण्डमालाविभूषिताम् ॥ २६५ ॥

शवोपरिसमासीनां मदिराघूर्णलोचनाम्।
मृगशावकनेत्रां च प्रसन्नवदनाम्बुजाम् ॥ २६६ ॥
करकाञ्चीशोभमानां शवकर्णावतांसिनीम्।
ललज्जिह्वां करालास्यां घोरदंष्ट्रां भयानकाम् ॥ २६७ ॥
पापीनां सर्वदा नीलां क्रूरां पुयण्वतां वराम्।
दुष्टसंहरणोद्युक्तां साधकस्य वरप्रदाम् ॥ २६८ ॥
फेरुवर्गैर्गृध्रगणैश्चतुर्दिक्षु निनादिताम्।
ईदृशीमादिरूपां तां नीलाम्भोजवरप्रभाम् ॥ २६९ ॥
जपेल्लक्षत्रयं देवि हविष्याशी जितेन्द्रियः।
कुलाचारक्रमेणैव यथोक्तक्रमयोगतः ॥ २७० ॥
करवीरैर्जपाविल्वैर्मल्लिकाद्यैर्घृतान्वितैः।
त्रिकोणकुण्डे जुहुयात्सुपरिष्कृतभूतले ॥ २७१ ॥
दशांशं तर्पणं कार्यं दुग्धेन सुरयाऽपि च।
मार्जयेद्रक्तनीरैश्च ब्राह्मणान् भोजयेत्ततः ॥ २७२ ॥
सुवासिनीं कुमारीं च शक्तिं वा त्रितयां शुभाम्।
पुरश्चरणसम्पन्नो मन्त्रः सर्वार्थदायकः ॥ २७३ ॥
यथाद्रव्यं नृपादीनां पुरश्चर्या तु मन्त्रिणाम्।
पुरश्चरणसम्पन्नः प्रयोगार्हो न चान्यथा ॥ २७४ ॥
यन्त्रमस्याः प्रवक्ष्यामि येन सिद्धीश्वरो भवेत्।
बिन्दुमध्ये लिखेत्कूर्चं त्रिकोणं च ततोपरि[२३] ॥ २७५ ॥
वृत्तं षट्कोणवृत्ताष्टदलवृत्तं च भूपुरम्।
चतुर्द्वारोपशोभाढ्यं यन्त्रं नीलायनोः शुभम् ॥ २७६ ॥
वटुकाद्याश्चतुर्द्वारि परेषु द्वारदेवताः।
तदस्त्राणि च तद्बाह्ये दलेष्टौ भैरवान् प्रिये ॥ २७७ ॥
केशरे मातृकाष्टौ च वृत्तेऽष्टसिद्धयः क्रमात्।
षट्कोणे तु षडङ्गानि त्रिकोणे देवतात्रयम् ॥ २७८ ॥
कालरात्रिर्महारात्रिर्मोहरात्रिः क्रमात्त्रिके।
मध्ये नीलां समाराध्य ततो नैवेद्यमर्पयेत् ॥ २७९ ॥
नीराजनं ततः कृत्वा स्तुत्वा नत्वा विसृज्य च।
नीलां संसाध्य यत्नेन पड्त्रिंशद्यक्षिणीगणम् ॥ २८० ॥

---

२३ ततः परं पाठ उचितः।

यद्यदाज्ञापयेत्साध्यं[24] षट्त्रिंशद्यक्षिणीगणम् ।
कालीकूर्चवधूमायाऽमुकं यक्षिणीमध्यतः ॥ २८१ ॥
अन्ते इमानि बीजानि हूँ फट् स्वाहाऽन्विता गणः ।
षट्त्रिंशच्चैव यक्षिण्यः क्रमेण चोद्धृताः प्रिये ॥ २८२ ॥
तथैव बलिनो यक्ष स्फ्रैं क्रीं हूँ क्रीं युतेन च ।
सर्वे यक्षा हुँ फडन्ताश्चतुराशीति कीर्तिताः ॥ २८३ ॥
यक्षिणीसिद्धिमासाद्य साधकः सुखमाप्नुयात् ।
राजा भवति लोकेऽस्मिन्विना राज्येन पार्वति ॥ २८४ ॥
अल्पज्ञमपि विद्वांसं मूर्खं च पण्डितं तथा ।
यः करोत्येवमादीनि दीनाराणां शतान्यपि ॥ २८५ ॥
यो वै ददाति साध्याय यक्षिणी नात्र संशयः ।
देवयोनिर्मानवी च द्विधा योनिः प्रकीर्तिता ॥ २८६ ॥
तत्तद्रूपं समासाद्य तत्सिद्धिमधिगच्छति ।
फलं तु यक्षिणीसिद्धेर्यक्षसिद्धेश्च किं फलम् ॥ २८७ ॥
तन्मे वद दयापार परापर नमोऽस्तुते ।
दीनारं गुटिकां खड्गं वेतालं पादुकाञ्जनम् ॥ २८८ ॥
रसं रसायनं गुप्तिस्तिलकोऽदृश्यता तथा ।
कपाले च पटः शङ्खस्त्रिशूलं डमरुं तथा ॥२८९ ॥
आकर्षणं वश्यता च मोहनोच्चाटनं तथा ।
महेन्द्रजालमिन्द्रादिजालानां रचना तथा ॥ २९० ॥ [25]
ऊर्ध्वोत्भ्रमणकर्मादि खेचर्याद्यादिसिद्धयः ।
गोपनीयं गोपनीयं किमन्यच्छ्रोतुमिच्छसि ॥ २९१ ॥
देवेश श्रोतुमिच्छामि घनानित्याक्रमार्चनम् ।
उद्यद्घनघनाकारा घना नित्या घनोदया ॥ २९२ ॥
घनालया घोषवती घटिकोदयरूपिणी ।
तस्या मन्त्रार्चनं नित्यं वद त्वं करुणानिधे ॥ २९३ ॥
प्रणवं पूर्वमुद्धृत्य कालिका ह्यक्षरं तथा ।
घनालये घनघने ह्रीं हूँ फट् च मनुर्मतः ॥ २९४ ॥
भुवनाक्षरो घनायास्तु मन्त्रोऽयं सुरपादपः ।

---

२४ श्लोकः २८१ (क) मा. ख. न पठितम् ।

२५ श्लोकः २९० (ख) मा. ख. न विद्यते ।

अघोरभैरवऋषिर्विराट् छन्दः प्रकीर्तितम् ॥ २९५ ॥
कालीबीजं तथा माया शक्तिर्हूंफट् च कीलकम् ।
कालिकाप्रीतये देवि विनियोगः प्रकीर्तितः ॥ २९६ ॥
षड्दीर्घभाजाबीजेन कर्पूरेण षडङ्गकम् ।
घनां नित्यां महाविद्यां नीलजीमूतसन्निभाम् ॥ २९७ ॥
मत्तकोकिलनेत्राभां पक्वजम्बुफलप्रभाम् ।
सुदीर्घप्रपदालम्बि मुक्तलम्बकचोच्चयाम् ॥ २९८ ॥
चतुर्भुजां त्रिनयनां दिगम्बरविनोदिनीम् ।
करालास्यां घोरदंष्ट्रां पीनोन्नतपयोधराम् ॥ २९९ ॥
ओष्ठप्रान्तगलद्रक्तधाराविस्फुटितानननाम् ।
वीराणां करकाञ्च्या तु भूषितां भीमविग्रहाम् ॥ ३०० ॥
खड्गखेटकपट्टीशमुद्गरान् विभ्रतीं क्रमात् ।
ध्यातव्या सततं वीरैर्महावीरघनालयाम् ॥ ३०१ ॥
लक्षमात्रं जपेन्मन्त्रं यथोक्तैः कमलैर्हुनेत् ।
तद्दशांशं तर्पणं तु गन्धदुग्धादिभिः प्रिये ॥ ३०२ ॥
तद्दशांशं मार्जनं तु शीतलेन जलेन च ।
तद्दशांशं ब्राह्मणानां भोजनं समुपाचरेत् ॥ ३०३ ॥
एवं क्रियासमायुक्तो मन्त्रसिद्धिं स बिन्दति ।
घनायन्त्रं प्रवक्षामि पूजनं यादृशं भवेत् ॥ ३०४ ॥
षट्कोणवृत्ताष्टदलं भूपुरेणोपशोभितम् ।
षट्कोणे तु षडङ्गानि षड्धातुदेवता अपि ॥ ३०५ ॥
दलाष्टे मातृकाष्टौ च ततो भैरवपूजनम् ।
लोकपालान् भूपुरेषु तदस्त्राणि च तद्बहिः ॥ ३०६ ॥
यथाशक्ति जपित्वा तु ततो नीराजयेदमुम् ।
नीराजनान्तं देवेशि स्तुत्वा नत्वा विसृज्य च ॥ ३०७ ॥
देवेशि श्रृणु वक्ष्यामि बलाका पूजनक्रमम् ।
बलाका द्वादशी नित्या सर्वनित्यावशङ्करी ॥ ३०८ ॥
यज्ज्ञानात्सकला विद्याः स्वस्वस्थानपदं गताः ।
तस्या मन्त्रो महेशानि कथ्यते श्रृणु साम्प्रतम् ॥ ३०९ ॥
प्रणवं कालिकाबीजं कूर्चमाये समुद्धरेत् ।
बलाका कालिशब्दान्ते अत्यद्भुतपराक्रमे ॥ ३१० ॥

अभष्टिसिद्धिं मे देहि हुँ फट् स्वाहा मनुर्मतः।
कालिकास्या भवेद्बीजं कूर्चशक्तिः प्रकीर्तिता ॥ ३११ ॥
माया कीलकमुद्दिष्टं कीलकेन षडङ्गकम्।
षडङ्गन्यासमासाद्य ध्यानं कुर्यान्महेश्वरि ॥ ३१२ ॥
अञ्जनानन्तसदृशीं कोटिकालानलप्रभाम्।
चतुर्भुजां त्रिनयनां मुण्डदुर्गनिवासिनीम् ॥ ३१३ ॥
दिगम्बरीं करालास्यां पीनोन्नतपयोधराम्।
शवानां करसंहत्या कृतकाञ्चीं शवासनाम् ॥ ३१४ ॥
मुक्तकेशीं मदाघूर्णं प्रसन्नमुखपङ्कजाम्।
सूर्यकोटिसमाभासां मुण्डमालाविभूषिताम् ॥ ३१५ ॥
खड्गमुण्डधरां वामे सव्ये खर्पटतर्जनीम्।
संविभ्रतीं महाकालीं बलाकारूपधारिणीम् ॥ ३१६ ॥
श्मशाननिलयाभीमां भूतप्रेतसमन्विताम्।
शिवाभिर्घोररूपाभिर्वेष्ठितां घोरनादिनीम् ॥ ३१७ ॥
मा भैर्वीर वरं ब्रूहि हृद्गतं ते करोम्यहम्।
एवं ध्यात्वा जपेल्लक्षं मन्त्रः सिद्धो भवेद्ध्रुवम् ॥ ३१८ ॥
दशांशं विल्वपत्रैश्च घृताक्तैर्जुहुयात्सुधीः।
तर्पणं तु दशांशेन तद्दशांशेन मार्जयेत् ॥ ३१९ ॥
तद्दशांशं ब्राह्मणानां भोजनं परिकीर्तयेत्[२६]।
विप्राराधनमात्रेण सर्वाङ्गं पूर्णतामियात् ॥ ३२० ॥
यद्यदङ्गं विहीनं च तत्साङ्गं द्विजभोजनम्।
अन्यत्सर्वं महेशानि कालिकावत्समाचरेत् ॥ ३२१ ॥
मात्रा नित्या तु या प्रोक्ता सर्वनित्योत्तमोत्तमा।
तस्या मन्त्रो महेशानि यथावदवधारयेत् ॥ ३२२ ॥
प्रणवं कालिकाबीजं माया कूर्चं ततः पुनः।
सबिन्दुं मातृकावर्णं चतुर्बीजानि वै पुनः ॥ ३२३ ॥
पुनश्च मातृकावर्णं चतुर्वीजं पुनश्च तत्।
एवं क्षान्तां[२७] महेशानि महामात्रा प्रकीर्तिता ॥ ३२४ ॥
चतुर्बीजं तथा मात्रे सिद्धिं मे देहि सत्त्वरम्।

---

२६ परिकीर्तितम् पाठ उचितः।
२७ मा. ख.. शान्ता पाठः।

हूँ फट् स्वाहेति देवेशि मात्रामन्त्रो परो मतः ॥ ३२५ ॥
प्रणवं कालिकाबीजं कूर्चमाये ततः शिवे ।
मध्ये नित्या नाम दद्यात् संबुध्द्या ता च केवला ॥ ३२६ ॥
नित्या मन्त्राश्च जायन्ते भिन्नरूपाश्च पार्वति ।
पुनर्बीजानि हूँ फट् च स्वाहान्ताः परिकीर्तिता ॥ ३२७ ॥
आद्या योगात्संपुटाद्वा हूँ फडन्तप्रयोगतः ।
एवं नवतिनित्यानां मन्त्रभेदा भवन्ति हि ॥ ३२८ ॥ ख १९३ (क)
भैरवोऽस्य ऋषिः प्रोक्तो उष्णिक् छन्दः प्रकीर्तितम् ।
मात्रादेवीति विख्याता देवता परिकीर्तिता ॥ ३२९ ॥
क्रीँ बीजं हूँ तथा शक्ति ह्रीँ कीलकमुदाहृतम् ।
विनियोगो महेष्टार्थे कालिकार्थे प्रकीर्तितः ॥ ३३० ॥
माया षड्दीर्घयुक्तेन षडङ्गन्यासमाचरेत् ।
तथा ध्यायेन्महाविद्यां नीलाञ्जनगिरिप्रभाम् ॥ ३३१ ॥
चतुर्भुजां त्रिनयनां मुण्डपद्मोपरिस्थिताम् ।
कपालकर्त्रिकाहस्तां खड्गमुण्डधरां पराम् ॥ ३३२ ॥
दन्तुरां च महारौद्रीं चण्डनादातिभीषणाम् ।
शववक्षसमारूढां लेलिहानां शवासनाम् ॥ ३३३ ॥
रतिविद्यां तां श्रीमात्रां महाघोरनिनादिनीम् ।
इति संचिन्त्य देवेशि लक्षमात्रं जपं चरेत् ॥ ३३४ ॥
दशांशं जुहुयाद् विल्वैरथवा कदलीफलैः ।
द्राक्षाभिः पायसैर्वापि दशांशं हवनं चरेत् ॥ ३३५ ॥
तर्पर्ण मार्जनं विप्रभोज्यं यत्नेन कारयेत् ।
यद्यदङ्गं विधीयेत तत्संख्याद्विगुणो जपः ॥ ३३६ ॥
जपपूजाप्रयोगादि कालवल्लिपि मातृवत् ।
रहस्यमपि ते देवि कथ्यते श्रृणु साम्प्रतम् ॥ ३३७ ॥
मुद्रा नित्याविधानं च सर्वं सारोत्तमोत्तमम् ।
मुद्रिणीनामका नित्या श्रीविद्यायां तु मुद्रिणी ॥ ३३८ ॥
मुद्रिणी दण्डिनीनाम्नी देवीमौदार्यविग्रहाम् ।
महाविद्यादिकादीनां मनोर्मुद्रणकारिणी ॥ ३३९ ॥
तेनेयं मुद्रा नित्याख्या सर्वसिद्धिपराऽम्बिका ।
प्रणवं कालिकाबीजं मायाकूर्चक्रमेण च ॥ ३४० ॥

प्रोक्तं बीजयुगं प्रोच्य मुद्रां वा पदमुद्धरेत्।
मुद्रासिद्धिं देहि मे भो जगन्मुद्रास्वरूपिणी ॥ ३४१ ॥
हूँ फट् स्वाहा समायुक्तो वीतिवर्णो[२८] मनुः शुभः।
महादेवो ऋषिश्चास्य गायत्री छन्द ईरितम् ॥ ३४२ ॥
मुद्रा नित्या महादेवि देवता परिकीर्तिता।
कालीबीजं बीजमस्या मायाशक्तिः प्रकीर्तिता ॥ ३४३ ॥
कूर्चं कीलकमित्युक्तं काल्या षट्दीर्घयुक्तया।
षडङ्गन्यासमाचर्य मात्रां ध्यायेन्महेश्वरि ॥ ३४४ ॥
अञ्चनाद्रिनिभां मुद्रां मुण्डमालाविभूषिताम्।
दिगम्बरां घोरदंष्ट्रां चण्डनादातिभीषणाम् ॥ ३४५ ॥
दक्षिणां मुक्तकेशालीं दिगम्बरविनोदिनीम्।
पिङ्गाक्षीं प्रज्ज्वलज्जिह्वां घोरदंष्ट्रां भयानकम् ॥ ३४६ ॥
शवानां करसङ्घातैः कृतकाञ्चीं हसन्मुखीम्।
सृक्कद्वयगलद्रक्तधाराविस्फुटिताननाम् ॥ ३४७ ॥
कपालकर्त्रिकाहस्तां खड्गखेटकधारिणीम्।
महाकालेन च समं रतासक्तां क्षुधातुराम् ॥ ३४८ ॥
वरं ब्रूहि वरं ब्रूहि वरं ब्रूहीति वा वदन्[२९]।
एवं संचिन्त्य देवेशि पूजयेद्यन्त्रमादरात् ॥ ३४९ ॥
त्रिकोणवृत्तषट्कोणं वृत्ताष्टदलभूपुरम्।
चतुर्द्वारोपशोभाढ्यं तद्द्वारि गणपस्तथा[३०] ॥ ३५० ॥
योगिनी क्षेत्रपालश्च बटुको हि चतुर्थकः।
लोकपालास्त्रलोकेशो[३१] भूपुरे क्रमशो यजेत् ॥ ३५१ ॥
दलेऽष्टमातृकां[३२] पूज्य केशरे भैरवाष्टकम्।
दलाष्टाग्रे त्वष्टसिद्धिः षट्कोणेषु षडङ्गकम् ॥ ३५२ ॥
राज्यदां भोगदां मोक्ष-जयदां भयदां तथा।
षष्टी तु सिद्धिदां प्रोक्त्वा[३३] षड्कोणेषु क्रमाद्यजेत् ॥ ३५३ ॥

---

२८ मा. ख. 'पीतवर्णो' पाठः।

२९ मा. ख. वदेत् पाठः।

३० गणपं तथा पाठ उचितः।

३१ योगिनीं क्षेत्रपालं च बटुकं हि चतुर्थकम्। लोकपालास्त्रलोकेशं पाठ उचितः।

३२ दलेष्टमातृकाः पाठ उचितः।

३३ राज्यदा भोगदा मोक्ष-जयदा=भयदा तथा। षष्ठी तु सिद्धिदा प्रोक्ता पाठ उचितः।

इच्छां ज्ञानं क्रियां चैव त्रिकोणे परिपूजयेत् ।
मध्ये मुद्रां च संपूज्य सर्वपञ्चोपहारकैः[३४] ॥ ३५४ ॥
इति पूजां समासाद्य ततो निराजनं चरेत् ।
नीराजनान्ते देवेशि प्राणायामपुरस्सरम् ॥ ३५५ ॥
लक्षद्वयं जपेन्मन्त्रं सुश्वेतैः करवीरजैः ।
दशांशं हवनं कृत्वा तद्दशांशं च तर्पणम् ॥ ३५६ ॥
मार्जनं ब्राह्मणानां च भोजनं सपुपाचरेत् ।
एवं सिद्धमनुर्मन्त्री प्रयोगार्हो न चान्यथा ॥ ३५७ ॥
यद्यद्हृदि समाधत्ते तत्तत्कृत्यं करोति हि ।
सर्वं तु कालीवत् प्रोक्तं विशेषः कथितो मया ॥ ३५८ ॥
इति संक्षेपतः प्रोक्तं किमन्यच्छ्रोतुमिच्छसि ?

**श्रीदेव्युवाच**

देवेश श्रोतुमिच्छामि मितानित्या विधिक्रमम् ॥ ३५९ ॥
सर्वविद्यावरारोहे मितां मे ब्रूहि सादरम् ।

**श्रीशिव उवाच**

श्रृणु वक्ष्यामि देवेशि रहस्यातिरहस्यकम् ॥ ३६० ॥
सर्वविद्यामहाराज्ञी मितानाम्नी महोदया ।
तस्या मन्त्रं प्रवक्ष्यामि काली सर्वाङ्गमद्भूतम् ॥ ३६१ ॥
प्रणवं पूर्वमुद्धृत्य कालिकाबीजमुद्धरेत् ।
कूर्चबीजं तथा मायां वाग्भवं बीजमुद्धरेत् ॥ ३६२ ॥
मिते पदं समुच्चार्य तथा परिमिते पदम् ।
पराक्रमाय च पदां पुनर्बीजानि चोद्धरेत् ॥ ३६३ ॥
सोऽहं हूँ फट् ततः स्वाहा सप्तमिंशतिवर्णकान् ।
मन्त्रोऽयं कथितो देवि ऋषिछन्दादिकं श्रुणु ॥ ३६४ ॥
महाकालो ऋषिश्चास्य त्रिष्टुप्छन्दः प्रकीर्तितम् ।
मितानित्या देवता च कालिका बीजमीरितम् ॥ ३६५ ॥
कूर्चं शक्तिर्महेशानि माया कीलकमीरितम् ।
कीलकेन षडङ्गानि षड्दीर्घाद्येन कारयेत् ॥ ३६६ ॥

---

३४ सर्वपञ्चोपचारकैः पाठः साधुः ।

ध्यायेन्नीलाद्रिसंकाशां नीलजीमूतसन्निभाम्।
रक्तवस्त्रां शवासीनां मुण्डमालाविभूषिताम् ॥ ३६७ ॥
पीनोन्नतकुचद्वन्द्वां पीनवक्षनितम्बिनीम्।
दक्षिणां मुक्तकेशालीं दिगम्बरविनोदिनीम् ॥ ३६८ ॥
महादेवहृदम्भोजमध्यस्थां शङ्खकङ्कणाम्।
कोटिकालानलप्रख्यां श्मशानालयवासिनीम् ॥ ३६९ ॥
खड्गमुण्डधरां वामे सव्येऽभयवरप्रदाम्।
साधकाकाङ्क्षहृदयां साधकस्य वरप्रदाम् ॥ ३७० ॥
मुखसान्द्रस्थितो मोदमोदिनीं मदविह्वला।
आरक्तमुखसान्द्राभिर्नेत्रादिभिर्विराजिताम् ॥ ३७१ ॥
दक्षिणां संमितां दिव्यां दीननाथां विभावयेत्।
एवं ध्यात्वा मितां देवि लक्षत्रयं जपं चरेत् ॥ ३७२ ॥
किंशुकैर्हवनं कार्यं ज्योतिष्मत्याऽथवा प्रिये।
ज्योतिष्मतीप्रसूनेन फलं किंशुकवन्मतम् ॥ ३७३ ॥
आरक्तकरवीरेण जुहुयान्मन्त्रसिद्धये।
त्रिकोणकुण्डे जुहुयात्संस्कृते खादिरानले ॥ ३७४ ॥
ताम्बूलपत्रहोमेन कालिकां वशमानयेत्।
पुष्पाक्त नागवल्यां च नागिनीसिद्धिमाप्नुयात् ॥ ३७५ ॥
वज्रपुष्पेण जुहुयाद्हाकिन्या वा महेश्वरि।
धुत्तूरेणारिनिधनं कुन्दैश्च कवितां लभेत् ॥ ३७६ ॥
जातिपुष्पैर्जयावाप्तिस्तिलपुष्पै र्बलोन्नतिः।
पुन्नागैः पुरुषार्थञ्च केतक्या कामिनीं लभेत् ॥ ३७७ ॥
आसुर्या रिपुनाशश्च चन्दनेन जयी सदा।
तथैवागुरुणा देवि राजराजपदं लभेत् ॥ ३७८ ॥
रक्तचन्दनहोमेन सर्वमोहनमाचरेत्।
गिरिकर्ण्या कन्यकाप्तिः सेवन्त्या शिवरूपता ॥ ३७९ ॥
गुडुच्या रिपुनाशश्च मरीचेनाकृष्टिरुत्तमा।
पुगीपलैर्महाभाग्यं तथा जातिफलैर्धनम् ॥ ३८० ॥
स्तम्भनं चम्पकेनैव जप्या जन्मार्तिनाशनम्।
एवं नानाविधानेन काममुद्दिश्य साधकः ॥ ३८१ ॥
ततो होम दशांशेन तर्पणं पीठनीरतः।

अष्टगन्धोदकेनापि तथा केसरनीरतः ॥ ३८२ ॥
तर्पणं तद्दशांशेन मार्जनं समुपाचरेत् ।
तद्दशांशं विप्रभोज्यं शक्तयश्च कुमारिकाः ॥ ३८३ ॥
पूजयेद् भोजयेद्देवि सर्वसिद्धिं स बिन्दति ।
अथ पूजाविधानस्य यन्त्रं संकथ्यते श्रृणु ॥ ३८४ ॥
त्रिकोणत्रितयं लिख्य वृत्तषट्कोणसंयुतम् ।
वृत्ताष्टदलभूषाढ्यं भूपुरेण समन्वितम् ॥ ३८५ ॥
चतुर्द्वारोपशोभाढ्यं मध्ये बिन्दुविभूषितम् ।
कालीं करालां श्रीघोरां प्रथमे तु त्रिकोणके ॥ ३८६ ॥
द्वितीये तु त्रिकोणे तु वामां ज्येष्ठां च रौद्रिकाम् ।
तृतीये तु त्रिकोणे तु इच्छां ज्ञानं क्रियां तथा ॥ ३८७ ॥
अथ वृत्ते यजेद्देवि वार्तालीं प्रथमं यजेत् ।
द्वितीयभागे देवेशि लघुवाराहिकां यजेत् ॥ ३८८ ॥
तृतीयभागे देवेशि स्वप्नवाराहिकां यजेत् ।
तिरस्कारणिकां पूज्य चतुर्थभागके शिवे ॥ ३८९ ॥
षट्कोणवृत्ते देवेशि चतुर्द्वारं प्रपूजयेत् ।
षट्कोणे तु षडङ्गानि वृत्ते सिद्ध्यष्टकं तथा ॥ ३९० ॥
दलेष्टौ मातृकाः पूज्यास्तदन्तेऽष्टौ च भैरवाः ।
भूपुरे लोकपालाँश्च तदस्त्राणि च तद्बहिः ॥ ३९१ ॥
एवमिष्ट्वा मितां नित्यां विद्यामित्रां निरञ्जनीम् ।
एवमाराधनायुक्तो मन्त्रसिद्धिं लभेननरः ॥ ३९२ ॥
अथवाऽन्य प्रकारेण ध्यानं नित्याक्रमे श्रृणु ।
अञ्जनाद्रिनिभाः सर्वा मुण्डमालाविभूषणाः ॥ ३९३ ॥
दक्षहस्ते देवि खड्गं वामहस्ते च तर्जनीम् ।
धारयन्त्यः शुभाः काल्यो वराभयलसत्कराः ॥ ३९४ ॥
एतत्सामान्यतो ध्यानं नाममन्त्रविधौ स्मृतम् ।
रहस्यमत्र कथितं सिद्धयो विविधाः करे ॥ ३९५ ॥
अञ्जनं गुटिकां खड्गं वेतालं यक्षिणीगणम् ।
चमकं तिलकं वासः कपालं पादुकां तथा ॥ ३९६ ॥
लगुडः किन्नरीसिद्धिः जामिर्योदिमहाकलाः ।
चराचरगतिश्चैव अणुत्वं लघिमादिकम् ॥ ३९७ ॥

परकायप्रवेशश्च सर्वं रसरसायनम् ।
स्पर्शश्चिन्तापहारश्च भूतसंचरणं तथा ॥ ३९८ ॥
मृत्तिकोत्थापनं दिव्याः सिद्धयस्तत्करे स्थिताः ।
महापीठं समुद्धृत्य नित्या स्थाप्या यथाक्रमम् ॥ ३९९ ॥
अथवा मूलमन्त्रेण जपेन्मध्ये स्वदेवताः ।
यथोक्तमन्त्रसिद्ध्यर्थं ध्यायेच्च कुलवस्तुभिः ॥ ४०० ॥
यजेत्संतर्पयेच्छक्तिर्भोजनाच्छादनादिभिः ।
धूपयेद्दशगन्धेन देवताऽवतरेत्तदा ॥ ४०१ ॥
रक्ताक्षीस्तद्धनेत्राङ्गी प्रसन्नमुखपङ्कजा ।
काचिदेका भवेच्छक्तिरितरास्तन्मुखस्थिताः ॥ ४०२ ॥
तस्मिन्क्षणे तु प्रकृतिं कृत्वा माषमयीं शुभाम् ।
घृतपक्वां मांसमयीमुपभोगात्प्रकल्पयेत् ॥ ४०३ ॥
ग्रासे ग्रासे सुरां दद्यान्मत्स्यक्षुधाकनकानि च ।
आद्यं बीजं समुच्चार्य नित्ये क्रूरमुखे तथा ॥ ४०४ ॥
क्रूरदंष्ट्रे ललज्जिह्वे मुखस्तेऽयं प्रकल्पितः ।
आहारो भक्षय युगं स्वाहान्तं ठ-द्वयं पुनः ॥ ४०५ ॥
आद्यं बीजं समुच्चार्य मृतं ध्यायेद्रिपुं तदा ।
तत्कालमेव हरते मिता प्राणान् सुरेश्वरि ॥ ४०६ ॥
श्रूयतेऽसौ मृत इति तावत्संभोजयेन्मिताम् ।
पश्चात्पञ्चाङ्गधूपेन धूपयेत्तां वरप्रदाम् ॥ ४०७ ॥
हासं कृत्वा वरं दत्त्वा व्रजेत्सा शक्तिदेहतः ।
श्मशाने वाऽथ संपूज्या वदेवाग्नि समप्रभा ॥ ४०८ ॥
ससैन्यराज्ञो नाशाय नृमांसैः कुलवस्तुभिः ।
उद्यानेषु वशीकर्णमुच्चाटे तु नदीतटे ॥ ४०९ ॥
नातः परतरा विद्या सद्यः प्रत्ययकारिणी ।
विख्याता नूतनाम्नाये शतधा पूजिता मया ॥ ४१० ॥
गोप्याद् गोप्यतराऽप्येषा मया तुभ्यं प्रकाशिता ॥ ४११ ॥

*इति श्रीतन्त्रचिन्तामणौ महाकालादिमितानित्यान्तक्रमनिर्णय नाम त्रयोविंशतितमः प्रकाशः ।*



# चतुर्विंशतितमः प्रकाशः

**अथोग्रतारैकजटानीलसरस्वतीनामेकतमक्रम आह।**

आदौ जलमधिष्ठाय पादयोः क्षालनं मतम्।
द्विराचम्य शिखां बद्ध्वा ब्रह्मग्रन्थिं प्रकल्पयेत्॥ १॥
अर्घ्य वारिपरिष्कृत्य द्वारमभ्युक्ष्य तज्जलैः।
गणेशं बटुकं क्षेत्रपालञ्च योगिनीं तथा॥ २॥
पूजयित्वा गृहे गत्वा ब्रह्माणं वागीशं यजेत्।
प्रणवादिनमोन्तेन नैऋत्यां साधकोत्तमः॥ ३॥
विशोध्य वाचं चित्तं च भूमिं सम्यग् विशोधयेत्।
विघ्नानुत्सारयित्वा तु कुर्याद्भूम्यभिमन्त्रणम्॥ ४॥
आसने मण्डलं कृत्वा तत्समर्च्याप्रहेत्सुधीः।
यन्त्रं लिखित्वाऽधिष्ठाय पुष्पशोधनमाचरेत्॥ ५॥
मृद्वासनं समासाद्य मायां पूर्वदले लिखेत्।

**अथैषां क्रमेण मन्त्रानाह।**

प्रणवो वह्निजायान्तो मनुरम्भः परिग्रहे॥ ६॥
तारावज्रोदके हूँ फट् स्वाहाजलमधिष्ठितम्।
तारं लज्जाविशुद्धान्ते सर्वपापानि चैव हि॥ ७॥
समयान्ते अशेषान्ते विकल्पपदमुद्धरेत्।
अपनयान्ते वर्म फट् स्वाहा पादविशुद्धयेत्॥ ८॥
ॐ माया वह्निजाया च स्मृत आचमने मनुः।
प्रणवं मनिधरणीति वज्रिणी सर्वशब्दतः॥ ९॥
वशंकरीति हूँ फट् स्वाहेति बन्धयेच्छिखाम्।
तारं मुनिपदं चैव धरण्यन्ते च वज्रिणी॥ १०॥
महाप्रतिसरे रक्ष द्वन्द्वान्ते मां ततश्च हूँ।
फट् स्वाहा मनुनानेन रक्षाग्रन्थिं च कारयेत्॥ ११॥

फडाऽभ्युक्ष्य हृदा पूज्य तोरणादश मन्त्रयेत्।
फट्कारैः प्रोक्षयेद् द्वारं गन्धपुष्पैः प्रपूजयेत्॥ १२॥
द्वारोर्ध्वे गां गणेशं च वामे वां वटुकं तथा।
दक्षिणे क्षां क्षत्रपालमधो यां योगिनीं यजेत्॥ १३॥

## अथैषां मन्त्रे विशेषश्च

सर्वे ते ध्रुवदीर्घाढ्याः शक्तिबीजपुरस्सराः।
चतुर्थ्यन्ता नमोन्ताश्च नामाद्यबीजसंयुताः॥ १४॥
भूमिशुद्धिं नवार्णेन ततः कुर्वीत साधकः।
ॐ रक्ष रक्ष हूँ चास्त्रं स्वाहा मन्त्रो नवाक्षरः॥ १५॥
त्रयोदशार्णमन्त्रेण विघ्नानुत्सारयेत्ततः।
ॐ दारय दारय हूँ फट् स्वाहा विघ्नदारणम्॥ १६॥
ॐ सर्वविघ्नानुत्सारय हूँ फट् वह्निगेहिनी।
त्रयोदशार्णको मन्त्रः पार्ष्णिघातेन विघ्नहा॥ १७॥
प्रणवं पूर्वमुद्धृत्य आः कारं तदनन्तरम्।
हूँ फट् स्वाहा मनुः प्रोक्तः कायवाक्च्चित्तशोधने॥ १८॥
ततस्तु देव्याः पूजार्थं मन्त्रयेत्काश्यपीं ध्रुवम्।
पवित्र-वज्रभूमे हूँ स्वाहा मन्त्रो नवाक्षरः॥ १९॥
भूमौत्रिकोणमालिख्याधारशक्तिप्रपूजनम्।
मायाबीजं समुच्चार्य आधारशक्तये ततः॥ २०॥
कमलासनमालिख्य ङे नमोन्तश्च पूजयेत्।
आकारान्ते सुरेखे च वज्ररेखे ततः परम्॥ २१॥
हूँ फट् स्वाहेति कुर्यात्तु मण्डलं वै शवासने।
तत्र मृद्वासनं देवि पीठमन्त्रेण पूजयेत्॥ २२॥
ॐ ऐँ क्लीँ कामपीठाय हृदयान्तोऽयमीरितः।
तत्र वध्यासनं वीर[1] आत्मानं शोधयेत्ततः॥ २३॥
चतुर्दशार्णमनुना कुसुमानि सुशोधयेत्।
यथा गताभिषेकेति समाग्नि मे पदं वदेत्॥ २४॥
तारादि हूँ फट् स्वाहान्तो मनुक्तो मनुवर्णकः।
श्यामा वद पदं ज्ञेयं पुष्पशोधनकं बुधः॥ २५॥

---
१ मा. ख. वीरमात्मानं पाठः।

अथातः संप्रवक्ष्यामि भूतशुद्धिं विशेषतः ।
ह्रीं बीजं तु जपापुष्पनिभं नाभौ विचिन्तयेत् ॥ २६ ॥
तदुत्थेनाग्निना देहं दहेत्सार्धं स्वपाप्मना ।
स्त्रीं बीजं तु सुवर्णाभं चिन्तयेद्हृदि मन्त्रवित् ॥ २७ ॥
पवनेन तदुत्थेन पापभस्म क्षिपेद्भुवि ।
हूँ बीजमिन्दुकुन्दाभं भाले ध्यायेच्च भारत ॥ २८ ॥
तदुत्थसुधया देहं रचयेद्देवतानिभम् ।
अनया भूतशुद्ध्या तु देवीसादृश्यमाप्नुयात् ॥ २९ ॥

## अथास्या ध्यानम्

भूतशुद्धिं विधायेत्थं शून्यं विश्वं विचिन्तयेत् ।
निर्लेपं निर्मलं सूक्ष्ममात्मानं देवतामयम् ॥ ३० ॥
अन्तरिक्षे ततो ध्यायेद् आः काराद्रक्तपङ्कजम् ।
भूयस्तस्योपरि ध्यायेद्दांकाराच्छुक्लपङ्कजम् ॥ ३१ ॥
तस्योपरि ततो ध्यायेद् हूँकारं नीलसन्निभम् ।
तस्योपरि ततो ध्यायेत् कर्त्रिकां बीजभूषिताम् ॥ ३२ ॥
तस्योपरि महादेवीं खर्वां नीलधरप्रभाम् ॥
लम्बोदरीं व्याघ्रच्चर्मसमावृतनितम्बिनीम् ॥ ३३ ॥
पीनोन्नतपयोभारां रक्तवर्त्तुललोचनाम् ।
पिङ्गोग्रैकजटां नीलां नागयज्ञविभूषिताम् ॥ ३४ ॥
नीलोत्पललसन्मौलिबद्धजूटांभयङ्करीम् ।
श्वेतास्थिपट्टिकायुक्तकपालपञ्चशोभिताम् ॥ ३५ ॥
ललाटे रक्तनागेन कृतकर्णावतंसिनीम् ।
अतिशुभ्रमहानागकृतहारमहोज्वलाम् ॥ ३६ ॥
दूर्बादलश्यामनागकृतयज्ञोपवीतिनीम् ।
चतुर्भुजां रक्तमांसखण्डमण्डितमुष्ठिना ॥ ३७ ॥
जटाजूटेन सूत्रेण शोभितां तीक्ष्णधारया ।
खड्गेन दक्षिणस्योर्ध्वे शोभितां वीरनादिनीम् ॥ ३८ ॥
तदधस्ताद्बीजरूपकर्त्रिकालङ्कृतां पराम् ।
वामोर्ध्वे रक्तनालेन विकस्वरमनोहरम् ॥ ३९ ॥
दधतीं नीलपद्मं च तदधस्तात्कपालकम् ।

जगतां जाड्यसंयुक्तं दधतीं कुण्डसन्निभम् ॥ ४० ॥
धूम्राभनागसंदोहकृतकेयूरसद्भुजाम् ।
सुवर्णवर्णनागेन कङ्कणोज्ज्वलपाणिकाम् ॥ ४१ ॥
शुभ्रवर्णमहादेवशवहृदिसमासनाम् ।
नियन्त्रणभियातद्वत्संकोचप्रमदां चलाम् ॥ ४२ ॥
शवपादहृदारूढवामपादां हसन्मुखीम् ।
कुन्दाभनागसंशोभिकटिसूत्रां त्रिलोचनाम् ॥ ४३ ॥
इषद्रक्तेन नागेन[२] कृतनूपुरपल्लवाम् ।
सद्यश्छिन्नगलद्रक्तनृमुण्डैरात्मभूषणैः ॥ ४४ ॥
अन्योन्यकेशग्रथितैः पादपद्मप्रलम्बितैः ।
पञ्चाशद्भिर्महामालाक्षोभितां परमेश्वरीम् ॥ ४५ ॥
ज्वलच्चितामध्यगतां द्वीपिचर्मोत्तरांशुकाम् ।
लाक्षाभनागसंबद्धजटाजूटां वरप्रदाम् ॥ ४६ ॥
स वै सस्मेरवदनां ललज्जिह्वां वरप्रदाम् ।
एवं ध्यात्वा पण्डितोऽहं भावयेच्च महाकविः ॥ ४७ ॥

## अथ ध्यानरहस्यमाह

वश्यार्थे नीलवर्णाभामाकृष्टौ पीतरूपिणीम् ।
मारणोच्चाटने धूम्रां कृष्णां तु तदपेक्षया ॥ ४८ ॥
चिन्तयेत्परमेशानीं ध्यात्वा प्रेतकृतासनाम् ।

## अथ मन्त्राचमनमाह

भूतशुद्धिं पुरा कृत्वा दिव्यमाचमनं चरेत् ॥ ४९ ॥
ताराभेदैस्त्रिभिः पीत्वा मायया क्षालयेत्करम् ।
स्त्रीं हूँ ओष्ठौ द्विरुन्मृज्य फट्कारैः क्षालयेत्करम् ॥ ५० ॥
अस्य नासेक्षणश्रोत्रनाभिवक्षःशिरो भुजाम् ।
वैरोचनादिभिः स्पृष्ट्वा सर्वपापैः प्रमुच्यते ॥ ५१ ॥
आचम्य भैरवो भूत्वा वत्सराभ्रां प्रपश्यति ।

---

२ मा. ख. भागेन पाठः ।

## अथ भूतशुद्धेरनन्तरं क्रममाह

भूतशुद्धिं विधायेत्थमर्घ्यादिस्थापनं चरेत् ॥ ५२ ॥
प्राणायामं ततः कुर्याद् ऋष्यादिन्यासमाचरेत् ।
न्यासौ कराङ्गयोः कुर्यादात्मानं तारिणीं स्मरेत् ॥ ५३ ॥

## अथ सामान्यार्घ्यस्थापनमाह

ततश्चाचमनं कृत्वा सामान्यार्घ्यं प्रकल्पयेत् ।
त्रिकोणवृत्तभूबिम्बमण्डलं रचयेत्ततः ॥ ५४ ॥
साधारशक्तिं संपूज्य तत्राधारं विनिक्षिपेत् ।
अस्त्रेण पात्रं संशोध्य हृन्मन्त्रेण प्रपूरयेत् ॥ ५५ ॥
निक्षिपेत्तीर्थमावाह्य गन्धादीन् प्रणवेन च ।
दर्शयेद्धेनुमुद्रां वै सामान्यार्घ्यविधिर्मतः[३] ॥ ५६ ॥
न्यासं प्रवर्तते देवि षोढान्यासपुरस्सरम् ।

## अथास्या महाषोढामाह

ताराषोढां प्रवक्ष्यामि सर्वतन्त्रेषु गोपिताम् ॥ ५७ ॥
सर्वविघ्नोपशमनीं सर्वपापविनाशिनीम् ।
महादारिद्रशमनीं सर्वसम्पत्प्रदायिनीम् ॥ ५८ ॥
सर्वकामप्रदां नित्यां सर्वसाम्राज्यदायिनीम् ।
शिष्याय भक्तियुक्ताय विनीताय महात्मने ॥ ५९ ॥
वेदन्यायकुलीनाय शुद्धाचाररताय च ।
एवं विधाय देवेशि साधकाय प्रकाशयेत् ॥ ६० ॥
अन्यथा सिद्धिहानिः स्यादित्याज्ञा शम्भुना कृता ।
तथा च ।
न्यासषट्कं ततः कुर्यात्तारायाः सर्वसिद्धिदम् ॥ ६१ ॥
तत्रादौ प्रथमो न्यासः श्रीकण्ठादिः पुरोदितः ।
मातृकाक्षरमुच्चार्य ह्रीं स्त्रीं हूँ पूर्वकं वदेत् ॥ ६२ ॥
श्रीकण्ठादिसपत्नीकं नमोन्तं मातृकास्थले ।
विन्यसेच्च चतुर्थ्यन्तं न्यासोऽयं प्रथमः स्मृतः ॥ ६३ ॥

---

३ क्रियामता पाठो मा. ख. ।

अस्मिन् न्यासे क्रियमाणे देवीमेवविधां स्मरेत्।
शवपीठसमासीनां नीलकान्तिं त्रिलोचनाम्॥ ६४॥
अर्धेन्दुशेखरां नानाभूषणाढ्यां चतुर्भुजाम्।
द्वितीयं तु ग्रहन्यासं कुर्यात्तां समनुस्मरेत्॥ ६५॥
त्रिबीजपूर्वकश्चायं ग्रहन्यासः समीरितः।
स्वरादिकं रविं एकं हृदि यवर्गपूर्वकम्॥ ६६॥
सोमं श्वेतं भ्रुवोर्न्यस्य कवर्गाद्यं च मङ्गलम्।
रक्तं नेत्रत्रये न्यस्य चवर्गाद्यं च वक्षसि॥ ६७॥
बुधं श्यामं न्यसेत्पीठं टवर्गाद्यं गले गुरुम्।
तवर्गाद्यं श्वेतवर्णं घण्टिकायां तु भार्गवम्॥ ६८॥
नीलवर्णं प-वर्गाद्यं नाभिदेशे शनैश्चरम्।
शवर्गाद्यं धूम्रवर्णं ध्यात्वा राहुं न्यसेन्मुखे॥ ६९॥
लक्षाद्यं धूम्रवर्णाभं केतुं नाभौ पुनर्न्यसेत्।
न्यासं तृतीयं वक्ष्यामि बीजत्रितयपूर्वकम्॥ ७०॥
समानवर्णानुच्चार्य प्रागिन्द्राय नमोऽस्तुते।
न सिसंध्यक्षराण्युक्त्वा चाग्नेयामग्नये नमः॥ ७१॥
दक्षिणे यमाय नमः क-वर्गाद्यं ललाटके।
च-वर्गाद्यं नैऋत्यां नैऋताय नमो मुखे॥ ७२॥
टवर्गाद्यं गले पश्चाद्वरुणाय नमस्त्विति।
न्यसेद्हृदि तवर्गाद्यं वायव्यां वायवे नमः॥ ७३॥
पवर्गाद्यं कुवेराय नमोऽन्तं दक्षिणे करे।
वामहस्ते यवर्गादीशाने रुद्राय हृद् भवेत्॥ ७४॥
शवर्गाध्र्वकामाय नमो नाभौ तु विन्यसेत्।
हूँ रक्षाद्यपृथिव्यै हृत्पादयोरिति विन्यसेत्॥ ७५॥
शिवशक्त्याभिधो न्यासश्चतुर्थः कथ्यतेऽधुना।
ह्रीं स्त्रीं हूँ पूर्वकः कार्य इन्द्रियाद्य हरः परम्॥ ७६॥
ब्रह्माणं डाकिनीयुक्तं वादिसान्तार्णपूर्वकम्।
मूलाधारे प्रविन्यस्य चतुर्दलसमन्वितम्॥ ७७॥
श्रीविष्णुं शाकिनीयुक्तं वादिलान्तार्णपूर्वकम्।
स्वाधिष्ठानाभिधे चक्रे लिङ्गस्थे षड्दले न्यसेत्॥ ७८॥
रुद्रं तु लाकिनीयुक्तं डादिफान्तार्णपूर्वकम्।

चक्रे दशदले न्यस्य नाभिस्थे मणिपूरके ॥ ७९ ॥
ईश्वरं कादिवातार्णपूर्वकं काकिनीयुतम् ।
विन्यसेद्द्वादशदले हृदयस्थे त्वनाहते ॥ ८० ॥
सदाशिवं शाकिनीं च षोडशस्वरपूर्वकम् ।
कण्ठस्थे षोडशदले विशुद्धाख्ये प्रविन्यसेत् ॥ ८१ ॥
आज्ञाचक्रे परशिवं हाकिनीसंयुतं न्यसेत् ।
हक्षार्णपूर्णं भ्रूमध्ये संस्थितेऽति मनोहरे ॥ ८२ ॥
वक्ष्येऽथ पञ्चमं न्यासं समस्तारिष्टनाशनम् ।
अँ-आँ-कवर्ग-ह्रीं स्त्रीं हूँ तारायै नम उच्चरेत् ॥ ८३ ॥
विन्यसेद्ब्रह्मरन्ध्रेऽथ इँ ईँ चापि चवर्गकम् ।
ह्रीं स्त्रीं हूँ नम उग्रायै ललाटे चापि विन्यसेत् ॥ ८४ ॥
उँ ऊँ चवर्ग ह्रीं स्त्रीं हूँ महोग्रायै नमो वदेत् ।
विन्यसेच्च भ्रुवोर्मध्ये कण्ठे ऋँ ॠँ टवर्गकम् ॥ ८५ ॥
ह्रीं स्त्रीं हूँ चापि वज्रायै नमोऽन्तं सकलेष्वपि ।
लृँ लॄँ तवर्ग ह्रीं स्त्रीं हूँ नमः काल्यै हृदि न्यसेत् ॥ ८६ ॥[४]
एँ ऐँ पवर्ग ह्रीं स्त्रीं हूँ सरस्वत्यै च नाभिगाम् ।
ओँ औँ शवर्ग ह्रीं स्त्रीं हूँ वायुश्चर्यलङ्गिके ॥ ८७ ॥
अँ अः लक्षौ च ह्रीं स्त्रीं हूँ चामुण्डायै नमो न्यसेत् ।
मूलाधारे न्यसेत्पश्चात्षष्टन्यासं समाचरेत् ॥ ८८ ॥
आधारे कामरूपाख्यं बीजह्रस्वार्कपूर्णकम् ।
हृदि जालन्धरं पीठं दीर्घपूर्वं प्रविन्यसेत् ॥ ८९ ॥
ललाटे पूर्णगिर्याख्यं कवर्गाद्यं न्यसेत्सुधीः ।
उड्डीयाणं चवर्गाद्यं केशसन्धौ प्रविन्यसेत् ॥ ९० ॥
भ्रुवो वाराणसीपीठं टवर्गाद्यं समाहितम् ।
तवर्गपूर्वकां[५] न्यसेदवन्तीं नयनद्वये ॥ ९१ ॥
पवर्गपूर्वकं मायापुरीपीठं मुखे न्यसेत् ।
कण्ठे तु मथुरापीठं यवर्गाद्यं प्रविन्यसेत् ॥ ९२ ॥
नाभावयोध्यापीठं तु शवर्गाद्यं प्रविन्यसेत् ।
कटौ काञ्चीपुरीपीठं दशमं तु प्रविन्यसेत् ॥ ९३ ॥

---

४ मा. ख. श्लोकौ ८५, ८६ न विद्येते ।

५ तवर्गपूर्विकां पाठ उचितः ।

षोढान्यासस्तु[6] तारायाः प्रोक्तोऽभीष्टप्रदायकः ।
मन्त्रेणान्तरितां कृत्वा षड्वारां मातृकां न्यसेत् ॥ ९४ ॥
क्रमात् क्रमाद्वरारोहे ताराषोढा प्रकीर्तिता ।
कृतेऽस्मिन् न्यासवर्ये तु सर्वपापं विनश्यति ॥ ९५ ॥
योगिनीनां भवेत्पूज्यः स देवो न तु मानुषः ।
यं नमन्ति महेशानि षोढापुटितविग्रहाः ॥ ९६ ॥
अल्पायुः स भवेत्सद्यो देवता कम्पते भयात् ।
न तस्य पूज्यो लोकेऽस्मिन् पितृमातृमुखो जनः ॥ ९७ ॥

## अथ गुह्यषोढामाह

न प्रकाश्यमिदं क्वापि मन्त्रिणः कायरक्षणे ।
प्रणवं मातृकावर्णपुटितं मातृकास्थले ॥ ९८ ॥
तेनैव पुटितं वर्णं न्यसेत्तत्रैव पार्वति ।
मायाबीजं तथा देवि विन्यस्तव्यं प्रयत्नतः ॥ ९९ ॥
बधूबीजं तथा देवि विन्यसेत् तु समाहितम् ।
कूर्चबीजं तथा देवि न्यसनीयमशेषतः ॥ १०० ॥
अस्त्रं चैव तथा न्यस्य सकलं तदनन्तरम् ।
गुह्यषोढा ह्ययं देवि न प्रकाश्यां कदाचन ॥ १०१ ॥
अवश्यं प्रत्यहं कार्यं न पूजा न जपस्तथा ।
अथास्याः सामान्य षोढा तु श्यामाप्रकरणेऽप्युक्ता ।
ताराविद्याविधौ देवि कार्या षोढा चतुष्टयी ॥ १०२ ॥

## अथ तारकान्यासः

अकारादि क्रमतो न्यस्य रोहिण्यादिक्रमेण तु ।
व्युत्क्रमेण च चत्वारि शेषं शेषेण योजयेत् ॥ १०३ ॥
रोहिण्यादि महान्यासं कृत्वा नटवरः सुधीः ।
रोहिणीसुतवत् पृथ्व्यामशोच्यो भवति ध्रुवम् ॥ १०४ ॥
अकृत्वा तारकन्यासं तारिणीं प्रयजेद्यदि ।
शतलक्षप्रजप्तोऽपि न मन्त्रः सिद्धिदायकः ॥ १०५ ॥

---

६ मा. ख. अथ मन्त्रषोढा इति अधिकः पाठः ।

## अथ ऋष्यादिन्यासः

अक्षोभ्य ऋषिरेतस्या वृहती छन्द ईरितम् ।
नीलसरस्वती देवी त्रिषु लोकेषु गोपिता ॥ १०६ ॥
हूँ बीजं मन्त्रशक्तिः[७] स्यान्माया स्त्रीँ कीलकं स्मृतम् ।
विनियोगो भवेद्देवि चतुर्वर्गफलाप्तये ॥ १०७ ॥

अथ कराङ्गन्यासः । तत्रादौ सार्धपञ्चाक्षरी विद्यायाः
षड्दीर्घमायाबीजेन षडङ्गविधिरीरितः ।
अणक्षरीत्र्यक्षरीविद्ययोः
अखिल वाग्रूपिणीमुक्त्वा कवचाय हुमुच्चरेत् ॥ १०८ ॥
रुद्रवाग्रूपिणीं नेत्रत्रयाय वौषडित्यपि ।
सर्ववाग्रूपिणीमुक्त्वा अस्त्राय फडिति स्मरेत् ॥ १०९ ॥
षड्दीर्घमायया बीजं बीजान्ते तानि योजयेत् ।

## अथ सार्धवेदाक्षरीविद्यायाः

बीजान्ते एकजटायै हृदयं परिकीर्तितम् ॥ ११० ॥
तारिण्यै शिरसि तद्वद्वज्रोदके शिखा तथा ।
उग्रजटे च कवचं महावीरवरे तथा ॥ १११ ॥
पिङ्गोग्रेकजटे तद्वन्नेत्रास्त्रे परिकीर्तिते ।

## अथ व्यापकन्यासः

मूलेन व्यापकं न्यासं नवधा कारयेत्प्रिये ॥ ११२ ॥
सप्तधा पञ्चधा वाऽपि ततो न्यूनं न कारयेत् ।
अभोक्तमाचरेदत्र नान्यं संचारयेद् वुधः ॥ ११३ ॥

## अथ यन्त्रलिखनमाह

ततः कुङ्कमसिन्दूरैः कार्यं यन्त्रं तु योगिना ।
सौवर्णे राजते ताम्रे स्फाटिके वैद्रुमे तथा ॥ ११४ ॥
चक्रे यथोक्तविधिना पूज्या देवी नरोत्तमैः ।

---

७ मा. ख. मन्त्रः स्यान्माया पाठः । पाठो=यं उचितः ।

बिन्दुत्रिकोणाष्टदलं भूपुरं वज्रचिह्नितम् ॥ ११५ ॥
यन्त्रमेतन्महेशानि रहस्यातिरहस्यकम् ।
बिन्दुषट्कोणवृत्तं च पद्मभूगृहभूषितम् ॥ ११६ ॥
यन्त्रं प्रोक्तं महाप्राज्ञे[८] भूपुरद्वयपुण्यकम् ।
बिन्दुत्रिकोणषट्कोणं वृत्तत्रयमनन्तरम् ॥ ११७ ॥
चतुरस्रं ततो वृत्तं दलाष्टकं ततोपरि[९] ।
वृत्तत्रयं समालिख्य भूपुरत्रयकं ततः ॥ ११८ ॥
त्रिशूलटङ्कितं यन्त्रं श्रीमहातारिणीमनोः ।
बिन्दुत्रिकोणषट्कोणं वृत्ताष्टदलभूषितम् ॥ ११९ ॥
षोडशारं दन्तपद्मं चतुः षष्ठिदलं तथा ।
भूपुरत्रयसंयुक्तं यन्त्रं श्री तारिणीमनोः ॥ १२० ॥

**अथ सबीजयन्त्रमाह**

ततः कुलरसेनैव पीठं निर्माय यत्नतः ।
ॐ आः सुरेखे वज्ररेखे हुँ फट् वह्निबल्लभा ॥ १२१ ॥
मन्त्रेणानेन विलिखेत्तारायन्त्रं मनोहरम् ।
षट्कोणान्तर्गतं पद्मं भूबिम्बद्वितयं पुनः ॥ १२२ ॥
तन्मध्ये विलिखेन्मन्त्री ताराप्रणवमेव हि ।
अथवा
षट्कोणान्तर्गतं पद्मं भूबिम्बद्वितयं पुनः ॥ १२३ ॥
माया पूर्वदले चैव द्वितीयं दक्षिणे लिखेत् ।
अथोत्तरे पश्चिमे च हूँ फट् तारं च मध्यतः ॥ १२४ ॥
सयोनिं गोमयेनाष्टपत्रमब्जं सुशोभनम् ।
भूपुरं वसुवज्राढ्यं यन्त्रमेकजटात्मकम् ॥ १२५ ॥
मायां पूर्वदले न्यस्य याम्ये बीजं द्वितीयकम् ।
तथोत्तरे पश्चिमे च फट्कारैर्विलिखेत्ततः ॥ १२६ ॥
मध्ये बीजं लिखित्वा तु भूतशुद्धिं समाचरेत् ।

अत्र अस्त्रबीजलिखने मतभेदोऽस्ति ।

---

८ महेशानि इति पाठो मा. ख ।

९ ततः परं पाठ उचितः ।

कुलेश्वरमते प्रोक्तं फोत्तरे पश्चिमे तु ट ॥ १२७ ॥
फ पश्चिमे टोत्तरे च विकरालमते स्मृतम् ॥ १२८ ॥
व्योमेन्दौ[10] रसनार्णकर्णिकमचां द्वन्द्वैः स्फुरत्केशरं
वर्गोल्लासिवसुच्छदं वसुमती गेहेन संवेष्ठितम् ।
ताराधीश्वरवारिवर्णलिसद्दिक्कोणसंशोभितम्,
यन्त्रं नीलतनोः परं निगदितं सर्वार्थसिद्धिप्रदम् ॥ १२९ ॥
अशून्यं कुसुमैः कुर्याच्छून्ये विघ्नं विनिर्दिशेत् ।
ह्रस्वः साक्षिभयं श्वेतो भगवान् मदनोदकः ॥ १३० ॥
ताभिषेकं तथा चोक्त्वा भृगुः काली मरुत्प्रिये ।
कूर्चास्त्रं वह्निभार्येति यन्त्रे पुष्पाञ्जलिं क्षिपेत् ॥ १३१ ॥

## अथ पीठपूजामाह

महीगृहचतुर्दिक्षु गणेशं वटुकं तथा ।
क्षत्रपालं योगिनीं च ध्यात्वा सम्यक्प्रपूजयेत् ॥ १३२ ॥
पाशाङ्कुशौ त्रिशूलं च कपालं दधतं करैः ।
अलङ्कारे वयोपेतं गणेशं प्राक् समर्चयेत् ॥ १३३ ॥
कपालशूलहस्ताभ्यां दधतं सर्वभूषणम् ।
स्वयूथवेष्ठितं रम्यं वटुकं दक्षिणेऽर्चयेत् ॥ १३४ ॥
डमर्वसित्रिशूलाँश्चकपालं दधतं करैः ।
कृष्णं दिगम्बरं क्रूरं क्षत्रपं पश्चिमे यजेत् ॥ १३५ ॥
डमरुं पाशलिङ्गे च कपालं दधतीं करैः ।
रक्तमाल्यां रक्तवस्त्रां योगिनीमुत्तरे यजेत् ॥ १३६ ॥
श्मशानं तत्र संचिन्त्य तत्र कल्पद्रुमं स्मरेत् ।
तन्मूले मणिपीठं च नानामणिविभूषितम् ॥ १३७ ॥
नानालङ्कारभूषाढ्यं मुनिदेवैश्च भूषितम् ।
शिवाभिर्बहुमांसास्थि मोदमानाभिरन्ततः ॥ १३८ ॥
चतुर्दिक्षु शवान् मुण्डान् चिताङ्गारास्थिभूषितान् ।
पीठशक्तिरथाभ्यर्च्या केशरेषु समन्ततः ॥ १३९ ॥
वरदाभयधारिण्यः पीठं पीठानुना यजेत् ।
ता यथा ।

---

१० मा. ख. व्योमेब्दौ पाठः ।

लक्ष्मीः सरस्वती चैव रतिः प्रीतिस्तथैव च ॥ १४० ॥
कीर्तिः शान्तिश्च पुष्टिश्च तुष्टिरित्यष्टशक्तयः ।
तन्मध्ये पूजयेद्देव्या वाहनं शवमेव च ॥ १४१ ॥

### अथ पीठमन्त्रमाह

वियद्भृगुं समुच्चार्य मनुबिन्दुकलान्वितम् ।
महाप्रेतपदं पश्चाद्धृदयान्तमयं मनुः ॥ १४२ ॥
अथार्घ्यस्थापनम् ।
भूमिं पूर्वोक्तमन्त्रेण मण्डलस्य तु मण्डलम् ।
कुर्याद्वृत्तं त्रिकोणं च भूपुरं तस्य बाह्यतः ॥ १४३ ॥
कुर्यात्तत्राधारशक्तिं कूर्मं शेषं च संयजेत् ।
आधारं स्थापयेत्तत्र ॐ ह्रीं फडितिमन्त्रतः ॥ १४४ ॥
आधारं पूजयेत्तत्र यँ वह्निमण्डलाय च ॥
नमोन्तेन नवार्णेन ततो नरकपालकम् ॥ १४५ ॥
हूँ फट् मन्त्रेण संक्षाल्य स्त्रीं बीजेन निवेशयेत् ।
ततोऽर्चयेन्नृकपालं जपन्मन्त्रचतुष्टयम् ॥ १४६ ॥
कालीकपालाय नमो ह्रीं ह्रीं हूँ पूर्वकं वदेत् ।
एकादशाक्षरो मन्त्रोऽनेन पूजादि मामता ॥ १४७ ॥
स्त्राँ स्त्रीं स्त्रूँ तारिणीत्युक्त्वा कपालाय नमोऽन्तिकः ।
द्वादशार्णोऽनेन भवेत् कपालार्चा द्वितीयका ॥ १४८ ॥
हाँ हीं हूँ प्रोच्य नीलाकपालाय नम इत्ययम् ।
एकादशार्णोऽनेनोक्ता कपालार्चा तृतीयका ॥ १४९ ॥
माया स्त्रीं हूँ स्वर्गकपालाय सर्वापदं वदेत् ।
ततो धाराय सर्वाय तथा सर्वोद्भवाय च ॥ १५० ॥
सर्वशुद्धिमयायेति सर्वासुररुधीति च ।
रारुणाय च शुभ्राय सुराभाजनायेति च ॥ १५१ ॥
देवी कपालाय नमश्चतुर्थो मन्त्र ईरितः ।
षट्पञ्चाशत्कवर्णोऽयं कपालस्य तु पूजने ॥ १५२ ॥
ततस्तस्मिन्कपाले तु पूजयेदर्कमण्डलम् ।
ॐ सूर्यमण्डलायेति नमोऽन्तोऽयं नवाक्षरः ॥ १५३ ॥
सूर्यमण्डलपूजायां नृकपाले मनुर्मतः ।

मूलमन्त्रं पठन्तस्मिन्सुधाबुद्ध्या सुरां क्षिपेत् ॥ १५४ ॥
गन्धपूष्पाक्षताः क्षिप्त्वा त्रिखण्डाख्यां प्रदर्शयेत् ।
मुद्रां सा तु करौ व्यस्तावङ्गुष्ठौ कारयेत्समौ ॥ १५५ ॥
अनामान्तर्गते कृत्वा तर्जन्यौ कुटिलाकृती ।
कनिष्ठिके निजस्थाने त्रिखण्डाह्वानकर्मणि ॥ १५६ ॥
ततस्तस्यां सुरायां तु पूजयेच्चन्द्रमण्डलम् ।
एकादशार्णेन ततः शङ्खतोयं तु मन्त्रयेत् ॥ १५७ ॥
ह्रीं श्रीं ह्रौं ॐ समुच्चार्य ह्रीं स्त्रीं हूँ फट् समुच्चरेत् ।
ह्सौंः हूँमिति वाग्बीजादिर्मन्त्र एकादशाक्षरः ॥ १५८ ॥
ह्रीं बीजेन ततो मद्यं किञ्चिच्छेषाम्बु निक्षिपेत् ।
शङ्खमुद्रां योनिमुद्रां शङ्खतोयाय दर्शयेत् ॥ १५९ ॥
तत्र वृत्तेष्वष्टकोणं ध्यात्वा देवीं विचिन्तयेत् ।
पूर्वोक्तां पूजयित्वैनां मूलेनाथ प्रतर्पयेत् ॥ १६० ॥
तर्जनीमध्यमानामीकनिष्ठाभिर्महेश्वरम् ।
साङ्गुष्ठाभिश्चतुर्वारं महाशङ्खस्थिते जले ॥ १६१ ॥
पञ्चाक्षराणुना पश्चात्तर्प्य आनन्दभैरवः ।
तारो ह्रौं ह्सौं नम इति पञ्चार्णो भैरवो मनुः ॥ १६२ ॥
ततस्तेनार्घ्यतोयेन प्रोक्षयेत्पूजनसाधनम् ।
योनिमुद्रां प्रदर्श्याथ प्रणमेद्भतारिणीम् ॥ १६३ ॥
[11]आवाहय स्थापयित्या तु ध्यात्वा मुद्रां प्रदर्शयेत् ।
मुद्राः प्रदर्श्य विधिवदुपचारैः प्रपूजयेत् ॥ १६४ ॥

## अथ ध्यानम्

प्रत्यालीढपदां घोरां मुण्डमालाविभूषिताम् ।
खर्वां लम्बोदरां भीमां व्याघ्रचर्मावृतां कटौ ॥ १६५ ॥
नवयौवनसम्पन्नां पञ्चमुद्राविभूषिताम् ।
चतुर्भुजां ललज्जिह्वां महाभीमां वरप्रदाम् ॥ १६६ ॥
खड्गकर्त्रीधरां सव्ये वामे मुण्डोत्पलान्विताम् ।
पिङ्गाग्रैकजटां ध्यायेन्मौलावक्षोभ्यभूषिताम् ॥ १६७ ॥
बालार्कमण्डलाकारलोचनत्रयभूषिताम् ।

११ मा. ख. अथ पूजामाह पाठोऽधिकः ।

प्रज्ज्वलत्पितृभूमध्यगतां द्रंष्ट्राकरालिनीम् ॥ १६८ ॥
सा वै सस्मेरवदनां सर्वालङ्कारभूषिताम् ।
विश्वव्यापकतोयान्तः श्वेतपद्मोपरिस्थिताम् ॥ १६९ ॥

## अथ मुद्रामाह

तारार्चनविशेषेण दर्शयेत्पञ्चमुद्रिकाम् ।
योनिश्च भूतिनी चैव बीजाख्या दैत्यधूमिनी ॥ १७० ॥
लेलिहा चेति संगुप्ताः पञ्चमुद्राः प्रकीर्तिताः ।
योनिर्मायाधराधेनुवधूः कूर्च क्रमाद्विदुः ॥ १७१ ॥
बीजन्यासां लक्षणन्तु क्रमेण कथयाम्यहम् ।
तर्जन्यनामिकामध्ये कनिष्ठे च क्रमादपि ॥ १७२ ॥
करयोर्योजयेच्चैव कनिष्ठामूलभेदतः ।
अङ्गुष्ठाग्रं तु निक्षिप्य महायोनिः प्रकीर्तिता ॥ १७३ ॥
अधोमुखीमिमां मुद्रां दर्शयेद् बीजपूर्विकाम् ।
बद्ध्वा तु योनिमुद्रां वै मध्यमे कुटिले कुरु ॥ १७४ ॥
अङ्गुष्ठे तु तदग्रे तु मुद्रेयं भूतिनी मता ।
परिवर्त्य करौ स्पृष्टावङ्गुष्ठतर्जनीयुगम् ॥ १७५ ॥
अर्धचन्द्राकृतिन्यायं युगपत्कारयेत्समम् ।
अधः कनिष्ठामाकृष्य मध्यमे विनियोजयेत् ॥ १७६ ॥
मुद्रैषा कथिता देवि बीजाख्या ज्ञानरूपिणी ।
परिवर्त्य करौ कृत्वा कनिष्ठाकृष्टमध्यमाम् ॥ १७७ ॥
अनामयोर्युगञ्चाधस्तर्जनीयुगलं पृथक् ॥
अन्योऽन्यं निबिडं बद्ध्वा अङ्गुष्ठाग्रे अनामिके ॥ १७८ ॥
दैत्यानां धूमकेत्वाख्या मुद्रैषा कथिता प्रिये ।
वक्त्रं विस्फारितं कृत्वाऽप्यधोजिह्वां च चालयेत् ॥ १७९ ॥
पाश्वर्थमुष्ठियुगलं लेलिहानेति कीर्तिता ।

## अथास्याः पूजामन्त्रमाह

श्रीमदेकजटेत्युक्त्वा वज्रपुष्पं प्रतीच्छ च ॥ १८० ॥
तारादिवह्निजायान्तमुदीर्य यजनं चरेत् ।
संतर्प्य पञ्चमुद्राभिर्नमस्कुर्यादलक्षितः ॥ १८१ ॥

**पञ्च मुद्रा यथा**

संमुखं चतुसस्रं च वृत्तं गोमुखमेव च।
योनिमुद्रेति कथिता मुद्राः पञ्च नमस्कृतौ ॥ १८२ ॥

**अथासां लक्षणमाह**

अञ्जलिं भूमौ संस्थाप्य तत्र दत्त्वा शिरः पुनः।
एषा मुद्रा महेशानि ख्याता संमुखसंज्ञका ॥ १८३ ॥
उत्तानं च वामकरं भूमौ कृत्वा महेश्वरि।
दक्षं करतलं तत्र संयोज्य साधकोत्तमः ॥ १८४ ॥
करयोरङ्गुलीभिश्च पृष्ठदेशं परस्परम्।
स्पृष्ट्वा तत्र शिरोयोगान्मुद्रोऽयं स्याच्चरस्रिका ॥ १८५ ॥
निधाय भूमावुत्तानाङ्गुष्ठमुष्ठिद्वयं शिवे।
मूर्ध्निर्नयोगान्महेशानि ख्यातेयं वृत्तमुद्रिका ॥ १८६ ॥
भूमौ करयुगं देवि संपुटं विस्तृताङ्गुलिम्।
कृत्वा तत्र शिरो योगान्मुद्रा गोमुखसंज्ञका ॥ १८७ ॥
पूर्वोक्ता योनिमुद्रा या सा भूमौ शिरसंयुता।
योनिमुद्रेति कथिता तारादेव्या नमस्कृतौ ॥ १८८ ॥
अथास्या मूर्ध्नि भैरवं यजेत्। तथा च।
ततः संपूजयेद्देव्या मस्तकेऽक्षोभ्यसंज्ञितम्।
मूर्ध्निं द्वादशवर्णेन मनुना स निगद्यते ॥ १८९ ॥
अक्षोभ्य बज्रपुष्पं च प्रतिष्ठानलवल्लभा।

अथास्योपास्यमन्त्रध्यानादिकमग्रे वाच्यम्।
अथ संपूजयेत्कोणषट्के देव्याः षडङ्गकम् ॥ १९० ॥

अथ दिव्यौघाद्या गुरवः।
अथ तारा गुरु वक्ष्ये दृष्टादृष्टफलप्रदान्।
ऊर्ध्वकेशो व्योमकेशो नीलकण्ठो वृषध्वजः ॥ १९१ ॥
दिव्यौघान् कथितान् वत्स सिध्दौघान् पूजयेत्ततः।
वशिष्ठः कूर्मनाथश्च मीननाथो महेश्वरः ॥ १९२ ॥

हरिनाथो मावौघान् श्रृणु वक्ष्यामि सद्गुरून्।
तारावती भास्ववती जया विद्या महोदरी॥ १९३॥
सुखानन्दः परानन्दः पारिजातः कुलेश्वरः।
विरूपाक्षः फेरवी च कथितं तारिणीकुलम्॥ १९४॥
त्रिकोणमध्ये देव्यग्रे स्वगुरुं पूजयेद्बुधः।
कामेश्वर्यादिकाः पूज्यास्त्रिकोणे वह्निमण्डले॥ १९५॥
कामेश्वरी दिक्करवासिनी च चण्डनायिका।

**अथाधोमुखत्रिकोणे**

इन्द्रकोणे लसद्दण्डकुण्डिकाक्षगुणाभयाम्॥ १९६॥
गायत्रीं पूजयेन्मन्त्री ब्रह्माणमपि तादृशम्।
रक्षकोणे चक्रशङ्खगदापङ्कजधारिणीम्॥ १९७॥
सावित्रीं पीतवसनां यजेद्विष्णुं च तादृशम्।
वायुकोणे च पार्श्वक्षमालाभयवरान्विताम्॥ १९८॥
यजेत्सरस्वतीं मच्छांरुद्रं तादृशलक्षणम्।

इति षट्कोणपक्षे त्रिकोणपक्षे तूपनिषदि विशेषः।
क्रमेण कोणत्रये बीजत्रयेण ब्राह्मीं वैष्णवीं माहेश्वरीं पूजयेदिति।

अथास्यावरणाच्चर्चा वामावर्त्तेनैव। तथा च।
वामावर्तक्रमेणैव पूजयेदङ्गदेवताः॥ १९९॥
अथ पूर्वाद्यष्टदलमूले महाकाल्याद्याः पूज्याः।

ततोऽष्टौ योगिनीर्बाह्ये संपूज्या दलमूलतः॥
महाकाल्यथ रुद्राणी उग्रा भीमा तथैव च॥ २००॥
घोरा च भ्रामरी चैव महारात्रिश्च सप्तमी।
भैरवी चाष्टमी प्रोक्ता योगिनीस्ताः प्रपूजयेत्॥ २०१॥
अथ पूर्वादिदलचतुष्टये वैरोचनादीन् पूजयेत्।
वैरोचनं तथा शङ्खपाण्डुरं पद्मनाभकम्।
असिताभं यजेन्मन्त्री ऐन्द्रीतश्च चतुर्दले॥ २०२॥
अथाग्न्यादिदलचतुष्टये नामकाद्या इष्ट्याः।

विदिक्षु पूजयेत्पश्चादग्निकोणादितः क्रमात् ।
नामकां मामकां चैव पाण्डुरां तारिकां तथा ॥ २०३ ॥

अथ वैरोचनादीनां ध्यानमाह ।
वैरोचनं द्विहस्तं च यष्टितोमरधारिणम् ।
पीतं वृषासनगतं त्रिनेत्रं रक्तवत्सलम् ॥ २०४ ॥
शङ्खं त्रिशिरसं देवमसिताभं हिरण्मयम् ।
पुस्तकाभीतिवरदं विमलं शशवाहनम् ।
पद्मनाभं दन्तिवक्त्रं पुस्तकं वरदाभयम् ।
पाशं च विद्धृतं देवं त्रिनेत्रं वरदं शुभम् ॥ २०६ ॥
श्वेतां त्रिनेत्रां वरदां पुस्तकाभयधारिणीम् ।
मामकां बलदेवेन संयुक्तेन विभावताम् ॥ २०७ ॥
कृष्णां करालवदनां नामकां नवयौवनाम् ।
गोधिकायां समारूढां शिखिरूढां च तारकाम् ॥ २०८ ॥
पाण्डुरां श्वेतबीजेन चतुर्बाहुसमन्विताम् ।
रक्तां लम्बोदरीं ध्यायेत्पञ्चप्रेतासनस्थिताम् ॥ २०९ ॥

अथ वैरोचनादिनरकान्तकान्तानां पूजायां मन्त्रे विशेषमाह ।
आदौप्रणवमुच्चार्य नामाद्यबीजमुच्चरेत् ।
संबुध्यं तं च तन्नाम बज्रपुष्पं प्रतीच्छ च ॥ २१० ॥
स्वाहान्तो मनुराख्यातो द्वादशानामयं क्रमः ।

अथ पूर्वाद्यष्टदलाग्रेषु ब्राह्म्याद्यष्टमातरः पूजनीयाः ।
दलाग्रेषु महेशानि ब्राह्मादीन् परिपूजयेत् ॥ २११ ॥
अथ पूर्वादिद्वारचतुष्टये पद्मान्तकयमान्तकौ ।
विघ्नान्तकं समभ्यर्च्य पूजयेन्नरकान्तकम् ॥ २१२ ॥

अथ भूपुरस्य दशदिक्षु दिक्पालान् संपूज्य तद्बहिस्तदस्त्राणि समभ्यर्च्य भूपुरपूर्वदिशि भूपुरपङ्कजयोरन्तराले सूर्यं संपूज्य देव्या उत्तरभागे गुरुपंङ्क्त्यन्तरे बौद्धं यजेत् ।
भूपुरे चैव तद्बाह्ये दशदिक्षु यथाक्रमम् ।
शक्रादींश्चापि बज्रादीन् पूजयेत्तदनन्तरम् ॥ २१३ ॥

भूबिम्बाभ्यन्तरे सूर्यं गुरुपङ्क्त्यन्तरे ततः।
उत्तरे पूजयेद्बौद्धं पुनर्देवीं प्रपूजयेत्॥ २१४॥
पुष्पाञ्जलित्रयं दद्याद्यथासंख्यं जपेद्बुधः।

अथ सर्वावरणसाधारणयजनमन्त्रमाह।
प्रणवं पूर्वमुच्चार्य नाम संबोधनान्वितम्॥ २१५॥
बज्रपुष्पं प्रतीच्छेति हूँ फट् स्वाहेति मन्त्रितः।
एतन्मन्त्रे नाम मात्रं भिन्नमेव न संशयः॥ २१६॥
अनेन मनुना सर्वान् परिवारान् समर्चयेत्।
वैरोचनादिषु पुनर्नामाद्यक्षरपूर्वकम्॥ २१७॥

## अथ बलिदानम्

ततश्च नित्यपूजान्तेऽन्वहं देव्यै बलिं हरेत्।
वामभागे त्रिकोणे च वृत्तं भूपुरमेव च॥ २१८॥
विधाय रक्तमाल्याद्यैरर्चयित्वा यथाविधिः।
श्रीमदेकजटे नीलसरस्वति महोग्रे च॥ २१९॥
तारे देवि खखेत्युक्त्या सर्वभूतपिशाचरा–
क्षसा-ग्रस ग्रस मम जाड्यं च्छेदय छेदय॥ २२०॥
श्रीं ह्रीं फट् वह्निजायान्तस्तारमायादिको मनुः।
भवेद्द्विपञ्चाशदर्णः पूजैवं पूर्णतामियात्॥ २२१॥

## अथ जपमाह

तत्रादौ भैरवस्य ततः कुल्लुकायास्ततः स्वेष्टदेवतायाश्च।
अक्षोभ्यस्य मनुं त्यक्त्वा देवीं तारां जपेद्यदि।
सिद्धिहानिर्भवेत्तस्य रौरवं नरकं व्रजेत्॥ २२२॥
अक्षोभ्यस्य मनुं विप्र कवचं सारमुत्तमम्।
अतिगुह्यं महाध्यानं सर्वध्यानेषु चोत्तमम्॥ २२३॥
अग्रे मनुं प्रवक्ष्यामि ध्यानं चैव ततः परम्।
कवचं च ततः पश्चात्कथयामि क्रमेण तु॥ २२४॥
अनुत्तरं समुद्धृत्य प-पञ्चमविभूषितम्।

अक्षोभ्येति च स्वाहेति रमाद्यन्तं महामनुम् ॥ २२५ ॥
स्वयं ऋषिश्च संप्रोक्तो विराट् छन्द उदीरितम् ।
अक्षोभ्यो देवता प्रोक्तस्त्रिमूर्त्तिर्नागरूपधृक् ॥ २२६ ॥
विनियोगस्तु नियतं पुरुषार्थचतुष्टये ।
अथ ध्यानं प्रवक्ष्यामि सर्वसौभाग्यदायकम् ॥ २२७ ॥
सहस्रादित्यसंकाशं नागरूपधरं शुभम् ।
विद्युत्कोटिसमं वक्त्रं वह्निभास्वरलोचनम् ॥ २२८ ॥
सार्धत्रिबलयोपेतं जटाकोट्यग्रसंस्थितम् ।
महालावण्यसंयुक्तं सुरासुरनमस्कृतम् ॥ २२९ ॥
सूर्यविद्युत्समं भास्वन्महामणिशिरोपरि ।
एतद्रूपं महाकायं देवैरपि सुपूजितम् ॥ २३० ॥

## शिव उवाच

अक्षोभ्यकवचस्यास्य ब्रह्मविष्णुकरुद्रकाः ।
ऋषयश्च समाख्याता विराट्छन्द उदाहृतम् ॥ २३१ ॥
अक्षोभ्यो देवता चैव श्रीबीजं बीजमेव च ।
स्वाहा शक्तिर्विनियोगः पुरुषार्थचतुष्टये ॥ २३२ ॥
श्रीबीजं मे शिरमन्यदादिबीजं च भालकम् ।
अकारः स्कन्धं मे अव्यात्क्षकारो हृदि रक्षतु ॥ २३३ ॥
भकारो नाभिं मे अव्याद्यकारो गुह्यदेशकम् ।
मन्त्रशक्तिश्च सर्वाङ्गं बीजं नेत्रद्वयेऽवतु ॥ २३४ ॥
सर्वभावैश्च अक्षोभ्यो बाहू द्वौ रक्षयेत्सदा ।
ब्रह्मा रक्षतु पादौ द्वौ विष्णुरक्षतु जानुनी ॥ २३५ ॥
मूलाधारं शिवो मेऽव्यात् स्वाधिष्ठानं वृषोऽवतु ।
मणिपूरं सदा अव्यात् शिवस्य गृहिणी च मे ॥ २३६ ॥
अनाहताम्बुजं मेऽव्यादिन्द्रादिदशदेवताः ।
विशुद्धचक्रे सततं रक्षां करोतु मे रविः ॥ २३७ ॥
महेश्वरः सदा रक्षेदाज्ञाचक्रं सुशोभनम् ।
ब्रह्मा शुक्रं च मे रक्षेन्नाभिं रक्षतु भैरवी ॥ २३८ ॥
दिव्यादौ गुरुपङ्क्तौ च सर्वत्राक्षोभ्य उच्यते ।
एवं क्रमविधानेन कवचं च जपेच्छुचि ॥ २३९ ॥

त्रिसन्ध्यं यः पठेन्नित्यं श्रद्धाभक्तिसमन्वितः।
सिद्ध्यहानिः भवेत्तस्य नात्र कार्या विचारणा॥ २४०॥

अथ कुल्लुकायाः आवश्यकतामाह।
अजप्त्वा कुल्लुकामन्त्रमस्मृत्वा श्रीपतिं हरिम्।
यो जपेत्तारिणीमन्त्रं नरके स निलीयते॥ २४१॥
जपित्वा कुल्लुकां मन्त्रमष्टोत्तरशतं सुधीः।
प्रजपेत्तारिणीं पश्चान्नान्यथा सिद्धिमाप्नुयात्॥ २४२॥
धृत्वा तु कुल्लुकाहस्ते महादेवीं समर्चयेत्।
अथवा मूर्ध्नि विन्यस्य पूजयेत्प्रजपेदपि॥ २४३॥

## अथ नित्यजपसंख्यामाह

अष्टोत्तरसहस्रं वा अष्टोत्तरशतं च वा।
रहस्यमालया मन्त्री जपेन्नित्यमनन्यधीः॥ २४४॥

तथा च। सहस्रं शतं विंशति वा जपेद्रहस्यमालयेति श्रुतौ।
रहस्यमालया जप्त्वा तारिणी सिद्धिदा भवेत्।
अतस्तया प्रजप्तव्या मालया सिद्धिमिच्छता॥ २४५॥
महाशङ्खमयी माया पञ्चाशन्मणिनिर्मिता।
रहस्यमाला संप्रोक्ता गोपनीया प्रयत्नतः॥ २४६॥
नृललाटस्थिखण्डेन रचिता जपमालिका।
महाशङ्खमयी ज्ञेयाऽभावे तु स्फाटिकी मता॥ २४७॥

## अथ मन्त्रध्यानम्

मन्त्रध्यानं प्रवक्ष्यामि जपात्सर्वार्थसाधकम्।
मन्त्रध्यानान्महेशानि सिद्ध्यते ब्रह्महा यतः॥ २४८॥
मूलचक्रे च हृल्लेखां सूर्यकोटिसमप्रभाम्।
स्वाधिष्ठाने पीतवर्णं द्वितीयं च विभावयेत्॥ २४९॥
[१२]सूर्यकोटिप्रतीकाशां योगिभिर्दृष्टपूर्विकाम्।

१२ मा. ख. अत्र अधिकः पाठो वर्तते – नाभौ जीमूतसंकाशं कूर्चबीजं महाप्रभम्। अस्त्रमन्त्रं हृदि ध्यायेत् कालाग्निसदृशप्रभम्। मूलादि ब्रह्मरन्ध्रान्तं सर्वविद्यां विभावयेत्। इति।

जिह्वायां न्यसनादेव मूकोऽपि सुकविर्भवेत् ॥ २५० ॥
इत्थं जपं समर्प्याथ घण्टावादनपूर्वकम् ।
स्तुत्वा तां स्तुतिभिः सम्यक् साधको भक्तिसंयुतः ॥ २५१ ॥

**अथ स्तोत्रं यथा**

स्वयं लीलया या परं विष्णुमूर्ति-
र्बभौ चेन्नचैवं कथं चन्द्रचूडः ।
तदङ्घ्रिप्रपातोद्गताम्बुप्रवाही
जगन्नित्यबीजं भजेतां त्रिनेत्राम् ॥ २५२ ॥
पराया न चेत् कृष्ण आसीत् कथं स
स्ववक्त्रारबिन्दद्युतेर्नेत्रभङ्ग्या ।
स्मरारेर्बहुब्रीहिताकृच्छ्रनाम्नि
जगन्नित्यबीजं भजेतां त्रिनेत्राम् ॥ २५३ ॥
लसत्पादहस्ताननाब्जेषु यस्या
मधूमीच्छुरीशो न पञ्चास्यकोऽभूत् ।
अतस्तेन लब्धा सदानन्दसंज्ञां
जगन्नित्यबीजं भजेतां त्रिनेत्राम् ॥ २५४ ॥
यदीयं रसं संनिर्णयेश्चरेण
स्मरीये सुखे चामृते चन्दनादौ ।
घृणां किं वितत्या शिवः कालकूटो
जगन्नित्यबीजं भजेतां त्रिनेत्राम् ॥ २५५ ॥
विधाता यदा न चास्ते स्वयं सः
स्वयंभूः कथं स्यात्तदातोऽतितूर्णम् ।
वुताराभिधेयो न जातः क्व लोके
जगन्नित्यबीजं भजेतां त्रिनेत्राम् ॥ २५६ ॥
जगत्स्रष्टुमस्मै चतुर्भिः स्वहस्तै-
र्ददौ या च वस्त्रं तु वेदानतोऽभूत् ।
अतः सन्ति वर्णा युगादीनि वेदा
जगन्नित्यबीजं भजेतां त्रिनेत्राम् ॥ २५७ ॥
अतः पञ्चबीजैरभूत् पञ्चभूतं
तदेकं जगद्वेद माया परायाः ।

अतो नादिता षट्प्रकारे प्रसिद्धा
जगन्नित्यबीजं भजेतां त्रिनेत्राम् ॥ २५८ ॥
तदंशं समायं द्विबीजं ततः स्यात्
त्रिपादेति वेदान्तिनो यां वदन्ति ।
चिदेकाक्षरं ब्रह्मबीजं तु कूर्चं
जगन्नित्यबीजं भजेतां त्रिनेत्राम् ॥ २५९ ॥
ततोऽस्त्रं यदा सार्धपञ्चाक्षरी सा
जगत्तारणादुग्रतारा प्रसिद्धा ।
विनातारकं सा परैकाजटा स्यात्
जगन्नित्यबीजं भजेतां त्रिनेत्राम् ॥ २६० ॥
विनास्त्रं च पञ्चाक्षरी कुल्लुकेयं
स्वयं नीलवाणी परं चित्स्वरूपा ।
स्मृताऽप्येकवारं सदा मुक्तिहेतु-
र्जगन्नित्यबीजं भजेतां त्रिनेत्राम् ॥ २६१ ॥
इदं ये जनाः स्तोत्रराजं विदन्ति
प्रसिद्धाश्च ते गद्यपद्यप्रसङ्गे ।
जगद्रूपपाशाद्विमुक्तो हि तूर्णं
शरीरान्तरे यान्ति तारासमीपम् ॥ २६२ ॥
विपत्तौ निशार्धे जपान्ते प्रभाते
पठेद्यस्तु भक्त्या तदर्थं विचिन्त्य ।
भवेन्नीलवान्या द्विरेफाङ्घ्रिपद्मे
स जीवस्तु हंसः स जीवो न जीवः ॥ २६३ ॥

*इति श्री अद्वैतनिरूपणे मन्त्रार्थविवरणात्मकतारास्तोत्रराजस्तोत्रं सम्पूर्णम् ।*

## अथ कवचमाह

पुरा कैलाशशिखरे तारां पप्रच्छ शङ्करः ।
गुप्तभावेन देवेशि कथयस्व तु सादरम् ॥ २६४ ॥
केनोपायेन सहसा शरीरं सुदृढं भवेत् ।
कथं वा सिद्धिरतुला तव मन्त्रविदां प्रिये ॥ २६५ ॥

**श्रीतारोवाच**

अस्ति गुह्यतरं ह्येतन्निःसृतं मुखपङ्कजात् ।
इदं रहस्यं परमं कथयामि त्वयि प्रभो ॥ २६६ ॥
श्रूयतां सावधानेन कवचं मन्मुखात्स्मृतम् ।
मधुकैटभयोर्युद्धे कथितं पद्मजन्मना ॥ २६७ ॥
तत्प्रभावात्तु देवेश नाशं विष्णुर्न गच्छति ।
भवेत्सुकथितं पूर्वं तत्र स्मरसि मायया ॥ २६८ ॥
उद्धृतं सारभूतानां कवचं योगिनीमते ।
न कस्मैचित्प्रवक्तव्यं न प्रकाश्यं कथंचन ॥ २६९ ॥
शपथं कुरु देवेश यदि स्नेहोऽस्ति मां प्रति ।
श्रूयतां सावधानेन कवचं सारसङ्ग्रहम् ॥ २७० ॥
सत्यं सत्यं पुनः सत्यं सत्यं सत्यं पुनः पुनः ।
कवचेन विना देव यो मामर्चयति क्षणात् ॥ २७१ ॥
तमश्नामि महोग्राऽहं योगिनीभिः सुनिश्चितम् ।
ब्रह्मविष्णुमहेशानां बीजं रक्षतु मूलकम् ॥ २७२ ॥
तदूर्ध्वं शक्तिबीजं तु लिङ्गं रक्षतु यत्नतः ।
मणिपूरं सदा पातु बधूबीजं विशेषतः ॥ २७३ ॥
अनाहतं वर्मबीजं पातु मे सर्वसर्वतः ।
अस्त्रादि सर्वदा पातु विशुद्धं कण्ठभूषितम् ॥२७४ ॥
शेषस्तु पातु मे नित्यमाज्ञास्थानं द्विपत्रकम् ।
शीर्षं पातु तथा तारा जटा पातु सदाननम् ॥ २७५ ॥
नीलसरस्वती पातु हृदयं मे सदा पुनः ।
अक्षोभ्यः पातुसर्वाङ्गं बृहती पातु भालकम् ॥ २७६ ॥
उग्रतारा देवता मे गह्वरं पातु सर्वदा ।
चरणौ मे सदा पातु मायाबीजमशेषतः ॥ २७७ ॥
उरु मे सर्वदा पातु बधूबीजं सदैव हि ।
स्तनद्वयं सदा पातु कूर्चं विघ्नविघातकम् ॥ २७८ ॥
रसनां मे सदा पातु लक्ष्मीर्देवी च शाश्वती ।
रसनाग्रं सदा पातु सरस्वती प्रयत्नतः ॥ २७९ ॥
रतिः पातु सदा बीजं प्रीतिर्मे वदनं सदा ।
कीर्त्तिः कीर्त्तिं सदा पातु शान्तिः शान्तिं सदाऽवतु ॥ २८० ॥

पुष्टिर्मे पातु पुष्टिं च तुष्टिं तुष्टिः सदाऽवतु ।
विलोचनः[13] पातु शङ्खं शङ्खपूर्वस्तथैव च ॥ २८१ ॥
पाण्डरो मे सदा गण्डं पातु नित्यं च सर्वशः ।
पद्मनाभः सदा पातु नाभिं मे दशपत्रकम् ॥ २८२ ॥
असिताभः पातु लिङ्गं नाभकः पातु चक्षुषी ।
मामको मे तथा हस्तौ ग्रीवा मे पातु पाण्डुरः ॥ २८३ ॥
तारकः पातु हृदयं पृष्ठं पद्मान्तको मम ।
पार्श्वद्वन्द्वं सदा पातु[14] यमान्तकनरान्तकौ ॥ २८४ ॥
चरणौ मे पातु नित्यं विघ्नान्तकसमाह्वयः ।
तारा मे पातु सततमष्टाङ्गं परमेश्वरी ॥ २८५ ॥
इदं तु कवचं देव कवचं मन्मुखात् सृतम् ।
प्रमादाद्यदि देवेश यत्र कुत्र प्रकाश्यते ॥ २८६ ॥
योगिनीभिः सदा हन्तुं स्वयं च बधकारिणी ।
यदि भाग्यवशाल्लब्धं केनचित्साधकेन वै ॥ २८७ ॥
तदा तस्य महासिद्धिर्वपुषा जायते ध्रुवम् ।
निषिद्धेभ्यो न दातव्यं न प्रकाश्यं कदाचन ॥ २८८ ॥
यदि दद्यान्निषिद्धेभ्यस्तदाऽहं बधकारिणी ।
दद्याच्छान्ताय शिष्याय तन्त्रमन्त्रयुताय च ॥ २८९ ॥
गुरुभक्तियुतायैव तदा सिद्धिरनुत्तमा ।
रहस्यं कथितं सर्वमनन्तफलदायकम् ॥ २९० ॥
गोपितव्यं त्वया देव न प्रकाश्यं कदाचन ॥ २९१ ॥

*इति योगिनीतन्त्रोक्तैकजटाकवचं समाप्तम् ।*
*इति श्रीतन्त्रचिन्तामणौ ताराभेदत्रितयसाधारणनित्यार्चननिर्णय नाम चतुर्विंशतितमः प्रकाशः ।*



१३ मा. क. वैलोचन पाठः ।
१४ पाताम् पाठः साधुः ।

# पञ्चविंशतितमः प्रकाशः

**अथ श्रीबज्रवैरोचनविद्यायाः क्रमो लिख्यते**

जलपात्रं करे कृत्वा पूजास्थानं ततो व्रजेत्।
प्रक्षाल्य हस्तौ पादौ च वाससी परिधाय च ॥ १ ॥
आचम्य विधिवद्देवि देशिकेन्द्रः सुखासने।
प्रागाह्यमुदगास्यं वा दक्षिणास्यं विशेषतः॥ २ ॥
स्वगेहाद्वामतो रम्यं देवीवेश्म समाचरेत्।
प्रणवश्चैव लज्जा च सकारश्च विसर्गवान्॥ ३ ॥
असुरक्षयायरक्षमाये फट् च द्विठान्तिकः।
अनेनाङ्घ्री च प्रक्षाल्य जलमीशानतस्त्यजेत्॥ ४ ॥

**अथ मन्त्राचमनम्**

मन्त्रैराचमनं कुर्याद्देवीं ध्यायन् हृदम्बुजे।
लक्ष्मीमायाकूर्चबीजैस्त्रिभिः पीत्वाम्बु साधकः॥ ५ ॥
वाग्भवेनोष्ठौ संमृज्य मायाभ्यां च द्विरुन्मृजेत्।
कूर्चेन क्षालयेत्पाणिमेभिर्मन्त्रैश्च विन्यसेत्॥ ६ ॥
श्री मायाकूर्चवाक्कामत्रिपुराभगवर्णकैः।
कामकलाङ्कुशाभ्यां च वक्त्रनासाक्षिकर्णयोः॥ ७ ॥
नाभि हृन्मस्तकं चाष्टौ स्पृष्ट्वा शम्भुर्भवेत् क्षणात्।
आचम्यैवं च्छिन्नमस्तां वत्सरान्तां प्रपश्यति ॥ ८ ॥
पुण्याहं वाचयेद्धीमान् सामान्यार्घ्यं ततो दिशेत्।
द्वारमभ्युक्ष्य तेनैव द्वारदेवान् प्रपूजयेत्॥ ९ ॥
धातारं च विधातारं क्षेत्रपालं ततः परम्।
विघ्नराजं महेशानि गङ्गां च यमुनां ततः॥ १० ॥
वसुधारां शङ्खनिधिं पद्मनिधिं वसुमतीम्।
द्वारश्रियं नमस्कृत्य पूजयेत्क्रमतः सुधीः॥ ११ ॥

ॐ कारादि नमोऽन्तेन पूजयेद्देशिकोत्तमः।
किञ्चित्संकुच्य वामाङ्गं[1] वामपादपुरस्सरम्॥ १२॥
पूजास्थानं विशेद्धीमानस्त्राय फट् समुच्चरन्।
अर्घ्यपात्रं विधायाथ क्षेत्रपालं नमेत्सुधीः॥ १३॥
ऊर्ध्वं[2] ब्रह्मा अधोऽनन्तः आधारशक्तिं ततः परम्।
[3]कूर्ममनन्तं पृथिवीं कल्पवृक्षं ततः परम्॥ १४॥
मणिदेवीं स्वर्णसिंहमष्टशक्तीस्ततः परम्।
आनन्दकन्दं प्रणमेत्संविन्नालं ततः परम्॥ १५॥
ततः प्रकृतिपत्राणि विकारमयकेशरम्।
कमलं सर्वतत्त्वैकं गुणाः[4] सत्त्वं रजस्तमः॥ १६॥
सूर्यबिम्बं चन्द्रबिम्बं वह्निबिम्बं ततः परम्।
पञ्चाशद्बीजसंयुक्तां कर्णिकां प्रणमेत् सुधीः॥ १७॥
आत्मानं रक्षयेद्धीमान् वह्निप्राकारयोगतः।
शवं वा गजचर्माणि नरचर्ममहेश्वरि॥ २०॥
व्याघ्राजिनं कुचेलं वा भूतिकागारसंभवम्।
शवचेलं महेशानि आसने कल्पयेत्सुधीः॥ २१॥
आत्मानं नीलचोलेन भूषयेद्यत्नपूर्वकम्।
विशेषेण महेशानि पूजयेत्साधकोत्तमः॥ २२॥
कूर्मचक्रे विशेद्धीमान् मुखे सर्वसमृद्धये।
पूजयित्वा विधानेन विशेद्धीमान् तदा शुचिः॥ २३॥
उपरि चासने धीमान् शोधयित्वा विशेषतः।
पूजयित्वाऽसनं धीमानाधारशक्तियोगतः॥ २४॥
श्वेत सर्षपमादाय विघ्नानुत्सारयेत्सुधीः[5]।
स्वर्गे मर्त्ये च पाताले विघ्नाविघ्नविनायकाः॥ २५॥
नश्यन्तु मम कूर्मेऽस्मिन् ते सर्वे च शिवाज्ञया।
तालत्रयं ततो दद्यादस्त्राय फडिति स्मरन्॥ २६॥
विन्यस्तहस्तयुगलमूर्ध्वोर्ध्वक्रमयोगतः।

---

१ मा. ख. मानाङ्कं पाठः।
२ ऊर्ध्वं ब्राह्माधो=नन्तं पाठ उचितः।
३ मा. ख. श्लोकः १४(क), (ख), १५ (क), (ख) न पठ्येते।
४ गुणान् पाठ उचितः।
५ निः सारयेस् इति पाठो=न्यत्र।

ध्यात्वा गुरुं सहस्रारे प्रणम्य नतिमादिशेत् ॥ २७ ॥
गुरुं वामे नमेद्धीमान् तत्रैव गुरुपादुकाम् ।
गणेशं दक्षिणे ध्यात्वा प्रणमेद् विघ्नशान्तये ॥ २८ ॥
सम्मुखे प्रणमेद्देवीं छिन्नमस्तां वसुन्धराम् ।
रतिकामोपरिस्थां तां प्राणायामं तथा चरेत् ॥ २९ ॥
भूतशुद्धिं ततः कुर्याद् हंसमन्त्रेण साधकः ।
शिवे संयोज्य सकलं जीवं वै ब्रह्मवर्त्मना ॥ ३० ॥
शोषदाहादिकं कर्म प्राणायाम क्रमेण च ।
वाय्वग्नि सलिलैर्देहे प्रणवाद्यैर्यथाविधिः ॥ ३१ ॥
करकच्छपिकां बद्ध्वा श्वासस्य धारणं ततः ।
ॐ कारेण पुरो जीव मूर्ध्वमुत्क्षिप्य यत्नतः ॥ ३२ ॥
निर्जीवं देहमोङ्कारैर्वह्निबीजेन दाहयेत् ।
तेन वै वायुबीजेन तद्भस्मापगमं भवेत् ॥ ३३ ॥
तेनैव मेघरूपेण तत्र वृष्टिं विचिन्तयेत् ।
तेनैवामृतवृष्टिं च ध्यात्वा देहं नवीकृतम् ॥ ३४ ॥
पूर्वोक्तदेवतारूपं सर्वकल्मषवर्जितम् ।
करकच्छपिकापुष्पं हस्ते मूलेन धारयेत् ॥ ३५ ॥
इतीयं भूतशुद्धिस्तु लोकानां हितकारिणी ।
भूतशुद्धिं समासाद्य मातृकान्यासमाचरेत् ॥ ३६ ॥
षोडशार्णेन मूलेन प्राणायामं समाचरेत् ।
चन्द्रवेदादिसंख्याभिर्मायया वा समाचरेत् ॥ ३७ ॥
विकारविद्यादशमैर्विद्यासु सकलास्वपि ।
मन्त्रन्यासं ततः कुर्यादृष्यादीन् पूर्वसूचितान् ॥ ३८ ॥
आसां ऋषिर्भैरवोऽहं नाम्ना तु क्रोधभूपतिः ।
सम्राट् छन्दो देवता च छिन्नमस्ता प्रकीर्तिता ॥ ३९ ॥
माया बीजं स्वाहा शक्तिः कथिता पद्मयोनिना ।
धर्मार्थकाममोक्षेषु विनियोगः प्रकीर्तितः ॥ ४० ॥
उच्चरेत् प्रणवं पूर्वमाकारं बिन्दुसंयुतम् ।
खड्गाय हृदयायेति स्वाहायुक्तं कनीयसी ॥ ४१ ॥
ईकारं प्रणवाद्देवि चन्द्रबिन्दुसमन्वितम् ।
सुखड्गाय ततो वाच्यं शिरसे तदनन्तरम् ॥ ४२ ॥

स्वाहायुक्तं ततो वाच्यं पवित्राङ्गुलिसंयुतम् ।
ऊकारं प्रणवाद्देवि बिन्दुलाञ्छितमस्तकम् ॥ ४३ ॥
श्रीबज्राय समायुक्तं शिखायै च ततः परम् ।
स्वाहान्तं विन्यसेद्देवि मध्यमायां ततः परम् ॥ ४४ ॥
मात्रां द्वादशिकामुक्त्वा पाशाय तदनन्तरम् ।
कवचाय ततो वाच्यं स्वाहा च तदनन्तरम् ॥ ४५ ।
तर्जन्यां विन्यसेद्देवि प्रणवाय ततः परम् ।
औकारं प्रणवाद्देवि अङ्कुशाय ततः परम् ॥ ४६ ॥
नेत्रत्रयाय संयुक्तं स्वाहा च तदनन्तरम् ।
अङ्गुष्ठे विन्यसेद्देवि प्रणवाद्यं ततः परम् ॥ ४७ ॥
अकारं च विसर्गान्तं सुरक्षयाय संयुतम् ।
असुरक्षयाय संयुक्तमस्त्रायेति ततः परम् ॥ ४८ ॥
फडक्षरसमायुक्तं विन्यसेत्करयोर्द्वयोः ।
हृदि मूर्ध्नि शिखायां च कवचे नेत्रयोर्द्वयोः ॥ ४९ ॥
न्यसेदस्त्राख्यपर्यन्तं दिग्विदिक्षु यथाक्रमम् ।

**अथ षोढान्यासः**

मन्त्रषोढां ततः कुर्यात्त्रैलोक्यवशकारिणीम् ॥ ५० ॥
श्रीबाला त्रिपुरो योनिः प्रासादः प्रणवस्तथा ।
कालीवध्वङ्कुशैः काम-कला-कूर्चास्त्रकैः क्रमात् ॥ ५१ ॥
षोडशीमन्त्रवर्णैश्च पृथगष्टादशााक्षरैः ।
एभिर्बीजैर्मातृकार्णान् स्वेषु स्थानेषु विन्यसेत् ॥ ५२ ॥
एषा ब्रह्मस्वरूपा हि बीजषोढा प्रकीर्तिता ।
अस्याश्च न्यसनात्सर्वे वज्रदेहा भवन्ति हि ॥ ५३ ॥
सर्वैश्वर्ययुतास्ते हि जीवन्मुक्ता दशाब्दतः ।

**अथास्या यन्त्रमाह**

अथास्या मण्डलं वक्ष्ये यथावदवधारय ॥ ५४ ॥
दीक्षाकरं महादेवि सर्वकर्मप्रयोजकम् ।
सितं कुर्याद्दलं पूर्वमाग्नेयं रक्तवर्णकम् ॥ ५५ ॥

याम्ये कृष्णं ततः पीतं शुक्लं चैव ततोऽसितम् ।
ततः पीतं प्रकुर्वीत कर्णिका तस्य मध्यगा ॥ ५६ ॥
तत्र मध्ये प्रकुर्वीत मण्डलं चण्डरोचिषम् ।
रजस्सत्त्वतमोरेखा रक्तशुक्लसिताः क्रमात् ॥ ५७ ॥
मायायुगं च तन्मध्ये फडक्षरसमन्वितम् ।
बाह्यान्तरं[६] च चक्रस्य कुर्यात्त्रिद्वारसंयुतम् ॥ ५८ ॥
पूर्वं रक्तं ततः पीतं शुक्लं रक्तं यथाक्रमम्[७] ।
[८]चतुर्द्वारं समायुक्तं क्षेत्रपालैरधिष्ठितम् ॥ ५९ ॥
अथोच्यते यन्त्रराजो वैरोचन्या महेश्वरि ।
षट्कोणं प्रथमं लेख्यं मध्यदेशे त्रिकोणके ॥ ६० ॥
सूर्यबिम्बं ततो दद्यात् चतुरस्रं ततः परम् ।
भूगोले च ततो दद्याच्चतुरस्रं ततः परम्[९] ॥ ६१ ॥
अष्टपत्रं ततोदद्याद्यथास्थानेन देशिकः ।
चन्द्रबिम्बं ततो दद्याद्वह्निबिम्बं ततः परम् ॥ ६२ ॥
भूगोलं च ततो दद्याद्भूपुरं त्रितयं ततः ।
बज्रशूलसमायुक्तं कोणे टङ्कं नियोजयेत् ॥ ६३ ॥
किञ्जल्कं केशरे दद्यान्मन्त्रवर्णान् त्रिकोणके ॥
रतिकामोपरि ध्यायेद्देवीं वैरोचनीं शुभाम् ॥ ६४ ॥
भैरवोक्तमहं वक्ष्ये यन्त्रं सर्वसमृद्धिदम् ।
त्रिकोणं प्रथमं लेख्यं षट्कोणैर्वेष्टयेच्च तम् ॥ ६५ ॥
त्रिबिम्बं च ततो दद्याद्गुणानां परिमाणकम् ।
भूपुरं त्रितयं कुर्याद्वज्रशूलसमन्वितम् ॥ ६६ ॥
कोणदेशे ततो दद्याट्टङ्कास्त्र सुमनोहरम् ।
यथास्थाने लिखेद्धीमान् कर्त्रीखर्परकं शुभम् ॥ ६७ ॥
रतिकामोपरि ध्यायेद्देवीं वैरोचनीं शुभाम् ।

अथास्या यन्त्र लिखनानन्तरमर्घ्यादिस्थापनं कार्यम् । तथा च –
अर्घ्यपात्रादिकं कुर्यान्मण्डलं पुरतश्चरेत् ॥ ६८ ॥

६ बाह्यां तारं च पाठो मा. ख. ।
७ मा. ख. ततः परम् पाठः ।
८ मा. ख. श्लोकः ५९ (ख), ६० (क), (ख), ६१ (क) पाठो नास्ति ।
९ मा. ख. सुशोभनम् पाठः ।

### अथ पीठपूजामाह

आधारशक्तिमारभ्य परतत्त्वान्तपूजने।
पीठे जयाख्या विजयाऽजिता चाप्यपराजिता ॥ ६९ ॥
नित्या विलासिनी षष्ठी दोग्ध्री घोरा च मङ्गला।
दिक्षु मध्ये च संपूज्या पीठस्य नवशक्तयः ॥ ७० ॥

अथ स्वनाभिमण्डले ध्यात्वा मानसैरुपचारैः संपूज्य यथोक्तरीत्या योनिमुद्रान्तस्थाक्षतैः समानीय पुनर्ध्यात्वा यन्त्रमध्ये चाऽवाह्य यजेत्।

### अथ ध्यानम्

स्वनाभौ नीरजं ध्यायेच्छुद्धं विकसितं सितम्।
तस्य केशरमध्ये तु मण्डलं चण्डरोचिषः ॥ ७१ ॥
जपाकुसुमसंकाशं रक्तबन्धूकसन्निभम्।
रजः सत्त्व-तमो-रेखायोनिमण्डलमण्डितम् ॥ ७५ ॥
विपरीतरतिस्थौ च ध्यायेद्रतिमनोभवौ।
रतिकामोपविष्टां[10] च ध्यायेद्देवीं मनोहराम् ॥ ७३ ॥
मध्ये तां च महादेवीं सूर्यकोटिसमप्रभाम्।
छिन्नमस्तां करे वामे धारयन्तीं स्वमस्तकम् ॥ ७४ ॥
प्रसारितमुखीं भीमां लेलिहानोग्रजिह्विकाम्।
पिबन्तीं रक्तधारां च निजकण्ठसमुद्भवाम् ॥ ७५ ॥
विकीर्णकेशपाशान्तां नानापुष्पसमन्विताम्।
दक्षिणे च करे कर्त्रीं मुण्डमालाविभूषिताम् ॥ ७६ ॥
दिगम्बरां महोघोरां प्रत्यालीढपदस्थिताम्।
अस्थिमालाधरां देवीं नागयज्ञोपवीतिनीम् ॥ ७७ ॥
सदा षोडशवर्षीयां पीनोन्नतपयोधराम्।
डाकिनीवर्णिनीयुक्तां वामदक्षिणयोगतः ॥ ७८ ॥
दक्षिणे वर्णिनीं ध्यायेद्वामपार्श्वे तु डाकिनीम्।
वर्णिनीं लोहितां सौम्यां मुक्तकेशीं दिगम्बराम् ॥ ७९ ॥
कपालकर्त्रिकाहस्तां वामदक्षिणयोगतः।

---

१० मा. ख. रतिकामोपरिस्थां च पाठः।

देवीगलोच्छलद्रक्तधारापानं प्रकुर्वतीम् ॥ ८० ॥
अस्थिमालाधरां देवीं नागयज्ञोपवीतिनीम् ।
डाकिनीं वामपार्श्वे तु कल्पान्तज्वलनोपमाम् ॥ ८१ ॥
विद्युच्छटाभनयनां दन्तपङ्क्तिवलाकिनीम् ।
दंष्ट्राकरालवदनां पीनोन्नतपयोधराम् ॥ ८२ ॥
महाघोरां महादेवीं मुक्तकेशीं दिगम्बराम् ।
लम्बोदरीं कालरात्रीं नागयज्ञोपवितिनीम् ॥ ८३ ॥
लेलीहानमहाजिह्वा मुण्डमालाविभूषिताम् ।
कपालकर्त्रिकाहस्तां वामदक्षिणयोगतः ॥ ८४ ॥
देवीगलोच्छलद्रक्तधारापानं प्रकुर्वतीम् ।
करस्थितकपालेन भीषणेनातिभीषणाम् ॥ ८५ ॥
आभ्यां निषेव्यमानां तु ध्यायेद्देवीं विचक्षणः ।
एवं ध्यात्वा यजेद्देवीं मनसा भक्तियोगतः ॥ ८६ ॥
बाह्यार्चान्तु ततः कुर्यात् पुष्पनैवेद्यधूपकैः ।

## अथ ध्यानान्तरमाह

भैरवोक्तमहं वक्ष्ये ध्यानं सर्वसमृद्धिदम् ॥ ८७ ॥
स्वनाभौ धीरजं ध्यायेत्सम्यग्विकसितं सितम् ।
पूर्ववत्सकलं ध्यात्वा रतिकन्दर्पसंयुतम् ॥ ८८ ॥
रतिकामोपरिस्थान्तु ध्यायेद्देवीं मनोहराम् ।
तन्मध्ये तां महादेवीमकालजलदोपमाम् ॥ ८९ ॥
छिन्नमस्तां करे वामे धारयन्तीं स्वमस्तकम् ।
प्रसारितमुखीं देवीं लेलिहानोग्रजिह्विकाम् ॥ ९० ॥
पिबन्तीं रक्तधाराञ्च निजकण्ठसमुद्भवाम् ॥
विकीर्णकेशपाशान्तां नानापुष्पविभूषिताम् ॥ ९१ ॥
दक्षिणे च करे कर्त्री मुण्डमालाविभूषिताम् ।
शतार्द्धेन नृमुण्डेन मालास्रक्परिकल्पिताम् ॥ ९२ ॥
अन्योन्यकेशपाशेन ग्रथितां सुमनोहराम् ।
दिगम्बरां महारूपां प्रत्यालीढपदास्थिताम् ॥ ९३ ॥
अस्थिमालाधरां देवीं नागयज्ञोपवीतिनीम् ।
सदाषोडशवर्षीयां पीनोन्नतपयोधराम् ॥ ९४ ॥

नागांगदां नागकाञ्चीं नागनूपुरसङ्गताम् ।
नागकुण्डलसंयुक्तां अष्टनागसमन्विताम् ॥ ९५ ॥
अनन्तो वासुकिश्चैव तक्षककर्कोटपद्मकाः ।
महापद्मस्तथा शङ्खः कुलिकोऽष्टौ प्रकीर्तिताः ॥ ९६ ॥
अनन्तकुलिकौ चित्रौ कर्णमूलनियोजितौ ।
वह्निवर्णौ महासत्त्वौ सहस्रफलसंयुतौ ॥ ९७ ॥
वासुकिः शङ्खपालश्च क्षत्रियौ पीतवर्णकौ ।
प्रत्येकं तु फणासप्तशतसंख्याविराजितौ ॥ ९८ ॥
नागहारां नागकाञ्चीं यथास्थाननियोजिताम् ।
तक्षकश्च महापद्मो वैश्यावेतावुदाहृतौ ॥ ९९ ॥
नीलवर्णौ फणापञ्चशतयुक्तौ तु साङ्ककौ ।
अङ्गदं कथितं देव्यास्ताभ्यां युक्तं मनोहराम् ॥ १०० ॥
पद्मकर्कोटकौ शूद्रौ रक्तवर्णावुदाहृतौ ।
फणात्रिंशत् समायुक्तौ नूपुरौ सुमनोहरौ ॥ १०१ ॥
ताभ्यां धृतां छिन्नमस्तां ध्यायेद्ध्यानसमाधिना ।
डाकिनी-वर्णिनीयुक्तां वामदक्षिणपार्श्वतः ॥ १०२ ॥
दक्षिणे वर्णिनीं ध्यायेद् वामपार्श्वे तु डाकिनीम् ।
वर्णिनीं श्यामलां ध्यायेन्मुक्तकेशीं दिगम्बराम् ॥ १०३ ॥
कपालकर्त्रिकाहस्तां वामदक्षिणयोगतः ।
देव्या दक्षिणनाड्यास्तु धारापानं प्रकुर्वतीम् ॥ १०४ ॥
मुण्डमालाधरां देवीं नागयज्ञोपवीतिनीम् ।
देव्याः सदृशरूपेण भूषणेन च भूषिताम् ॥ १०५ ॥
डाकिनीं वामपार्श्वे तु कल्पान्तज्वलनोपमाम् ।
विद्युदग्निसमुद्भूतां त्रिनेत्रां सुमनोहराम् ॥ १०६ ॥
दाडिमीबीजसदृशदन्तपङ्क्तिविराजिताम् ।
दंष्ट्राकरालवदनां पीनोन्नतपयोधराम् ॥ १०७ ॥
महादेवीं मुक्तकेशीं महाघोरां दिगम्बराम् ।
लम्बोदरीं कालरात्रीं नागयज्ञोपवीतिनीम् ॥ १०८ ॥
लेलिहानोग्ररसनां मुण्डमालाविभूषणाम् ।
कपालकर्त्रिकाहस्तां वामदक्षिणयोगतः ॥ १०९ ॥
वामनाड्या गलद्रक्तधारापानं प्रकुर्वतीम् ।

करस्थितकपालेन भीषणेनातिभीषणाम् ॥ ११० ॥
आभ्यां निषेव्यमानां तु ध्यायेद्ध्यानसमाधिना ।
एवं ध्यात्वा यजेद्देवीं मनसा भक्तियोगतः ॥ १११ ॥
बाह्यार्चन्तु ततः कुर्यान्नैवेद्यपुष्पधूपकैः ।
भैरवोक्तमिदं ध्यानं कुर्याद्यत्नेन देशिकः ॥ ११२ ॥
सर्वसिद्धिप्रदं साक्षान्महापातकनाशनम् ।
यः स्मरेत्प्रातरुत्थाय देव्याः पूजनकेऽपि वा ॥ ११३ ॥
तस्य सिद्धिर्भवेद्देवी वाञ्छितार्थप्रदायिनी ।
धनं धान्यं सुतं जायां हयं हस्तिनमेव च ॥ ११४ ॥
वसुन्धरां महाविद्यामष्टसिद्धिं लभेत्तु स ।

अथ बीजविशेषादिमन्त्रपक्षे सावर्णविशेषेण ध्येया । तथा च –
येन बीजेन चाद्येन यद्यद्ध्यानं तदुच्यते ॥ ११५ ॥
कामादौ विशदां ध्यायेल्लज्जादौ लोहितां तथा ।
मायादौ च भवेत्कृष्णा वागादौ वैद्युतप्रभा ॥ ११६ ॥

अथ योनिमुद्रां बद्ध्वा तन्मध्ये रक्तचन्दनाक्षतजपापुष्पं निधाय तत्र पुनर्ध्यायेत् ।
योनिमुद्रांगतं कृत्वा साक्षतं रक्तपुष्पकम् ।
ध्यायेद्देवीं महामायां सर्वकल्याणकारिणीम् ॥ ११७ ॥
सुधासागरद्वीपेन स्मरेदुद्यानमद्भुतम् ।
तस्मिन्नवसरस्तीरे शोभनं रक्तमण्डपम् ॥ ११८ ॥
चतुर्द्वारसमोपेतं स्तंभराजिविराजितम् ।
गवाक्षमार्गदशकवायुयुक्तसकेशरम् ॥ ११९ ॥
सुधासंश्राविसततं कल्पवृक्षचतुष्टयम् ।
निविष्टां रत्नस्तम्भे च संस्मरेन्निजदेवताम् ॥ १२० ॥
शवासनगतां ध्यायेच्छिन्नमस्तां महोदरीम् ।
चतुर्भुजां शवारूढां रक्तवस्त्रां त्रिलोचनाम् ॥ १२१ ॥
मुकुटाटोपसम्पन्नां दक्षिणे खड्गधारिणीम् ।
सोत्पलां वामहस्तेन दोर्भ्यां पुस्तकधारिणीम् ॥ १२२ ॥
निकृत्य स्वशिरः खड्गैः पिबन्तीं रुधिरं बहु ।
उद्यद्दितकराभां च चन्द्रार्धकृतशेखराम् ॥ १२३ ॥
योगिभिः सेव्यामनिशं नागयक्षोपवीतिनीम् ।

## अथावाहनमन्त्रस्तु

तत्र चावाहनं कुर्यान्मन्त्रेणानेन साधकः ॥ १२४ ॥
सर्वसिद्धिप्रदे पूर्वमुच्चरेत्साधकोत्तमः
वर्णनीये ततो वाच्यं सर्वसिद्धिप्रदे ततः ॥ १२५ ॥
डाकिनीये ततो वाच्यं देवीनाम ततः परम् ।
एह्येहीति ततो वाच्यमिहेति तदनन्तरम् ॥ १२६ ॥
तिष्ठ तिष्ठेति वाच्यं च मायायुग्मं ततः परम् ।
फडाक्षरसमायुक्तं स्वाहेति तदनन्तरम् ॥ १२७ ॥
इत्यावाहनमुद्दिष्टं स्थापनेन समन्वितम् ।
अथावाह्याऽऽसनं दद्यान्मन्त्रेणानेन साधकः ॥ १२८ ॥
प्रणवं प्रथमं कृत्वा सर्वसिद्धिप्रदे ततः ।
वर्णनीये ततो वाच्यं प्रणवं च ततो वदेत् ॥ १२९ ॥
डाकिनीये ततो वाच्यं प्रणवं च ततो वदेत् ।
इह शब्दात्तिष्ठ तिष्ठ माये फट् स्वाहया युतम् ॥ १३० ॥
ततो ध्यात्वा यजेद्देवीं युवतिं चन्द्ररूपिणीम् ।

## अथ पूजामाह[११]

मूलमन्त्रेण सम्पूज्य मण्डलस्थां महेश्वरीम् ॥ ३१ ॥
उपचारैः प्रपूज्याथ प्रसूनैरञ्जनैस्ततः ।
तदनुज्ञां गृहीत्वा च अङ्गदेवान् प्रपूजयेत् ॥ १३२ ॥
ततो दक्षिणदेशस्थां वर्णिनीं पूजयेत्तथा ।
प्रणवान् सरस्वतीबीजं प्रकृत्यै नाम नामतः ॥ १३३ ॥
ततश्च वामपार्श्वस्थां डाकिनीं पूजयेन्नरः ।
पूर्ववत् प्रणवादिस्तु डाकिन्यै नम इत्यपि ॥ १३४ ॥
त्रिकोणे पूजयेदादौ फडन्तकवचेन तु ।
कालिकां भुवनेशीं च मातङ्गीमीशदेशतः ॥ १३५ ॥
उत्तरादि ततः पश्चात् युतेषु[१२] च यथाक्रमम् ।
कामाक्षां चैव भेरुण्डां तथा नीलसरस्वतीम् ॥ १३६ ॥
मायाबीजेन प्रयजेन्महाविभवविस्तरैः ।

११ मा. ख. अथ नित्यपूजामाह पाठः ।
१२ मा. ख. पुरेषु च तथा क्रमम् पाठः ।

भैरवं पूजयेद्देवं सम्मुखे विधिनाऽमुना ॥ १३७ ॥
सम्राट्छन्दो दक्षिणे च मन्त्रवर्णान् तथोत्तरे ।
बीजशक्ती रक्षो दिशि पूजयेत्क्रमतः[१३] सुधीः ॥ १३८ ॥
मातरः पद्ममध्ये च ब्राह्म्याद्याः सर्वसिद्धिदाः ।
इन्द्रादिलोकपालान्ताः पूज्या अस्त्रसमन्विताः ॥ १३९ ॥
भूपुरे पूजयेत्तां च पूर्वादिक्रमयोगतः ।
पीठोपरि यजेद् रुद्रं परितश्च मनोभवम् ॥ १४० ॥
पूर्वादिषु चतुर्द्वारि पूजयेत्साधकोत्तमः ।
द्वारोपरि महालक्ष्मीं ब्रह्माणीं[१४] चाग्रतो यजेत् ॥ १४१ ॥
क्षत्रपालं करालं च विकरालं तथा पुनः ।
प्रणवादिनमोन्तेन चतुर्थ्यन्तपदेन च ॥ १४२ ॥
पूर्वोक्तक्रमस्त्वनुलोमेनोक्तः, पुनरस्य विलोमेन

**क्रमान्तरमाह**

बाह्यावरणमारभ्य पूजयेत्प्रतिलोमतः ।
भूपुराद्बाह्यभागेषु व्रादीनि प्रपूजयेत् ॥ १४३ ॥
तदन्तः सुरराजादीन् द्वारेषु द्वारपान् यजेत् ।
करालं विकरालं चातिकालं मकालकम् [१५]॥ १४४ ॥
एकलिङ्गां योगिनीं च डाकिनीं भैरवीं तथा ।
महाभैरवी इन्द्राक्षीं ह्यसिताङ्गीं च नाशिनीम्[१६] ॥ १४५ ॥
षट्कोणेषु षडङ्गानि त्रिकोणे छिन्नमस्तकाम् ।
डाकिनीं वर्णिनीं तारवाग्भ्यां तत्पार्श्वयोर्यजेत् ॥ १४६ ॥
एवं पूजा प्रकर्तव्या बलिदानं ततश्चरेत् ।

अथादौ भूपुरस्य बाह्ये बज्रादीनि ऊर्ध्वे चेन्द्रादीन् संपूज्य पूर्वादिक्रमेण द्वारपालान् पूजयेत् –
पूर्वद्वारे करालं च विकरालं च दक्षिणे ॥ १४७ ॥
पश्चिमे चातिकालं च महाकालं तथोत्तरे ।

---

१३ मा. ख. क्रमशः पाठः ।
१४ मा. ख. ब्रह्माणं पाठः ।
१५ महाकालमित्यस्यापरपर्यायः ।
१६ संहारिणीमित्यस्यापरपर्यायः ।

प्रणवादि नमोन्तेन पूजामेतां समाचरेत् ॥ १४८ ॥

### अथैतेषां ध्यानमाह[१७]

करालं रक्तवर्णं च द्विभुजं द्वीपसंस्थितम् ।
पश्चिमं विकरालं च नीलनीरजसंनिभम् ॥ १४९ ॥
अङ्कुशं पुस्तकं[१८] वामे जवापुष्पछविं स्मरेत् ।
गरुडस्थं महाकायं त्रिनेत्रं चन्द्रशेखरम् ॥ १५० ॥
महाकालं तथा चैव द्विभुजं पीतवाससम् ।

अथ पूर्वादिक्रमेणाष्टदले चैकलिङ्गाद्या भैरव्यः पूज्याः ।
एकालिङ्गां महादेवीं डाकिनीं योगिनीं तथा ॥ १५१ ॥
भैरवीं च महापूर्वां भैरवीमथ सुव्रते ।
इन्द्राक्षीमसिताङ्गीं च ततः संहारिणीं क्रमात् ॥ १५२ ॥
पूर्वादि च दले पूज्याः शक्तयः क्रमयोगतः ।
प्रणवादि नमोऽन्तेन लज्जाबीजयुतेन च ॥ १५३ ॥

### अथासां क्रमेण ध्यानमाह

रक्तां गौरीं तथा कृष्णां तथा रक्तां च पिङ्गलाम् ।
पीतां शुक्लां च धूम्राभां कथयामि पुनः क्रमम् ॥ १५४ ॥
त्रिशूलवरदामाद्यां व्याघ्रचर्मसमन्विताम् ।
त्रिलोचनां च तन्वङ्गीं नागयज्ञोपवीतिनीम् ॥ १५५ ॥
द्वितीयां सुन्दरालोकां दण्डशङ्खधरां करे ।
रक्तवस्त्रपरीधानां रक्तनागोपवीतिनीम् ॥ १५६ ॥
अस्थिमालाधरां देवीं बद्धपद्मासनस्थिताम् ।
तृतीयां भीषणाकारां ललज्जिह्वां महोदरीम् ॥ १५७ ॥
कपालकर्त्रिकाहस्तां कृष्णनागोपवीतिनीम् ।
घोरदंष्ट्रां महाघोरामतिमत्तां सुदारुणाम् ॥ १५८ ॥
चतुर्थीं पावकाभासां मुण्डमालादिभूषिताम् ।
कपालकर्त्रिकाहस्तां खड्गशूलसमन्विताम् ॥ १५९ ॥

---

१७ मा. ख. अथैषां ध्यानमाह पाठः ।
१८ मा. ख. द्विभुजं पाठः ।

अपिङ्गाकेशनिचयां प्रचण्डाट्टाट्टहासिनीम् ।
पञ्चमीं बालसूर्याभां षड्भुजां द्विपदां तथा ॥ १६० ॥
त्रिमुखीं च महोग्रां च रक्तपीतासितान‌नाम् ॥
कपालकर्त्रिकाहस्तां खड्गशूलसमन्विताम् ॥ १६१ ॥
जटाजूटार्धचन्द्रां च प्रतिवक्त्रं त्रिलोचनाम् ।
शवोपरिस्थितां देवीमानीयस्थानमाश्रिताम् ॥ १६२ ॥
द्विपिचर्मपरिधानां वीरघण्टासमन्विताम् ।
षष्ठीं सुवर्णवर्णाभां सहस्रनयनोज्ज्वलाम् ॥ १६३ ॥
वज्रहस्तां प्रसन्नास्यां सितपद्मासनस्थिताम् ।
दिव्याम्बरधरां देवीं हारकेयूरभूषिताम् ॥ १६४ ॥
सप्तमीं तु महादेवीं हारकेयूरधारिणीम् ।
नीलोत्पल दलश्यामां किञ्चिन्नमितयौवनाम् ॥ १६५ ॥
शंखचक्रगदापद्मन्यस्तहस्तान्मनोहराम् ।
पद्मोपरिसमासीनां कृतपद्मासनास्थिताम् ॥ १६६ ॥
पीतवस्त्रपरीधानां स्निग्धवेत्रां सुदारुणाम् ।
अष्टमीं च प्रवक्ष्यामि कालजीमूतसन्निभाम् ॥ १६७ ॥
त्रिनेत्रां डाकिनीं देवीं विश्वसंहारकारिणीम् ।
स्वाभियुक्तां सदा ध्यायेद्देवीं त्रैलोक्यमातरम् ॥ १६८ ॥
पूर्वादीशानपर्यन्तं पूजयेद्विधिवत्क्रमात् ।

## अथ बलिदानम्

एवं पूजां विधायाथ बलिदानं प्रकल्पयेत् ॥ १६९ ॥
दद्याद्बलिं पायसं च कृशरं मधुसंयुतम् ।
सकोषं मधुसंयुक्तं रम्भापुष्पं तथैव च ॥ १७० ॥
अन्तरान्तरतो देवि पशुदानं विधीयते ।
समभ्यर्च्य बलिं पूर्वं गन्धपुष्पादिचन्दनैः ॥ १७१ ॥
धेनुमुद्रां प्रदर्श्याथ वामाङ्गुष्ठेन संस्पृशेत् ।
यँ मन्त्रेण संशोध्य रँ मन्त्रेण च दाहयेत् ॥[१९] १७२ ॥
हँ मन्त्रेणामृतं भाव्यं वँ मन्त्रेण च प्लावयेत्[२०] ।

---

१९ मा. ख. यँ मन्त्रे शोधनं कृत्वा रं मन्त्रे दाहयेत्ततः पाठः ।

२० वँ मन्त्रे प्लावयेच्च तम् पाठः ।

अष्टधा प्रजपेन्मन्त्रं मूलं ङेऽन्तं निवेदयेत् ॥ १७३ ॥
प्रदर्श्य सम्मुखे तत्तु पुनराचमनं ततः।

### अथ बलिदानमन्त्रः

संबुध्न्तं पदं ब्रूयादेहि एहि पदं ततः ॥ १७४ ॥
गृह्ण गृह्ण इमं ब्रूयाद् बलिशब्दं ततः परम्।
मम शब्दं समाभाय सिद्धिं देहि पदद्वयम् ॥ १७५ ॥
कवचद्वितयं चोक्त्वा करालिके पदं ततः।
फट् स्वाहान्तो महामन्त्रो बलिदानविधौ स्मृतः ॥ १७६ ॥
अष्टोत्तरशतं वाऽपि सहस्रं वा महेश्वरि।
जपं समाचरेन्मन्त्री कुल्लुकाद्यं यथाविधि ॥ १७७ ॥
जपान्ते च स्तुतिं कुर्यान्मालिकां शिरसि क्षिपेत्।
जपपूजां समाप्यैवं स्तुत्वा च कवचं पठेत् ॥ १७८ ॥

तत्रादौ क्रोधभैरवस्य मन्त्रो जप्तव्यः। तथा च -
आदौ जप्त्वा भैरवस्य क्रोधस्यास्य मनुं जपेत्।
अस्थिमालां समादाय बज्रवैरोचनीं मनुम् ॥ १७९ ॥

### अथ क्रोधभैरवस्य मनुमाह

अत्र क्रोधमनुं वक्ष्ये असाध्यं येन सिध्यति।
बीजं हालाहलं गृह्ण क्रोधबीजमतः परम् ॥ १८० ॥
भयङ्करार्णमाभाष्यासिताङ्गक्षतजस्थितम्[२१]।
प्रलयाग्निर्महाज्वालामाभाष्य मनुमुद्धरेत् ॥ १८१ ॥
एवमुच्चारितः क्रोधः स्वयमेव प्रसिध्यति।

### अथ षडङ्गन्यासः

ततस्तु क्रोधमन्त्रेण षडङ्गन्यासमाचरेत् ॥ १८२ ॥
विषं बज्रयुतं बोधिमहाकालं न्यसेद्हृदि।
विषं हनयुगं बज्रकूर्चाद्यं विन्यसेद् बहिः ॥ १८३ ॥

---

२१ सिताङ्क्षगतस्थितम् पाठः मा. ख.।

हालाहले देहयुतं बज्रकालं न्यसेच्छिखाम् ।
विषमन्त्रयुतं बज्रमायुधं कवचं न्यसेत् ॥ १८४ ॥
तारबीजयुतं वज्रमहाकालाय नेत्रयोः ।
विषं हरयुतं गृह्ण दह गृह्ण पदान्वितम् ॥ १८५ ॥
क्रोधबज्रयुतं तद्वत्सर्वदुष्टानथ परम् ।
ततो मारय वर्मास्त्रं दिग्बन्धान्तं षडङ्गकम् ॥ १८६ ॥

## अथ ध्यानमाह

तत्र मध्ये न्यसेद्भीमं तप्तज्वालासमाकुलम् ।
साट्टहासं महारौद्रं भीन्नाञ्जनचयोपमम् ॥ १८७ ॥
प्रत्यालीढं चतुर्बाहुं दक्षिणे चक्रधारिणम् ।
तर्जनं वामहस्तेन तीक्ष्णदंष्ट्रा करालिनम् ॥ १८८ ॥
कपालरत्नमुकुटं त्रैलोक्यस्य विनायकम् ।
आदित्यकोटिसंकाशं अष्टनागविभूषितम् ॥ १८९ ॥
अपराजितपदाक्रान्तं मुद्रावाचलवेष्ठितम् ।
अनामिकाद्वयं बद्ध्वा आकुञ्च्य तर्जनीद्वयम् ॥ १९० ॥
कनिष्ठां मध्यमां चैव ज्येष्ठाङ्गुष्ठेन च क्रमात् ।
एष मुद्राधरः श्रीमान् त्रैलोक्यसाध्यसाधकः ॥ १९१ ॥

## अथ स्तुतिः

इति पूजाविधिं कृत्वा जपित्वा च यथाबलम् ।
वाञ्छितार्थप्रसिध्यर्थमिमं स्तवमुदीरयेत् ॥ १९२ ॥
नाभौ शुद्धसरोजमध्यविलसद्वन्धूकपुष्पारुणं,
भास्वद्भाष्करमण्डलं तदुदरं यद्योनिचक्रं महत् ।
तन्मध्ये विपरीतमैथुनपरप्रद्युम्नतत्कामिनी,
पृष्ठस्थां तरुणार्ककोटिविलसत्तेजः स्वरूपां शिवाम् ॥ १९३ ॥
प्रत्यालीढपदां दिगन्तवसनमामुक्तकेशस्रजाम् ।
छिन्नात्मीयशिरः समुच्छलदसृग्धारां पिबन्तीं परां
बालादित्यसमप्रकाशविलसन्नेत्रत्रयोद्भासिनीम् ॥ १९४ ॥
वामादन्यत्र नाडीबहुबहलगलद्रक्तधाराभिरुच्चैः,
पायन्तीमस्थिभूषां करकमललसत्कर्त्रिकामुग्ररूपाम् ।

रक्तामारक्तकेशीमपगतवसनां वर्णिनीमात्मशक्तिं
प्रत्यालीढोग्रपादामरुणितनयनां योगिनीं योगमुद्राम् ॥ १९५ ॥

दिग्वस्त्रां मुक्तकेशीं प्रलयघनघटाघोररूपां प्रचण्डां,
दंष्ट्रादुःप्रेक्ष्यवक्त्रोदरविवरलसल्लोलजिह्वाग्रभासाम् ।
विद्युल्लोलाक्षियुग्मां हृदयतरलसद्भोगिभीमां स्वमूर्तिं ।
सद्यश्छिन्नात्मकण्ठप्रगलितरुधिरै डाकिनीं बर्धयन्तीम् ॥ १९६ ॥

ब्रह्मेशानाच्युताद्यैः शिरसि विनिहितां मन्दपादारबिन्दां
मात्मज्ञैर्योगिमुख्यैः प्रतिदिनमनिशं चिन्तितं चिन्त्यरूपाम् ।
संहारे सारभूतां त्रिभुवनजननीं छिन्नमस्तां प्रशस्ता-
मिष्टान्तामिष्टदात्रीं कलिकलुषहरां चेतसा चिन्तयामि ॥ १९७ ।

उत्पत्तिस्थितिसंहृतिर्घटयितुं धत्ते त्रिनेत्रां[२२] तनुम् ।
त्रैगुण्याज्जगतो मदीयविकृतिर्ब्रह्माच्युतशूलभृत् ।
तामाद्यां प्रकृतिं स्मरामि सततं सर्वार्थसंसिद्धये ।

यस्या स्मेरपदारबिन्दयुगलं सन्तो भजन्ते सदा ॥ १९८ ॥
अलि-पिशित-पुरन्ध्री योगपूजा परोऽहं
बहुविधकुलभालारम्भसंभावितोऽहम् ।
पशुजनविरतोऽहं भैरवीसंस्थितोऽहं
गुरुचरणपरोऽहं भैरवोऽहं शिवोऽहम् ।

इमं स्तवं महापुण्यं ब्रह्मणा भाषितं पुरा ।
यः पठेत्प्रातरुत्थाय देव्याः सन्निहितोऽपि वा ॥ २०० ॥
तस्य सिद्धिर्भवेद्देवि वाञ्छितार्थप्रदायिनी ।
धनं धान्यं सुतं जायां हयं हस्तिनमेव वा ॥ २०१ ॥
वसुन्धरां महाविद्यामष्टौ सिद्धिर्लभेद्ध्रुवम् ॥ २०२ ॥

*इति भैरवप्रोक्तो देव्याः स्तवः समाप्तः*

---

२२ मा. ख. त्रिरूपां पाठः ।

## अथ कवचम्

### भैरव्युवाच

कथिता च्छिन्नमस्ताया या या विद्या सुगोपिता ।
त्वया नाथेन जीवेश श्रुता च गदिता मया [२३]॥ २०३ ॥
इदानीं श्रोतुमिच्छामि कवचं पूर्वसूचितम् ।
त्रैलोक्यविजयं नाम कृपया कथ्यतां विभो ॥ २०४ ॥

### भैरव उवाच

श्रृणु वक्ष्यामि देवेशि सर्वदेवनमस्कृते ।
त्रैलोक्यविजयं नाम कवचं सर्वमोहनम् ॥ २०५ ॥
सर्वविद्यामयं साक्षात्सुरासुरजयप्रदाम् ।
धारणात्पठनादीशस्त्रैलोक्यविजयी विभुः ॥ २०६ ॥
ब्रह्मा नारायणो रुद्रो धारणात्पठनाद्यतः ।
कर्ता पाता च संहर्ता भुवनानां सुरेश्वरि ॥ २०७ ॥
न देयं परशिष्येभ्यो अभक्तेभ्यो विशेषतः ।
देयं शिष्याय भक्ताय प्राणेभ्योऽप्यधिकाय च ॥ २०८ ॥
देव्याश्च छिन्नमस्ताया कवचस्य च भैरवः ।
ऋषिः सम्राट् विराट् छन्दो देवता च्छिन्नमस्तका ॥ २०९ ॥
त्रैलोक्यविजयी मुक्तौ विनियोगः प्रकीर्तितः ।
हूँ कारो मे शिरः पातु छिन्नमस्ताऽनलप्रभा ॥ २१० ॥
ह्राँ हूँ ऐँ त्र्यक्षरी पातु भालरक्ता दिगम्बरी ।
श्रीँ ह्रीँ हूँ ऐँ दृशौ पातु मुण्डकर्तृधराऽपि सा ॥ २११ ॥
सा विद्या प्रणवाद्यन्ता श्रुतियुग्मं सदाऽवतु ।
वज्रवैरोचनीये हूँ हूँ फट् स्वाहा ध्रुवादिकः ॥ २१२ ॥
घ्राणं पातु छिन्नमस्ता स्वमुण्डकर्तृधारिणी ।
श्रीमायाकूर्चवाग्बीजे वज्रवैरोचनीये हूँ ॥ २१३ ॥
हूँ फट् स्वाहा महाविद्या षोडशी ब्रह्मरूपिणी ।
स्वपार्श्वे बालिकाभ्यां स्वासृग्धारां पिबन्ती[२४] मुदा ॥ २१४ ॥
वदनं सर्वदा पातु छिन्नमस्ता सशक्तिका ।

---

२३ अत्र 'त्वया नाथेन जीवेश गदिता च श्रुता मया' पाठ उचितः ।

२४ पीयते मुदा पाठ उचितो भाति ।

मुण्डकर्तृधरा रक्ता साधकाभीष्टदायिनी ॥ २१५ ॥
वर्णिनी डाकिनीयुक्ता साऽपि मामभितोऽवतु ।
रमाद्या पातु जिह्वां च लज्जाद्या पातु कण्ठकम् ॥ २१६ ॥
कूर्चाद्या हृदयं पातु वागाद्या स्तवयुग्मकम् ।
रमया पुटिता विद्या पार्श्वौ पातु सुरेश्वरी ॥ २१७ ॥
मायया पुटिता पातु नाभिदेशं दिगम्बरी ।
कूर्चेन पुटिता देवी पृष्ठदेशं सदाऽवतु ॥ २१८ ॥
वाग्बीजपुटिता चैषा मध्यं पातु सशक्तिका ।
ईश्वरी कूर्चवाग्बीजवज्रवैरोचनीये हूँ ॥ २१९ ॥
फट् स्वाहेति महाविद्या कोटिसूर्यसमप्रभा ।
छिन्नमस्ता सदा पायादुरुयुग्मं सशक्तिका ॥ २२० ॥
ह्रीं हूँ ह्रीं वर्णिनी जानुं श्रीं ह्रीं हूँ डाकिनी पदम् ।
सर्वविद्यास्थिता नित्या सर्वाङ्गं मे सदाऽवतु ॥ २२१ ॥
प्राच्यां पायादेकलिङ्गा योगिनी पावकेऽवतु ।
डाकिनी दक्षिणे पातु श्रीमहाभैरवी च माम् ॥ २२२ ॥
नैऋत्यां सततं पातु भैरवी पश्चिमेऽवतु ।
इन्द्राक्षी पातु वायव्येऽसिताङ्गी पातु चोत्तरे ॥ २२३ ॥
संहारिणी सदा पातु शिवकोणे सकर्तृका ।
इत्यष्टशक्तयः पान्तु दिग्विदिक्षु सकर्तृकाः ॥ २२४ ॥
क्रीं क्रीं क्रीं मां पातु पूर्वे हूँ हूँ मां पातु पावके ।
ह्रीं ह्रीं मां दक्षिणे पातु दक्षिणे कालिकेऽवतु ॥ २२५ ॥
क्रीं क्रीं क्रीं चैव नैऋत्यां हूँ हूँ मां पश्चिमेऽवतु ।
ह्रीं ह्रीं पातु मरुत्कोणे स्वाहा पातु सदोत्तरे ॥ २२६ ॥
महाकाली खड्गहस्ता ईशकोणे सदाऽवतु ।
तारो माया वधूः कूर्च फट्कारोऽयं महामनुः ॥ २२७ ॥
खड्गकर्तृधरा तारा चोर्ध्वदेशं सदाऽवतु ।
ह्रीं स्त्रीं हूँ चैव पाताले पातु नीलसरस्वती ॥ २२८ ॥
इति ते कथितं देव्याः कवचं मन्त्रविग्रहम् ।
यद्धृत्वा पठनाद् भीमः क्रोधाख्यो भैरवः प्रभुः ॥ २२९ ॥
सुरासुरमुनीन्द्राणां कर्ता हर्ता भवेत्स्वयम् ।
यस्याऽऽजया मधुमती याति सा साधकान्तिकम् ॥ २३० ॥

भूतिन्याद्याश्च पक्षिण्यो डाकिन्याद्याश्च खेचराः।
आज्ञां कुर्वन्ति तास्तस्य छिन्नादेव्याः प्रसादतः॥ २३१॥
एतदेव परं ब्रह्म कवचं यन्मुखोदितम्।
देवीमभ्यर्च्य गन्धाद्यैर्मूलेनैव पठेत् सकृत्॥ २३२॥
संवत्सरकृतायास्तु पूजायाः फलमाप्नुयात्।
भूर्जे विलिखितं चेतद्गुटिकां काञ्चनस्थिताम्॥ २३३॥
धारयेद्दक्षिणे बाहौ कण्ठे वा यदि भाग्यतः।
सर्वैश्वर्ययुतो भूत्वा त्रैलोक्यं वशमानयेत्॥ २३४॥
तस्य गेहे वसेल्लक्ष्मीर्वाणी च वदनाम्बुजे।
ब्रह्मास्त्रादीनि शास्त्राणि तद्गात्रे यान्ति भग्नताम्॥ २३५॥
इदं कवचमज्ञात्वा यो भजेत् छिन्नमस्तकाम्।
सोऽपि शस्त्रप्रहारेण मृत्युं प्राप्नोति सत्त्वरम्॥ २३६॥

*इति भैरवतन्त्रे भैरवभैरवी सम्वादे छिन्नमस्ताकल्पे त्रैलोक्यविजयनाम छिन्नमस्ताकवचं समाप्तम्।*

*इति श्रीतन्त्रचिन्तामणौ वज्रवैरोचनीनित्यार्चननिर्णयनाम पञ्चविंशतितमः प्रकाशः।*



# षड्विंशतितमः प्रकाशः

**अथ श्रीविद्यायाः क्रमो लिख्यते –**

अथ वक्ष्ये महेशानि श्रीविद्याक्रममुत्तमम् ।
स्नानं तु विधिवत्सन्ध्यां तर्पणं सूर्यपूजनम् ॥ १ ॥
कृत्वा पूजालये चात्र पञ्चमीं पूजयाम्यहम् ।
इति संकल्प्य पादौ हस्तौ प्रक्षाल्याचम्य मन्त्राचमनं कुर्यात् तद्यथा ।

बालाबीजैस्त्रिभिः पीत्वा द्वाभ्यामोष्ठौ प्रमार्जयेत् ॥ २ ॥
दुर्गायाम्बा द्विरुत्सृज्य मायया क्षालयेत्करम् ।
श्रीमायावाक्पराकामत्रिकुटायोनि वर्तुले ॥ ३ ॥
कामकलाङ्कुशाद्याश्च मुखनासाक्षिकर्णिकान् ।
नाभ्युरस्कं भुजौ स्पृष्ट्वाऽप्यधिकारी जपार्चने ॥ ४ ॥
आचम्यैवं भवेद्दुर्गा जीवन्मुक्तो दशाब्दतः ।

अथ सामान्यार्घ्योदकेन द्वारमभ्युक्ष्य द्वारपालान् पूजयेद्यथा –
बालया द्वारमभ्युक्ष्य दक्षिणे वामपार्श्वयो ॥ ५ ॥
उपर्यधस्त्रिवारान्ते स्वनामाद्यर्णबीजतः ।
गणेशं क्षत्रपालं च तथा द्वारश्रियं पुनः ॥ ६ ॥
देहलीं च समभ्यर्च्य प्रविशेद्यागमन्दिरम्[1] ।
आग्नेयादिषु कोणेषु मध्यदिक्षु यथाक्रमम् ॥ ७ ॥
त्रितारनामबीजान्ते पूजयेद्गणपादिकाम् ।
गणेशदुर्गावटुकक्षत्रपालचतुष्टयम् ॥ ८ ॥
रत्नमण्डपमभ्यर्च्य कामदेवं रतियुतम् ।
वसन्तं प्रीतिसहितं ततो देवीं सरस्वतीम् ॥ ९ ॥

---

१ मा. ख. श्लोकः ७ यागमन्दिरमित्यतः श्लोकः ९ रत्नमण्डपमभ्यर्च्येत्यन्तः पाठो नास्ति ।

श्रियं पश्चात्समभ्यर्च्य विकिरेत्कुसुमाञ्जलिम्।
अथवा दशदिक्षु दशशक्तिं समभ्यर्च्य मध्ये वागीश्वरीं पुष्पाञ्जलिना दीपनाथं यजेत्।
सरस्वतीं श्रियं मायां दुर्गां च तदनन्तरम्॥ १०॥
भद्रकालीं तथा स्वस्तिं स्वाहाश्चैव शुभङ्करीम्।
गौरीं च लोकधात्रीं च तथा वागीश्वरीमपि॥ ११॥
रक्तद्वादशशक्तिभिः सहितं दीपनाथकम्[२]।
त्रितारयोगः सर्वत्र विज्ञेयः साधकोत्तमैः॥ १२॥
सामान्यक्रमवत्कार्यमपरं साधकोत्तमैः।
भूतशुद्धिं विधायेत्थं मातृकान्यासमाचरेत्॥ १३॥
प्राणायामत्रयं कृत्वा न्यासानन्यान् समाचरेत्।
अथ वक्ष्ये महेशानि श्रीविद्यान्यासमुत्तमम्॥ १४॥

## अथादौ ऋष्यादिन्यासः

ऋषिरस्य महेशानि दक्षिणामूर्त्तिरव्ययः।
पङ्क्तिश्च्छन्दः समाख्यातं देवी त्रिपुरसुन्दरी॥ १५॥
वाग्भवं बीजमित्युक्तं शक्तिस्तु शक्तिकूटकम्।
कामराजः कीलकं स्यादृष्यादिन्यास ईरितः॥ १६॥

## अथ कराङ्गन्यासः

अँ आँ सौँरिति प्रोक्तं बीजं त्रिविधमुत्तमम्।
एतद्बीजं द्विरावृत्त्य मध्यमाद्यङ्गुलीषु च॥ १७॥
शुद्धिं करस्य कुर्वीत तलयोः पृष्ठयोरपि।
चतुर्थी नतिसंयुक्ता नाममन्त्रैः पृथक् पृथक्॥ १८॥
मध्यमानामिका चैव कनिष्ठाङ्गुष्ठतर्जनी।
क्रमेण नाम चाख्यातमङ्गुलीनां महेश्वरि॥ १९॥
अथात्मरक्षां दिग्बन्धनं चाह।
बालाबीजत्रयं पूर्वं तथा त्रिपुरसुन्दरी[३]।
आत्मानं रक्ष रक्षेति कुर्याद्रक्षां हृदि स्पृशन्॥ २०॥
तथैवास्त्रेण मुद्रया[४] कुर्याद्दिग्बन्धनं ततः।

२ मा. ख दीपनायकम् पाठः।
३ मा. ख. आसनाय ततो मनुः। पादयोर्विन्यसेत्पश्चाद्बालान्ते त्रिपुरेश्वरी॥ पाठः।
४ मा. ख मुद्रैषा पाठः।

## अथासनन्यासः

अमृतार्णवशब्दपूर्वं आसनाय ततो मनुः ॥ २१ ॥
पादयोर्विन्यसेत्पश्चाद्बालान्ते त्रिपुरेश्वरी ।
पोताम्बुजासनायान्ते नमो जानुनि विन्यसेत् ॥ २२ ॥
ऐँ क्लीँ सौँ त्रिपुरेत्युक्त्वा सुन्दरीति पदं ततः ।
ङेन्तं देव्यासनं चान्ते नम ऊरुद्वयं न्यसेत् ॥ २३ ॥
हैँ ह्क्लीँ ह्सौँऽन्ते त्रिपुरवासिनीति च ।
चक्रासनाय इत्यमुना स्फिगद्वये प्रविन्यसेत् ॥ २४ ॥
ह्सैँ ह्स्क्लीँ ह्सौँश्चेति त्रिपुरा श्रीँपदं ततः ।
सर्वमन्त्रासनायान्ते नमो गुह्ये प्रविन्यसेत् ॥ २५ ॥
ह्रीँ क्लीँ त्रिपुरमालिन्यन्ते ततः साध्यपदं वदेत् ।
ततः सिद्धासनं ङेन्तं नाभिदेशे प्रविन्यसेत् ॥ २६ ॥
ह्स्रीँ ह्सक्श्रीँ ह्स्रौँ मन्त्रे त्रिपुराम्बा पदं ततः ।
पर्यङ्के शक्तिपीठासनाय नमो वक्षसि विन्यसेत् ॥ २७ ॥
कूट विद्याबीजान्ते  च महात्रिपुरभैरवी ।
सदाशिवमहाप्रेत पदात्पद्मासनाय च ॥ २८ ॥
नम इत्यमुना ब्रह्मरन्ध्रस्थाने प्रविन्यसेत् ॥ २९ ॥

## अथ षडङ्गन्यासः

सर्वज्ञता नित्यसुतृप्तिता च अनादिबोधश्च स्वतन्त्रता च ।
अलुप्तता शक्तिमनन्तता च षडाहुरङ्गानि शिवयोः शिवाद्या ॥ ३० ॥
बीजान्ते नाम संयोज्य जातियुक्तं षडङ्गकम् ।
सम्पूर्णां चिन्तयेद्विद्यां ब्रह्मरन्ध्रेऽरुणप्रभाम् ॥ ३१ ॥
स्रवत्सुधां षोडशार्णां महासौभाग्यदां स्मरेत् ।
वामाङ्कदेशे सौभाग्यदण्डिनीं भ्रामयेत्ततः ॥ ३२ ॥
विश्वजिह्वाग्रहां मुद्रां पादमूलेन्यसेत्प्रिये ।
त्रैलोक्यस्य त्वहं कर्ता ध्यात्वैवं कीलकं न्यसेत् ॥ ३३ ॥
सम्पूर्णामेव वदने वेष्टनत्वेन विन्यसेत् ।
पुनः सम्पूर्णवदने गलार्धं विन्यसेत्तया ॥ ३४ ॥
पुनः सम्पूर्णया देहे व्यापकत्वेन विन्यसेत् ।

व्यापकान्ते योनिमुद्रां मुखे क्षिप्त्वाऽभिनन्द्य च ॥ ३५ ॥
श्रीविद्या पूर्णरूपोऽयं न्यासः सौभाग्यवर्धनः।
त्रैलोक्यं क्षोभयत्याशु न्याससन्नद्धविग्रहः ॥ ३६ ॥

## अथ दण्डिनी मुद्रा

मुष्टिं धृत्वा चरेन्मन्त्री तर्जनी दण्डवत्तदा।
सौभाग्यदण्डिनी नाम रिपून् दण्डयते क्षणात् ॥ ३७ ॥

अथ रिपुजिह्वाग्रहा मुद्रा
अङ्गुष्ठं मुष्ठिगं कुर्याद् रिपुजिह्वाग्रहा भवेत्।

## अथ योनिमुद्रा यथा

संयोज्य हस्तौ देवेशि तर्जन्याऽनामिकां यजेत् ॥ ३८ ॥
तद्वद्वामेन संसृज्य योन्याकारेण योजयेत्।
परिभ्राम्यानामिकां तु मूर्धानं परितः प्रिये ॥ ३९ ॥

## अथ सम्मोहनन्यासः

ब्रह्मरन्ध्रे यजेद्देवि मणिबन्धे न्यसेत्ततः।
ललाटे मात्रिकां कुर्यात् षोडशार्णाः स्मेरद् बुधः ॥ ४० ॥
त्रैलोक्यमरुणं ध्यायन् श्रीविद्यां मनसि स्मरेत्।
सम्मोहनाख्यो देवेशि न्यासोऽयं क्षोभकारकः ॥ ४१ ॥

## अथ संहारन्यासः

पादयोर्जङ्घयोर्जान्वोः कट्योरन्धूनिपृष्ठके[५]।
नाभौ पार्श्वद्वयोश्चैव स्तनयोरंशयोस्तथा ॥ ४२ ॥
कर्णयोर्ब्रह्मरन्ध्रे च वदनेऽन्धुनि पार्वति।
ततः कर्णप्रदेशे तु करवेष्ठनतः क्रमात् ॥ ४३ ॥
संहारोऽयं महान्यासो बीजैः षोडशभिः क्रमात्।
श्रीविद्यायाः षोडशार्णैर्न्यासैर्विश्वेश्वरो भवेत् ॥ ४४ ॥
सृष्ट्यर्थं विन्यसेद्देवि मातृकां पूर्ववत् प्रिये।

५ मा. ख. कट्यां रन्धुनिपृष्ठकौ पाठः।

## अथ वशिन्यादिन्यासः

मातृकार्णस्वरूपां च वर्णाष्टकसमन्विताम् ॥ ४५ ॥
वशिनीं मातृकां न्यस्य बीजाष्टकसमन्विताम् ।
अवर्गान्ते लिखेद्बीजं वह्निफान्ते क्षमान्वितम् ॥ ४६ ॥
वामकर्णे विश्वमाद्यं[६] बिन्दुनादाङ्कितं प्रिये ।
वशिनीं पूजयेद्वाचां देवतां देवि सुव्रते ॥ ४७ ॥
कवर्णाके महेशानि कामेशीबीजमुत्तमम् ।
मेरुमृतं सुमुच्चार्य वाग्देवीं पूजयेत्ततः ॥ ४८ ॥
चवर्गान्ते धान्त-लान्त क्षमां तूर्यस्वरान्वितम् ।
मादिनीं पूजयेद्वाचां देवलं तदनन्तरम् ॥ ४९ ॥
टवर्गान्ते वायुबीजं भूमिसंस्थं महेश्वरि ।
वामकर्णेन्दुविन्द्वाढ्यं विमलां वागधीश्वरीम् ॥ ५० ॥
तवर्गान्तेजमक्षोढ्यं वामनेत्रविभूषितम् ।
बिन्दुनादाङ्कितं बीजं वाग्देवीमरुणां यजेत् ॥ ५१ ॥
पवर्गान्ते व्योमचन्द्रं क्ष्मां तोयानि रसं युतम् ।
ऊकारस्वरसंयुक्तं बिन्दुनादकलात्मकम् ॥ ५२ ॥
जयन्तीं पूजयेद्वाचां देवतां सुरवन्दिते ।
यवर्गान्ते[७]जान्तकाल रेफवायुसमन्वितम् ॥ ५३ ॥
वामकर्णेन्दु बिन्द्वाढ्यं सर्वेशीं परिपूजयेत् ।
क्षमावह्निगतं तूर्यं बीजेन परिवेष्ठितम्[८] ॥ ५४ ॥
बिन्दुनादकलाक्रान्तं कौलिनीं वाचमर्चयेत् ।
शवर्गान्ते महादेवि न्यसेत्सर्वार्थसिद्धये ॥ ५५ ॥
शिरो ललाटभ्रूमध्ये कण्ठहृन्नाभिमण्डले ।
आधारदेहकं यावन्न्यसेद्देवि पराप्रिये ॥ ५६ ॥

## अथ षोढान्यासः

षोढान्यासन्ततः कुर्याद्येन ब्रह्माण्डरूपधृक् ।
विराट्स्वरूपवर्णात्मा शिवः साक्षान्न संशयः ॥ ५७ ॥

---

६ मा. ख. विशोभाढ्यं पाठः ।
७ मा. ख. जवर्गान्ते पाठः ।
८ मा. ख. परिवेष्ठयेत् पाठः ।

गणेशः प्रथमो न्यासः सर्वविघ्नविनाशकः ।
तरुणादित्यसंकाशान् गजवक्त्रान् त्रिलोचनान् ॥ ५८ ॥
पाशाङ्कुशवराभीतिकरान् शक्तिसमन्वितान् ।
एतास्तु विन्यसेद्देवि मातृकान्यासवत्प्रिये ॥ ५९ ॥
विघ्नेश्वरः श्रियायुक्तो विघ्ननाथो ह्रियान्वितः ।
विनायकस्तथा तुष्टिः शान्तियुक्तः शिवोत्तमः ॥ ६० ॥
विघ्नहृत्पुष्टियुक्तश्च विघ्नकर्त्ता सरस्वती ।
विघ्नराट् रतियुक्तश्च मेधा च गणनायकः ॥ ६१ ॥
एकदन्तश्च कान्तिश्च द्विदन्तः कामिनीपतिः ।
गजवक्त्रो मेहिनी[९] च निरञ्जन जटा तथा ॥ ६२ ॥
कपर्दभृत् तथा तीव्रा दीर्भवक्त्रस्ततः प्रिये ।
ज्वालिनीसहितः पश्चान्नन्दा सङ्कर्षणस्तथा ॥ ६३ ॥
वृषध्वजश्च सुरसा[१०] गणनाथेन संयुता ।
कामरूपिणिका पश्चाद् गजेन्द्रश्च गुहायुतः ॥ ६४ ॥
सूर्पकर्णस्तु जयिनी त्रिनेत्रः सत्यया युतः ।
लम्बोदरश्च विघ्नेशी महानादस्वरूपिणी ॥ ६५ ॥
चतुर्भूर्त्तिः कामदा च सदाशिवयुतो ततः ।
मदविह्वला[११] महानाद आमोदो विजया तथा ॥ ६६ ॥
दुर्मुखश्च तथा घूर्णा सुमुखो भूमिदा तथा ।
प्रमादश्च तथा भूमिरेकपादस्तथा सती ॥ ६७ ॥
द्विजिह्वश्च रमायुक्तः शूलश्च ध्वजिनीयुतः ।
वीरश्च कर्णयुक्तश्च शैलाश्च मकरध्वजा ॥ ६८ ॥
षण्मुखश्च विकर्णश्च वरदो भृकुटी तथा ।
वामदेवास्तथा लज्जा वक्रतुण्डस्ततः परम् ॥ ६९ ॥
दीर्घघोणान्वितः पश्चाद् हिरण्डकधनुर्धरौ ।
सेनानी यामिनीयुक्तो ग्रामणी रात्रिसंयुतः ॥ ७० ॥
मत्तवाहन लाला च जटी च चपलाक्षिणी ।
मुण्डी ऋद्धियुतः पश्चात् खड्गी[१२] च सुभगायुतः ॥ ७१ ॥

९ मा. क ख मोहनी पाठः ।
१० मा. ख सहसा पाठः ।
११ मा. ख मदह्वला पाठः ।
१२ मा. ख. षडङ्गी पाठः ।

वरण्यश्चैव गर्भा च वृषकेतुस्तथा शिवा।
भक्तप्रिया[13] सत्त्वदा च मेघनादश्च कालिनी ॥ ७२ ॥
गणेशः कालकुब्जा च गणेशो विघ्नहारिणी।
मातृकार्णैर्न्यसेद्देवि ग्रहन्यासस्ततो भवेत् ॥ ७३ ॥
रक्तं श्वेतन्तथा रक्तं श्यामं पीतं तु पाण्डुरम्।
धूम्रं कृष्णं तथा धूम्रं रक्तधूम्रं विचिन्तयेत् ॥ ७४ ।
रविमुख्यान्कामरूपान्सर्वाभरणभूषितान्।
स्वरैरर्क्कं[14] हृदिन्यस्य चवर्गेण शशीं ततः ॥ ७५ ॥
भ्रूमध्ये च क-वर्गेण भौमं नेत्रत्रयं न्यसेत्।
च-वर्गेण बुधः कुक्षिं ट-वर्गेण वृहस्पतिम् ॥ ७६ ॥
हृदयोपरि विन्यस्य त्तवर्गेण गले भृगुम्।
पवर्गेण शनिं नाभौ राहुवक्रे श-वर्गतः ॥ ७७ ॥
लक्षाभ्यान्तु गुदे केतुं न्यसेद्देवं वरानने।
अथ नक्षत्रवृन्दानां न्यासं कुर्यात्सुखप्रदम् ॥ ७८ ॥
ज्वलत्कालाग्नि संकाशाः  सर्वाभरणभूषिताः।
मतिपाण्याश्विनीमुख्याः वरदाभयपाणयः ॥ ७९ ॥
युग्मं युग्मं तथा युग्मं युग्मं युग्मेन रोहिणी।
एकमेकं तथा द्वन्द्वमेकपुष्पाभमुच्यते ॥ ८० ॥
ललाटे लोचने पश्चाद्वामदक्षिणकर्णयोः।
नासाद्वये च देवेशि तथा कण्ठे न्यसेत्क्रमात् ॥ ८१ ॥
पुण्याभं तु प्रविन्यस्य रगाभ्यां श्लेषनामकम्।
दक्षस्कन्धे घङाभ्यां तु मघां स्कन्धे द्वितीयके ॥ ८२ ॥
चापूर्वफाल्गुनीं दक्षे कुर्परे छ-ज संस्थिताम्।
उत्तराफाल्गुनीं वामकुर्परे विन्यसेत्प्रिये ॥ ८३ ॥
झञवर्णस्थितो हस्तो मणिबन्धे च दक्षिणे।
चित्रां टठपरात्मा च मणिबन्धे न्यसेत्प्रिये ॥ ८४ ॥
डवर्णान्ते तथा स्वातीं विशाखां ढणवर्णगाम्।
विन्यसेत् क्रमतो देवि दक्षवामस्तनद्वये ॥ ८५ ॥
तथदस्थाऽनुराधाञ्च नाभौ न्यसेत्तु पार्वति।

१३ मा. ख. नक्तप्रिया पाठः।
१४ मा. ख. खरैर्रक्तं पाठः।

धकारेण युतां ज्येष्ठां न्यसेद्दक्षकरौ प्रिये ॥ ८६ ॥
नपफाभ्यां[१५] तथा मूलां न्यसेद्वामकरौ प्रिये ।
पूर्वाषाढां वकारेण दक्षोरौ विन्यसेत्ततः ॥ ८७ ॥
भकारेणेत्तराषाढां वामोरौ तदनन्तरम् ।
मकारयुक्तां श्रवणां दक्षजानुनि विन्यसेत् ॥ ८७ ॥
यरस्थितां धनिष्ठान्तु वामजानुनि विन्यसेत् ।
लकारेण महादेवि न्यसेच्छतभिषां प्रिये ॥ ८९ ॥
दक्षजङ्घागतां पश्चात्पूर्वभाद्रपदां ततः ।
वशवर्णस्थितां न्यसेत् वामजङ्घागतां क्रमात् ॥ ९० ॥
षसहोत्तरभाद्रपदां तथा दक्षिणपादके ।
लक्षाभ्यां बिन्दुसर्गाभ्यां रेवतीं च तथा प्रिये ॥ ९१ ॥
अकारेण ततो बिन्दुविसर्गाभ्यां च रेवतीम् ।
वामपादे प्रविन्यस्य योगिनीन्यासमाचरेत् ॥ ९२ ॥
सितासितारुणवभ्रूश्चित्रापीताश्च चिन्तयेत् ।
चतुर्भुजाः समैर्वक्त्रैः सर्वाभरणभूषिताः ॥ ९३ ॥
डाँ डीँ बीजद्वयं चोक्त्वा डमलवरये प्रिये ।
वामकर्णेन्दु नादाढ्यो डाकिन्यै नम इत्यपि ॥ ९४ ॥
स्वरान्ते ते प्रवक्तव्यं चान्ते रक्षपदद्वयम् ।
त्वगात्मने कण्ठदेशे विशुद्धौ विन्यसेत्प्रिये ॥ ९५ ॥
ककाराद्यै राकिनीं[१६] तु रकाराद्यक्षरैः क्रमात् ।
पूर्ववद्बीजसंयुक्तैरसृगात्मां च संन्यसेत् ॥ ९६ ॥
अनाहते न्यसेत्पश्चात् डकारादिफकारगैः ।
लाकिनीं च तथा देवि सांसान्मां मणिपूरके ॥ ९७ ॥
वरवणैः काकिनीं तु स्वधिष्ठाने तथाभिधाम् ।
मेदः स्वरूपां विन्यसेत्षसवर्णैश्च किङ्किणीम् ॥ ९८ ॥
मूलाधारेऽस्थिरूपां तु विन्यसेद् वीरवन्दिते ।
हक्षवर्णैः सितां चैवं मज्जा हाकिनीकां यजेत् ॥ ९९ ॥
ब्रह्मरन्ध्रे महेशानि न्यासोऽयं योगिनीक्रमात् ।
राशिन्यासं ततः कुर्यात् सर्वरक्षाकरं सदा ॥ १०० ॥

---

१५ नपफैस्तु पाठ उचितः ।

१६ मा. ख डाकिनीं पाठः

रक्ताश्वेतहरिद्वर्णपाण्डुचित्रासितां न्यसेत्।
पिसङ्ग पिङ्गलो वभ्रु कर्बुरासितधूम्रताम्॥ १०१॥
अकारादिचतुष्केन विन्यसेत्सुरवन्दिते।
मेषं दक्षिणगुल्फे तु ततो द्वन्द्वेन वै वृषम्॥ १०२॥
न्यसेज्जानुनि वेदैस्तु मिथुनं वृषणे ततः।
द्वाभ्यां कर्कटकं कुक्षौ द्वाभ्यां स्कन्धे तु सिंहकम्॥ १०३॥
अनुस्वारविसर्गाभ्यां शवर्गेण च कन्यकाम्।
दक्षिणे तु शिरोभागे विन्यसेद्वीरवन्दिते॥ १०४॥
तथा वामशिरोभागे कवर्गेण तुलां न्यसेत्।
चवर्गेण तथा स्कन्धे वृश्चिकं विन्यसेत् प्रिये॥ १०५॥
टवर्गेण तथा सन्धौ धन्विनं विन्यसेत्प्रिये।
मकारं तु तवर्गेण वृषणे विन्यसेत् प्रिये॥ १०६॥
पवर्गेण तथा कुम्भे वामजानुनि विन्यसेत्।
यवर्गेण अकारेण मीनं गुल्फे तुलात्मके॥ १०७॥
अथ पीठानि विधिना विन्यसेत् सुरवन्दिते।
सितासितारुणश्यामहरित्पीतान्यनुक्रमात्॥ १०८॥
पुनः पुनः क्रमाद्देवि पञ्चाशत्पीठपङ्क्तयः।
पीठानि संस्मरेद्विद्वान्सर्वकामार्थसिद्धये॥ १०९॥
कामरूपं महापीठं पीठं वारणसीं ततः।
नेपालं च तथा पीठं तथा वै पौण्ड्रवर्धनम्॥ ११०॥
पुरः स्थितं तथा पीठं चलस्थितं ततः परम्।
पूर्णशैलं महापीठमर्चुदं[१७] च ततः परम्॥ १११॥
आम्रातकेश्वरं पीठमेकाम्रं च ततः परम्।
त्रिस्स्रोतं पीठमनघं कामकोटिमतः परम्॥ ११२॥
कैलासं भृगुपीठं च केदारं चन्द्रपुरकम्।
श्रीपीठं च तथोङ्कारं जालन्धरमतः परम्॥ ११३॥
मालवं च तथा पीठं कुलान्तं देवकोटकम्।
गोकर्णं च महापीठं मारुतेश्वरमेव च॥ ११४॥
अट्टहासं च विरजं पीठं राजगृहं तथा।
महापथं कोल्लगिरिं मेलापुरमतः परम्॥ ११५॥

---

१७ मा. ख. सर्वदं पाठः।

कोलेश्वरं महापीठं महापीठं जयन्तिकाम् ।
पीठमुज्जयिनीं चैव विचित्रं क्षीरिकाभिधम्[१८] ॥ ११६ ॥
हस्तिनापुरपीठं च उड्डीशं च प्रयागकम् ।
षष्ठीशं च तथा पीठं मायापुरं जलेश्वरम् ॥ ११७ ॥
मलयं च महापीठं श्रीशैलं मेरुकं गिरिम् ।
महेन्द्रं वामनं चैव हिरण्यपुरमेव च ॥ ११८ ॥
महालक्ष्मीमयं पीठमोड्डीयानमतः परम् ।
छायाछत्रपरं पीठं तथैव परमेश्वरि ॥ ११९ ॥
पञ्चाशत्पीठविन्यासं मातृकां विन्यसेत्प्रिये ।
गणेशैः प्रथमो न्यासो द्वितीयस्तु ग्रहैः स्मृतः ॥ १२० ॥
नक्षत्रैस्तु तृतीयः स्याद्योगिनीभिश्चतुर्थकः ।
राशिभिः पञ्चमो ज्ञेयः षष्ठः पीठैर्निगद्यते ॥ १२१ ॥
एवं त्रिपुरसुन्दर्याः षोढान्यासः प्रकीर्तितः ।
षोढान्यासं महादेवि न्यस्य साक्षात्सदाशिव[१९] ॥ १२२ ॥

## अथ त्रिपुरान्यासः

त्रिपुराख्यं ततो न्यासं कुर्यात्कामार्थसिद्धये ।
त्रिबीजपूर्वा मातृकाद्या ङे नमोन्ता महेश्वरि ॥ १२३ ॥
त्रिपुराख्यां न्यसेद्देवि मातृकायाः स्थले क्रमात् ।
अस्यास्तु न्यासमात्रेण जीवन्मुक्तो भवेन्नरः ॥ १२४ ॥

## अथ कामरतिन्यासः

अथ कामान्न्यसेद्देवि दाडिमी कुसुमप्रभाम् ।
वामाङ्गशक्तिसहितान् पुष्पबाणेक्षुकार्मुकान् ॥ १२५ ॥
शक्तिस्तु कुङ्कुमनिभाः सर्वाभरणभूषिताः ।
नीलोत्पलकरा ध्येयास्त्रैलोक्याकर्षणक्षमाः ॥ १२६ ॥
न्यसेत्कामं रतीं पश्चात्कामप्रीतिपरेश्वरि ।
कान्तेशः कामिनीयुक्तो भ्रान्तो वै मोहिनीयुतः ॥ १२७ ॥
कामुकः कमलायुक्तः कामचारो विलासिनी ।
कर्णकल्पलते तद्वत्कोमलश्यामले ततः ॥ १२८ ॥

१८ मा. ख. क्षीरकाभिधम् (पा.)
१९ मा. ख. महेश्वरः पाठः ।

कामवर्द्धनसंयुक्ता विजया चण्डविस्मिता।[20]
रामस्तु विद्यया युक्तो विशालाक्षीयुतो रमः॥ १२९ ॥
विमलो ललितायुक्तो रात्रीवाथ दिगम्बरः।
रतिप्रियश्च रामा च रतिनाथश्च कुब्जिका॥ १३० ॥
स्मरश्च कान्तया युक्तो रमणः मायया युतः।
निशाकरश्च कल्याणीमण्डनो भोगिनी तथा॥ १३१ ॥
नन्दीशः कामदायुक्तो मदनश्च सुलोचना।
सुलावण्ययुतो देवि तथा नन्दायिताभिधः॥ १३२ ॥
निशाचरश्च मेदिन्या रहिताङ्गस्ततः परम्।
कलहः प्रियया युक्तः पुष्पधन्वा च कांक्षिणी॥ १३३ ॥
महाधेनुश्च सुमुखी ग्रामणी नलिनीयुतः।
भीमश्च जटिनीयुक्तो भ्रामणो यामनीयुतः॥ १३४ ॥
भ्रमणः शिखिनीयुक्तः शयाममुग्धे ततः परम्।
भ्रामणी रमया युक्तो भृगुर्भूमी ततः परम्॥ १३५ ॥
भ्रान्तभ्रामरलोला च भ्रामावहसुचञ्चले।
मोहना दीर्घ जिह्वा च सेवकश्च तथा सती॥ १३६ ॥
तथा च मुग्धलोलाक्षी मोहवर्णनभृङ्गिनी।
मोहनश्च चपेटा च मन्मथो नाथया सह॥ १३७ ॥
मतङ्गो मालिनीयुक्तो भृङ्गनाथकहंसिनी।
गायकेन समायुक्तो तथा वैवस्वतो मुखी॥ १३८ ॥
जगनन्दिकया युक्तो गीती च तदनन्तरम्।
नर्तकः सहरञ्जिन्या लेषः कान्तिसमन्वितः॥ १३९ ॥
उन्मत्तः कलकण्ठी च मत्तश्चैव वृकोदरी ।
मेघश्यामान्वितो देवि विलम्बिनी क्रमात्प्रिये॥ १४० ॥
अकाराद्यैर्मातृकायाः स्थानेषु विन्यसेत्प्रिये।
अनेन न्यासयोगेन त्रैलोक्यक्षोभको भवेत्॥ १४१ ॥

### अथ नवयोनिन्यासः

नवयोन्यात्मकं न्यासं बालाबीजैस्त्रिभिः क्रमात्।
त्रिषु त्रिषु च स्थानेषु वक्ष्यमाणक्रमेण तु॥ १४२ ॥

२० मा. ख. कामवर्धनसंयुक्तो विजया वसुविस्मिता इति पाठः।

कर्णयोश्चिवुके भूयो गण्डयोर्वदने तथा।
नेत्रयोर्नासि विन्यसेदंशयोर्जठरे पुनः ॥ १४३ ॥
ततः कुर्परयोः कुक्षौ जानुनोर्लिङ्गमूर्धनि[२१]।
पादयोर्गुह्यदेशे च पार्श्वयोर्हृदयाम्बुजे ॥ १४४ ॥
स्तनद्वये कण्ठदेशे बीजं प्रत्येककं न्यसेत्।
नवयोन्यात्मको न्यासः प्रोक्तोऽयं परमेश्वरि ॥ १४५ ॥

## अथ क्रमेण पीठतत्त्व-श्रीचक्रन्यासः

पुनर्बालां समुच्चार्य गोलकत्वेन चिन्तयेत्[२२] ॥ १४६ ॥
गोलकन्यासयोगेन श्रीचक्रं परिचिन्तयेत्।
षट्चक्रेषु ललाटेषु सीमन्ते च शिरोविले ॥ १४७ ॥
नवस्थानेषु सङ्कल्प्य न्यसेद्देवि ततः परम्।

## अथ श्रीविद्यागुरुन्यासश्च

शिरोललाट भ्रूवक्त्रजिह्वापत्सन्धिकोटिषु ॥ १४८ ॥
षोडषार्णान् न्यसेद्वक्त्रे स्वरस्थानेषु च क्रमात्।
ललाटगलहृन्नाभि मूलाधारेषु पञ्चकम् ॥ १४९ ॥
ब्रह्मरन्ध्रे मुखे स्वान्ते[२३] बीजत्रयमथ न्यसेत्।
आधारे हृदये ब्रह्मरन्ध्रे बीजत्रयं ततः ॥ १५० ॥
करपादेषु हृदये पञ्चबीजानि विन्यसेत्।
व्यापकं पालकं कुर्यान्महासौभाग्यहेतवे ॥ १५१ ॥
श्रीविद्यां हृदये देवि संपूर्णां विन्यसेत् सुधीः।
श्रीविद्यां ब्रह्मरन्ध्रे च पृष्ठतो गुरवः क्रमात् ॥ १५२ ॥

## अथ तिथिनित्यान्यासः

तिथिनित्या ततो देवि मातृकास्वरसंयुताः।
मातृकावन्न्यसेद्वक्त्रे सर्वसौभाग्यदायिका ॥ १५३ ॥

---

२१ जान्वो लिङ्के च पाठ उचितः।
२२ मा. ख. गोलकेन विचिन्तयेत् पाठः।
२३ मा. ख. स्थाने पाठः।

### अथ षोडशीनित्या न्यासः

प्रथमा सुन्दरी विद्या महात्रिपुरसुन्दरी ।
कामेश्वरी समाख्याता तथैव भगमालिनी ॥ १५४ ॥
नित्यक्लिन्ना च भेरुण्डा तथैव वह्निवासिनी ।
वज्रेश्वरी च दूती च त्वरिता कुलसुन्दरी ॥ १५५ ॥
नित्या नीलपताका च विजया सर्वमङ्गला ।
ज्वालामालिनी चित्रान्ता पञ्चदश प्रकीर्तिताः ॥ १५६ ॥

### अथैतासां क्रमेण मन्त्रानाह

श्रृणु देवि प्रवक्ष्यामि नित्यामण्डलमुत्तमम् ।
कामेश्वरी महाविद्या सर्वलोकवशङ्करी ॥ १५७ ॥
बाला वाग्भव हृच्चान्ते कामेश्वरी पदं लिखेत् ।
इच्छाकामफलप्रान्ते प्रदे-सर्वपदं लिखेत् ॥ १५८ ॥
ततः सत्त्ववशं ब्रूयात् करी सर्व जगत्पदम् ।
क्षोभणान्ते करं ब्रूयात् हूँकारत्रितयं लिखेत् ॥ १५९ ॥
पञ्चबाणान् समालिख्य विलोमेन कुमारिकाम् ।
एषा कामेश्वरी विद्या प्रसङ्गात्कथिता प्रिये ॥ १६० ॥
वाग्भवं भगशब्दान्ते भगे भगिनी चाऽलिखेत् ।
भगोदरि भगान्ते च भगमाले भगावहे[२४] ॥ १६१ ॥
भगगुह्यभगप्रान्ते योनिप्रान्ते भगान्विते ।
निपातिनि च सर्वान्ते ततो भगवशङ्करि ॥ १६२ ॥
भगरूपे ततो लिख्य नीरजायतलोचने ।
नित्याक्लिन्ने भगप्रान्ते स्वरूपे सर्वमालिखेत् ॥ १६३ ॥
भगानि मे ह्यानयेति वरदेऽथ समालिखेत् ।
रते सुरते सुभगे क्लिन्ने क्लिन्नद्रवे ततः ॥ १६४ ॥
क्लेदय द्रावय द्वे च सर्वसत्त्वान्भगेश्वरि ।
अमोघे भगवद्विच्चे[२५] घ क्षुभक्षोभय सर्व च ॥ १६५ ॥
सत्त्वात् भगेश्वरी ब्रूयाद् वाग्भवं ब्लूँ जमादिकम् ।

---

२४ मा. ख. भयावहे पाठः ।

२५ मा. ख. भगविम्बे च पाठः ।

भैं ब्लूँ मौं ब्लूँ हें ब्लूँ हैं ब्लूँ क्लिन्ने चैव ततः पुनः ॥ १६६ ॥
सर्वाणि च भगान्यन्ते मे वशञ्चानयेति च ।
स्त्रीबीजं चाहरप्रान्ते बलमात्मकमक्षरम् ॥ १६७ ॥
भुवनेशीं समालिख्य विद्येयं भगमालिनी ।
प्रसङ्गात् कथिता विद्या सर्वलोकवशङ्करी ॥ १६८ ॥
पराबीजं समुच्चार्य नित्यक्लिन्ने मदद्रवे ।
वह्निजायान्वितो मन्त्रो नित्यक्लिन्नेयमीरिता ॥ १६९ ॥
सर्वसौभाग्यदा नित्यं सर्वैश्वर्यप्रदायिनी ।
प्रणवं पूर्वमुद्धृत्य तथाङ्कुशयुगं लिखेत् ॥ १७० ॥
तन्मध्ये विलिखेद्देवि भवोयान्मकमक्षरम् ।
चवर्गमन्त्यहीनं तु विलिखेद्ववह्निसंस्थितम् ॥ १७१ ॥
चतुर्दशस्वरोपेतं बिन्दुनादात्मकं पृथक् ।
वह्निजायान्वितो मन्त्रो भेरुण्डायाः फलप्रदः ॥ १७२ ॥
भुवनेशीं समुच्चार्य ङेन्ता च वह्निवासिनी ।
हृदन्तोयं मनुर्देवि विद्येयं वह्निवासिनी ॥ १७३ ॥
प्रणवं भुवनेशानीं फलमात्मकमक्षरम् ।
सविसर्गं शशी पश्चान्नित्यक्लिन्ने मदप्रदे ॥ १७४ ॥
वह्निजायान्विता विद्या सर्वैश्वर्यप्रदायिनी ।
महावज्रेश्वरी विद्या प्रसङ्गाच्च मयेरिता ॥ १७५ ॥
पराबीजं समुच्चार्य शिवदूतीं च संयुताम् ।
तदन्ते च मनुर्देवि दूती या सर्वकामदा ॥ १७६ ॥
ॐ कारबीजमुच्चार्य परान्ते च हूमालिखेत् ।
खे च वक्षं समालिख्य स्त्रीबीजं च समालिखेत् ॥ १७७ ॥
हूँकारं क्षेपरा चास्त्रं विद्येयं षोडशाक्षरी ।
अथवा
खैं च स्त्रीं चैं हँ हूँ चैं च क्षं विसर्गं समालिखेत् ॥ १७८ ॥
हूँकारं च परा देवि विद्येयं द्वादशाक्षरी ।
त्वरिता नाम विद्येयं त्रिषु लोकेषु दुर्लभा ॥ १७९ ॥
सर्वसिंहासनमयी बालैव कुलसुन्दरी ।
बालया पुटितां कुर्यात्तथा चैतन्य भैरवीम् ॥ १८० ॥

पञ्चबाणाँश्च देवेशि सत्या शक्राक्षरी भवेत् ।
त्रैलोक्य विमला विद्या नित्या स्यात्परमेश्वरि ॥ १८१ ॥
पञ्चाक्षरं बाणबीजं नित्येयमपरा प्रिये ।
प्रणवं भुवनेशानीं फलमात्मकमक्षरम् ॥ १८२ ॥
स्रुमात्रकं द्वितीयञ्च भुवनेश्यङ्कुशं ततः ।
नित्यशब्दं समुद्धृत्य सम्बुध्या तु मदद्रवे ॥ १८३ ॥
कवचं चाङ्कुशं देवि विद्या नीलपताकिनी ।
वान्तं कामसमायुक्तं ततः शक्रस्वरान्वितम् ॥ १८४ ॥
विजयायै नमो देवि नित्येयं विजया प्रिये ।
अथवा
वान्ते कालाग्निवायुश्च ततः शक्रविभूषितः ॥ १८५ ॥
नादबिन्दुकलायुक्ता विद्येयं विजया भवेत् ।
चन्द्रवारुणसंयुक्तं तारबीजं समालिखेत् ॥ १८६ ॥
तार हृद् भगवत्यन्ते ज्वालामालिनि देवि च ।
द्विरुच्चार्य च सर्वान्ते भूतसंहारकालिके ॥ १८७ ॥
जातवेदसि संलिख्य ज्वलन्तीपदयुग्मकम् ।
ज्वलेति प्रज्ज्वल द्वन्द्वं हूँकारद्वितयं लिखेत् ॥ १८८ ॥
चतुर्थ्यां तु ततो देवि लिखेच्च सर्वमङ्गलाम् ।
हृदन्तोऽयं मनुर्देवि नित्येयं सर्वमङ्गला ॥ १८९ ॥
अथवा
चन्द्रं वारुणसंयुक्तं तारबीजं समालिखेत् ।
चतुर्थ्यन्तां ततो देवि विलिखेत् सर्वमङ्गलाम् ॥ १९० ॥
हृदन्तोऽयं मनुर्देवि नित्येयं सर्वमङ्गला ।
वह्निबीजत्रयं हूँ च अस्त्रं स्वाहाऽन्वितो मनुः ॥ १९१ ॥
इयं नित्या महादेवि ज्वालामालिनिका परा ।
कवर्गान्तं स्वरान्तं च शक्रस्वरविभूषितम् ॥ १९२ ॥
बिन्दुनादकलाक्रान्तं विचित्रापरमेश्वरि ।
अकारादिषु सर्वेषु स्वरेषु क्रमतो यजेत् ॥ १९३ ॥
अः स्वरे परमेशानि श्रीनित्या विश्वमातृका ।
स्वरवद्विन्यसेन्नित्यां नीरजायतलोचने ॥ १९४ ॥

### अथ प्रकटयोगिनीन्यासः

आधारादिषु नादे च नादान्ते ब्रह्मरन्ध्रके।
प्रकटाद्यान् न्यसेत्पश्चात्न्यासः प्रकटयोगिनी ॥ १९५ ॥

### अथ रहस्ययोगिनी न्यासः

शिरोललाटे भ्रूमध्ये कण्ठहृन्नाभिगोचरे।
आधार च्यवकं[२६] यावद्रहस्ययोगिनीं न्यसेत् ॥ १९६ ॥

### अथ स्थितिन्यासः

स्थितिन्यासं ततः पश्चाछ्रीविद्या षोडशाक्षरैः[२७]।
पञ्चाङ्गुलीषु करयो र्ब्रह्मरन्ध्रे मुखे हृदि ॥ १२७ ॥
एवं विन्यस्य नाभ्यादि पादान्ते चैवमद्रिजे।
गलादि नाभिपर्यन्तमपरं हि ततः परम् ॥ १९८ ॥
ब्रह्मरन्ध्रादिकण्ठान्तमेकं विन्यस्य पादयोः।
अङ्गुलीषु च विन्यस्य न्यासोऽयं स्थितिकारकः ॥ १९९ ॥

### अथ सृष्टिन्यासः

सृष्टिन्यासं ततः कुर्यात्सर्वसिद्धिप्रदायकम्।
ब्रह्मरन्ध्रान्तिके भाले घ्राणे नेत्रे श्रुतौ ठके ॥ २०० ॥
दत्तान्तोर्ध्वरधो[२८] देवि जिह्वायां गलकूपके।
पृष्ठे सर्वाङ्गहृदये स्तनकुक्षिषु लिङ्गके ॥ २०१ ॥
श्रीविद्यार्णे न्यसेद्देवि मन्त्री सर्वसमृद्धये।
अथ स्वदेहे देव्या अभेदबुध्द्या यथोक्तकामकलां ध्यात्वा आयुधन्यासः कार्यः।
तथा च।
एवं कामकलारूपं देवतामयमात्मनः ॥ २०२ ॥
वपुर्विचिन्त्य शिवयोरायुधन्यासमाचरेत्।
द्राँ द्रीं क्लीं ब्लूँ सः इत्येते कामबाणाः प्रकीर्तिताः ॥ २०३ ॥

---

२६ चिबुकं पाठ उचितः।

२७ मा. ख षोडशाक्षरी पाठः

२८ दन्तान्तोर्ध्वकटे पाठो मा. ख. २। दन्तान्तोर्ध्वमधो पाठ उचितः।

याँ राँ लाँ वाँ माँ इदं कामेश्वर्याश्च बाणपञ्चकम् ।
द्रादि पञ्च यादि पञ्च षँ सँ मोहन सत्ततः ॥ २०४ ॥
ङेँन्तात्कामेश्वरधनुः ङेँ नमोन्तं समुद्धरेत् ।
अनेन च शरानाधो[२९] हस्ते सन्धारयेध्दनुः ॥ २०५ ॥
वामदेव्यास्तथा मन्त्री धारयदैक्षवं धनुः ।
द्रादियादीनि जँ जँ ननेभ्यः कामेश्वरीपदान्तिके ॥ २०६ ॥
बाणेभ्यो नम इत्येतान् दक्षिणाधः करे निजे ।
देव्या प्रविन्यसेद्बाणान् पौष्पान् पञ्च च साधकः ॥ २०७ ॥
द्रादियादीनि भूयोऽपि मुख आन्तं सबिन्दुकम् ।
स्याद्वशीकरणायेति कामेश्वर पदं ततः ॥ २०८ ॥
पाशाय नम इत्यन्ते वामोर्ध्वे विन्यसेत् करे ।
यादी द्रादीनि गगनं वह्निवामाक्षिबिन्दुमत् ॥ २०९ ॥
स्याद्वशीकरणायेति ततः कामेश्वरीति च ।
पाशाय नम इत्येवं वामोर्ध्वे विन्यसेत्करे ॥ २१० ॥
द्रादि यादीनि सर्व क्रौँ सर्वस्तम्भनाय पदं ततः ।
कामेश्वरीपदादूर्ध्वमङ्कुशाय नमो लिखेत् ॥ २११ ॥
दक्षिणोर्ध्वकरे देव्या विन्यसेदङ्कुशं ततः ।
मूलेन व्यापकं कृत्वा नव मुद्राः प्रदर्शयेत् ॥ २१२ ॥

**अथ व्यापकन्यासः**

सर्वाङ्गे विन्यसेद् विद्यां व्यापकत्वेन सुन्दरि ।

अथ न्याससमयमाह
प्रातः कालेऽथवा पूजा समये होमकर्मणि ॥ २१३ ॥
जपकालेऽपि वा तेषां विनियोगः पृथक् पृथक् ।
पूजाकाले समस्तं वा कुर्यात्साधकसत्तमः ॥ २१४ ॥

अथ नव मुद्राः प्रदर्शयेत् । तथा च -
एवं विन्यस्त देहः सन् मुद्रां संधारयेत् क्रमात् ।
अनामिकाकनिष्ठाभ्यां मध्यमाभ्यां करेण तु ॥ २१५ ॥

२९ मा. ख. अनेनवशराधानो पाठः ।

अङ्गुष्ठावनुजाग्रौ च दण्डवत्तर्जनीद्वयम्।
क्षोभणीयं महामुद्रा द्राविणी तु  निगद्यते॥ २१६॥
एतस्या एव विद्याया मध्यमे तर्जनीयुते।
सर्वविद्राविणी नाम द्वितीया परिकीर्तिता॥ २१७॥
एतस्या एव विद्याया तर्जनी मध्यमायुगम्।
अङ्कुशाकाररूपेण योजयेत् परमेश्वरि॥ २१८॥
त्रैलोक्याकर्षिणीविद्या तृतीया परिकीर्तिता।
पुटाकारौ करौ कुर्यात्तर्जन्यौ चाङ्कुशाकृती॥ २१९॥
परिपृष्ठक्रमेणाथ मध्यमे तदधोगते।
क्रमेण तेन मनुवित्कनिष्ठानामिकाद्वयम्॥ २२०॥
संयोज्य घर्षयेत्सर्वामङ्गुष्ठाच्चाग्रदेशगौ।
सर्वावशकरी मुद्रा चतुर्थी परमेश्वरी॥ २२१॥
सम्मुखौ तु करौ योज्यौ मध्यमा गर्भगेनुगे।
तर्जनीभ्यां बहिर्युक्त अनामे सरले कुरु॥ २२२॥
मध्यमा नखदेशे तु ततोऽङ्गुष्ठौ च दण्डवत्।
उन्मादिनी नाम मुद्रा पञ्चमी परिकीर्तिता॥ २२३॥
क्रमेण पञ्चबाणानां मनवः परिकीर्तिताः।
एतस्या एव विद्याया स्तर्जन्यौ मध्यमानुजे॥ २२४॥
कुर्यान्महाङ्कुशाकारौ मुद्रेयन्तु महाङ्कुशा।
अङ्कुशाख्यं महाबीजं मनुरस्याः प्रकीर्तितः॥ २२५॥
वामदक्षिणबाहुं तु दक्षिणं सव्यहस्तगम्।
बाहुं कुर्यात्ततो देवि हस्तौ सङ्घर्षयेत्क्रमात्॥ २२६॥
कनिष्ठाऽनामिकाद्वन्द्वं मध्यमापृष्ठगं ततः।
तर्जनी मध्यमं कुर्यादुभयत्र महेश्वरि॥ २२७॥
अङ्गुष्ठौ सकलौ कृत्वा पार्थिवे योजयेदिमाम्।
खेचरीयं महामुद्रा त्रैलोक्यक्षोभकारिणी॥ २२८॥
विजयाद्यं महाबीजं मनुरस्याः प्रकीर्तितः।
एषा समयमुद्रा च सर्वेषां परिकीर्तिता॥ २२९॥
परिपृष्ठौ करौ देवि त्वर्ध्वचन्द्राकृती ततः।
तर्जन्यङ्गुष्ठयुगलं युगं प्रयोजयेत्तथा॥ २३०॥
अधः कनिष्ठावष्टर्धे मध्यमेन तु योजयेत्।

अनामिके च कुटिले सर्वाधस्तान्नियोजयेत् ॥ २३१ ॥
बीजमुद्रेयं विख्याता मनुरस्या ह्सौमिति ।
पूर्वोक्ता योनि मुद्रा तु नवमी परिकीर्तिता ॥ २३२ ॥
शक्तिवृन्दे स्फुरन्तीयं तस्मात्साधारणी भवेत् ।
वाग्भवं मनुरेतस्या यतो विश्वस्य मातृका ॥ २३३ ॥
एवं विन्यस्त देहः सन् मुद्रासन्नद्धविग्रहः ।
अन्तर्यागविधिं कुर्याद्येन साक्षात्स्वयं विभुः ॥ २३४ ॥
अन्तर्यागविधिं कृत्वा बहिर्यजनमाचरेत् ।
अर्घ्यादिस्थापनं कृत्वा श्रीचक्रं वै समुद्धरेत् ॥ २३५ ॥

## अथ श्रीचक्रमाह

बिन्दु-त्रिकोण-वसुकोण-दशारयुग्म
मन्वस्र-नागदलसंयुत षोडशारम् ।
वृत्तत्रयं च धरणीसदनत्रयं च
श्रीयन्त्रराजमुदितं परदेवतायाः ॥ २३६ ॥
एतद्यन्त्रं त्रिवृत्तरहितमिति केचित् तथा च ।
चतुर्वह्निं समुत्पाद्य पञ्चशक्तिं ततः शिवे ।
प्राक् प्रत्यक्क्रममार्गेण मर्म सन्ध्यादिकं भवेत् ॥ २३७ ॥
अष्टादशं तु मर्माणि चत्तुर्विंशति सन्धयः ।
चतुर्भिश्चैव श्रीकण्ठैः पञ्चकैः शिवक्तिभिः ॥ २३८ ॥
चक्रक्रमेण युक्ताभिः संबद्धाभिः परस्परम् ।
नवचक्रस्वरूपेण शम्भोस्तु नवशक्तिभिः ॥ २३९ ॥
चत्वारिंशत्त्रयः कोणा वृत्तं चाष्टदलं तथा ।
पुनर्वृत्तं कलापत्रं त्रिवृत्तं भूपुरत्रयम् ॥ २४० ॥
चतुर्दशान्तमारभ्य भूपुरान्तं महेश्वरि ।
चत्वारि शिवचक्राणि शक्तिचक्राणि वै श्रृणु ॥ २४१ ॥
चतुर्दशारमारभ्य त्रिकोणान्तं महेश्वरि ।
पञ्च वै शक्तिचक्राणि दक्षिणामूर्त्तिसंमते ॥ २४२ ॥
अथवा
आनन्दभैरवमते चक्राणि श्रृणु यत्नतः ।
चतुर्दशारमारभ्य भूपुरान्तं महेश्वरि ॥ २४३ ॥

चत्वारि शिवचक्राणि शाक्तानि श्रृणु यत्नतः।
बहिर्दशारमारभ्य बिन्द्वन्तं परमेश्वरि ॥ २४४ ॥
पञ्च वै शक्तिचक्राणि त्रिवृत्तरहितं प्रिये।

## अथ लेखनप्रकारमाह

**तत्रादौ मानं यथा**

रचयेत्स्थण्डिले यन्त्रं हस्तमात्रं तथा भुवि ॥ २४५ ॥
रत्नादिषु विनिर्माणे मानमिच्छावशाद् भवेत्।
भेदः संकथितो देवि रचनां श्रृणु यत्नतः ॥ २४६ ॥
तत्र प्राङ्मुख आसीनश्चक्रराजं समालिखेत्।
भूप्रदेशे समे रम्ये सिन्दूररजसाऽथवा ॥ २४७ ॥
कुङ्कुमादिरजोभिश्च भूमौ चक्रं समालिखेत्।
ऋजुरेखं नेत्ररम्यं सन्धिभेदसमं कुरु ॥ २४८ ॥
अथवा हैमरौप्याभ्यां ताम्रे वा बहुधातुभिः।
पट्टं विरच्य श्रीखण्डरक्तचन्दननिर्मिते ॥ २४९ ॥
पट्टे संस्थाप्य विलिखेल्लेखन्या हेमया प्रिये।
रोचनाकुङ्कुमाभ्यान्तु कस्तुरीचन्दनादिभिः ॥ २५० ॥
ईशानादग्निपर्यन्तमृजुरेखां समालिखेत्।
ईशानादग्ने[३०] स्तदग्राभ्यां रेखे चाकृष्य देशिकः ॥ २५१ ॥
एकीकृत्य च वारुण्यां शक्तिरेखाऽपरा प्रिये।
त्रिकोणाकाररूपास्तु तस्या उपरि संलिखेत् ॥ २५२ ॥
त्रिकोणाकाररूपान्तु शक्तिद्वयमुदाहृतम्।
पूर्वं शक्त्यग्रभागेषु मानयष्टिवदाचरेत् ॥ २५३ ॥
रेखान्तु परमेशानि वायुराक्षसकोणगाम्।
सन्धिभेदक्रमेणैव तयोः शक्त्यास्ततः परम् ॥ २५४ ॥
रेखे चाकृष्य कोणाभ्यां तदग्रात्पूर्वगे कुरु।
वह्निमण्डलमेतत्तु पूर्वगां वीरवन्दिते ॥ २५५ ॥
चक्रद्वयमभूदन्ते ततः श्रृणु वरानने।
पूर्वशक्तिसवह्निभ्यां कोणाभ्यां सुरवन्दिते ॥ २५६ ॥
पूर्वरेखान्तु विस्तार्य तथा पश्चिमवह्नितः।

३० ईशानाग्रे पाठ उचितः।

वायुराक्षसकोणाभ्यां रेखां पश्चिमगान्तथा ॥ २५७ ॥
विस्तार्य योजयेद्देवि सन्धिभेदक्रमेण तु ।
याम्यग्रगां पूर्वदेशे दक्षिणोत्तरतः क्रमात् ॥ २५८ ॥
तथा रेखे योनिसंस्थे पश्चिमस्यां दिशि क्रमात् ।
कोणाभ्यां योजयित्वा तु दशकोणं तदा भवेत् ॥ २५९ ॥
तथैव देवदेवेशि द्वितीयं दशकोणकम् ।
ईशानवह्निगे रेखे पूर्वयोन्याग्रयोः क्रमात् ॥ २६० ॥
वायुराक्षसकोणाग्रे रेखे विस्तार्य सुन्दरी ।
पश्चिमाग्रे ततो देवि योजयेदिन्द्रदिक् च ते ॥ ३६१ ॥
एकत्र पूर्वकोणाग्रे चुम्बिनीं तु मनोहराम् ।
योजयेद्देवदेवेशि यथा पङ्क्त्यस्रकं भवेत् ॥ २६२ ॥
दशकोणस्य देवेशि त्यक्त्वा कोणचतुष्टयम् ।
दशकोणान्तरे देवि मध्यरेखां प्रवासयेत् ॥ २६३ ॥
तद्वद्दक्षिणभागे तु तथा चोत्तरभागके ।
षट्कोणस्य ततो देवि सन्धिभेदक्रमेण तु ॥ २६४ ॥
योनिं वह्निं च संयोज्य शक्रारञ्जायते तथा ।
कक्षामध्यगतां रेखां ऋजुरूपान्तु योजयेत् ॥ २६५ ॥
ऋज्वाकृति यथा देवि जायतेऽति मनोहरम् ।
सम्मुखं पञ्चशक्त्यग्रं प्राङ्मुखं चतुरग्निकम् ॥ २६६ ॥
बिन्दुत्रिकोणमध्यांश चक्रमेतद्वरानने ।
मध्यचक्रन्तु जानीहि दशारयुगलं तथा ॥ २६७ ॥
शक्रकोणाङ्कितं देवि बाह्यमध्यान्तकं भवेत् ।
एतच्चक्रं महेशानि सर्वसौभाग्यवर्धनम् ॥ २६८ ॥
सर्वसाम्राज्यदं देवि सर्वोपद्रवनाशनम् ।
अनेक हयमाणिक्य सुवर्णपरिपूरकम् ॥ २६९ ॥
महामोक्षपदं देवि वाग्विलासकरं महत् ।
एतद्बाह्ये महेशानि वृत्तं पूर्णेन्दुसन्निभम् ॥ २७० ॥
तद्युतं कुरु मीनाक्षी वसुपत्रं मनोहरम् ।
ततः षोडशपत्रं तु विलिख्य सुरवन्दिते ॥ २७१ ॥
चतुरस्रं चतुर्द्वारसहितं परमेश्वरि ।
चतुःषष्ठिर्यतः कोट्या योगिनीनां महामते ॥ २७२ ॥

चक्रेऽस्मिन् सविशेषास्तु साधकं मानयन्ति हि ।
अथास्यावयवभेदेन संज्ञावर्णफलान्याह ।
चतुरस्रं मातृकार्णैर्मण्डितं सिद्धिहेतवे ॥ २७३ ॥
मुक्तामाणिक्यचरितं समस्तरविराजितम् ।
त्रैलोक्यमोहनन्नाम कल्पद्रुमफलप्रदम् ॥ २७४ ॥
षोडशारञ्चन्द्रविम्बरूपन्तु सकलालयम् ।
सर्वाशापूरकं भद्रे स्रवेत्पीयूषवर्द्धितम् ॥ २७५ ॥
अष्टपत्रं महेशानि जवाकुसुमसन्निभम् ।
सर्वसंक्षोभणं नाम सर्वकामप्रपूरकम् ॥ २७६ ॥
एतद्वयं वरारोहे सृष्टिचक्रं शुभप्रदम् ।
सर्वाम्नायादिदेव्यास्तु मण्डितं सर्वसिद्धिदम् ॥ २७७ ॥
चतुर्दशारं देवेशि दाडिमीकुसुमप्रभम् ।
अनन्तफलदं भद्रे सर्वसौभाग्यदं सदा ॥ २७८ ॥
दशारं तप्तहेमाभं सिन्दूरसदृशं प्रिये ।
सर्वार्थसाधकं चक्रं चिन्तितं मनसा सदा ॥ २७९ ॥
द्वितीयमपि पङ्क्त्यग्रं जवाकुसुमसन्निभम् ।
सर्वरक्षाकरं चक्रं महाज्ञानमयं शिवे ॥ २८० ॥
एतत्त्रयं महेशानि स्थितिचक्रं सुखप्रदम् ।
दक्षिणाम्नायपूजाञ्च यथोप्सितफलप्रदम् ॥ २८१ ॥
अष्टकोणं वरारोहे बालार्ककिरणारुणम् ।
पद्मरागसमप्रख्यं सर्वरोगहरं सदा ॥ २८२ ॥
उद्यत्सूर्यसहस्राभं बन्धूककुसुमप्रभम् ।
सर्वसिद्धिप्रदं चक्रं सकलालयमीश्वरि ॥ २८३ ॥
त्रिकोणं सर्वसंभूतं कारणं भूतिदं सदा ।
बिन्दुचक्रं वरारोहे सर्वानन्दमयं प्रिये ॥ २८४ ॥
सदाशिवमयं चक्रनायकं परमेश्वरि ।
एतच्चक्रन्तु संहाररूपं ब्रह्ममयं सदा ॥ २८५ ॥
पश्चिमाम्नाय संक्षेव्यं त्रयमत्रप्रपूजितम् ।
श्रीकैवल्यप्रदानाच्च चतुर्वर्णैक्यकारणात् ॥ २८६ ॥
चतुर्वर्णप्रदानाच्च श्रीचक्रमिति कथ्यते ।

अथास्य मेरुरूपमन्त्रात्मकत्वमाह ।
श्रीचक्रमपि देवेशि मेरुरूपन्न संशयः ॥ २८७ ॥
लकारः पृथिवीबीजन्तेन भूविम्बमुच्यते ।
सकारश्चन्द्रमा भद्रे कलाषोडशरूपकः ॥ २८८ ॥
तस्मात्षोडशपत्रन्तु हकारः शिव उच्यते ।
अष्टमूर्तिः सदाभद्रे तस्मादष्टदलं भवेत् ॥ २८९ ॥
इकारस्तु सदामाया भुवनानि चतुर्दश ।
पालयन्ति परा[३१] तस्माच्छक्रकोणं भवेत्प्रिये ॥ २९० ॥
शक्तिरेकादशस्थाने स्थित्वा सूत्रे जगत्त्रयम्
विश्वयोनिरिति ख्याता सा विष्णुर्दशरूपिणी ॥ २९१ ॥
रकारात्परमेशानि चक्रं व्याप्य विजृम्भते ।
दशकोणकरी तस्मात्प्रकाशे ज्योतिरव्ययम् ॥ २९२ ॥
कला दशान्वितो वह्निर्दशकोणप्रवर्तकः ।
ककारान्मादनं देवि शिवञ्चाष्टस्वरूपकम् ॥ २९३ ॥
योनिरम्यं तदा चक्रं वसुयोन्यङ्कितं भवेत् ।
अर्धमात्रागुणान् भूता नादरूपाद् यतः स्थिताः[३२] ॥ २९४ ॥
त्रिकोणरूपयोनिस्तु बिन्दुना बैन्दवं भवेत् ।
कामेश्वर स्वरूपञ्च विश्वाधारस्वरूपकम् ॥ २९५ ॥

## अथ दर्शनफलम्

सम्यक् क्रतुशतं कृत्वा यत्फलं समवमाप्नुयात् ।
तत्फलं लभते भक्त्या कृत्वा श्रीचक्रदर्शनम् ॥ २९६ ॥
महाषोडशदानानि कृत्वा यल्लभते फलम् ।
तत्फलं समवाप्नोति कृत्वा श्रीचक्रमुत्तमम् [३३]॥ २९७ ॥
सार्धत्रिकोटितीर्थेषु स्नात्वा यत्फलमश्नुते ।
तत्फलं लभते भक्त्या कृत्वा श्रीचक्रदर्शनम् ॥ २९८ ॥

---

३१ मा. ख सदा पाठः ।

३२ अर्धमात्रां गुणान् भूता नादरूपा यतः स्थिताः पाठो मा. ख. ।

३३ दर्शनम् पाठो मा. ख. ।

### अथ पूजाफलम्

कोटिलिङ्गप्रतिष्ठायां यत्फलं समुदाहृतम्।
तत्फलं लभते नूनं श्रीचक्रस्य च पूजनात्॥ २९९॥

### अथ दानफलम्

श्रीचक्रं कारयित्वा तु यो दद्यात् साधकाय च।
भूचक्रं तेन दत्तं तु सशैलवनसागरम्॥ ३००॥

### अथ श्रीचक्रपादोदकफलम्

गङ्गा-पुष्कर-नर्मदाश्च यमुना-गोदावरी-गोमती-
गङ्गाद्वार-गया-प्रयाग-बदरी-वाराणसी सिन्धुषु।
रेवा-सेतु-सरस्वती प्रभृतिषु ब्रह्माण्डभाण्डोदरे
तीर्थस्नानसहस्रकोटिफलदं श्रीचक्रपादोदकम्॥ ३०१॥

### अथ सामान्यपीठे पुनरस्या[३४] यो विशेषस्तमाह

महाचक्रस्य संस्थानं भावयेत्स्थिरमानसः।
उद्यच्चन्द्रोदयाक्षुब्धरक्तपीयूषवारिधेः॥ ३०२॥
मध्ये हेममयीं[३५] भूमिं स्मरन्माणिक्यमण्डिताम्।
नवरत्नमयं द्वीपं स्वप्रभापटलैर्दिशाम्॥ ३०३॥
मुखानि शोणयन्त्रं च लेलिहानं नभस्थलम्।
इति साहस्रसंख्याभिर्योजनानां सुविस्तरम्॥ ३०४॥
तन्मध्ये नन्दनोद्यानं मदनोन्मादनं महत्।
करुणातोयपरिखं स्वर्णप्राकारवेष्ठितम्॥ ३०५॥
नित्याभ्युदितपूर्णेन्दु ज्योत्स्नामालाविराजितम्।
सदा सह वसन्तेन कामदेवेन रक्षितम्॥ ३०६॥
प्रान्ते वकुलपुन्नागनागकेशरपञ्चकैः।
पारिजाताम्रचारङ्गनागरंगातिमुक्तिकैः॥ ३०७॥
एलालवङ्गकक्कोलमालतीमल्लिकादिभिः।

---

३४ अस्य पाठ उचितः।

३५ हेममयी भूमी पाठ उचितः।

जम्बीर-मधुजम्बीर-दण्डिमीमातुलिङ्गकैः ॥ ३०८ ॥
सेफालिकानारिकेलैः कदलीपुगपादपैः ।
नागबल्लीसुरलताचक्रावलिलतादिभिः ॥ ३०९ ॥
कालागुरुमहेन्द्रेन्दुकपित्थपनसादिभिः ।
खर्जूरीतालश्रीतालीहींताली देवदारुभिः ॥ ३१० ॥
पाटलीयूथिकाजाति सल्लुकीलतिकादिभिः ।
सतोमरवनिष्यन्दी कदम्बवनदुम्बरैः ॥ ३११ ॥
वृत्तं मधूकमृद्वीकशामकुण्डदलैरपि ।
अतिस्फुरमहोदारदिव्यकल्पद्रुमादिभिः ॥ ३१२ ॥
सर्वदा फलसम्पन्नैः सर्वत्र कुसुमोज्ज्वलैः ।
हींकारमुखरैर्भृङ्गैर्गायद्भिः कोकिलैर्वृतम् ॥ ३१३ ॥
माद्यत्कोकिलसल्लापवाचालितदिगन्तरम् ।
उन्मत्तशुकसंवाधं कलकूजितजृम्भितम् ॥ ३१४ ॥
सारिका मधुरालाप संपूटितनभोन्तरम् ।
चकोर[३६] चक्रकारण्डसारसालिविराजितम् ॥ ३१५ ॥
मकरन्दरसोन्मत्तमनालमिथुनोज्ज्वलम् ।
जाती पुन्नाग संमिश्रपरागपटलोत्करैः ॥ ३१६ ॥
मरुद्भिर्मन्दसञ्चारैरावेष्ठित जगत्त्रयम् ।
नानापुष्पलताकल्प सेवितं वृक्षखण्डकैः ॥ ३१७ ॥
पर्यङ्कदीर्घकोत्फुल्लकमलोत्पलसम्भवैः
रजोभिर्धूसरैः सम्यक् सेवितं मलयानिलैः ॥ ३१८ ॥
ध्यात्वैवं नन्दनोद्यानं तदन्तः प्रणवं स्मरेत् ।
शुद्धकाञ्चनकर्पूरवालुकाभिरलङ्कृतम् ॥ ३१९ ॥
सेवार्थमुत्सुकानेकसुरसिद्धनिषेवितम् ।
तन्मध्ये मण्डपं ध्यायेद्व्याप्तं ब्रह्माण्डमण्डलम् ॥ ३२० ॥
तरुणादित्यसंकाशं चतुरस्रं सुशोभनम् ।
रत्नतेजः प्रभापुञ्जपिञ्जरीकृतदिङ्मुखम् ॥ ३२१ ॥
मध्ये स्तम्भविनिर्मुक्तं कोणस्तम्भविराजितम् ।
महामाणिक्यवैदूर्यरत्नकाञ्चननिर्मितम् ॥ ३२२ ॥
मुक्तादामवितानाढ्यं रत्नसोपानमण्डितम् ।

---

३६ मा. ख. चक्रार पाठः ।

मन्दवायु समाक्रान्तं गन्धधूपतरङ्गितम् ॥ ३२३ ॥
जातीचम्पकपुन्नागकेतकीमल्लिकादिभिः ।
गन्धोत्पलसिताम्भोजमाधवीहिमवेदिभिः ॥ ३२४ ॥
रत्नकाञ्चनवैदूर्यमुक्तानिर्मितपक्षकैः ।
रत्नचामरघण्टादिविमानैरूपशोभितम् ॥ ३२५ ॥
बद्धाभिश्चित्रमालाभिः संभृताभिरलङ्कृतम् ।
रत्नपुर्त्तलिकाकोटीभूषितं  परमाद्भुतम् ॥ ३२६ ॥
नानारत्नादिभिर्दिव्यैश्चित्रितं विश्वकर्मणा ।
तन्मध्ये वेदिकां ध्यायेद् विपुलां शतयोजनाम् ॥ ३२७ ॥
सहस्रादित्यसंकाशामेकमाणिक्यनिर्मिताम् ।
चतुर्द्वारसमोपेतां माणिक्यद्वारतोरणाम् ॥ ३२८ ॥
प्रदीपैः पूर्णकुम्भैश्च सर्वतः समलङ्कृताम् ।
ध्यात्वैवं वेदिकामध्ये पीठं चन्द्रकलामयम् ॥ ३२९ ॥
चन्द्रकान्तशिलाक्लृप्तंश्चतुश्चरणशोभितम् ।
नानामाणिक्यरचनाचित्रपत्र[३७] मनोहरम् ॥ ३३० ॥
जपारुणलसद्वस्त्रसमाकीर्णमहामृदु ।
तल्पं महोपधानेन मण्डितं पाटलाम्बरम् ॥ ३३१ ॥
एवं श्रीचक्रसंस्थानं ध्यात्वा पूजां समारभेत् ।
पश्चिमादि तु मध्यान्तं विलोमेन महेश्वरि ॥ ३३२ ॥
नवरत्नमयं द्वीपं नवखण्डविराजितम् ।
मातृकाद्येन तन्नाम्ना नमोन्तेन समर्चयेत् ॥ ३३३ ॥

अथ यथोक्तरीत्या पीठमभ्यर्च्य कामकलापूर्विकां देवीं ध्यात्वा श्रीयन्त्रविन्दावाहयेत्
अन्यासां भूपुरे बिन्दुत्रयं नास्त्येव शास्त्रतः ।
बिन्दुत्रयार्धमात्राभिः केवलं विश्वमातृका ॥ ३३४ ॥
तत्तस्मात्कारणाद्देवि त्रिपुराशक्तिरुच्यते ।
बिन्दुत्रयसमायोगात्त्रिबिन्दौ त्रिपुरा स्थिता ॥ ३३५ ॥
बिन्दु[३८] संकल्पयेद्वक्त्रं तदधस्तात्तुकुचद्वयम् ।
तदधस्त्वपरार्धं च चिन्तयेत्तदधो मुखम् ॥ ३३६ ॥

---

३७ पाट्ट पाठ उचितः ।

३८ बिन्दौ पाठ उचितः ।

एवं कामकलारूपा साक्षादक्षररूपिणी ।
तत्रस्थे बैन्दवे पीठे तत्र नित्यकलाम्बुजे ॥ ३३७ ॥
तत्र कामेश्वरे पीठे निषण्णां तत्सधर्मिणीम् ।
आज्ञा लोकत्रयेशानीं ब्रह्मविष्णवीशशाशनी[३९] ॥ ३३८ ॥
अकारादिक्षकारान्तवर्णावयवसुन्दरीम् ।
मूलादिब्रह्मरन्ध्रान्तं विशतन्तुस्वरूपिणीम् ॥ ३३९ ॥
उद्यद्भास्वत्समाभाषां जवाकुसुमसन्निभाम् ।
सद्यः सन्तप्तहेमाभां दाडिमीकुसुमोज्ज्वलाम् ॥ ३४० ॥
सुगन्धोद्दामकुसुमपूर्वे धल्मिल्लराजिताम् ।
तरु[४०]केतकसंराजन्नीलभ्रमरकुन्तलाम् ॥ ३४१ ॥
भङ्गलेखास्फरन्मुक्तो माणिक्यतिलकोज्ज्वलाम् ।
स्फुरद्रत्नावलीरम्य मुकुटोज्ज्वलकिङ्किणीम् ॥ ३४२ ॥
आरक्तकस्फुरच्चन्द्रवन्दनां विद्रुमाधराम् ।
राजच्चन्द्रकलास्फूर्तितिलकां च समुज्ज्वलाम् ॥ ३४३ ॥
कर्णचुम्बिस्फुरन्नीललोलाक्षिक्षेपसुन्दरीम् ।
हीरमुक्तावलीराजत्स्वर्णतारङ्कराजिताम् ॥ ३४४ ॥
कर्णभूषणतेजोभिः कपोलस्थलमञ्जिराम् ।
मुखचन्द्रोज्ज्वलच्छुक्राकरमौक्तिकनासिकाम् ॥ ३५४ ॥
स्मितमापुर्यविजितब्रह्मविद्यारसप्रदाम् ।
राजद्विद्रुमवलीम बाहुबल्लीविराजिताम् ॥ ३४६ ॥
रक्तोत्पलदलाकारसुकुमारकराम्बुजाम् ।
कराम्बुजनखज्योत्स्नाविराजितनभस्थलाम् ॥ ३४७ ॥
सुवृत्तनिविडोत्तुङ्गकुचभारालसां शिवाम् ।
नवमुक्तामहाहारपतनोन्नतवक्षसाम् ॥ ३४८ ॥
शान्तोदरीं निम्ननाभिं क्षाममध्यमसुन्दरीम् ।
अनर्घ्यरत्नघटितमेखलालग्नकिङ्किणीम् ॥ ३४९ ॥
नितम्बविम्बसुभगां रोमराजिविराजिताम् ।
रक्तांशुकस्फुरत्तेजोव्याप्तत्रैलोक्यमण्डलीम् ॥ ३५० ॥
दिव्यकञ्चुकसंराजद्रत्नचित्रविचित्रताम् ।

---

३९ शासनीम् पाठो मा. ख ।

४० तनु पाठो मा. ख ।

कदलीललितस्तम्भ सुकुमारोरुराजिताम् ॥ ३५१ ॥
नवरत्नस्फुरत्तेजोमञ्जीरव्याप्तदेवताम् ।
ब्रह्म-विष्णु-महेशानस्फुरन्मौलिपदाम्बुजाम् ॥ ३५२ ॥
कर्पूरशकलामिश्रताम्बूलपूरिताननाम् ।
प्रवालबल्लीघटितपाशां क्षौमगुणान्विताम् ॥ ३५३ ॥
द्वितीयाचन्द्ररेखाङ्कश्रृणिमाकर्षणक्षमाम् ।
सन्दीप्त्या भ्रामरीभूतगुणामिक्षुशरासनाम् ॥ ३५४ ॥
कमलाकार संराजत्पञ्चबाणाँश्च विभ्रतीम् ।
महत्मृगमदोद्दामकुङ्कुमारुणविग्रहाम् ॥ ३५५ ॥
सर्वाभरणशोभाढ्यां सर्वालङ्काररराजिताम् ।
सर्वदेवमयीं देवीं सर्वाचारस्वरूपिणीम् ॥ ३५६ ॥
सर्वसौभाग्यजननीं सर्वसौभाग्यसुन्दरीम् ।
एवं ध्यायेन्महादेवीं कदम्बवनमध्यगाम् ॥ ३५७ ॥

## अथ पादादारभ्य शिरोऽन्तं ध्यायेत्

उद्यत्सूर्यसहस्राभां बन्धूककुसुमप्रभाम् ।
जपाकुसुमसङ्काशां पद्मराजसमप्रभाम् ॥ ३५८ ॥
तडित्पुञ्जनिभां तप्तकाञ्चनाभां परेश्वरीम् ।
रक्तोत्पलदलाकारपादपल्लवराजिताम् ॥ ३५९ ॥
अनर्घ्यरत्नरचितमञ्जीरचरणद्वयाम् ।
पादाङ्गुलीयकक्षिप्तरत्नतेजोविराजिताम् ॥ ३६० ॥
कदलीललितस्तम्भसुकुमारामुरुद्वयाम् ।
नितम्बविम्बविलसद्रक्तवस्त्रपरिष्कृताम् ॥ ३६१ ॥
मेखलाबद्धमाणिक्यकिङ्किणीनादविभ्रमाम् ।
अलक्षमध्यामान्निम्ननाभिच्छान्तोदरीं पराम् ॥ ३६२ ॥
रोमराजीलसोद्भूतमहाफल इवान्विताम् ।
सवृत्तनिबिडोत्तुङ्गकुचमण्डलराजिताम् ॥ ३६३ ॥
अनर्घ्यमौक्तिकस्फारहारभाराधरार्जिताम् ।
नवरत्नमयोद्दीप्त ग्रैवेयवरभूषणाम् ॥॥ ३६४ ॥
श्रुतिभूषामनोहारि कपोलस्थलमञ्जरीम् ।

[41]उद्यदादित्यसंकाशतारङ्कसुमुखप्रभाम् ॥ ३६५ ॥
पूर्णचन्द्रमुखप्रक्षवदनाम्बुजलोहिताम् ।
स्फुरन्मदनकोदण्ड सुभ्रुवां पद्मरोचनाम् ॥ ३६६ ॥
ललाटे पट्टसंराजत् सद्रत्नललिताङ्गिताम् ।
मुक्तामाणिक्यघटितमुकुटस्थलकिङ्किणीम् ॥ ३६७ ॥[42]
स्फुरच्चन्द्रकला राजमुकुटां लोचनत्रयाम् ।
प्रबालबल्लीविलसद्[43] बाहुबल्ली चतुष्टयाम् ॥ ३६८ ॥
इक्षु-कोदण्ड-पुष्पेक्षु पाशाङ्कुशचतुष्टयाम् ।
सर्वदेवमयीमम्बां सर्वसौभाग्यसुन्दरीम् ॥ ३६९ ॥
सर्वतीर्थमयीं देवीं सर्वदेवस्वरूपिणीम् ।
सर्वशास्त्रमयीं नित्यां सर्वामरनमस्कृताम् ॥ ३७० ॥
सर्वाम्नायमयीं देवीं सर्वायतनसेविताम् ।
सर्वानन्दमयीं ज्ञानमातृकां सिद्धिदां पराम् ॥ ३७१ ॥

अथाऽऽवाहनमन्त्रत्रिखण्डामुद्रे चाह –
महापद्मवनान्तस्थे कारणानन्दविग्रहे ।
सर्वभूतहिते मातरेह्येहि परमेश्वरि ॥ ३७२ ॥
पूर्वोक्तयोनिमुद्रायाः पृथक् खण्डत्रयं कुरु ।
अङ्गुष्ठाभ्यां कनिष्ठाभ्यां मध्यमाभ्यां करेण तु ॥ ३७३ ॥
त्रिखण्डा नाम मुद्रेयं त्रिपुराऽऽह्वानकर्मणि ।
वह्वन्नाडीपुरद्वारेणाऽऽगतां चिन्तयेत्ततः ॥ ३७४ ॥
कामेश्वरशिवस्याङ्के स्थापयेत्कुलसुन्दरीम् ।
विद्यायाह्वानरूपिण्या मुद्रया च त्रिखण्डया ॥ ३७५ ॥
संस्थितां चिन्तयेत्तत्र श्रीपीठान्तनिवासिनीम् ।
मुद्राः संदर्शयेद्देवीं तर्पणैस्तु त्रिधा जपेत् ॥ ३७६ ॥
साङ्गं संकल्पयेद्देहे देव्यास्तु परमेश्वरि ।
गन्धपुष्पाक्षतादीनि देव्यै सम्यङ्निवेदयेत् ॥ ३७७ ॥
उपचारैः षोडशभिः सम्पूज्य परदेवताम् ।
तर्पणानि पुनर्दद्यात्त्रिवारं मूलविद्यया ॥ ३७८ ॥

४१ मा. ख. श्लो ३६५ (ख), ३६६ पङ्क्त्यो न वर्तन्ते ।
४२ मा. ख. श्लोकः ३६७ नास्ति ।
४३ प्रवालावलि पाठो मा. ख. ।

एतस्मिन् समये देवि तिथिनित्याः समर्चयेत् ।
कामेश्वर्यादिका नित्या विचित्रान्ता महेश्वरि ॥ ३७९ ॥
प्रतिपत्पौर्णमास्यन्तं तिथिरूपाः[४४] प्रपूजयेत् ।
विभाव्य च महात्र्यंशमग्रदक्षोत्तरं क्रमात् ॥ ३८० ॥
रेखाः सुविलिखेत्तत्र पञ्च पञ्च क्रमेण तु ।
अकारादि दकारान्तं दक्षिणास्यां विचिन्तयेत् ॥ ३८१ ॥
ततः स्वपूर्वरेखायां दीर्घकर्णादिपञ्चकम् ।
विलिख्योत्तररेखायां शक्त्यादि विलिखेत्ततः ॥ ३८२ ॥
अनुस्वारान्तमात्रास्तु विसर्ग[४५]षोडशीं यजेत् ।
वामावर्त्तेन देवेशि नित्याः षोडश कीर्तिताः ॥ ३८३ ॥
प्रतिपत्तिथिमारभ्य पौर्णमास्यत्तमद्रिजे ।
एकैकां पूजयेन्नित्यां महासौभाग्यमाप्नुयात् ॥ ३८४ ॥
कृष्णपक्षे महेशानि पूजयेत्तिथिमण्डलाम् ।
विचित्राद्या वरारोहे यावत्कामेश्वरी भवेत् ॥ ३८५ ॥
पूजनीया विलोमेन क्रमेणापि महेश्वरि ।
कलाः षोडश देवेशि यावच्चन्द्रकलाः क्रमात् ॥ ३८६ ॥
सुसौभाग्यं महादेवि प्राप्नोति गुरुशासनात् ।
कामेश्वर्यादिका नित्याः पूजयित्वा ततः क्रमात् ॥ ३८७ ॥
तिथिनित्या त्रिधा देवि पूजयेद् भाग्यहेतवे ।
पुनः श्रीत्रिपुरान्नित्यां यजेत् सौभाग्यहेतवे ॥ ३८८ ॥[४६]
एतस्मिन्समये देवि गुरून् संपुजयेद् बुधः ।
पुष्पसंकोचयोगेन कथयामि तवानघे ॥ ३८९ ॥
रस्मिवृन्ददलमितं[४७] गुरूणाञ्च शताधिकम् ।
ज्ञात्वा संकोचयेत्पुष्पं ममिहाः सिद्धिहानिदाः ॥ ३९० ॥
पुष्पसंकोचयेन्नोचेन्नष्टं द्वादशसन्ततिः ।
सन्ततिर्नष्टरूपा चेन्नभवेद्देवता प्रिये ॥ ३९१ ॥
अत एव महापुष्पं सम्यक्सङ्कुचितं प्रिये ।
कामराजाख्यविद्याया गुरवस्तु समुद्धृताः ॥ ३९२ ॥

४४ मा. ख तिथिनित्या पाठः ।
४५ मा. ख विसर्गे पाठः ।
४६ मा. ख श्लोकः ३८८ (ख) न प्राप्यते ।
४७ मा. ख. मिदं पाठः ।

मध्ये प्राक् त्र्यस्रमध्ये तु गुरुपङ्क्तिं त्रिधा जपेत्[४८]।
पराख्यान् पूजयेदादौ परापरविभक्तिकान् ॥ ३९३ ॥
ततो परान् देवदेवि गुरुन् संपूजयेत्प्रिये ।
दिव्यौघास्तु परासिद्धि सप्तसङ्ख्या वरानने ॥ ३९४ ॥
आनन्दनाथशब्दान्ता विज्ञेया वीरवन्दिते ।
परप्रकाशो देवेशि ततः परशिवो मतः ॥ ३९५ ॥
पराशक्तिस्तथा देवि कौलेश्वर इति प्रिये ।
शुक्ला देवि कुलेशानि कामेश्वर्यादिकाः प्रिये[४९] ॥ ३९६ ॥
मुनिसंख्यास्तु गुरवः पराख्या दिव्यरूपिणः ।
भोगाः किन्नस्तु समयो वेदाख्याः सहजास्तथा ॥ ३९७ ॥
परापराख्याः सिद्धौघं मानवौघं श्रृणु प्रिये ।
गगणौ विश्वविमलौ मदनो भुवनस्तथा ॥ ३९८ ॥
लीलस्त्वात्मप्रियः पश्चान्नागसंख्यास्तु मानवाः ।
अपरापरमीशानि अक्षरा नियता इमे ॥ ३९९ ॥
एतत्त्रयं तु नियतं देशिकानां हिताय च ।
मयोद्धृतं महेशानि पुष्पसंकुचितं प्रिये ॥ ४०० ॥
मानवौघान्तिके पश्चात् स्वगुरुत्रितयं यजेत् ।
परमेष्ठी गुरुः पश्चाद् गुरुः परमसंज्ञकः ॥ ४०१ ॥
स्वगुरुश्च महेशानि पूजयेच्च गुरुत्रयम् ।
अथवा मानवौघान्ते एकं स्वगुरुमर्चयेत् ॥ ४०२ ॥
अयं प्रकारः कथितः प्रकारान्तरमुच्यते ।
अन्त्यं सर्वप्रकाराणां मानवौघाष्टकं तथा ॥ ४०३ ॥
गुरवो नव संख्याता नव संख्या भवन्ति हि ।
नवचक्रेश्वरी यस्मात्तावत्पुष्पं प्रकाशयेत् ॥ ४०४ ॥
मानवौघे तदा देवि दशसप्त भवन्ति हि ।
पश्चात्संकोचयेत्पुष्पं नवमं श्रीगुरुं यजेत् ॥ ४०५ ॥
अज्ञातगुरुशिष्याणां कथयामि तवानघे ।
गुरूभ्यो नम उच्चार्य पादुकाभ्यां नमो लिखेत् ॥ ४०६ ॥
गुरुन्तु परमान्ते च परमेष्ठ्न्तके तथा ।

---

४८ यजेत् पाठः

४९ क्रमात् पाठः ।

एतेषां पादुकां तद्वदाचार्येभ्यो नमो वदेत् ॥ ४०७ ॥
गुरुपङ्क्तिं प्रपूज्याथ स्वयं श्रीत्रिपुरा भवेत् ।
गुरुपङ्क्तिविहीनस्तु पुरुषः पङ्क्तिवर्जितः ॥ ४०८ ॥
पुष्पसङ्कोचमार्गेण मया सिद्धिः कृता प्रिये ।
कृपया परमेशानि साधकानां हिताय च ॥ ४०९ ॥
गुरुक्रमं प्रपूज्याथ यजेदाम्नायदेवताः ।
त्रैलोक्यमोहने चक्रे सर्वाशापरिपूरके ॥ ४१० ॥
सर्वसंक्षोभके चक्रे पूर्वाम्नायं प्रपूजयेत् ।
सर्वसौभाग्यके चक्रे तथा सर्वार्थसाधके ॥ ४११ ॥
सर्वरक्षाकरे चक्रे दक्षिणाम्नायमर्चयेत् ।
मध्यचक्रत्रये देवि पश्चिमाम्नायमर्चयेत् ॥ ४१२ ॥
नवचक्रेषु देवेशि कुबेराम्नायमर्चयेत् ।
बैन्दवे परमेशानि  मध्यसिंहासनं यजेत् ॥ ४१३ ॥
अनेनैव प्रकारेण पूजयेच्च पराम्बिकाम् ।
श्रीविद्या च तथा लक्ष्मीर्महालक्ष्मीस्तथैव च ॥ ४१४ ॥
त्रिशक्तिस्त्वरिता चैव लक्ष्मीः पञ्च प्रकीर्तिता ।
श्रीविद्या च परञ्ज्योतिः परानिष्कल शाम्भवी ॥ ४१५ ॥
अजपा मातृका चेति पञ्च कोषाः प्रकीर्तिताः ।
श्रीविद्या पारिजातेशी पञ्चबाणेश्वरी तथा ॥ ४१६ ॥
त्रिकूटा पञ्चबाणेशी पञ्च कल्पलताः स्मृताः ।
श्रीविद्या मूलपीठेशी सुधाश्रीरमृतेश्वरी ॥ ४१७ ॥
सिद्धिलक्ष्मीति विख्याता पञ्चकामदुघाः स्मृताः ।
श्रीविद्या अन्नपूर्णा च मातङ्गी भुवनेश्वरी ॥ ४१८ ॥
वाराही च महादेवी पञ्च रत्नाः प्रकीर्तिताः ।
श्रीविद्यापूजनस्थाने चक्रराजे महेश्वरि ॥ ४१९ ॥
महालक्ष्मीश्वरीवृन्दमण्डितासनसंस्थिताम् ।
सर्वसौभाग्यजननीं श्रीविद्यां पूजयामि च ॥ ४२० ॥
इत्युच्चार्य परं ज्योतिः कोणाँश्च पूजयेत् सुधीः ।
अनेनैव प्रकारेण पूजयेत् पञ्च पञ्चिकाः ॥ ४२१ ॥

## अथ क्रमेणासां मन्त्रानाह

मूलविद्या महेशानि श्रीविद्यापरिकीर्तिता।
वारुणान्तं वह्निसंस्थं बिन्दुनादसमन्वितम्॥ ४२२॥
लक्ष्मीदेव्यै पदं प्रोच्य[५०] लक्ष्मीबीजमुदाहृतम्।
प्रणवं पूर्वमुच्चार्य ह्रीमात्मकं समुच्चरेत्॥ ४२३॥
श्रीपुटञ्चानु[५१] कमले कमलाये[५२] प्रसीदतु।
लाये मध्यगतां भूमिं रुद्रस्थाने नियोजयेत्॥ ४२४॥
प्रसीदयुगलं दद्याच्छ्री बीजं भुवनेश्वरीम्।
श्रियो बीजान्ततो दद्यान्महालक्ष्म्याश्च हृन्मनुः॥ ४२५॥
सप्तविंशतिवर्णात्मा महालक्ष्मीमनुर्मतः।
श्रीबीजञ्च पराबीजं कामबीजं समालिखेत्॥ ४२६॥
इयं त्रिशक्तिर्देवेशि त्रिषु लोकेषु दुर्लभा।
चन्द्रेण मादनं लक्ष्मीर्देवी दीर्घाक्षिमण्डिता॥ ४२७॥
विष्णुकूलेश्वरीयुक्ता इतीयं[५३] वैष्णवी मता।
प्रणवं भुवनेशानि विद्या चन्द्रादिवाग्भवम्[५४]॥ ४२८॥
भुवनेशी ध्रुवश्चैव सरवस्यैनमालिखेत।
इयं च पारिजातेशी पारिजातलतोपमा॥ ४२९॥
पञ्चबाणेश्वरी[५५] विद्या प्रसङ्गात् कथिता प्रिये।
त्रिबीजञ्च पराबीजं सकामि त्रिपुरोदिता॥ ४३०॥
पञ्चकामेश्वरी विद्या बालाया[५६] सेयमीरिति।
वाग्भवं वामनेत्रञ्च ध्रुवान्तं बिन्दुसंयुतम्॥ ४३१॥
मूलपीठेश्वरी विद्या सुगुप्ता कथिता मया।
पराबीजं तु श्रीबीजंबलमात्मकमक्षरम्॥ ४३२॥
राज्यदे राज्यलक्ष्मीति चन्द्र[५७]सर्गविभूषितः।

---

५० मा. क. ख प्रोक्ता पाठः।
५१ श्रीपुटञ्चाथ पाठः समुचितः।
५२ मा. क. ख कमलाय पाठः।
५३ विद्येयं पाठ उचितः।
५४ मा. क. ख वियेंच्चन्द्रानि पाठः।
५५ मा. क. ख माण्डबाणेश्वरी पाठः।
५६ मा. क. ख बालास्यासे पाठः।
५७ सूर्य पाठ उचितः।

विलोमेनाद्यबीजानि[५८] सुधाश्रीसंप्रकाशिता ॥ ४३३ ॥
वाग्भवं भुवनेशानि श्रीबीजं तदनन्तरम् ।
वियत्तदादि खफरे नित्येवत्तु समालिखेत् ॥ ४३४ ॥
वियत्तदादि कान्तं च फ्रोमित्येवं मनुर्मतः ।
चवर्गत्रितयं तुर्यं मायारेफेनदुसंयुतम् ॥ ४३५ ॥
महामखं समुद्धृत्य संङ्कर्षिणी[५९] पदं लिखेत् ।
काली महादिरुक्त्वा च वियदिन्दुसमन्वितम् ॥ ४३६ ॥
मायाबीजञ्च कथितं सिद्धिलक्ष्म्या महामनुः ।
अन्नपूर्णा च देवेशि उत्तराम्नायकीर्तिता ॥ ४३७ ॥
माताङ्गिन्यै द्विठान्ते च वाङ्मायां श्रीपुटां लिखेत् ।
इयं मातङ्गिनी विद्या द्वादशार्णा समीरिता ॥ ४३८ ॥
वियदग्निसमायुक्ता वामनेत्रेन्दुभूषिता ।
भुवनेशी महेशानि दुर्लभा भुवनत्रये ॥ ४३९ ॥
वाङ्मायां पूर्वमुद्धृत्य संबुध्य भगवत्यपि ।
वार्तालिदेशवाराहीयुग्म वाराहमुख्यपि ॥ ४४० ॥
अन्धे अन्धिनि नल्यन्तं रुन्धे रुन्धिनि तत्परम् ।
जम्भे जम्भिनि नल्यन्तं मोहे मोहिनि हृद्गतम् ॥ ४४१ ॥[६०]
स्तम्भे स्तम्भिनि हृद्युक्तममुकं स्तम्भय द्वयम् ।
सर्वदुष्टप्रदुष्टानां सर्वेषां सर्वमुद्धरेत् ॥ ४४२ ॥
जिह्वास्तम्भं कुरुद्वन्द्वं शीघ्रं वश्यं कुरुद्वयम् ।
वाग्लौं[६१] ठत्रयबिन्दुञ्च मन्त्रं पावकवल्लभम् [६२]॥ ४४३ ॥
महाविद्या मया ख्याता सर्वतन्त्रेषु गोपिता ।
श्रीविद्या पूजनस्थाने चक्रराजे महेश्वरी ॥ ४४४ ॥
महाकामेश्वरीवृन्दमण्डिताऽसनसंस्थिताम् ।
सर्वसौभाग्यजननी पादुकां पूजयामि च ॥ ४४५ ॥
इत्युच्चार्य परं ज्योतिः कोषान्तं पूजयत्सुधीः ।

---

५८ विलोम्ना पाठः मा. क. ख. ।

५९ मा. क ख संकर्षिणी पाठः

६० अन्धे चान्धिनि सप्तार्णं हृदन्तेन भवेत् प्रिये । रुन्धे रुन्धिन्यतो हृच्च जम्भे जम्भिनि हृत्ततः । मोहे मोहिनि हृच्चापि स्तम्भे स्तम्भिनि हृत्ततः इत्यादि पाठः श्रीविद्यार्णवे । ७ ।

६१ वागुण्ठ पाठो मा. क ख ।

६२ मा. क ख पावकवल्लभा पाठः ।

अनेनैव प्रकारेण पूजयेत् पञ्चपञ्चिकाम् ॥ ४४६ ॥
शैवं तु दर्शनं देवि बैन्दवेषु प्रपूजयेत् ।
परितो दर्शनं शाक्तं चक्रस्य परमेश्वरि ॥ ४४७ ॥
सौरं तु दर्शनं देवि भूविम्बे प्रथमं प्रिये ।
शिवस्य वामतो देवि वैष्णवं दर्शनं यजेत् ॥ ४४८ ॥
सृष्टिचक्रे भवेत्सूर्यदर्शनं कमलेक्षणे ।
स्थितिचक्रे च संपूज्यं बौद्धदर्शनमुत्तमम् ॥ ४४९ ॥
एवं संपूज्य सकलं श्रीविद्यां परितो यजेत् ।
तर्पणानि पुनर्दद्यात्त्रिवारं तत्त्वमुद्रया ॥ ४५० ॥
सर्वोपचारैराराध्य मुद्रां संदर्शयेत्क्रमात् ।
अथाङ्गावरणं कुर्याच्छ्रीविद्यामनुसंभवम् ॥ ४५१ ॥
अग्नीशासुरवायत्वमध्यदिक्ष्वङ्गपूजनम् ।
मायालक्ष्मीमयं बीजं युग्मात्पूर्वे क्रमेण तु ॥ ४५२ ॥
कथितं योजयेद्देवि त्रयं वा परमेश्वरि ।
संपुटक्रमयोगेन चाथवा वीरवन्दिते ॥ ४५३ ॥
संयोज्य पूजयेत्सर्वाः क्रमदेववरानने ।
त्रैलोक्यमोहने चक्रे प्रकटां योगिनीं यजेत् ॥ ४५४ ॥
सद्यः संतप्तहेमाभाः पाशाङ्कुशधरा प्रिये ।[६३]
महाभाण्डीररत्नानि ससुवर्णाङ्किकतां निधिम् ॥ ४५५ ॥
प्रयच्छन्त्यः साधकेभ्यः पद्महस्ताँस्तु पूजयेत् ।

## सिद्धिनीध्यानम्

चित्रां वराभयकरां चन्द्रभासां त्रिलोचनाम् ।
अणिमादिमहासिद्धिमरुणां चिन्तयेच्छिवे ॥ ४५६ ॥
चतुरस्रे चतुर्द्वारि योगिन्यः सिद्धिदायिका ।
अणिमां पश्चिमे द्वारि दक्षकोणे प्रपूजयेत् ॥ ४५७ ॥
लघिमामुत्तरे देवि पश्चिमे पूजयेत्ततः ।
पूर्वद्वारे तु महिमामुत्तरे पूजयेच्छिवे ॥ ४५८ ॥
ईशित्वसिद्धिं देवेशि दक्षिणद्वारि पूजयेत् ।
वशित्वसिद्धिं वायव्ये तेनैव क्रमतो यजेत् ॥ ४५९ ॥

६३ मा. क. सद्यः संतप्तहेमाभाः सिद्धयेदशसुन्दरी इति अधिकः पाठः ।

भुक्तिसिद्धिं तथाऽऽग्नेये  तेनैव क्रमभावतः।
इच्छासिद्धिं पूर्वभागे नैऋत्ये च प्रपूजयेत्॥ ४६०॥
प्राप्तिसिद्धिः सर्वकामा सिद्धिदा परमेश्वरी।
अधोर्ध्वक्रमयोगेन ज्ञातव्या सुरवन्दिते॥ ४६१॥
ब्राह्मी माहेश्वरी चैव तथेन्द्राणी तृतीयके।
कौमारी वैष्णवी चैव षष्ठी वाराहिका भवेत्॥ ४६२॥
चामुण्डा च महालक्ष्मीरथरेण च आगतः[६४]॥
ब्रह्माण्याद्यास्तु तत्रैव यष्टव्याः क्रमशः शिवे[६५]॥ ४६३॥
ब्रह्माणी पीतवर्णा च चतुर्भिः शोभिता मुखैः।
वरदाऽभयहस्ता च पुस्तकाक्षलसत्करा[६६]॥ ४६४॥
माहेशी श्वेतवर्णा च त्रिनेत्रा सूत्रधारिणी[६७]।
कपालमेणं परशुं दधाता पाणिभिः प्रिये।॥ ४६५॥
कौमारी रक्तवर्णा च शक्ति तोमरधारिणी।
वरदाऽभयहस्ता च ध्यातव्या परमेश्वरी॥ ४६६॥
[६८]वैष्णवी श्यामवर्णा च शङ्खचक्रगदाब्जकान्।
हस्तपद्मैश्च बिभ्राणा दिव्यभूषणभूषिता॥ ४६७॥
वाराही श्यामलच्छाया कोलवक्त्रसमुज्वला।
हलं च मुशलं खड्गं फेटकं[६९] दधती करैः॥ ४६८॥
ऐन्द्रीन्तु श्यामवर्णा च शक्तोत्पललसत्करा।
चामुण्डा कृष्णवर्णा च शूलडमरुकन्तथा॥ ४६९॥
खड्गं वेतालकं चैव दधाना दक्षिणैर्भुजैः।
महालक्ष्मीस्तु पीताभा पद्मदर्पणमेव च॥ ४७०॥
मातुलुङ्गफलं चैव दधानाऽपरमेव च।
पश्चिमादि क्रमेणैव प्रकटाश्चतुरस्रके॥ ४७१॥
क्षोभणद्रावणाकर्षवश्यमादमहाङ्कुशा।
खेचरी वीरयोन्यश्च त्रिखण्डा च क्रमाद्यजेत्॥ ४७२॥

---

६४ आगतम् ख. मा. पाठः।

६५ प्रिये पाठः

६६ मा. क. ख. पुस्तकाक्षरसत्करा पाठः।

६७ शूलधारिणी पाठ उचितः।

६८ मा. ख श्लो ४६७ (ख), ४६८, ४६९(क) न विद्यन्ते।

६९ खेटकं पाठ उचितः।

वामावर्त्तेन संपूज्य वायव्यादिषु पूर्ववत्।
एतां संपूज्य देवेशीं त्रिपुरां पूजयेत् पराम्॥ ४७३॥
अणिमासिद्धिपुरतः सर्वकामार्थसाधिकाम्।
सर्वसंक्षोभिणीं मुद्रां दर्शयेत् कमलालये॥ ४७४॥
सर्वाशापूरकं चक्रं गुह्ययोगिन्यधिष्ठितम्।
षोडशारन्ततो देवि पूजयेत् कार्यसिद्धये॥ ४७५॥
कामाकर्षिणिका देवी बुद्ध्याकर्षणरूपिणी।
अहङ्काराकर्षिणी च शब्दाकर्षणरूपिणी॥ ४७६॥
स्पर्शाकर्षणरूपा च रूपाकर्षणरूपिणी।
रसाकर्षणरूपा च गन्धाकर्षणरूपिणी॥ ४७७॥
चित्ताकर्षणरूपा च धैर्याकर्षणरूपिणी।
स्मृत्याकर्षणरूपा च नामाकर्षणरूपिणी॥ ४७८॥
पश्चिमादि क्रमेणैव षोडशारं स्वरान्विताः।
एता नित्याः कला देवि चन्द्रमण्डलमध्यगाः॥ ४७९॥
स्वरलग्नां स्मरेन्नित्यां स्मरेत् पीयूषवर्षिणीम्।
पाशाङ्कुशसुधापूर्णकाश्मीरघटदानदाः[७०]॥ ४८०॥
चक्रेश्वरीं यजेद्देवी त्रिपुरेशीं समृद्धिदाम्।
कामाकर्षणरूपायाः पुरतः पूरयेत् प्रिये॥ ४८१॥
सर्वविद्राविणीं मुद्रां दर्शयित्वा निवेदयेत्।
सर्वसंक्षोभके चक्रे यजेद् गुप्ततरां बुधः॥ ४८२॥
अनङ्गकुसुमां प्राच्यां क-वर्गेण प्रपूजयेत्।
दक्षिणे च चवर्गेण तथा चानङ्गमेखलाम्॥ ४८३॥
अनङ्गमदनां पश्चात् तवर्गेण[७१] च पश्चिमे।
त-वर्गेणोत्तरे पश्चादनङ्गमदनातुराम्॥ ४८४॥
वह्निकोणेऽङ्गरेखां च पवर्गेण प्रपूजयेत्।
राक्षसेऽनङ्गवेगाञ्च यवर्गेण प्रपूजयेत्॥ ४८५॥
वायव्ये तु शवर्गेण तथानङ्गाङ्कुशां यजेत्।
ऐशान्यां ल-क्ष-वर्गेण संपूज्याऽनङ्गमालिनी॥ ४८६॥
देव्यो गुप्ततरा एता बन्धूककुसुमप्रभाः।

---

७० मा. ख. काश्मीरघटदानवाः इति पाठः।

७१ मा. ख. ट-वर्गेण पाठः स एव उचितः।

पाशाङ्कुशस्थूलनालनीलोत्पलकरां स्मरेत् ॥ ४८७ ॥
चक्रेश्वरीं ततो देवीं यजेत्त्रिपुरसुन्दरीम् ।
अनङ्गकुसुमाग्रे तु सर्वसाम्राज्यदायिनीम् ॥ ४८८ ॥
सर्वाकर्षणमुद्रां च  दर्शयेत् सुरवन्दिते ।
चक्रपूजां प्रपूज्याऽथ चतुर्थं चक्रमर्चयेत् ॥ ४८९ ॥
महासौभाग्यदे चक्रे क ट[७२] वर्णविराजिते ।
संप्रदायाख्ययोगिन्यः सर्वाभरणभूषिताः ॥ ४९० ॥
पाशाङ्कुशौ दर्पणं च पानपात्रं सुधामयम् ।
विभ्रन्त्यः सर्वसुभगाः पश्चिमादिविलोहिताः ॥ ४९१ ॥
सर्वसंक्षोभिणी शक्तिः सर्वविद्राविणी तथा ।
सर्वाकर्षणशक्तिश्च सर्वाह्लादनकारिणी ॥ ४९२ ॥
सर्वसम्मोहिनी शक्तिः सर्वस्तम्भनरूपिणी ।
सर्वजृम्भनशक्तिश्च सर्वतो वशकारिणी ॥ ४९३ ॥
सर्वरञ्जनशक्तिश्च  सर्वात्मवशकारिणी ।
सर्वार्थसाधिका शक्तिः सर्वसम्पत्तिरूपिणी ॥ ४९४ ॥
सर्वमन्त्रमयी शक्तिः सर्वदुःखक्षयङ्करी ।
चक्रेश्वरीं सिद्धिदात्रीं परां त्रैपुरवासिनीम् ॥ ४९५ ॥
योगिनीं पूजयेत्तत्र सम्प्रदायमिदां पराम् ।
वश्यमुद्रां प्रदर्श्याथ निवेद्य तदनन्तरम् ॥ ४९६ ॥
सर्वार्थसाधके चक्रे णभ[७३]वर्णविशोभिते ।
जवाकुसुमसंकाश स्फुरन्मणिविभूषिताः ॥ ४९७ ॥
महासौभाग्यगम्भीरा पीनवृत्तघनस्तनीः ।
रत्नकोटि[७४] विनिक्षिप्त साधकेप्सितमानसः ॥ ४९८ ॥
नानारत्नमयान्[७५] दिव्यान् दधतीर्हसितााननाः ।
पाशाङ्कुशौ च दधतीः संस्मरेत्तत्र योगिनीः ॥ ४९९ ॥
पश्चिमादिविलोमेन पूजयेत्सर्वसिद्धिदाः ।
सर्वसिद्धिप्रदा देवि सर्वसंपत्प्रदा तथा ॥ ५०० ॥
सर्वप्रियकरी चैव सर्वमङ्गलकारिणी ।

---

७२ मा. क. क-ढ वर्ण पाठः ।
७३ मा. ख न-भ वर्ण पाठः ।
७४ मा. क ख पेटी पाठः ।
७५ मा. ख नानारत्नमयाः पाठः ।

सर्वकामप्रदा देवी सर्वदुःखविमोचिनी ॥ ५०१ ॥
सर्वमृत्युप्रशमनी सर्वविघ्नविनाशिनी ।
सर्वाङ्गसुन्दरी देवी सर्वसौभाग्यदायिनी ॥ ५०२ ॥
पश्चिमादिविलोमेन दशारे पूजयेदिमाः ।
सर्वसिद्धिप्रदां देवीं पुरतः क्रमनायिकाम् ॥ ५०३ ।
सर्वसिद्धिप्रदां देवीं पूजयेत् त्रिपुरां प्रिये ।
सर्वोन्मादिनीमुद्रां च दर्शयित्वा निवेद्य च ॥ ५०४ ॥
सर्वरक्षाकरे चक्रे म-क्षवर्णविराजिते ।
पश्चिमादिविलोमेन निगर्भयोगिनीं यजेत् ॥ ५०५ ॥
उद्यद्भास्वत्सहस्राभामुक्तालङ्कारभूषिताः ।
पाशटङ्काऽऽयुधज्ञानमुद्रावरदसत्कराः ॥ ५०६ ॥
देव्याः प्रपूजयेदेता यथेप्सितफलप्रदाः ।
सर्वज्ञा सर्वशक्तिश्च सर्वैश्वर्यप्रदा तथा ॥ ५०७ ॥
सर्वज्ञानमयी देवि सर्वव्याधिविनाशिनी ।
सर्वाधारस्वरूपा च सर्वपापहरा तथा ॥ ५०८ ॥
सर्वानन्दमयी देवी सर्वरक्षास्वरूपिणी ।
सर्वेप्सितप्रदा देव्यो गुह्याः सर्वार्थसिद्धिदाः ॥ ५०९ ॥
पश्चिमादिक्रमेणैव पूजयेत् पङ्क्तियोनिके ।
सर्वज्ञां पुरतो देवीं चक्रेशीं मालिनीं यजेत् ॥ ५१० ॥
महाङ्कुशां महामुद्रां दर्शयित्वा निवेद्य च ।
मध्यचक्रे महेशानि योगिनीं पूजयेत् प्रिये ॥ ५११ ॥
सर्वरोगहरे चक्रे वसुकोणे सुरेश्वरि ।
सर्वरोगहरे चक्रे वर्गाष्टकविजृम्भिते ॥ ५१२ ॥
पश्चिमादिविलोमेन रहस्यां योगिनीर्यजेत् ।
श्रीकण्ठपरितोऽधस्ताद्दाडिमीकुसुमप्रभाः ॥ ५१३ ॥
रक्तवस्त्रपरिधाना रक्तगन्धानुलेपना ।
रक्तपुष्पाक्षतैः सम्यक् पूजयेत् सर्वसिद्धिदाः ॥ ५१४ ॥
नानाभरणगम्भीराः पञ्चबाणधनुर्धराः ।
पुस्तकं वरदानं च दधती वर्गसंस्थिताः ॥ ५१५ ॥
वर्गाष्टकमहावर्णा बिन्दुनादाङ्किता लिखेत् ।
अवर्गान्ते रेफ वक्ष्या वामकर्णेन्दुबिन्दुमान् ॥ ५१६ ॥

देवी वाग्देवता[७६] पूज्या वशिनी नामसुन्दरी।
कवर्गान्ते कलयुतां परां कामेश्वरीं लिखेत्॥ ५१७॥
चवर्गान्ते न वक्ष्याद्यं वामनेत्रशशीसमम्।
अनेन मादिनी पूजाय टवर्गान्ते ततः परम्॥ ५१८॥
वायुक्ष्या वामकर्णे तु बिन्दुमद्विकलां यजेत्।
तवर्गान्ते जकालक्ष्या वामाक्षीन्दुकलान्वितम्[७७]॥ ५१९॥
अरुणां पूजयेद्देवि पवर्गान्तेऽथ कथ्यते।
व्योमबीजमहानीरवायुचन्द्रेशभूषितम्॥ ५२०॥
अनेन जपनी[७८] पूज्या यवर्गान्तेऽथ लिख्यते।
सरेफकालपवन प्रणवाङ्केन पूजयेत्[७९]॥ ५२१॥
सर्वेश्वरीं लवर्गान्ते क्षमवह्नीशबिन्दुमत्।
अनेन कौलिनीं देवीं पूजयेदष्टमीं बुधः॥ ५२२॥
अष्टकान्ते महेशानि एता वाग्देवता यजेत्।
पञ्चबाणान् समुच्चार्य कामकामेश्वरीमयान्॥। ५२३॥
जम्भनाख्यां महेशानि पूजयेच्चापदेवताम्।
धर्मार्थकं कामबाणं द्वितीयं स्वय[८०]मात्मकम्॥ ५२४॥
कामेश्वर्या मोहनाख्यां पूजयेच्चापदेवताम्।
द्वितीयं भुवनेशानि पाशयुग्मं वशङ्करम्॥ ५२५॥
कामेशस्य च कामेश्यास्त्रैलोक्याकर्षणं प्रिये।
अङ्कुशं च समुच्चार्य स्तम्भनाय समुच्चरेत्॥ ५२६॥
कामेशस्य च कामेश्याश्चाङ्कुशं पूजयेत् क्रमात्।
षडङ्गावरणाद् बाह्ये आयुधाष्टकमर्चयेत्॥ ५२७॥
कोणत्रयेषु संपूज्यास्तिस्रः कूटत्रयान्विताः।
पश्चिमादि क्रमेणैव चतुर्दिक्षु प्रपूजयेत्॥ ५२८॥
कामेश्वरीं रुद्रशक्तिमाद्यकूटेन चार्चयेत्।
द्वितीयेन च कूटेन रुद्राख्यां[८१] 'शक्तिवैष्णवीम्॥ ५२९॥

---

७६ मा. क चान्देवता पाठः।
७७ मा. क. ख कलात्मकं पाठः।
७८ मा. ख जयनी पाठः।
७९ मा. ख प्रणवाङ्के प्रपूजयेत् पाठः।
८० मा. ख त्वथ पाठः
८१ 'शक्तिं रुद्राख्यवैष्णवीम् पाठ उचितः। मा. ख. वज्राख्यं पाठः।

दक्षकोणे समभ्यर्च्य तृतीयेनैव पूजयेत् ।
भगमालां ब्रह्मशक्तिमुत्तरे विश्वमातृकाम् ॥ ५३० ॥
चक्रेश्वरीमम्बिकाख्यां कामेशीं पुरतो यजेत् ।
बीजमुद्रां प्रदर्श्याथ चक्रपूजां निवेदयेत् ॥ ५३१ ॥
कामेश्वरी शुक्लवर्णा शुक्लमाल्यानुलेपना ।
मुक्ताफलस्फुरद्भूषा नानाभरणभूषिता ॥ ५३२ ॥
पुस्तकं चाक्षसूत्रं च वरदं चाभयं क्रमात् ।
दधतीं चाग्रतः पूज्या रुद्रशक्तिः प्रकीर्तिता ॥ ५३३ ॥
वज्रेश्वरी कुङ्कुमाभा स्फुरद्रत्नविभूषिता ।
बालार्कवसनां नीलकर्णचुम्बितलोचना ॥ ५३४ ॥
इक्षुकोदण्डपुष्पेषु वरदाभयशोभिता ।
वज्रेश्वरी दक्षभागे विष्णुशक्तिर्महेश्वरि ॥ ५३५ ॥
उत्तरे भगमालाम्बा सद्यः सन्तप्तहेमभा ।
अनर्घ्यरत्नखचिता भूषणा भुवनेश्वरी ॥ ५३६ ॥
पाशाङ्कुशज्ञानमुद्रा वरदानकराम्बुजा ।
ब्रह्मशक्तिर्महेशानि तापत्रयनिकृन्तनी ॥ ५३७ ॥
सर्वानन्दमये चक्रे राजबैन्दवसंज्ञके ।
ब्रह्मरूपं विष्णुरूपं शाम्भवं श्रृणु सुन्दरि ॥ ५३८ ॥
परापररहस्याख्यां योगिनीं त्रिपुरां भजेत् ।
कूटत्रयं समुच्चार्य सर्वविद्यास्वरूपकम् ॥ ५३९ ॥
समस्तदेवतारूपं वस्तु वस्तुमयं यजेत् ।
चक्रे समर्पितामेव महात्रिपुरसुन्दरीम् ॥ ५४० ॥
संपूज्य पूजयेत्तत्र परापररहस्यगाम् ।
उपचारैः समभ्यर्च्य गन्धपुष्पाक्षतादिभिः ॥ ५४१ ॥
योगिनीसिद्धिदां नित्यां भोगकामार्थसिद्धये ।
श्रीविद्यां षोडशार्णान्तु भुक्तिमुक्तिफलप्रदाम् ॥ ५४२ ॥
समस्तचक्रचक्रेशीं सर्वाम्नायनमस्कृताम् ।
सर्वाम्नायेश्वरीविद्यालङ्कृतां ब्रह्मरूपिणीम् ॥ ५४३ ॥
उपचारैः समभ्यर्च्य गन्धपुष्पाक्षतादिभिः ।
तर्पणानि पुनर्दद्यात्त्रिवारं मूलविद्यया ॥ ५४४ ॥
योनिमुद्रां प्रदर्श्याथ मुद्राः सन्दर्शयेत् क्रमात् ।

त्रिपुरा स्फटिकाभासा मुक्तारत्नविभूषिता ॥ ५४५ ॥
पुस्तकं चाक्षमालां च कलशं पद्ममुत्तमम् ।
दधतीं चिन्तयेन्नित्यं महापातकनाशिनीम् ॥ ५४६ ॥
त्रिपुरेशी पूर्वरूपा सुन्दरी कुङ्कुमप्रिया ।
सर्वालङ्कारसम्पन्ना पुस्तकं चाक्षमालिकाम् ॥ ५४७ ॥
वरदाभयौ च दधतीं सामर्थ्यं हसितानना ।
अनया सदृशी देवी ध्येया त्रिपुरवासिनी ॥ ५४८ ॥
आरक्तलोचनां प्रान्ते महामदविघूर्णिताम् ।
त्रिपुरां श्रीं महेशानि पीनवृत्तघनस्तनीम् ॥ ५४९ ॥
उद्यद्भास्वत्सहस्राभां दिव्यालङ्कारमण्डिताम् ।
पुस्तकं जपमालां च वरदं चाभयं करैः ॥ ५५० ॥
दधतीं सकलानन्दां मालिनीं कथ्यतेऽधुना ।
इन्द्रगोपप्रभा देवी पाशाङ्कुशकपालिनी ॥ ५५१ ॥
महाभीतिहरा सम्यक् साधकानां क्षणादियम् ।
सिद्धाम्बां परमेशानीं ध्यायेद्भयविनाशिनीम् ॥ ५५२ ॥
संपत्प्रदाभैरवीवत् महासिद्धिप्रदायिनीम् ।
चक्रेण सिद्धिसहिता प्रतिचक्राधिदेवता ॥ ५५३ ॥
अतिगह्वरमेवेदं ज्ञात्वा चक्रं समर्चयेत् ।
पादुकां पूजयामीति नमस्कारोऽथ वा भवेत् ॥ ५५४ ॥
स्वाहा होमे तर्पणे तु तर्पयामिति संस्मरेत् ।
अथवा रश्मयः सर्वा देवीरूपेण चिन्तयेत् ॥ ५५५ ॥
श्रीचक्रे परमेशानि स्वतन्त्रे स्वस्वसन्निभाः ।
गोपितव्यं त्वया भद्रे स्वयोनिरिव पार्वति ॥ ५५६ ॥
नैवेद्यं षड्रसोपेतं कामधेनुपवित्रकम् ।
दत्वा कर्पूरसहितं ताम्बूलं परशक्तये ॥ ५५७ ॥
नित्यं होमं प्रकुर्वीत पूर्वोक्तविधिना प्रिये ।
पूर्ववद् बलिदानं च दद्यात्सर्वसमृद्धये ॥ ५५८ ॥
बटुकाय महेशानि योगिनीभ्यश्च बल्लभे ।
गणेशः क्षेत्रपालाभ्यां पूर्ववद् बलिमुत्सृजेत् ॥ ५५९ ॥
वामभागे तु तस्याऽथ मण्डलस्योपरि क्षिपेत् ।
आधारं पूजयेत्तत्र बलिमन्नोदकादिकम् ॥ ५६० ॥

सकारणं मन्त्रयित्वा सर्वभूतबलिं हरेत् ।
षोडशार्णेन मनुना त्रिवारं वीरवन्दिते ॥ ५६१ ॥
तारं च भुवनेशानि सर्वविघ्न पदं ततः ।
कृत्यः सर्वभूतेभ्यो हूँकारं वह्निबल्लभाम् ॥ ५६२ ॥
समुच्चार्य बलिं दद्यात् मुद्रया तत्त्वसंज्ञया ।
बलिपञ्चकमाख्यातं सदा रक्षाकरं परम् ॥ ५६३ ॥
यथाशक्ति जपं कुर्यात् स्तुतिं च परमेश्वरि ॥ ५६४ ॥

**अथ मकरन्दस्तोत्रम् –**

१. श्रीबीजे नादबिन्दुद्वितयशशिकलाकालरूपस्वरूपे,
मातर्मे देहि वृद्धिं जहि जहि जडतां त्राहि मां दीननाथे ।
अज्ञानध्वान्तनाशक्षमरविरुचिरप्रोल्लसत्पादपद्मे,
ब्रह्मेशाद्यैः सुरेन्द्रैः सुरगणविनुते शम्भुकान्ते नमामि ॥ ५६५ ॥
२. लज्जाबीजस्वरूपे त्रिजगति वरदे क्रीडया संस्थिता या,
तां नित्यं शम्भुशक्तिं त्रिभुवनजननीं पालयन्तीं जगच्च ।
संसाराद्यां निदानां सकलगुणमयीं सच्चिदानन्दरूपां,
तेजोरूपां त्रिनेत्रां त्रिभुवनतिमिराज्ञानहन्त्रीं नमामि ॥ ५६६ ॥
३. क्लींबीजे कामराजे धृतकुसुमधनुर्बाणपाशाङ्कुशाढ्यां,
वन्दे भास्वत्स्वरूपे रविनिभवभुषा मोहयन्तीं त्रिलोकान् ।
काञ्चीमञ्जीरहाराङ्गरमुकुटलसत्स्वर्णमाणिक्यभूषै-
र्भास्वन्तीमिन्दुवक्त्रांस्तनभरनमितां क्षीणमध्यं त्रिनेत्राम् ॥ ५६७ ॥
४. वाणीबीजस्वरूपे त्रिभुवनजडताध्वान्त विध्वंसिनी त्वम्,
त्वं शब्दब्रह्मरूपा श्रुतिभिरपि सदा गीयमाना त्वमेव ।
मातर्मे देहि बुद्धिं मम सदसि महाद्वन्द्वसंक्षोभकर्त्री,
दात्री वाचस्पते रतिविविधपदं त्वत्पदाम्भोजमीडे ॥ ५६८ ॥
५. सौः शक्तिः कार्यजातौ घटपटविकृतौ दृष्टहस्तौ सहाया,
माया केचिन्महत्त्वप्रभृतिपरिणतौ मूलभूतात्वमेव ।
किञ्चिद्बाह्यप्रपञ्च भ्रमति मतिवृतौ हेतुभूतासि विद्या,
विद्याविभ्रान्तवृन्दक्षयगति जगतां मेनिरे शुद्धभावम् ॥ ५६९ ॥
६. ॐ मातस्ते नमोऽस्तु श्रुतिमथितगुरु त्र्यक्षरब्रह्मरूपे,
मिथ्याज्ञानान्धकूपे पतितमनुदिनं पाहि मामक्षहीनम् ।

मोहक्रोधप्रलोभ प्रथमगतिचये[८२] शत्रुभिः पीड्यमानम् ,
पत्नीपुत्रादिभृत्यैर्नतविविधजनैः श्रृङ्खलाभिर्निबद्धम् ॥ ५७० ॥

७. ह्रींकाराख्यस्वरूपे मम दहदुरितं व्याधि दारिद्र्यबीजं,
मातस्तत्पादपद्मे हृदयपरिमले प्रार्थये भक्तिरूपाम् ।
त्वं वाणी त्वं च लक्ष्मीस्त्वमसि गिरिसुता ब्रह्मविष्णवादिरूपा,
चिन्त्ये नित्यं शरण्ये कृतमिहजननि त्वत्कटाक्षैकवृन्दैः ॥ ५७१ ॥

८. श्रींकारे श्रीस्वरूपे वितर मयि कृपां ध्यानयुक्सत्यरूपे,
स्वर्णमाणिक्यरत्नादिकधनमखिलं त्वत्पदार्चा सुयोग्यम् ।
विद्यां त्वं देहि मोक्षं भवभयदहनैर्देवि सन्दह्यमानं,
योगीन्द्रैः सेव्यमानैरमृतरुचिचयैर्मोक्षय त्वं च दीनम् ॥ ५७६ ॥

९. कामो योनिश्चतुर्थस्वरदशमतिते भौवनेशींञ्च बीजम्,
तावद्वर्णावलि त्वं नतजनवरदे त्वत्पदे भक्तिमीडे-
त्वत्पादाम्भोजयुग्मं हृदयपरसिजे सन्निधायैकचित्ता,
ध्यायन्तः कर्मबन्धाद्विगतकलिमलन्मुक्तवन्तो मुनीन्द्राः ॥ ५७३ ॥

१०. ब्रह्मेन्दुः कामदेवो वियदमरगुरुभौवनेशाक्षबीजम्,
तावद्वर्णस्वरूपैर्घटिततनुलतां त्वां प्रपन्नोऽस्मि मातः ।
विष्णु-ब्रह्मेशमूर्ध्निर्नमणिमुकुटरुचिप्रोल्लसत्पादपद्मे,
योगीन्द्रैर्ध्येयमानप्रपदनखचये द्योतविद्योतमाने ॥ ५४७ ॥

११. इन्द्रः कामः सुरेशो वियदनलयुतं वामनेत्रार्धचन्द्रै-
र्युक्तं यद्बीजमेतत्तदपि तव वपुः सच्चिदानन्दरूपम् ।
बाला त्वं भैरवी त्वं त्रिभुवनजननी तारिणी
नीलवाणी, त्वं गौरी त्वं च काली सकलगुणमयी त्वं महामोक्षदात्री ॥ ५७५ ॥

१२. सौंकारे बीजराजे त्रिभुवनजनिते शक्तिराद्या त्वमेव,
त्वां युक्तः शम्भुरेशः प्रभवति चलितुं त्वां विना जाड्यवान् सः ।
ब्रह्मा विष्णुः कपर्दी जननि तव कपालेशमात्राच्छरीरान्,
गृह्णन्तः सृष्टिरक्षाप्रलयमविरतं चक्रिरे त्वत्पदस्था ॥ ५७६ ॥

१३. ऐं बीजं वाग्भवाख्यं त्वमिह जडमतिध्वान्तचन्द्रप्रकाशं,
मातः कारुण्यधाराऽमृतदृशा रक्ष मां नाथहीनम् ।
मोहयन्ते मोहितास्ते तव जननि महामायया बद्धचित्राः,
कारुण्यं प्रार्थयन्तस्तवपदयुगलज्ञानवन्तो युगेन्द्राः ॥ ५७७॥

---

८२ मा. ख प्रथमरतिचयैः पाठः।

१४. क्लीँकारं बीजरूपं तव सुरतिमनुश्रेष्ठमध्यप्रदेशे,
साक्षाद्ब्रह्मस्वरूपी मदनतनुरियं ब्रह्मणो मोहकर्त्री।
आज्ञान्तः स्मेरवक्त्रां कुलकुहरलसत्साक्षपीयूषधारा,
वेदाः साङ्गादियते तुहिनगिरिसुते प्राप्तमाहेन्द्ररूपे ॥ ५७८ ॥

१५. ह्रीँकारे कालरूपं त्वमिह शशिमुखी ह्रीँस्वरूपा त्वमेव,
त्वं क्षान्तिस्त्वं च कान्तिर्हरिहरकमलोद्भूतरूपा त्वमेव।
त्वं सिद्धिस्त्वं च ऋद्धिः स्मररिपुमहिषि त्वं च संमोहयन्ती ,
विद्या त्वं मुक्तिहेतुर्भवजलधिगतां दुःखहन्त्री त्वमेव ॥ ५७९ ॥

१६. श्रीबीजे श्रीकलाढ्ये मधुरिपुमनसामध्यमध्याद्यभेधा,
मातस्त्वं दृष्टिलेशादमरपतिरसौ प्राप्तवान् स्वपतित्वम्।
इत्येवं षोडशार्णप्रथितमनुवरः स्वर्गमोक्षैकहेतुः,
सिद्धेरष्टौलभन्ते य इह मनुवरं सर्वदा चेद् भजन्ते ॥ ५८० ॥

१७. पूजयित्वा विधानेन महात्रिपुरसुन्दरीम्।
इदं स्तोत्रं पठित्वा तु देवीसायुज्यमाप्नुयात् ॥ ५८१ ॥

*इति श्रीरुद्रयामलमहातन्त्रे उमामहेश्वरसंवादे शिववक्त्राम्बुजविनिर्गत-श्रीमहात्रिपुरसुन्दरीमकरन्दाख्यः स्तवः समाप्त।*

## अथ महात्रिपुरसुन्दरीकवचमाह

**देव्युवाच**

१. भगवन् देवदेवेश लोकानुग्रहकारकः।
त्वत्प्रसादान्महादेव श्रुता मन्त्रास्त्वनेकधा ॥ ५८२ ॥

२. साधनं विविधं देव कीलकोद्धारणन्तथा।
शापादिदूषणोद्धारः श्रुतास्त्वत्तो मया प्रभो ॥ ५८३ ॥

३. लक्षवारसहस्राणि वारितासि पुनः पुनः।
स्त्रीस्वभावान्महादेवि पृच्छसि त्वं मयि प्रिये ॥ ५८४ ॥

४. अत्यन्त गुप्तं कवचं सर्वकामवरप्रदम्।
प्रीतये तव देवेशि कथयामि श्रृणुष्व तत् ॥ ५८५ ॥

५. अद्य श्रीषोडशीविद्याकवचस्य ऋषिः स्मृतः।
महादेवश्च प्रस्तार पङ्क्तिच्छन्द उदाहृतम् ॥ ५८६ ॥

६. राजराजेश्वरी देवी देवता परिकीर्तिता।

सर्वार्थसाधने देवि विनियोगः प्रकीर्तितः ॥ ५८७ ॥
७. पूर्वे मां भैरवी पातु बाला मां पातु दक्षिणे ।
मालिनी पश्चिमे पातु त्रासिनी तूत्तरेऽवतु ॥ ५८८ ॥
८. ऊर्ध्वं पातु महादेवी महात्रिपुरसुन्दरी ।
अधस्तात्पातु देवेशी पातालतलवासिनी ॥ ५८९ ॥
९. आधारे वाग्भवः पातु कामराजस्तथा हृदि ।
भ्रामरः पातु मां नित्यं मस्तके सर्वकामदः ॥ ५९० ॥
१०. ब्रह्मरन्ध्रे सर्वगात्रे छिद्रस्थाने च सर्वदा ।
महाविद्या भगवती पातु मां परमेश्वरी ॥ ५९१ ॥
११. ऐँ क्लीँ ललाटे मां पातु ह्रीँ क्लीँ ब्लूँ सश्च नेत्रयोः ।
नासायां कर्णयोश्चैव द्राँ द्रैँ द्रीँ चिबुकं तथा ॥ ५९२ ॥
१२. सौँः पातु गले हृदये मम सः ह्रीँ नाभिदेशके ।
कलह्रीँ क्लीँ स्त्रीँ गरह्यदेशे  स ह्रीँ पातु पादयोः ॥ ५९३ ॥
१३. स ह्रीँ मां पातु सर्वत्र स क्लीँ पातु मे सन्धिषु ।
जले स्थले तथाऽऽकाशे दिक्षु राजगृहे तथा ॥ ५९४ ॥
१४. हूँ खे मां त्वरिता पातु स ह्रीँ स क्लीँ मनोभवाम् ।
हंसश्च पायान्महादेवी परं निष्कलदेवता ॥ ५९५ ॥
१५. विजया मङ्गला दूती कल्याणी भगमालिनी ।
ज्ञाता च मालिनी विद्या सर्वदा पातु मां शिवा ॥ ५९६ ॥
१६. इत्येवं कवचं देवि देवानामपि दुर्लभम् ।
तव प्रीत्या मयाऽऽख्यातं गोपनीयं प्रयत्नतः ॥ ५९७ ॥
१७. इदं रहस्यं परमं गुह्याद् गुह्यतरं प्रिये ।
धन्यं यशस्यमायुषां भोगमोक्षप्रदं शुभम् ॥ ५९८ ॥
१८. दुःस्वप्ननाशनं पुंसां नरनारीवशङ्करम् ।
आकर्षणकरं देवि स्तम्भोच्चाटकरं शिवे ॥ ५९९ ॥
[८३]१९. इदं कवचमज्ञात्वा राजराजेश्वरी शिवाम् ।
योर्चयेद्योगिनीवृन्दैः स भक्ष्यो नात्र संशयः ॥ ६०० ॥
२०. न तस्य मन्त्रसिद्धिः स्यात् कदाचिदपि शाङ्करि ।
इहलोके च दारिद्यं रोगदुःखभयानि च ॥ ६०१ ॥
२१. परत्र नरकं गत्वा पशुयोनिमवाप्नुयात् ।

---

८३ मा. ख श्लोकौ १९, २० न प्राप्येते ।

तस्मादेतत्सदाभ्यासादधिकारी भवेत्ततः ॥ ६०२ ॥

२२. मद्वक्त्रनिर्गतमिदं कवचं सुपुण्यं,
पूजाविधेश्च पुरतो विधिना पठेद्यः ।
सौभाग्य भोगललितानि शुभानि भुक्त्वा,
देव्याः पदं भजति तत्पुनरन्तकाले ॥ ६०३ ॥

*इति कुलान्ते निहितायां श्रीमहात्रिपुरसुन्दरिषोडशीकवचं सम्पूर्णम् ।*

## अथ त्रिपुरभैरवस्य मन्त्रमाह

माया लक्ष्मीस्तथाहंसः प्रासादबीजमेव च ।
वह्निजायान्तको मन्त्रो भवेत्त्रिपुरभैरवः ॥ ६०४ ॥
षडङ्गमूलमन्त्रेण बलिपूजादिकं तथा ।

## अथ ध्यानम्

एकवक्त्रं त्रिनयनं चतुर्बाहुसमन्वितम् ॥ ६०५ ॥
दक्षिणे चाङ्कुशं खड्गं वामे खेटकपाशकौ ।
धारयन्तं रक्तवर्णं वृषासनगतं विभुम् ॥ ६०६ ॥
ऊर्ध्वकेशं हादहारं कपालमालयान्वितम् ।
एवं विधं सदा देवि ध्यायेत्त्रिपुरभैरवम् ॥ ६०७ ॥

*इति श्रीतन्त्रचिन्तामणौ श्रीविद्यानित्यार्चननिर्णयनाम षड्विंशतितमः प्रकाशः ।*



# सप्तविंशतितमः प्रकाशः

अथ त्रिपुरभैरव्याः क्रमो लिख्यते –
अथ पूजाविधिं वक्ष्ये सर्वतन्त्रेषु गोपितम्।
देव्यास्त्रिपुरभैरव्या विशेषं यन्निरूपितम्[1] ॥ १ ॥
पीठन्यासान्तं विधाय ऋष्यादिन्यासं कुर्यात्।
ऋषिरस्य महेशानि दक्षिणामूर्तिरव्ययः।
न्यासेच्छिरसि पूज्यत्वात् पङ्क्तिश्छन्दो मुखे प्रिय ॥ २ ॥
देवता हृदये बाला त्रिपुरा परमेश्वरी।
बीजं वाग्भवमित्युक्तं शक्तिस्तार्तीय मूहयेत् ॥ ३ ॥
नाभेराचरणं न्यस्य गलादानापि चापरम्।
मूर्धादिगलपर्यन्तं त्र्यक्षरं विन्यसेत्क्रमात् ॥ ४ ॥

**अथ विद्यान्यासमाह[2]**

विद्यान्यासं ततः कुर्यात्त्रिभिर्बीजैः क्रमाच्छिवे।
करयोर्विन्यसेदादौ मणिबन्धे तलऽग्रक ॥ ५ ॥
दक्षवामे च विन्यस्य कुक्षि-कूर्पर-पाणिषु।
पुनर्दक्षे तु वामे तु पादयोश्च तथा न्यसेत् ॥ ६ ॥
नादान्ते हृदये लिङ्गे न्यसेद्देवि ततः परम्।
एतेष्वङ्गेषु देवेशि संहारक्रमतो न्यसेत् ॥ ७ ॥
विद्यासृष्टिक्रमेणैव जानीहि परमेश्वरि।
नवयोन्यात्मकं न्यासं कुर्याद्बीजैस्त्रिभिस्ततः ॥ ८ ॥
श्रीविद्यायाः क्रमेणैव पूर्वमेव समीरितम्।

**अथ रत्यादिन्यासः**

भ्रुवोर्मध्ये मनोभवाम् ॥ ९ ॥

---

१ विशेषेण निरूपितम् पाठ उचितः।
२ मा. ख अथ विद्यान्यास पाठः।

बालाबीजैस्त्रिभिर्न्यस्य स्थानेष्वेषु विलोमतः।
अमृतेशीं च योगेशीं विश्वयोनिं क्रमादिमाः ॥ १० ॥
विलोमबीजैर्विन्यस्य मूर्तिन्यासमथाचरेत्।
प्रविन्यस्य यथापूर्वं भृगुवामाग्नि संयुतम् ॥ ११ ॥
सद्यादिपञ्च ह्रस्वाढ्यं बीजन्यासे प्रकीर्तितम्।

## अथ वर्णन्यासः

पञ्च बाणान् क्रमेणैव कराङ्गुलिषु विन्यसेत् ॥ १२ ॥
अङ्गुष्ठादि कनिष्ठान्तं क्रमेण परमेश्वरि।
ततस्तेषु च स्थानेषु न्यसेत्कामान् यथाक्रमम् ॥ १३ ॥

## अथ कराङ्गन्यासः

षड्दीर्घयुक्तेनाद्येन बीजेनाङ्गक्रिया मता।
मूर्ध्नि पादे तथा वक्त्रे गुह्ये हृदयपङ्कज ॥ १४ ॥
थान्तद्वयं समालिख्य वह्निसंस्थं क्रमेण हि।
मुखवृत्तेन नेत्रेण वामेन परिमण्डितम् ॥ १५ ॥
बाणद्वयमिदं प्रोक्तं मादनं भूमिसंस्थितम्।
चतुर्थस्वरविन्द्वाढ्यं नादरूपं वरानन ॥ १६ ॥
कान्तं शक्रसमारुढं वामकर्णविभूषितम्।
बिन्दुनादसमायुक्तं सर्गवान् चन्द्रमा प्रिया ॥ १७ ॥
पञ्च बाणा महेशानि नामानि श्रृणु पार्वति।
द्रावणो क्षोभणो देवि वश्याकर्षणसंज्ञकौ ॥ १८ ॥
तथोन्मादक्रमेणैव नामानि परमेश्वरि।
द्रामाद्यां द्राविणीं मूर्ध्नि द्रीमाद्यां क्षोभिणीं पद ॥ १९ ॥
क्लीं वशीकरणीं वक्त्रे गुह्ये ब्लूँ बीजपूर्विकाम्।
आकर्षिणीं हृदि पुनः सर्गान्तभृगुसंस्थिताम् ॥ २० ॥
संमोहिनीं क्रमादेवं बाणन्यासोऽयमीरितः।
पराबीजं मध्यबाणं वाग्भवं परमेश्वरि ॥ २१ ॥
ब्रूबीजं च तथा देवि बधूबीजं क्रमात्प्रिये।
पञ्च कामा इमे देवि नामानि श्रृणु वल्लभ ॥ २२ ॥

काम-मन्मथ-कन्दर्प-मकरध्वज संज्ञकाः।
मीनकेतुर्महेशानि पञ्चमः परिकल्पितः ॥ २३ ॥

### अथ सुभगादिन्यासः

भालभ्रूमध्यवदने लम्बिका-कण्ठ-हृत्सु च।
नाभ्यधिष्ठानयोः पञ्च ताराद्याः सुभगादिकाः ॥ २४ ॥
वाक्कामबीजं ब्रूँ स्त्रीँ सस्ताराः पञ्चोदितास्त्वमीः।

### अथ भूषणन्यासः

न्यासेच्छिरसिभारभ्रूकर्णाक्षियुगलेनसि ॥ २५ ॥
गण्डयोरोष्ठयोर्दन्तपङक्त्योरसिन्यसेत्स्वरान्।
चिबुके च गले कण्ठे पार्श्वयोः स्तनयुग्मक ॥ २६ ॥
दोर्मूलयाः कूर्परयोः पादयोस्तत्पृष्ठदेशयोः ण?
नाभौ गुह्ये पुनश्चोर्वोर्जान्वोर्वै जङ्घयोस्ततः॥ २७ ॥
स्फिचोस्तत्तलयोः पश्चात् चरणाङ्गुष्ठपृष्ठयोः।
कादिरान्तान् न्यसेद् वर्णान् स्थलेष्वेषु समाहितः॥ २८ ॥
काञ्च्यां ग्रैवेयके पश्चात् कटके हृदि गुह्यके।
कर्णयोर्गण्डयोर्मौलौ लवशक्षलषान् हसौ॥ २९ ॥
अष्टाविमान् प्रविन्यस्येदेवं देशिकसत्तमः॥ ३० ॥

### अथ ध्यानम्

उद्यद्भानुसहस्रकान्तिमरुणक्षौमां शिरोमालिकाम्।
रक्तालिप्तपयोधरीं जपवटीं विद्यामभीतिं वरम्॥
हस्ताब्जैर्दधतीं त्रिनेत्रविलसद्वक्त्रारविन्दश्रियम्।
देवीं बद्धहिमांशुरत्नमुकुटां वन्दे सतां दक्षिणाम् ॥ ३१ ॥
योन्याख्या हृदि विख्याता त्रैलोक्ये रक्षणा भवेत्।
त्रैलोक्यद्रावणं नाम मुखस्था परमेश्वरी ॥ ३२ ॥
भ्रूमध्यस्था महेशानि त्रैलोक्याकर्षिणी भवेत्।
ललाटस्था महेशानि त्रैलोक्यवशकारिणी ॥ ३३ ॥
ब्रह्मरन्ध्रस्थिता सैव सर्वाह्लादकरी परा।

पञ्चमुद्रामयी देवी योनिमुद्रां प्रदर्शयेत् ॥ ३४ ॥

अथ पात्रादि संस्थापनं विधाय यन्त्रं विलिखेत् -
ततोऽन्तर्यजनं कृत्वा बाह्यपूजां समाचरेत्।
तत्र प्राङ्मुख आसीनो यन्त्रोद्धारं प्रकल्पयेत् ॥ ३५ ॥
ईशानादग्निपर्यन्तं ऋजुरेखां समालिखेत्।
ईशादग्नेस्तदग्राभ्यां रेखे आकृष्य देशिकः ॥ ३६ ॥
एकीकृत्य च वारुण्यां शक्तिरेखा परा शिवे।
त्रिकोणाकाररूपं तु शक्तिद्वयमिदं शिव ॥ ३७ ॥
पूर्वशक्त्याग्रभागे तु[३] मणियष्टिवदालिखेत्।
रेखां तु परमेशानि वायुराक्षसकोणगाम् ॥ ३८ ॥
सन्धिभेदक्रमेणैव तयोः शक्त्योस्ततः परम्।
रेखे आकृष्य कोणाभ्यामुदग्रान्पूर्वगान् कुरु ॥ ३९ ॥
बह्निमण्डलमेतत्स्यात् पूर्वाग्रं सुरवन्दिते।
नवयोनिविशोभाढ्यं चक्रराजमिदं भवेत् ॥ ४० ॥
एतद् बाह्ये तु संलेख्यं वृत्तं पूर्णेन्दुसन्निभम्।
तल्लग्नमष्टपत्रं तु चतुरस्रं लिखेच्छिव ॥ ४१ ॥
चतुर्द्वारविशोभाढ्यं सर्वानन्दकरं सदा।
विलिख्य पूजयेद् यन्त्रं हेमरूपादिपट्टकैः[४] ॥ ४२ ॥
भूमौ चन्दनपीठेषु कुङ्कुमागुरुचन्दनैः।
सिन्दूररजसा वाऽपि कस्तूरीघुसृणादिभिः ॥ ४३ ॥
सुवर्णरत्नलेखन्या कल्पितं मृण्मयेऽथ वा।
विलिख्य यन्त्रं देवेशि पूजाद्रव्याणि साधयेत् ॥ ४४ ॥

अथ आधारशक्त्यादि ह्रीँ ज्ञानात्मने नमः। इत्यन्तं संपूज्य पूर्वादिकेशरेषु मध्ये च इच्छादि नवशक्तिं यजेत्।
इच्छा-ज्ञान-क्रिया चेति कामिनी कामदायिनी।
रतिप्रिया तथाऽनन्ता मदनोन्मादिनीति च ॥ ४५ ॥
एता[५]स्त्रिपुरभैरव्याः पीठशक्तिः प्रकीर्तिता।

३ मा. ख पूर्व शक्त्याग्रभावे तु पाठः।
४ हेमरूप्यादि पाठो मा. ख.।
५ एषा पाठ उचितः।

वाग्भवं लोहितं रायै श्रीकण्ठं लोहितोऽनलः ॥ ४६ ॥
दीर्घरावऐ परा पश्चादपरायै हसौँः पुनः ।
सदाशिवं महाप्रेतं ङेन्तं पद्मासनं नमः ॥ ४७ ॥
अनेन मनुना दद्यादासनं श्रीगुरुक्रमम् ।
पूर्वमध्यमयोनेश्चान्तराले पूजयेत्ततः ॥ ४८ ॥
पञ्चभिः प्रणवैर्मूर्तिं तस्यामावाह्य देवताम् ।
ततो वाक्शक्तिकमला ह् स् ख् फ्रेँ ह्सौँ पुनः ॥ ४९ ॥

अथ मूलमन्त्रान्ते बिन्दुमध्ये देव्या मूर्त्तिं सङ्कल्प्य त्रिखण्डामुद्रया पूर्ववद्देवीं ध्यात्वा चावाह्य यथोक्तरीत्या सर्वोपचारैराराध्यावरणार्चनमाचरेत् । तथा च –
अग्नीशासुरवायव्यमध्यदिक्ष्वङ्गपूजनम् ।
उत्तरस्यां द्वयं देवि दक्षिणस्यां द्वयं तथा ॥ ५० ॥
अग्रे चैव क्रमेणैकं पञ्च बाणान्ततो यजेत् ।
पञ्च कामाँस्तथा देवि बाणवत्परिपूजयेत् ॥ ५१ ॥
मध्ययोनित्रिकोणेषु तेनैव क्रमयोगतः ।
बालाबीजक्रमेणैव रतिः प्रीतिर्मनोभवा ॥ ५२ ॥

ततोऽष्टयोनिषु पूर्वादिक्रमेण स्वमन्त्रपूर्विका सुभगाद्यष्टशक्तयः ।
स्वमन्त्रान्ते महेशानि पूजनीयाष्टयोनिषु ।
सुभगा च भगा चेति तथा च भगसर्पिणी ॥ ५३ ॥
भगमालिन्यनङ्गा च अनङ्गकुसुमा तथा ।
अनङ्गरेखा चानङ्गमदना परिकीर्तताः ॥ ५४ ॥

ततोऽष्टपत्रेषु पूर्वादिक्रमेण असिताङ्गादिभिः सह ब्राह्म्याद्यष्टमातरः
मातरो भैरवाङ्कस्था मदविभ्रमविह्वला ।
अष्टपत्रेषु संपूज्या यथावत् कुसुमादिभिः ॥ ५५ ॥
तद्बहिश्चतुरस्रेषु इन्द्रादीन् तद्बहिः पुनः ।
तेषामस्त्राणि संपूज्य यथाशक्ति जपं चरेत् ॥ ५६ ॥

## अथ भैरवीस्तोत्रम्

१. स्तुत्याऽनया श्रीत्रिपुरे स्तोष्यन्तीष्टफलाप्तये ।
यया व्रजन्ति तां लक्ष्मीं मनुजाः सुरपूजिताम् ॥ ५७ ॥

२. ब्रह्मादयः स्तुतिशतैरपि सूक्ष्मरूपां
जानन्ति चैव जगदादिमनादिमूर्त्तिम्।
तस्माद्वयं कुचनतां तरकुङ्कुमाभां
स्थूलां स्तुमः सकलवाङ्मयमातृभूताम् ॥ ५८ ॥
३. सद्यः समुद्यतसहस्रदिवाकराभां
विद्याक्षसूत्रवरदाभयचिह्नहस्ताम्।
तत्रोत्पलैस्त्रिभिरलङ्कृतवज्रपद्मां
त्वां तारहाररूचिरां त्रिपुरे भजामि ॥ ५९ ॥
४. सिन्दूरपूररुचिरं कुचभारनम्रं
जन्मान्तरेषु कृतपुयण्फलैकगम्यम्।
अन्योन्यभेदकलहाकुलमानसास्ते
जानन्ति किं जडधियस्तव रूपमम्ब ॥ ६० ॥
५. स्थूलां वदन्ति मुनयः श्रुतयो गृणन्ति,
सूक्ष्मां वदन्ति वचसामधिवासमन्ये।
त्वां मूलमाहुरपरे जगतां भवानि,
मन्यामहे वयमपारकृपाम्बुराशिम् ॥ ६१ ॥
६. चन्द्रावतंसकलितां शरदिन्दुशुभ्रां
पञ्चादशाक्षरमयीं हृदि भावयामि।
त्वां पुस्तकजपवटीममृताढ्यकुम्भं
व्याख्यां च हस्तकमलैर्दधतीं त्रिनेत्राम् ॥ ६२ ॥
७. शम्भुस्त्वमद्रितनयाकलितार्धभागो,
विष्णुस्त्वमेव कमलापरिबद्धदेहः।
पद्मोद्भवस्त्वमसि वागधिवास भूमि-
स्तेषां क्रिया च जगति त्रिपुरे त्वमेव ॥ ६३ ॥
८. आश्रित्य वाग्भवभवाँश्चतुरः परादीन्।
भारान् पदेष्वविहितान् समुदीरयन्तीम्।
कण्ठादिभिश्च करणैः परदेवतां त्वां
संविन्मयीं हृदि कदापि न विस्मरामि ॥ ६४ ॥
९. आकुञ्च्य वायुमवजित्य च वैरिषट्क-
मालोक्य निश्चलधिया निजनासिकाग्रम्।
ध्यायन्ति मूर्ध्नि कलितेन्दुकलावतंसं

त्वद्रूपमम्ब कृतिनस्तरुणार्कमित्रम् ॥ ६५ ॥

१०. त्वं प्राप्य मन्मथरिपोर्वपुरर्धभागं,
सृष्टिं करोषि जगतामितिवेदवादः।
सत्यं तदद्रितनये जगदेकमात-
र्नोचेदशेषजगतां स्थितिरेव न स्यात् ॥ ६६ ॥

११. पूजां विधाय कुसुमैः सुरपादपानां
पीठे तवाम्ब कनकाञ्चलगह्वरेषु।
गायन्ति सिद्धवनिताः सह किन्नरीभि
रास्वादिताऽऽसतरसारुणनेत्रपद्मा ॥ ६७ ॥

१२. विद्युद्विलासवपुषः श्रियमुद्वहन्तीं
यान्तीं स्ववासभवनाच्छिवराजधानीम्।
शम्भोश्च वक्त्रकमलानि विकासयन्तीं
देवीं भजे हृदि परामृतसिक्तगात्रीम् ॥ ६८ ॥

१३. आनन्त्यजन्मभवसंभवनं श्रुतीनां
चैतन्यमात्रवपुषं तव चाश्रयामि।
ब्रह्मेन्द्रविष्णुभिरूपासितपादपद्मां
सौभाग्यजन्मवसतीं त्रिपुरे यथावत् ॥ ६९ ॥

१४. शब्दार्थभावितवनं सृजतीन्दुरूपा
या तद्विभर्ति पुनरर्कतनुः स्वशक्त्या।
बाह्यात्मिका हरति तत्सकलं युगान्ते,
तां शारदां मनसि जातु न विस्मरामि ॥ ७० ॥

१५. नारायणीति नरकार्णवतारणीति,
गौरीति खेदशमनीति सरस्वतीति।
ज्ञानप्रदेति नयनत्रयभूषितेति
त्वमद्रिराजतनयेति बुधा वदन्ति ॥ ७१ ॥

१६. ये स्तुवन्ति जगन्मातः श्लोकैर्द्वादशभिः[६] क्रमात्।
त्वामनुप्राप्य वाक्सिद्धिं प्राप्नुयुस्ते परां गतिम् ॥ ७२ ॥[७]

---

६ श्लोकैः पञ्चदशैः पाठ उचितः।

७ इतपरं इति भैरवीस्तवराजः समाप्तः इति पाठो मा. क. ख.

## अथ त्रिपुरभैरवीकवचम्

नमस्त्रिपुरभैरव्यै । श्री पार्वत्युवाच ।
देवदेव महादेव सर्वशास्त्रविशारद ।
कृपां कुरु जगन्नाथ धर्मज्ञोऽसि महामतिः ॥ ७३ ॥
सुन्दरी या पुरा प्रोक्ता विद्या त्रिपुरपूर्विका ।
तस्यास्तु कवचं दिव्यं मह्यं कथय तत्त्वतः ॥ ७४ ॥
तस्यास्तद्वचनं श्रुत्वा जगाद जगदीश्वरः ।
अद्भुतं कवचं देव्याः सुन्दर्यादिविरूपि वै ॥ ७५ ॥

## श्रीईश्वर उवाच

कथयामि महाविद्याकवर्चं सर्वदुर्लभम् ।
श्रृणुष्व त्वं च विधिना श्रुत्वा गौप्यं त्वयाऽपि तत् ॥ ७६ ॥
यस्याः प्रसादात्सकलं विभर्मि भुवनत्रयम् ।
यस्याः सर्वं समुत्पन्नं यस्यामद्यापि तिष्ठति ॥ ७७ ॥
माता पिता जगन्मान्या जगद्रक्षास्वरूपिणी ।
सिद्धिदात्री च सिद्धा स्यादसिद्धा दुष्टजन्तुषु ॥ ७८ ॥
सर्वभूतहितकरी सर्वभूतस्वरूपिणी ।
कः कारः[८] पातु मां देवी कामिनी कामदायिनी ॥ ७९ ॥
ऐँकारी पातु मां देवी मूलाधारस्वरूपिणी ।
ईकारी पातु मां देवी सवैश्वर्य सुखप्रदा ॥ ८० ॥
लकारी पातु मां देवी इन्द्राणी वरबल्लभा ।
ह्रीं कारी पातु मां देवी सर्वत्र शम्भुसुन्दरी ॥ ८१ ॥
एतैर्वर्णैर्महामाया शाम्भवी पातु मस्तकम् ।
ककारे पातु मां देवी शर्वाणी हरगेहिनी ॥ ८२ ॥
मकारे पातु मां देवी सर्वपापप्रणाशिनी ।
ककारे पातु मां देवी कामरूपधरा शिवा ॥ ८३ ॥
ककारे पातु मां देवी शम्बरारिप्रिया सदा ।
लकारी पातु मां देवी धराधरणीरूपधृक् ॥ ८४ ॥
ह्रींकारी पातु मां देवी शङ्करार्धशरीरिणी ।

---

८ ककारी पाठ उचितः ।

एतैर्वर्णैर्महामाया कामराजप्रियाऽवतु ॥ ८५ ॥
मकारी पातु मां देवी सावित्री सर्वदायिनी ।
ककारी पातु सर्वत्र कलास्वरस्वरूपिणी ॥ ८६ ॥
लकारी पातु मां देवी लक्ष्मीः सर्वसुलक्षणा ।
ह्रींकारी पातु सर्वत्र देवी त्रिभुवनेश्वरी ॥ ८७ ॥
एतैर्वर्णैर्महामाया पातु शक्तिस्वरूपिणी ।
वाग्भवं मस्तकं पातु वदनं कामराजिका ॥ ८८ ॥
शक्तिस्वरूपिणी पातु हृदयं मन्त्रसिद्धिदा ।
सुन्दरी सर्वदा पातु सुन्दरी परिरक्षतु ॥ ८९ ॥
रक्तवर्णा सदा पातु सुन्दरी सर्वदायिनी ।
नानालङ्कारसंयुक्ता सुन्दरी पातु सर्वदा ॥ ९० ॥
सर्वाङ्गसुन्दरी पातु सर्वत्र शिवदायिनी ।
जगदाह्लादजननी शम्भुरूपा च मां सदा ॥ ९१ ॥
सर्वमन्त्रमयी पातु सर्वसौभाग्यदायिनी ।
सर्वलक्ष्मीमयी देवी परमानन्ददायिनी ॥ ९२ ॥
पातु मां सर्वदा देवी नाना शङ्खनिधिः शिवा ।
ततः पद्मनिधिर्देवी शर्वाणी सर्वदायिनी ॥ ९३ ॥
दक्षिणामूर्ति मां पातु ऋषिः सर्वत्र मस्तके ।
पङ्क्तिश्छन्दः स्वरूपा तु मुखे पातु सुरेश्वरी ॥ ९४ ॥
गन्धाष्टकात्मिका पातु हृदये शाङ्करी सदा ।
सर्वसम्मोहिनी पातु संक्षोभिणी सदाऽवतु ॥ ९५ ॥
सर्वविद्राविणी पातु सर्वाकर्षणकारिणी ।
सर्वाह्लादकरी पातु सर्वसंक्षोभिणी सदा ॥ ९६ ॥
सर्वसिद्धिप्रदा पातु सर्वाकर्षणकारिणी ।
क्षोभिणी सर्वदा पातु वशिनी मां सदाऽवतु ॥ ९७ ॥
आकर्षिणी सदा पातु संमोहिनी सदाऽवतु ।
रतिर्देवी सदा पातु भगा मां सर्वदाऽवतु ॥ ९८ ॥
माहेश्वरी सदा पातु कौमारी सर्वदाऽवतु ।
सर्वाह्लादनकारी मां पातु सर्ववशङ्करी ॥ ९९ ॥
क्षोभङ्करी सदा पातु सर्वाङ्गसुन्दरी सदा ।
सर्वाङ्गयुवतिः पातु सर्वसौभाग्यदायिनी ॥ १०० ॥

वाग्देवी सर्वदा पातु वारिणी सर्वदाऽवतु ।
वशिनी सर्वदा पातु महासिद्धिप्रदा सदा ॥ १०१ ॥
सर्वविद्राविणी पातु गणनाथः सदाऽवतु ।
दुर्गादिवी सदा पातु बटुकः सर्वदाऽवतु ॥ १०२ ॥
क्षेत्रपालः सदा पातु पातु चाधारशक्तिका ।
अनन्तः सर्वदा पातु वराहः सर्वदाऽवतु ॥ १०३ ॥
पृथिवी सर्वदा पातु स्वर्णसिंहासनं तथा ।
रक्तामृतं च सततं पातु मां सर्वकालतः ॥ १०४ ॥
सुधार्णवः सदा पातु कल्पवृक्षः सदाऽवतु ।
श्वेतछत्रं सदा पातु रक्तदीपः सदाऽवतु ॥ १०५ ॥
नन्दनोद्यानसततं पातु मां सर्वसिद्धये ।
दिक्पालाः सर्वदा पान्तु इन्द्राद्याः सकलास्तथा ॥ १०६ ॥
वाहनानि सदा पान्तु अस्त्राणि पान्तु सर्वदा ।
शस्त्राणि सर्वदा पान्तु योगिन्यः पान्तु सर्वदा ॥ १०७ ॥
सिद्धाः पान्तु सदा देवी सर्वसिद्धिप्रदाऽवतु ।
सर्वाङ्गसुन्दरी देवी सर्वत्र सर्वदाऽवतु ॥ १०८ ॥
आनन्दरूपिणी देवी चित्स्वरूपा चिदात्मिका ।
सर्वाङ्गसुन्दरी पातु सुन्दरी भवसुन्दरी ॥ १०९ ॥
पृथग्देवालये घोरे सङ्कटे दुर्गमे गिरौ ।
अरण्यप्रान्तरे वाऽपि पातु मां सुन्दरी शिवा ॥ ११० ॥
इदं कवचमित्युक्तं मन्त्रोद्धारश्च पार्वति ।
यः पठेत्प्रयतो भूत्वा त्रिसन्ध्यं नियतः शुचिः ॥ १११ ॥
तस्य सर्वार्थसिद्धिः स्याद्यद्यन्मनसि वर्तते ।
गोरोचनाकुङ्कुमेन रक्तचन्दनकेन वा ॥ ११२ ॥
स्वयम्भूकुसुमैः शुक्लैर्भूमिपुत्रे शनैश्चरे ।
श्मशाने प्रान्तरे वाऽपि शून्यागरे शिवालय ॥ ११३ ॥
सशक्त्या गुरुणा यन्त्रं पूजयित्वा कुमारिकाः ।
तन्मनुं पूजयित्वा च गुरुपङ्क्तिं विशेषतः ॥ ११४ ॥
पूजयित्वा यथाशक्ति स्तुत्वा च विधिनाऽमुना ।
धारयेद् गुरुणा यन्त्रं पूजयित्वा कुमारिकाः ॥ ११५ ॥
तद्योनौ पूजयित्वा च गुरुपङ्क्तिं तथैव च ।

देव्यै बलिं निवेद्याथ नरमार्जारशूकरैः ॥ ११६ ॥
नकुलैर्महिषैर्मेषैः पूजयित्वा विधानतः ।
धृत्वा सुवर्णमध्यस्थं कण्ठे वा मस्तके भुज ॥ ११७ ॥
सुतिथौ शुभनक्षत्रे सूर्यस्योदयने तथा ।
धारयित्वा च कवचं सर्वसिद्धिं लभेन्नरः ॥ ११८ ॥
कवचस्य च माहात्म्यं नाहं वर्षशतैरपि ।
शक्नोमि न महेशानि वक्तुं तस्य फलं च यत् ॥ ११९ ॥
नास्ति चौरभयं तस्य न तत्र व्याधिपीडनम् ।
न दुर्भिक्षभयं तत्र न चापि पीडनं सदा ॥ १२० ॥
विघ्नप्रशमनं सर्वं सर्वव्याधिविनाशनम् ।
सर्वरक्षाकरं जन्तोश्चतुर्वर्गफलप्रदम् ॥ १२१ ॥
यत्र तत्र न वक्तव्यं न दातव्यं कदाचन ।
मन्त्रं प्राप्य विधानेन पूजयेत् सततं सुधीः ॥ १२२ ॥
तत्रापि दुर्लभं मन्ये कवचं देवरूपिणम् ।
गुरोः प्रसादमासाद्य विद्यां प्राप्य सुगोपिताम् ॥ १२३ ॥
तत्रापि कवचं दिव्यं दुर्लभं भुवनत्रये ।
श्लोकं वास्तवमेनं वा यः पठेत्प्रयतः शुचिः ॥ १२४ ॥
तस्य सर्वार्थसिद्धिः स्याच्छङ्करेण प्रभाषितम् ।
गुरुर्देवो हरः साक्षात् पत्नी तस्य च पार्वती ॥ १२५ ॥
अभेदेन यजेद्यस्तु तस्य सिद्धिरदूरतः ॥ १२६ ॥

*इति विश्वसारतन्त्रे त्रिपुरभैरवीकवचं समाप्तम् ।*

## अथ बटुकस्य

माया च बटुकं ङेऽन्त मापदुद्धारणाय च ।
कुरुद्वयं च बटुकाय ह्रीं प्रकृतिवर्णकः ॥ १२७ ॥
बृहदारण्यकमुनिश्छन्दोऽनुष्टुप्च देवता ।
भैरवो ह्रीं बीजं शक्तिः आः कीलकमुदाहृतम् ॥ १२८ ॥

**अथ षडङ्गन्यासः**

षड्दीर्घयुक्तया शक्त्या वकारेण च तद्द्वयम् ।
अन्यानि जातियुक्तानि प्रणवाद्यानि कल्पयेत् ॥ १२९ ॥

दीप्तशुभ्राम्बरां भीतिं किङ्किणीजालनूपुरैः ॥ १३० ॥
युतं रत्नमयैः स्मेरवदनं कुटिलालकम् ।
दक्षे शूलं परं दण्डं दधन्तं बटुरूपिणम् ॥ १३१ ॥
द्विभुजं संस्मरेद्देवं कार्यार्थं सात्त्विकं द्विजैः ।
वैष्णवस्तु चतुर्बाहुं जटामुकुटधारिणम् ॥ १३२ ॥
त्रिशूलपाशदण्डाँश्च दधन्तञ्च कमण्डलुम् ।
वामी वामे कपालञ्च दक्षे दण्डं विचिन्तयेत् ॥ १३३ ॥

## समाप्तश्चायं त्रिपुरभैरव्याः क्रमः

अथ महालक्ष्मीक्रमो लिख्यते ।
तत्र पीठन्यासान्तं कर्म विधाय ऋष्यादिन्यासमाचरेत् । तद्यथा -
संशोध्य मनुना पाणिं प्रणवाद्यं हृदन्तकम् ।
अङ्गुलीषु क्रमान्मन्त्री विन्यसेद्बीजपञ्चकम् ॥ १३४ ॥
मन्त्रस्य संन्यसेन्मन्त्री तलयोरुभयोरपि ।
मूर्धादिचरणं यावन्मन्त्रेण व्यापकं न्यसेत् ॥ १३५ ॥
शेषं सप्तार्णकं मन्त्री विन्यसेद्दृष्टि धातुषु ।
पञ्च बीजैः पञ्चमन्त्री शेषैः षष्ठ तु कल्पयेत् ॥ १३६ ॥
चतुर्थ्यन्तैर्ज्ञानमुख्यैर्युक्तं चापि षडङ्गकम् ।
ज्ञानैश्वर्ये शक्तिबले वीर्यं तेजश्च षट् क्रमात् ॥ १३७ ॥
एवं न्यस्तमनुर्मन्त्री चित्तयेदिष्टदेवताम् ।
आदौ स्मरेत्समुद्यानं सर्वर्तु प्रतिशोभितम् ॥ १३८ ॥
मञ्जुलैर्भुर्जपत्रैश्च रसालैः श्रीद्रुमैरपि ।
तालैस्तमालैर्हीतालैः शालैश्च बकुलैरपि ॥ १३९ ॥
कर्कन्धुबन्धुबीजैश्च चम्पकैरुपशोभितम् ।
मन्दान्दोलितकर्पूर कदलीदलमण्डितम् ॥ १४० ॥[९]
अशोकसरलानाग कोविदारमनोरमम् ।
मल्लिका- यूथिका-कुन्दमदयन्ती सुगन्धिका ॥ १४१ ॥
द्राक्षावल्ली नागवल्लीमाधवीदेवदारुभिः ।
नमेरुभिर्लवङ्गैश्च बकुलैस्तिलकैस्तथा ॥ १४२ ॥
शोभितकर्णिकारैश्च चन्दनैर्रक्तचन्दनैः ।

९ मा. क. ऋष्यादि ब्रह्मगायत्रीमलक्ष्म्याः प्रकीर्तिता इति अधिकः पाठः ।

वञ्जुलैर्मातुलुङ्गैश्च दाडिमिलकुचैः शुभम् ॥ १४३ ॥
नारिकेलैश्च खर्जूरैः पूगैः कुरवकैर्वृतम् ।
मालती केतकी जाति पारन्ती तुलसीवृतम् ॥ १४४ ॥
नन्दावर्तैर्दमनकैः सर्वर्तुकुसुमोज्ज्वलम् ।
प्रमदैः पिचुमर्देश्च मन्दारैरुपशोभितम् ॥ १४५ ॥
शिरीषैः पनसैरुच्चैर्लाखोटैः[10] कुटजैर्घनैः ।
अवेगगमनस्पृष्टं सुमनो गन्धवंजुलम् ॥ १४६ ॥
महासनं तस्य मध्ये स्मरेन्मन्त्री मनोरमम् ।
भ्रमद्भ्रमरमालाभिरलङ्कृतचतुर्दिशम् ॥ १४७ ॥
केकीकेकारपाकीर्णं लक्ष्मणा सारसावृतम् ।
वरव्यहंससंघातं चक्रकारण्डकोज्ज्वलम् ॥ १४८ ॥
फुल्लैः सरसिजैर्रम्यैः कल्हारैः केरवैरपि ।
नीलेन्दीवरसङ्घैश्च सुगन्धिकुसुमैर्वृतम् ॥ १४९ ॥
सर्वर्तुशोभिकल्पद्रूवनमण्डितमुज्ज्वलम् ।
पुलिनं तत्र तन्मध्ये रत्नमण्डपकुट्टिमम् ॥ १५० ॥
समद्यदर्कसन्दोहकिरणद्युतिभास्वरम् ।
हिमरश्मिकरव्रातसिक्तामृतसुशीतलम् ॥ १५१ ॥
प्रोल्लसद्गलितस्वर्णप्राकारसुमनोहरम् ।
नवरत्नमयप्रोद्यत्कपालाट्टालिकावृतम् ॥ १५२ ॥
नूतनोद्यन्महारत्नरचितोत्तुङ्गगोपुरम् ।
तप्तगलितहेमौघदण्डध्वजसमूहकम् ॥ १५३ ॥
वैदूर्यादिमहारत्नरचितस्तम्भराजितम् ।
सन्तप्तस्वर्णरचितगवाक्षशतसङ्कुलम् ॥ १५४ ॥
हेमदण्डस्फुरद्द्वीपसहस्रसुमनोहरम्[11] ।
नानाविधक्षौमवस्त्ररचिताभिश्च काञ्चनैः ॥ १५५ ॥
सक्षुद्रघटिकायुक्तपताकाभिरथावृतम्[12] ।
शरद्राकासुधारश्मिदुकूलरचितैः शुभैः ॥ १५६ ॥
विचित्र वसनोद्भूतैर्युतं चन्द्रातपैरपि ।

---

१० मा. ख शाखोटैः पाठः ।
११ ...?
१२ मा. ख्क समुद्रघटिका पाठः ।

काञ्चनोर्वीमणिप्रातकुट्टिमाऽलङ्कृतं शुभम् ॥ १५७ ॥
घनसारागुरुनख[13]कस्तूरी कुङ्कुमैरपि ।
तमालैर्द्रव्यजातैश्च सुगन्धीभिरथेतरैः ॥ १५८ ॥
आमोदितचतुर्द्वारं मण्डपं प्रविचिन्तयेत् ।
तदन्तः पारिजातस्य मूलं सिंहासनं नवम् ॥ १५९ ॥
नानारत्नगणाकीर्णे तत्र देवीं विचिन्तयेत् ।
कालभास्वरसत्कान्तिं शशिशेखरमण्डिताम् ॥ १६० ॥
मुक्ताहारोज्ज्वलां रम्यां रत्नाकल्पविभूषिताम् ।
हस्ताम्भोजैश्च विभ्राणां नूतनां शालिमञ्जरीम् ॥ १६१ ॥
पद्मद्वयं कौस्तुभं च सस्मितास्य ससेरुहाम् ।
विकचोत्पलसंशोभिलोचनत्रयशोभिताम् ॥ १६२ ॥
क्वणन्नूपुरसंस्फुल्लरक्तोत्पलपदद्वयाम् ।
नितम्बविम्बविलसद्रसभादाममञ्जुलाम् ॥ १६३ ॥
बलित्रयलसद्वेदिमध्यदेशसुशोभिताम् ।
गम्भीरावर्त्तकन्नाभि गदमण्डलमण्डिताम् ॥ १६४ ॥
यक्षकर्दमसंलिप्त[14]पीनोन्नतघनस्तनीम् ।
कुम्भिकुम्भोद्भव[15]प्रोद्यन्मुक्तादामविराजिताम् ॥ १६५ ॥
क्षौमोत्तरासङ्गपतीं पुष्पदामसुभूषिताम् ।
माणिक्यस्वर्णखचितैर्वैदूर्याद्यङ्गदोज्ज्वलाम् ॥ १६६ ॥
काञ्चनोद्यत्पद्मरागमणिसम्बद्धकङ्कणाम् ।
नानाविधलसद्रत्नमुद्रिकालङ्कृताङ्गुलीम् ॥ १६७ ॥
कम्बुकण्ठकलारावां स्वर्णग्रैवेयराजिताम् ।
विचित्रनानालङ्काराऽलङ्कृताङ्गीं सुविस्मिताम् ॥ १६८ ॥
उद्यदर्कप्रभाभास्वद्रत्नतारङ्क शोभिताम् ।
कर्णपूरीकृतस्वर्णबद्धरत्नाङ्कुरां शुभाम् ॥ १६९ ॥
प्रवालविलसत्कान्तिरुचिराधरपल्लवाम् ।
शिखरप्रोल्लसद्रम्यदशनावलिशोभिताम् ॥ १७० ॥
विदर्भाञ्छनशरद्राका ताराधिपशुभाननाम् ।
पञ्चसायककोदण्डविलास्यधिकचिल्लिकाम् ॥ १७१ ॥

१३ मा. ख. घनसारागुरुनखाः पाठः ।
१४ मा. ख संदीप्त पाठः ।
१५ कुन्तोद्भव मा. ख पाठः ।

विभ्राणां नासिकां प्रोद्यत्तिलपुष्पोज्ज्वलोद्यताम् ।
शीतांशुसकलाकाररुचिरालिकराजिताम् ॥ १७२ ॥
घनसौगन्धसम्पन्नमृगनाभिविशेषताम् ।
मनाक्कुञ्चितसस्निग्धनीलमञ्जुलमूर्धजाम् ॥ १७३ ॥
पारिजातद्रुकुसुमगन्धवाहिसुमूर्धजाम् ।
तप्तहाटकसंबद्धनानारत्नौघशेखराम् ॥ १७४ ॥
सौन्दर्यभूमेरवधिं तेजसां जन्मभूमिकाम् ।
विलासलक्ष्मीभवनं महालक्ष्मीं विचिन्तयेत् ॥ १७५ ॥
वामाधः करमारम्य ध्यायेद्दक्षकरावधि ।
आयुधानि महालक्ष्म्याः कराम्बुजगतानि च ॥ १७६ ॥
धर्मादिकल्पिते पीठे भूपुरद्वारशोभिते ।
दलाष्टके केशराढ्ये कर्णिकायां यजेदिमाम् ॥ १७७ ॥
विभूतिरुन्नतिः कान्तिः सृष्टिः कीर्तिश्च सन्ततिः ।
पुष्टिरुत्कृष्टिर्ऋद्धिश्च संप्रोक्ता नव शक्तयः ॥ १७८ ॥
दद्याद्बीजेनाऽऽसनं च स्वाणुना मूर्त्तिकल्पनम् ।
दक्षभागे यजेद्देव्या गणपञ्चान्यतस्तथा ॥ १७९ ॥
सुमनो जालहस्तं च पुष्पाभरणमर्चयेत् ।
अङ्गानि पूजयेदादौ यथास्थानं च मन्त्रवित् ॥ १८० ॥
अष्टपत्रे स्थिता पूज्या उमा श्रीश्च सरस्वती ।
दुर्गा धरणीगायत्र्यौ देव्युषा चेति शक्तयः ॥ १८१ ॥
नानालङ्करणाढ्याः स्युरम्भोजद्वयपाणयः ।
अङ्घ्रिप्रक्षालनार्थं च प्रोद्यत्तेजन्हुसूर्यज ॥ १८२ ॥
पूजनीये प्रयत्नेन कराभ्यां धृतचामरे ।
निधी पूज्यौ च वरुणं पश्चिमे छत्रधारिणम् ॥ १८३ ॥
परितश्च यजेद्राशीन् ग्रहाद्रवततोऽर्चयेत् ।
चतुर्दन्तान्दिग्गजाँश्च यजेदाशा सुमन्त्रवित् ॥ १८४ ॥
लोकपालाँस्तदस्त्राणि तत्तद्बाह्ये यजेत्पुनः ॥ १८५ ॥

## अथ लक्ष्मीस्तोत्रम्

**अगस्तिरुवाच**

१. मातर्नमामि कमले कमलायताक्षि,

श्रीविष्णुहृत्कमलवासिनि विश्वमातः।
क्षीरोदजे कमलकोमलगर्भगौरि
लक्ष्मी प्रसीद सततं नमतां शरण्य ॥१८६॥

२. त्वं श्रीरूपेन्द्रसदने मदनैकमात-
ज्योत्स्नाऽसि पूर्णतरचन्द्रमनोहराख्ये।
सूर्यप्रभासि च जगत्त्रितये प्रभासि
लक्ष्मी प्रसीद सततं नमतां शरण्य ॥१८७

३. त्वं जातवेदसि सदा दहनात्तशक्ति-
र्वेद्यस्त्वया जगदियं सकलं विदध्यात्।
विश्वम्भरोऽपि विभृयादखिलं भवत्या
लक्ष्मी प्रसीद सततं नमतां शरण्य ॥१८८॥

४. त्वद्भक्तमेतदमले हरते हरोऽपि,
त्वं पासि हंसि विदधासि पराऽपरासि।
इन्द्रो बभूव हरिरस्यमले त्वदाप्त्या
लक्ष्मी प्रसीद सततं नमतां शरण्य ॥१८९॥

५. शूरः स एव स बुधः स गुणी स धन्यः,
मान्य स एव गुणरूपकलाकलापैः।
एकः शुचिः स हि पुमान्सकलेऽपि लोके,
यात्रापतत्तव शुभे करुणाकराक्षः ॥१९०॥

६. यस्मिन् वसेत् क्षणमहोः पुरुषे गजेऽश्वे,
स्त्रैणे तृणे सरसि देवकुले गृहेऽब्जे।
रत्ने पतत्त्रिणि पशौ शयने धरायां
स श्रीकमेव कमले तदिहास्ति नान्यत् ॥१९१॥

७. त्वत्सृष्टमेव सकलं शुचितामुपैति,
त्वत्त्यक्तमेतदखिलं त्वशुचीह लक्ष्मी।
त्वन्नामयत्र च सुमङ्गलमेव तत्र,
श्रीविष्णुपत्नि कमले कमलालयेति।१९२॥

८. लक्ष्मीं श्रियं च कमलां कमलालयां च,
पद्मां रमां नलिनयुग्मकरां च मां च।
क्षीरोदजाममृतकुम्भकरेन्दिरां च
विष्णुप्रियामिति सदा जपतां क्व दुःखम्॥

९.	इति स्तुत्वा भगवतीं महालक्ष्मीं हरिप्रियाम् ।
प्रणनाम सपत्नीकः साष्टाङ्गदण्डवन्मुनिः ॥ १९४ ॥

## श्रीरुद्र उवाच

उत्तीष्ठोत्तीष्ठ भद्रं ते मित्रावरुणसम्भवे ।
पीतते त्वं भूमिश्रेष्ठे लोपामुद्रे शुभव्रत ॥ १९५ ॥

**अगस्त्य उवाच**[१६]

यदि देयो वरो मह्यं वरयोग्योऽस्म्यहं यदि ।
ये पीठक्ष्यन्ति च स्तोत्रं त्वद्भक्त्या सत्कृतं सदा ॥ १९६ ॥
तेषां कदाचित्सन्तापो मास्तु मास्तु दरिद्रता ।
मास्तु चेष्टवियोगश्च विच्छेदो मास्तु संततः ॥ १९७ ॥
सर्वत्र विजयश्चास्तु मास्तु संपत्तिसंक्षयः ।

**श्रीरुवाच**

एवमस्तु मुने सर्वं यत्त्वया परिभाषितम् ॥ १९८ ॥
एतत्स्तोत्रस्य पठनं मम सान्निध्यकारणम् ।
अलक्ष्मीः कालकर्णी च तद्गेहे न विशेत्क्वचित् ॥ १९९ ॥
गजाश्वपशुशान्त्यर्थमेतत्स्तोत्रं सदा पठेत् ।
बालग्रहाभिभूतानां बालानां शन्तिकृत्परम् ॥ २०० ॥
भूर्जपत्रे लिखित्वा च बध्नीयात्कण्ठदेशतः ।
इदं बीजरहस्यं मे रक्षनीयं प्रयत्नतः ॥ २०१ ॥
श्रद्धाहीनं न दातव्यं न देयं चाशुचौ क्वचित् ॥ २०२ ॥

*इति श्रीलक्ष्मीस्तोत्रं सम्पूर्णम् ।*

## अथ लक्ष्मीकवचम्

१.	अथ वक्ष्ये महेशानि कवचं सर्वकामदम् ।
यस्य विज्ञानमात्रेण भवेत् साक्षात्सदाशिवः ॥ २०३ ॥

१६	स्तुत्याऽनया प्रसन्नाऽहं व्रीयतां यदभीप्सितम् । व्यास उवाच- इति श्रुत्वा व्यासमुनिः प्रत्युवाच श्रियं ततः । प्रणिपत्य महाभागो भक्तिगर्भमिदं वचः ॥ इति मा. ख. अधिकः पाठः ।

२.	अर्चनं पूजनं तस्या मत्रजापं जपेन्नरः।
स भवेत् पार्वतीपुत्रः सर्वशास्त्रपुरस्कृतः ॥ २०४ ॥
३.	विद्यावताऽर्थिना सेव्या विशेषे विष्णुवल्लभा ॥ २०५ ॥

अस्य श्री चतुरक्षरी विष्णुवनिताकवचस्य भगवान् श्रीशिव ऋषिः अनुष्टुप्छन्दः, वाग्भवी देवता, वाग्भवं बीजं, लज्जाशक्तिः रमा कीलकं, कामबीजात्मकं कवचं मम स्वकवित्व-पाण्डित्यसर्वसमृद्धये विनियोगः।

४.	ऐँकारो मस्तके पातु वाग्भवी सर्वसिद्धिदा।
ह्रीँ पातु चक्षुषोर्मध्ये चक्षुर्युग्मे च शाङ्करी ॥ २०५ ॥
५.	जिह्वायां मुखवृत्ते च कर्णयोर्दन्तयोर्नसि।
ओष्ठाधरे दन्तपङ्क्तौ तालुमूले हनौ पुनः ॥ २०६ ॥
६.	पातु मां विष्णुवनिता लक्ष्मीः श्रीवर्णरूपिणी।
कर्णयुग्मे भुजद्वन्द्वे स्तनद्वन्द्वे च पार्वति ॥ २०७ ॥
७.	हृदये मणिबन्धे च ग्रीवायां पार्श्वयोः पुनः।
पृष्ठदेशे तथा गुह्ये वामे च दक्षिणे तथा ॥ २०८ ॥
८.	उपास्थे च नितम्बे च नाभौ जङ्घद्वये पुनः।
जानुचक्रे पदद्वन्द्वे गुटिकेऽङ्गुलिमूलके[१७] ॥ २०९ ॥
९.	स्वधातुप्राणशक्त्यां मे सीमन्त्यां मस्तके पुनः।
सर्वाङ्गे पातु कामेशी महादेवी समुन्नतिः ॥ २१० ॥
१०.	व्युष्टिः पातु महामाया उत्कृष्टिः सर्वदाऽवतु।
व ऋद्धिः पातु मे देवी सर्वत्र शम्भुबल्लभा ॥ २११ ॥
११.	वाग्भवी सर्वदा पातु पातु मां हरगेहिनी।
रमा पातु सदा देवी पातु माया स्वरात् स्वयम् ॥ २१२ ॥
१२.	सर्वाङ्गे पातु मां लक्ष्मीर्विष्णुमाया सुरेश्वरी।
विजया पातु भवने जया पातु सदा मम ॥ २१३ ॥
१३.	शिवदूती सदा पातु सुन्दरी पातु सर्वदा।
भैरवी पातु सर्वत्र भारुण्डा[१८] सर्वदाऽवतु ॥ २१४ ॥
१४.	त्वरिता पातु मां नित्यमुग्रतारा सदाऽवतु।

---

१७	मा. ख गुटिकेऽङ्गुलिमूलके पाठः।
१८	मा. ख भीरुण्डा पाठः परं भेरुण्डा पाठ उचितः।

पातु मां कालिका नित्यं कालरात्री सदाऽवतु ॥ २१५ ॥
१५. वनदुर्गा सदा पातु कामाख्या सर्वदाऽवतु ।
योगिन्यः सर्वता पान्तु मुद्रा पातु सदा मम ॥ २१६ ॥
१६. मात्राः पान्तु सदा देव्याश्चक्रस्था योगिनीगणाः ।
सर्वत्र सर्वकार्येषु सर्वकर्मसु सर्वदा ॥ २१७ ॥
१७. पातु मां देवदेवेशी लक्ष्मीः सर्वसमृद्धिदा ।
इति ते कवचं दिव्यं कथितं सर्वसिद्धय ॥ २१८ ॥
१८. यत्र तत्र न वक्तव्यं यदीच्छेदात्मनो हितम् ।
शठाय भक्तिहीनाय निन्दकाय महेश्वरि ॥ २१९ ॥
१९. न्यूनाङ्गेनातिरिक्तेन दर्शयेन्न कदाचन ।
न स्तवं दर्शयेद्दिव्यं सन्दर्श्य शिवहा भवेत् ॥ २२० ॥
२०. कुलीनाय महेशाय दुर्गाभक्तिपराय च ।
वैष्णवाय विशुद्धाय दद्यात् कवचमुत्तमम् ॥ २२१ ॥
२१. निजशिष्याय शान्ताय धर्मिणे ज्ञानिने तथा ।
शनौ मङ्गलवारे च रक्तचन्दनकैस्तथा ॥ २२२ ॥
२२. यावकैश्च लिखेन्मन्त्रं सर्वमन्त्रसमन्वितम् ।
विलिखेत् कवचं दिव्यं स्वयम्भूकुसुमैः शुभै ः ॥ २२३ ॥
२३. स्वशुक्रैः परशुक्रैश्च नानागन्धसमन्वितैः ।
गोरोचना कुङ्कुमेन रक्तचन्दनकेन वा ॥ २२४ ॥
२४. सुतिथौ शुभयोगे वा श्रवणायां रवेर्दिने ।
अश्विन्यां कृत्तिकायां वा फाल्गुन्यां च मघासु च ॥ २२५ ॥
२५. पूर्वभाद्रपदायोगे स्वात्यां मङ्गलवासरे ।
विलिखेत् प्रपठेत्स्तोत्रं शुभयोगे सुरालय ॥ २२६ ॥
२६. आयुष्मान् प्रीतियोगे च ब्रह्मयोगे विशेषतः ।
इन्द्रयोगे शुभयोगे शुक्रयोगे तथैव च ॥ २२७ ॥
२७. कौलवो वालवे चैव वणिजे चैव सत्तमे ।
शून्यागारे श्मशाने वा विपिने च विशेषतः ॥ २२८ ॥
२८. कुमारीः पूजयित्वा च यजेद्देवीं सनातनीम् ।
मत्स्यैर्मांसैः शाकसूपैः पूजयेत्परदेवताम् ॥ २२९ ॥
२९. घृताद्यैश्चोपकरणैर्धूपदीपैर्विशेषतः ।
ब्राह्मणान् भोजयित्वा च पूजयेत् परमेश्वरीम् ॥ २३० ॥

३०. आखेटकमुपाख्यातं तत्र कुर्याद्दिनत्रयम्।
तदा भवेत् महारक्षा शङ्करेण च भाषितम् ॥ २३१ ॥
३१. मारणद्वेषणादीनि लभते नात्रसंशयः।
स भवेत् पार्वतीपुत्रः सर्वशास्त्रबहिः कृतः ॥ २३२ ॥
३२. गुरुर्देवो हरः साक्षात् पत्नी तस्य हरप्रिया।
अभेदेन यजेद्यस्तु तस्य सिद्धिर्न दूरतः ॥ २३३ ॥
३३. पठति य इह मर्त्यो नित्यमार्द्रान्तरात्मा,
जपफलमनमेनं लप्स्यतेऽसौ विधेयम्।
स भवति पदमुच्चैः संपदां पादनम्रः
क्षितिपमुकुटलक्ष्मीर्लक्षणानां चिराय ॥ २३४ ॥

*इति विश्वसारतन्त्रे लक्ष्मीकवचं सम्पूर्णम्*

अथातः संप्रवक्ष्यामि नारायणमहामनुम्।
नमो नारायणायेति ताराद्योऽष्टाक्षरमनुः ॥ २३५ ॥
छन्दश्च देवी गायत्री साध्ये नारायणे मुनिः।
देवता परमात्माऽस्या पञ्चाङ्गविधिरुच्यत ॥ २३६ ॥
कुब्जोऽल्कश्च महोल्कश्च अविरोल्को द्युल्क एव च।
सहस्रोल्कश्चतुर्थ्यन्तः स्वाहान्तो हेति संयुतैः ॥ २३७ ॥
पञ्चाङ्गमन्त्राः संप्रोक्ता अङ्गुष्ठादावपि न्यसेत्।
किरीटहारकेयूरमकराकृतिकुण्डलम् ॥ २३८ ॥
शङ्खचक्रगदापद्महस्तं पीताम्बरावृतम्।
श्रीवत्सालङ्कृतं वक्षस्थलश्रीभूमिसंयुतम् ॥ २३९ ॥
आत्मज्योतिसंप्रदीप्तसहस्रदिव्यतेजसम् ॥ २४० ॥

## समाप्ताश्चायं महालक्ष्मीक्रमः

अथ मातङ्गीक्रमो लिख्यते।
अथ वक्ष्ये महादेवी मातङ्गीं सर्वसिद्धिदाम्।
अस्याः सेवनमात्रेण वाक्सिद्धिं लभते ध्रुवम् ॥ २४१ ॥
प्रणवं च ततो मायां कामबीजं च कूर्चकम्।
मातङ्गी ङेयुता चास्त्रं वह्निजायावधिर्मनुः ॥ २४२ ॥

ऋषिः स्याद्दक्षिणामूर्तिर्विराट्छन्द उदीरितम् ।
मातङ्गीदेवता देवी सर्वसिद्धिप्रदायिनी ॥ २४३ ॥
अङ्गन्यासकरन्यासौ कुर्यान्मन्त्री समाहितः ।
षड्दीर्घभाजा बीजेन प्रणवाद्येन कल्पयेत् ॥ २४४ ॥
षट्कोणाष्टदलं पद्मं लिखेद्यन्त्रं मनोरमम् ।
एतस्मिन् पूजयेत्पीठे नवशक्तिः क्रमादिमकाः ॥ २४५ ॥
विभूतिरुन्नतिः कान्तिः सृष्टिः कीर्तिश्च सन्ततिः ।
व्युष्टिरुत्कृष्टिऋद्धिश्च मातङ्गी पदपश्चिमा ॥ २४६ ॥
सर्वान्ते शक्ति कमलासनाय नम इत्यथ ।
वाक्शक्तिः लक्ष्मीबीजाद्यो मनुरासनमेलकः ॥ २४७ ॥
तत्र पूजा प्रकर्तव्या जवापुष्पेण मन्त्रवित् ।
अष्टशक्तिश्चाष्टदले प्रजपेत् सुसमाहितः ॥ २४८ ॥
रतिः प्रीतिर्मनोभवा क्रियाश्रद्धा च शक्तयः ।
अनङ्गकुसुमाऽनङ्गमदना मदनालसा ॥ २४९ ॥
इत्यष्टशक्तीः संपूज्य उपहारसमन्वितः ।
ततो देवीं परां ध्यायेत् साधकः स्थिरमानसः ॥ २५० ॥

श्यामाङ्गीं शशिशेखरां त्रिनयनां सद्रत्नसिंहासने,
संस्थां रत्नविचित्रभूषणयुतां संक्षीणमध्यस्थलाम् ।
आपीनस्तनमण्डलां स्मितमुखीं ध्यायेद्दधन्तीं क्रमात्
वेदैर्बाहुभिरंकुशासिलतिके पाशं तथा खेटकम् ॥ २५१ ॥
एवं ध्यात्वा महादेवीं गन्धपुष्पैर्मनोहरैः ।
नैवेद्यं तु महादेव्यै पायसं शर्करान्वितम् ॥ २५२ ॥

### अथ मातङ्गीस्तोत्रम्

आराध्यमातश्चरणाम्बुजां ते ब्रह्मादयोविश्रुतकीर्तिमायुः ।
अन्ये परं वाग्विभवं मुनीन्द्राः परां श्रियं भक्तिभरेण चान्य ॥ २५३ ॥
नमामि देवीं नव चन्द्रमौलीं
मातङ्गिनीं चन्द्रकलावतंसाम् ।
आम्नायवाग्भिः प्रतिपादितार्थाम्
प्रबोधयन्तीं शुकमादरेण ॥ २५४ ॥

विनम्रदेवासुरमौलिरत्नै-
र्नीराजितं ते चरणारविन्दम्।
भजन्ति ये देवि महीपतीनां
भजन्ति तेषां पतिमादरेण[१९] ॥ २५५ ॥
मातङ्गलीलागमने भवत्या
सिंजान मञ्जीरमिषद् भजन्ति।
मातस्त्वदीयं चरणारविन्दं
अकृत्रिमाणां वचसां निगूढम् ॥ २५६ ॥
पदात्पदं सिञ्जत[२०]नूप्रराभ्यां
कृतार्थयन्तीं पदवीं पदाभ्याम्।
आस्फालयान्तीं करबल्लकीनां
मातङ्गिनी मद्धृदयं धुनोतु ॥ २५७ ॥
नीलांशुकाऽऽबद्धनितम्बविम्बां
नालीदलेनार्पित कर्णभूषाम्।
माध्वीमदाघूर्णित नेत्रपद्मां
घनस्तनीं शम्भूबधूं नमामि ॥ २५८ ॥
तडिल्लताकान्तमलक्ष्यभूषं
चिरेण लक्ष्यैर्नवरोमराज्या।
स्मरामि भक्त्या जगतामधीशे
बलित्रयाङ्कं तव मध्यविम्बम् ॥ २५९ ॥
नीलोत्पलानां श्रियमावहन्तीं
कान्त्याः कटाक्षैः कमलाकराणाम्।
कदम्बमालाञ्चितकेशपाशां
मतङ्गकन्यां हृदि भावयामः ॥ २६० ॥
ध्यायेयमारक्तकपोलकान्तं
विम्बाधरन्यस्त ललामरम्याम्।
अलोललीलायत मायताक्षं
मदस्मितं ते वदनं महेशि ॥ २६१ ॥
स्तुत्याऽनया शङ्करधर्मपत्नीं

---

१९ सन्ततिमादरेण पाठः उचितः।
२० शिञ्चितः पाठ उचितः।

मातङ्गिनीं वागधिदेवतानाम्।
स्तुवन्ति ये भक्तियुता मनुष्याः
परां श्रियं नित्यमुपाश्रियन्ति ॥ २६२ ॥

*इति मातङ्गीस्तोत्रं सम्पूर्णम्।*

**अथास्याः कवचम्**

**श्रीभैरव उवाच**

१. श्रृणु देवि प्रवक्ष्यामि मातङ्गीकवचं शुभम्।
गोपनीयं महादेवि मौनं जाप्यं समाचरेत् ॥ २६३ ॥

**श्रीदेव्युवाच**

२. साधु साधु महादेव कथयस्व महेश्वर।
येन सम्यग्विधानेन साधकानां जयं भवेत् ॥ २६४ ॥
३. विना ध्यानं विना मन्त्रं विना होमं विना बलिम्।
येन स्मरणमात्रेण साधको धरणीपतिः ॥ २६५ ॥

**श्रीभैरव उवाच**

४. मातङ्गीकवचं दिव्यं सर्वरक्षाकरं नृणाम्।
कवित्वं च धनित्वं च गजवाजिसुखानि च ॥ २६६ ॥
सुखदं शुभदं सत्यमणिमादिप्रदायकम्।
ब्रह्मविष्णुमहेशानां तेषामाद्या महेश्वरी ॥ २६७ ॥
श्लोकार्धं श्लोकमेकं वा ये तु सम्यक् पठेन्नरः।
तस्य हस्ते सदैवास्ति राजलक्ष्मीर्न संशयः ॥ २६८ ॥
उच्छिष्टवदनो भूत्वा कमलासनसंस्थितः।
योनिमुद्रां करे बद्ध्वा शक्तिध्यानपरायणः ॥ २६९ ॥
ब्रह्मरन्ध्रं समानीय ह्युच्छिष्टनामसंस्थिताम्।
ललाटं रक्ष मां नित्यं महाचाण्डालिनीति च ॥ २७० ॥
नेत्राभ्यां सुमुखी रक्षेद्देवी रक्षतु नासिकाम्।
महापिशाचिनी चास्मान् मुखे रक्षतु सर्वदा ॥ २७१ ॥
लज्जा रक्षतु मां दन्ते चाष्टः सन्मार्जने करौ।
चिबुके कण्ठदेशे च ठकारत्रितयं ततः ॥ २७२ ॥

सविसर्गमहादेवी हृदयं पातु सर्वदा।
नाभौ रक्षतु मां नित्यं कालिका रक्तलोचना ॥ २७३ ॥
उदरे पातु चामुण्डा लिङ्गे कात्यायनी तथा।
उग्रचण्डा गुदे पातु पादौ रक्षतु चाम्बिका ॥ २७४ ॥
भुजौ रक्षतु शर्वाणी हृदयं च विभीषणा।
जिह्वायां मातृका रक्षेत् पूर्वे रक्षतु पुष्टिका ॥ २७५ ॥
उत्तरे कृत्तिका रक्षेद् विद्या रक्षतु पश्चिमे।
विजया दक्षिणे रक्षेत् मेधा रक्षतु वाग्नय ॥ २७६ ॥
नैर्ऋत्यां प्रज्ञया रक्षेद्वायव्यां पातु रक्षणा[२१]।
ईशान्यां रक्ष मां देवी मातङ्गी शुभकारिणी ॥ २७७ ॥
ऊर्ध्वं पातु महादेवी देवतां हितकारिणी।
पाताले पातु मां नित्यं वासुकी विश्वरूपिणी ॥ २७८ ॥
कण्ठदेशे स्वराः पान्तु आज्ञाचक्रे तु हक्षकम्।
ककारादि ठकारान्तं द्वादशान्ते हृदि प्रियाम्[२२] ॥ २७९ ॥
मणिपुरे डादिहान्त[२३] दशवर्णस्वरूपिणी।
षट्पत्रे च षड् वर्णा बादिलान्ताः[२४] सदाऽवतु ॥ २८० ॥
वादिशान्तं सदा देवि चतुष्पत्रेषु रक्षतु।
ॐ क्रीं श्रीं प्रीं प्रीं द्रीं द्रीं ठः ऐं ठः स्वाहा
इमं मन्त्रं समुच्चार्य धारयेद्वामके भुज ॥ २८१ ॥
कण्ठे वा धारयेद्यस्तु स च देवो महेश्वरः।
तं दृष्ट्वा देवताः सर्वे प्रणमन्ति सुदूरतः ॥ २८२ ॥
तस्य तेजः प्रभावेण गन्तुं चैव न शक्यते।
इन्द्रादीनां भजेत्सत्त्व[२५] भूषतिः सेवकोपमः ॥ २८३ ॥
इच्छासिद्धिर्भवेत्तस्य ह्यणिमादि[२६]स्तथैव च।
कीर्तिं च कवितां लक्ष्मीं मारणादिनि यानि च ॥ २८४ ॥
स सदा भजते राजां कदाचिद् भक्तिपूजनात्।

---

२१ मा. ख. लक्षणा पाठः।
२२ हरिप्रिया पाठ उचितः।
२३ डादिफान्तं पाठ उचितः।
२४ बादिलान्तं पाठ उचितः।
२५ तस्य पाठ उचितः।
२६ अणिमादि पाठो मा. ख,।

अज्ञात्वा कवचं देवि सुमुखी यो जपेन्नरः ॥ २८५ ॥
तस्य नश्यन्ति देवेशि योगिन्यो भक्षयन्ति तम् ।
इहलोके दुःखभागी परे मूको भविष्यति ॥ २८६ ॥
जन्मकोटि सदा मूको मन्त्रसिद्धिं न विन्दति ।
गुरुपादं पुरस्कृत्य यदा मन्त्रं लभेत् सुधीः ॥ २८७ ॥
तदा तु कवचं देवि सकलं गुरुसेवया ।
इहलोके नृपो भूत्वा परे मुक्तिमवाप्नुयात् ॥ २८८ ॥
न बोध्येत् परशिष्याय दुर्जनाय सुरेश्वरी ।
मन्दकाय कुशीलाय शक्तिहिंसापराय च ॥ २८९ ॥
यो ददाति स पापिष्ठो मातङ्गीकवचं शुभम् ।
पिबन्तु रुधिरं तस्य योगिन्यो भक्षयन्तु[२७] तम् ॥ २९० ॥
तस्माद्रहस्यं परमं सर्वसिद्धिं लभन्ति ते ।
गोप्याद्गोप्यतरं गोप्यं गुह्याद् गुह्यतरं मतम् ॥ २९१ ॥
न प्रकाश्यमिदं भद्रे प्राणैः कण्ठगतैरपि ।
पूजाकोटि समं स्तोत्रं स्तोत्रकोटि समो जपः ॥ २९२ ॥
जपकोटि समं ध्यानं ध्यानकोटि समो[२८] लयः ।
लयकोटि इमा[२९] विद्या न प्रकाश्यं कदाचन ॥॥ २९३ ॥

*इति गुह्यकालीतन्त्रे मातङ्गीकवचं सम्पूर्णम् ।*

## अथ सदाशिवस्य

तारमायाधराबीजपूर्वः पञ्चाक्षरो मनुः ।
अष्टवर्णे भवेदस्य वामदेवो मुनिर्मतः ॥ २९४ ॥
देवः सदाशिवः प्रोक्तः पङ्क्तिश्छन्द उदाहृतम् ।
मायाप्रासादबीजाभ्यां भेदिताभ्यां च षट्स्वरैः ॥ २९५ ॥
षड्भिस्तथा मन्त्रवर्णैः षडङ्गानि सजातिभिः ।
दयात्ततश्च सिन्दूरारुणं स्मेरं त्रिलोचनम् ॥ २९६ ॥
टङ्कं मृगं तथा देवीमालिङ्गन्तं वरप्रदम् ।

---

२७ मा. क. ख. भक्षयन्ति पाठ ।

२८ मा. क. ख. समं पाठः ।

२९ लयकोटिसमा पाठ उचितः ।

हस्तैश्चतुर्भिरारक्तपद्मं च दधतीं करैः ॥ २९७ ॥
पीनवृत्तघनोत्तुङ्गस्तनां वामाङ्कसंस्थिताम् ।
रक्तपद्मसमासीनां रक्तस्रग्गन्धलेपनाम् ॥ २९८ ॥

## अथ भुवनेश्वरीक्रमो लिख्यते

तत्र पीठन्यासान्तं कर्म विधाय ऋष्यादिन्यासं कुर्यात् ।
ऋषिः शक्तिर्भवेच्छन्दो गायत्री देवता मनोः ।
कथिता सुरसङ्घेन सेविता भुवनेश्वरी ॥ २९९ ॥
षड्दीर्घयुक्तबीजेन कुर्यादङ्गानि षट् क्रमात् ।
संहार-सृष्टिमार्गेण मातृकान्यस्तविग्रहः ॥ ३०० ॥
मन्त्रन्यासं ततः कुयाद्देवताभावसिद्धये ।
हृल्लेखामूर्ध्नि वदने गगनां हृदयाम्बुज ॥ ३०१ ॥
रक्तां करालिकां गुह्ये महोच्छूष्मां पदद्वये ।
ऊर्ध्वप्राग्दक्षिणोदीच्यपश्चिमेषु मुखेषु च ॥ ३०२ ॥
सद्यादिह्रस्वबीजाढ्या न्यस्तव्या भूतसप्रभा ।
अङ्गानिविन्यसेत्पश्चाज्जातियुक्तानि षट् क्रमात् ॥ ३०३ ।
ब्रह्माणं विन्यसेद् भाले गायत्र्या सह संयुतम् ।
सावित्र्या संयुतं विष्णुं कपोले दक्षिणे न्यसेत् ॥ ३०४ ॥
वागीश्वर्या समायुक्तं वामगण्डे महेश्वरम् ।
श्रिया धनपतिं न्यस्येद् वामकर्णाग्रके पुनः ॥ ३०५ ॥
रत्या स्मरं मुखे न्यस्य पुष्ट्या गणपतिं न्यसेत् ।
सद्यः कर्णोपरि निधिः कर्णगण्डान्तरालयोः ॥ ३०६ ॥
न्यस्तव्यै वदने मूलं भूयश्चेतान्ततो न्यसेत् ।
कण्ठमूले स्तनद्वन्द्वे वामांशे हृदयाम्बुज ॥ ३०७ ॥
सव्यांशे पार्श्वयुगले नाभिदेशे च देशिकः ।
भालांशपार्श्वजठरे पार्श्वांशोपरिके हृदि ॥ ३०८ ॥
ब्रह्मण्याद्याः स्ततो न्यस्य विधिना प्रोक्तलक्षणा ।
मूलेन व्यापकं देहे न्यसेद्देवी विचिन्तयेत् ॥ ३०९ ॥
उद्यद्दिनद्युतिमिन्दुकिरीटां तुङ्गकुचां नयनत्रययुक्ताम्
स्मेरमुखीं वरदाङ्कुशपाशाभीतिकरां प्रभजां भुवनेशीम् ॥ ३१० ॥
प्रजपेन्मन्त्रविन्मन्त्रं द्वाविंशल्लक्षमानतः ।

त्रिस्वद्धक्तैः प्रजुहुयादष्टद्रव्यैर्दशांशतः ॥ ३११ ॥
दद्यादर्घ्यं दिनेशाय तत्र सिञ्चन्त्य पार्वतीम् ।
पद्ममष्टादलं बाह्ये वृतं षोडशभिर्दलैः ॥ ३१२ ॥
विलिखेत्कर्णिकामध्ये षट्कोणमति सुन्दरम् ।
ततः संपूजयेत्पीठं नवशक्तिसमन्वितम् ॥ ३१३ ॥
जयाख्या विजया पश्चादजिताद्वाऽपराजिता ।
नित्या विलासिनी दोग्ध्री अघोरा मङ्गला नव ॥ ३१४ ॥
बीजाढ्यमासनं दत्त्वा मूर्त्तिं तेनैव कल्पयेत् ।
तस्यां संपूजयेद्देवीमावाह्यावरणैः क्रमात् ॥ ३१५ ॥
मध्ये प्राग्याम्यसौम्येषु पश्चिमेषु यथाक्रमात् ।
हृल्लेखाद्याः समभ्यर्च्याः पञ्चभूतसमप्रभाः ॥ ३१६ ॥
वरपाशाङ्कुशाभीतिध्यरिण्योऽमितभूषणाः ।
स्थानेषु पूर्वमुक्तेषु पूजयेदङ्गदेवताः ॥ ३१७ ॥
षट्कोणेषु यजेन्मन्त्री पश्चान्मिथुनदेवताः ।
इन्द्रकोणे लसद्दण्डकुण्डिकाक्षगुणाभयाम् ॥ ३१८ ॥
गायत्रीं पूजयेन्मन्त्री ब्रह्माणमपि तादृशम् ।
रक्षकोणे चक्रशङ्खगदापङ्कजधारिणीम् ॥ ३१९ ॥
सावित्रीं पीतवसनां यजेद् विष्णुं च तादृशम् ।
वायुकोणे परश्वक्षमालाभयवरान्विताम् ॥ ३२० ॥
यजेत्सरस्वती मिच्छां रुद्रं तादृशलक्षणाम् ।
वह्निकोणे यजेद्रत्नकुम्भं मणिकदण्डकम् ॥ ३२१ ॥
कराभ्यां विभ्रतं पीतं तुण्दिलं धननायकम् ।
आलिङ्गय सव्य हस्तेन वामेनाम्बुजधारिणीम् ॥ ३२२ ॥
धनदाङ्कसमारूढां महालक्ष्मीं प्रपूजयेत् ।
वारुणे मदनं बाणपाशाङ्कुशशरासनम् ॥ ३२३ ॥
धारयन्तं जपारक्तं[३०] पूजयेद्रत्नभूषणम् ।
सव्येन पतिमाश्लिष्य वामेनोत्पलधारिणीम् ॥ ३२४ ॥
पाणिना रमणाङ्कस्थां रतिं सम्यक् समर्चयेत् ।
ऐशाने पूजयेत् सम्यक् विघ्नराजं प्रियान्वितम् ॥ ३२५ ॥
शृणिपाशधरं कान्तावराङ्गस्पृक्कराऽङ्गुलीम् ।

---

३० रक्तजपां पाठ उचितः ।

माध्वीपूर्णकपालाढ्यं विघ्नराजं दिगम्बरम् ॥ ३२६ ॥
पुष्करे विगलद्रत्न स्फुरच्चषकधारिणम् ।
सिन्दुरसदृशाकारामुद्दाममदविभ्रमाम् ॥ ३२७ ॥
धृतरक्तोत्पलामन्यपाणिना तद्ध्वजस्पृशाम् ।
आश्लिष्टकान्तामरुणां पुष्टिमर्धेदिगम्बराम् ॥ ३२८ ॥
कण्डिकायां निधी पूज्यौ षट्कोणोभयपार्श्वयोः ।
अङ्गानि केशरेष्वेताः पश्चात्पत्रेषु पूजयेत् ॥ ३२९ ॥
अनङ्गकुसुमा पश्चादनङ्गकुसुमातुरा ।
अनङ्गमदना पश्चादनङ्गमदनातुरा ॥ ३३० ॥
भुवनपाला गगनवेगा चैव ततः परम् ।
शक्तिरेखा च गगनरेखा चैवाष्टशक्तयः ॥ ३३१ ॥
पाशाङ्कुशवराभीतिधारिण्योऽरुणविग्रहाः ।
ततः षोडशपत्रेषु कराली विकराल्युमाः ॥ ३३२ ॥
सरस्वती श्रीदुर्गैषा लक्ष्मीश्रुत्यौ स्मृतिर्धृतिः ॥
श्रद्धा मेधा रतिः कान्तिरार्या षोडशशक्तयः ॥ ३३३ ॥
खड्गखेटकधारिण्यः श्यामाः पूज्याश्च मातरः ।
पद्माद्बहिः समभ्यर्च्याः शक्तयः परिचारिकाः ॥ ३३४ ॥
प्रथमाऽनङ्गरूपा स्यादनङ्गमदना ततः ।
मदनातुरा गगनवेगा तथा भुवनपालिकाः ॥ ३३५ ॥
स्यात्सर्वशिशिराऽनङ्गवेदनाऽनङ्गमेखला ।
चषकं तालवर्त्तं च ताम्बुलं छत्रमुज्ज्वलम् ॥ ३३६ ॥
चामरं चांशुकं पुष्पं विभ्राणाः करपङ्कजैः ।
सर्वाभरणसन्दिष्टान्दिक्पालान्[३१] बहिर्यजेत् ॥ ३३७ ॥
वज्रादीनि च तद्बाह्ये देवीमित्थं प्रपूजयेत् ॥ १३८ ॥

## अथ भुवनेश्वरीस्तोत्रम्

१. अथानन्दमयीं साक्षात् शब्दब्रह्मस्वरूपिणीम् ।
ईडे सकलसम्पत्यै जगत्कारणमम्बिकाम् ॥ ३३९ ॥

२. आद्यामशेषजननीमरवृन्द[३२]योने-

---

३१ तद् बहिर्यजेत् इति पाठ उचितः ।

३२ वृन्द पाठो मा. क.ख. ।

र्विष्णोः शिवस्य च वपुः प्रतिपादयित्रीम्।
सृष्टि-स्थिति-लयकरीं जगतां त्रयाणां
स्तुत्वा शिवां विमलयाम्यहमम्बिके त्वाम् ॥ ३४० ॥

३. पृथ्व्या[३३] जलेन शिखिना मरुतां वरेण
होत्रेन्दुना दिनकरेण च मूर्तिभाजः।
देवस्य मन्मथरिपोरपिशक्तिमत्ता-
हेतुस्त्वमेव खलु पर्वतराजपुत्रि ॥ ३४१ ॥

४. त्रिस्रोतसः सकललोकसमर्चिताय
वैशिष्ट्यकारणमयैभि तदेव मातः।
त्वत्पादपङ्कजपरागपवित्रितासु
शम्भोर्जटासु सततं परिवर्तनं यत् ॥ ३४२ ॥

आनन्दयेत् [३४]कुमुदिनीमधिपः कलानां
नाभ्यासिन कमलिनीमथनेतराम्बा।
एकस्य मोदनविधौ परमेक ईष्टे
त्वञ्च प्रपञ्चमभिनन्दयसे[३५] सुदृष्ट्या ॥ ३४३ ॥

अद्याप्यशेषजगतां नव यौवनाऽसि,
शैलाधिराजतनयाऽयतिकोमलाऽसि।
एषां प्रसूरपि तथा न समीक्षिताऽसि
ध्येयाऽसि गौरि मनसा न पथि स्थिताऽसि ॥ ३४४ ॥

आसाद्य जन्म मनुजेषु चिराहुरापं
तत्रापि पारवमवाप्य निजेन्द्रियाणाम्।
नाभ्यर्चयन्ति जगतां जनयित्रि तेषां
निश्रेणिकाग्रमधिरुह्य पुनः पतन्ति ॥ ३४५ ॥

कर्पूरचूणहिमवारिविलोडितेन
ये चन्दनेन कुसुमैश्च सुजातगन्धैः।
आधारयन्ति हि भवानि सुमुत्सुकास्त्वां
ते खल्वशेष भुवनाधिभुवः प्रथन्त ॥ ३४६ ॥

आविश्य मध्यपदवीं प्रथमे सारेजे
सुप्ता हि राजसदृशारिव चर्य्यविश्वम्।

३३ पृथ्वी पाठो मा. क. ख.

३४ मा. क नान्यासिन पाठः।

३५ मा. क. मभिपन्नयसि मा. ख. मभिपत्रन्नयासि पाठः।

विद्युल्लतावलयविभ्रमभुद्भवन्ती
पद्मानि पञ्चरिह न पृथमश्नुवाता ॥ ३४७ ॥
तन्निर्गतामृतरसैरभिषिच्य गात्रं
मार्गेण तेन विलयं पुनरप्यवाप्ता।
येषां हृदि स्फुरसि जातु न ते भवेयु-
र्मातर्महेश्वर कुटुम्बिनिगर्भजातः[३६] ॥ ३४८ ॥
आलम्बिकुन्तलभवामभिरामवक्त्रा-
मापीवरस्तनतटीं तनुवृत्तमध्याम्।
चित्ताक्षसूत्रकलशालिखिताढ्यहस्ता-
मावर्तयामि मनसा तव गौरमूर्त्तिम् ॥ ३४९ ॥
आस्थाय योगमवजित्य च वैरिषट्क -
माबध्य चेन्द्रियगणं मनसि प्रसन्ने।
पाशाङ्कुशाभयवराढ्य करांशुवक्त्रा-
मालोकयन्ति भुवनेश्वरि योगिनस्त्वाम् ॥ ३५० ॥
उत्तप्तहाटकनिभैः करिभिश्चतुर्भि-
रावर्जितामृतघटैरभिषिच्यमाना।
हस्तद्वयेन नलिने रुचिरे वहन्ती-
पद्माऽपि साभयवरा भवसि त्वमेव ॥ ३५१ ॥
अष्टाभिरुग्रविविधायुधवाहनीभि[३७]-
दौर्वल्लरीभिरधिरुह्य मृगाधिराजम्।
दूर्वादलद्युतिरमर्त्यविपक्षपक्षा-
न्न्यक्कुर्वती त्वमसि देवि भवानि दुर्गा ॥ ३५२ ॥
आविर्निदाघजलशीकरशोभिवक्त्रां
गुञ्जागणेन परिकल्पितहार यष्टिम्।
शुभ्रांशुकामसितकान्तिमनङ्गतन्त्रा-
माद्यां पुलिन्दतरुणीमसकृत् स्मरामि ॥ ३५३ ॥
हँसैर्गतैरसितनूपुरदूरहस्तै-
र्मूर्तैरिवाप्य वचनैरनुगम्यमाना।
पद्मादिवोद्ध्र्वमुखरूढसुजातचालौ

३६ गर्भभाज मा. क पाठ।
३७ वाहनामि पाठ उचितः।

श्रीकण्ठ पत्नि शिरसैव दधे तवाङ्घ्रिम् ॥ ३५४ ॥
द्वाभ्यां समीत्तु मददृप्तमतेव दृष्ट्वा
मुत्पाद्य भालनयनं वृषकेतनेन ।
सान्द्रानुरागतरलेन निरीक्ष्यमाणे
जङ्घे उभे अपि भवानि तवाऽऽनतोऽस्मि ॥ ३५५ ॥
ऊरु स्मरामि जितहस्तिकरावलेपौ
स्थौल्येन मार्दवतया परिभूतरस्रौ ।
स्रोणीभरस्य सहनोपरि कल्पवन्तौ
तं भावयामि वयसा तव मध्यमिव ॥ ३५६ ॥
श्रोण्यो स्तनौ च युगपत्प्रथयिष्यतोच्चै-
र्बाल्यात्परेण वयसा परिहृष्टसारः ।
रोमावलीविलसितेन विभाव्यमूर्त्ति-
मन्यस्तव स्फुरतु मे हृदयस्य मध्ये ॥ ३५७ ॥
सङ्ख्या स्मरस्य हरनेत्र हुताशभीरो-
लावण्यवारि भरितं नवयौवनेन ।
आपाद्य दन्तमिव पल्वलमप्रधृष्यं
नाभिं कदापि तव देवि न विस्मरेयम् ॥ ३५८ ॥
ईशोपगूहपिशुनं भसितं दधाने
काश्मीरकुङ्कुममभूस्तनपङ्कजे ते ।
स्नानोस्थितस्य करिणः क्षणरक्षफेनौ
सिन्दूर तौ स्मरयतः समदस्य कुम्भौ ॥ ३५९ ॥
कश्चातिरिक्तगलदुज्ज्वलकान्तिधार-
शोभौ भुजौ निजरिपोर्मकरध्वजेन ।
कण्ठग्रहाय रचितौ किल दीर्घपाशौ
मातर्मम श्रुतिपथं न विलङ्घयेत ॥ ३६० ॥
नात्यायतं रचितमम्बुतिलामचौर्य-
भूषाभरेण विविधेन विराजमानम् ।
कण्ठं मनोहरगुणं गिरिराजकन्ये,
सञ्चिन्त्य तृप्तिमुपयामि कदापि नाहम् ॥ ३६१ ॥
अत्यायताक्षमभिजातललाटपट्टं
मन्दस्मितेन दलफुल्लकपोलरेखम् ।

विद्याधरं वदनमुन्नतदीर्घनासं
यस्ते स्मरत्यसकृदेव स एव जातः ॥ ३६२ ॥
आदिस्तुषारवरलेखमनल्पगन्ध-
पुष्पोपरि भ्रमदलिब्रजनिर्विशेषम् ।
यश्चेतसा कलयते तव केशपाशं
तस्य स्वयं गलति देवि पुराशपाशः ॥ ३६३ ॥
श्रुतिसुचरितपाशं धीमतां स्तोत्रमेतत् ।
पठति य इह मर्त्यो नित्यमार्द्रान्तरात्मा ।
स भवति पदमुच्चैः संपदां पादनम्रं
क्षितिपमुकुटलक्ष्मीर्लक्ष्मणानां चिराय ॥ ३६४ ॥

*इति भुवनेश्वरी स्तोत्रम् ।*

## अथ भुवनेश्वरीकवचम् ।

**देव्युवाच**

१. भुवनेश्याश्च देवेश या या विद्या प्रकाशिता ।
श्रुताश्चाधिगताः सर्वाः श्रोतुमिच्छामि साम्प्रतम् ॥ ३६५ ॥
२. त्रैलोक्यं मङ्गलं नाम कवचं यत्पुरोदितम् ।
ईश्वर उवाच ।
पार्वति श्रृणु वक्ष्यामि सावधानाऽवधारय ॥ ३६६ ॥
३. त्रैलोक्यमङ्गलं नाम कवचं मन्त्रविग्रहम् ।
सिद्धविद्यामयं देवि सर्वैश्वर्यप्रदायकम् ॥ ३६७ ॥
४. पठनाद्धारणान्मर्त्यस्त्रैलोक्यैश्वर्यभाग्भवेत् ।
त्रैलोक्यमङ्गलस्यास्य कवचस्य ऋषिः शिवः ॥ ३६८ ॥
५. छन्दो विराड् जगद्धात्री देवता भुवनेश्वरी ।
धर्मकामार्थमोक्षेषु विनियोगः प्रकीर्तितः ॥ ३६९ ॥
६. ह्रीं बीजं मे शिरः पातु भुवनेशी ललाटकम् ।
ऐँ पातु दक्षनेत्रं मे ह्रीं पातु वामलोचनम् ॥ ३७० ॥
७. श्रीं पातु दक्षकर्णं मे त्रिवर्णात्मा महेश्वरी ।
वामकर्णौ सदा पातु ऐँ घ्राणं पातु मे सदा ॥ ३७१ ॥
८. ह्रीं पातु वदनं देवी ऐँ पातु रसनां मम ।

वाक् त्रिपुरा त्रिवर्णात्मा कण्ठं पातु पराम्बिका ॥ ३७२ ॥
९. श्रीं स्कन्धौ पातु नियतं ह्रीं पातु सर्वदा[३८] भुजौ ।
क्लीं करौ त्रिपुरेशानी त्रिपुरैश्वर्यदायिनी ॥ ३७३ ॥
१०. आँ पातु हृदयं ह्रीं मे मध्यदेशं सदाऽवतु ।
क्रौं पातु नाभिदेशं सा त्र्यक्षरी भुवनेश्वरी ॥ ३७४ ॥
११. सर्वबीजं सदा पृष्ठं पातु सर्ववशङ्करी ।
ह्रीं पातु गुह्यदेशं मे नमो भगवती कटीम् ॥ ३७५ ॥
१२. माहेश्वरी सदा पातु सक्थिनी[३९] जानुयुग्मक् ।
अन्नपूर्णा सदा पातु स्वाहा पातु पदद्वयम् ॥ ३७६ ॥
१३. सा मां दशाक्षरी पायादन्नपूर्णाऽखिलं वपुः ।
तारं माया रमा कामः षोडशार्णा ततः परम् ॥ ३७७ ॥
१४. शिरस्था सर्वदा पातु विंशत्यर्णात्मिका सदा ।
तारं दुर्गे युगं[४०] रक्ष स्वाहेति च दशाक्षरी ॥ ३७८ ॥
१५. जय दुर्गा घनश्यामा पातु मां सर्वतो[४१] मुदा ।
मायाबीजात्मिका चैषा दशार्णा च ततः परा ॥ ३७९ ॥
१६. प्रतप्त काञ्चनाभासा जयदुर्गाऽऽ...................... ।
तारं ह्रीं दुँ दुर्गायै नमोऽष्टार्णात्मिका परा ॥ ३८० ॥
१७. शङ्खचक्रधनुर्बाणधरा मां दक्षिणेऽवतु ।
महिषमर्दिनी[४२] स्वाहा वसुवर्णात्मिका परा ॥ ३८१ ॥
१८. नैऋत्यां सर्वदा पातु महिषासुरनाशिनी ।
माया पद्मावती स्वाहा सप्तार्णा परिकीर्तता ॥ ३८२ ॥
१९. पद्मावती पद्मसंस्था पश्चिमे मां सदाऽवतु ।
पाशाङ्कुशपुटा माये हि परमेश्वरि स्वाहा ॥ ३८३ ॥
२०. त्रयोदशार्णा ताराद्या साऽश्वारूढाऽननेऽवतु ।
सरस्वती पञ्चसरो नित्यक्लिन्ने मदद्रव ॥ ३८४ ॥
२१. स्वाहा रत्यक्षरी नित्या मामुत्तरे सदाऽवतु ।
तारं माया च कवचं खे च रक्षेत्ततो बधूः ॥ ३८५ ॥

---

३८ मा. क. ख. भुजौ सर्वदा पाठः । छन्दो रक्षणाय पदव्यत्यय आवश्यकः ।

३९ शक्तिर्मे पाठ उचितः ।

४० मा. ख. दुर्गयुगं पाठ । तारदुर्गे युगं रक्षिणी स्वाहेति दशाक्षरी पाठ अन्यत्र ।

४१ पूर्वतो पाठ अन्यत्र ।

४२ मा. ख महिषमर्दिनि (संबोधने), पाठः ।

२२. क्रूँ क्षे क्रीं फट्[४३] महाविद्या द्वादशार्णाऽखिलप्रदा।
अरिष्टात्वादिभिः[४४] पायाच्छिवकोणे सदा च माम् ॥ ३८६ ॥
२३. ऐँ क्लीं सौः सा ततो बाला मामूर्ध्वदेशतोऽवतु।
बिन्द्वन्ता भैरवी बाला भूमौ मां सर्वदाऽवतु ॥ ३८७ ॥
२४. इति ते कवचं पुण्यं त्रैलोक्यमङ्गलं परम्।
सारात्सारतरं पुण्यं महाविद्यौघविग्रहम् ॥ ३८८ ॥
२५. अस्यापि पठनात्सद्यः कुबेरोऽपि धनेश्वरः।
इन्द्राद्याः सकला देवा धारणात्पठनाद्यतः ॥ ३८९ ॥
२६. सर्वसिद्धीश्वराः सन्तः सर्वैश्वर्यमवाप्नुयुः।
पुष्पाञ्जल्यष्टकं दद्यान्मूलेनैव पृथक् पृथक् ॥ ३९० ॥
२७. संवत्सरशतायास्तु पूजायाः फलमाप्नुयात्।
प्रीतिमन्योन्यतः कृत्वा कमला निश्चला गृह ॥ ३९१ ॥
२८. वाणी च निवसेद् वक्त्रे सत्यं सत्यं न संशयः।
यो धारयति पुण्यात्मा त्रैलोक्यमङ्गलाभिधम् ॥ ३९२ ॥
२९. कवचं परमं पुण्यं सोऽपि पुण्यवतां वरः।
सर्वैश्वर्ययुतो भूत्वा त्रैलोक्यविजयी भवेत् ॥ ३९३ ॥
३०. पुरुषो दक्षिणे बाहौ नारी वामभुजे तथा।
बहुपुत्रवती भूत्वा बन्ध्याऽपि लभते सुतम् ॥ ३९४ ॥
३१. ब्रह्मास्त्रादीनि शस्त्राणि नैव दंशन्ति तं जनम्।
एतत्कवचमज्ञात्वा यो भजेद् भुवनेश्वरीम् ॥ ३९५ ॥
३२. दारिद्र्यं परमं प्राप्य सोऽचिरान्मृत्युमाप्नुयात् ॥ ३९६ ॥

*इति श्रीरुद्रयामले देवीश्वरसंवादे त्रैलोक्यमङ्गलं नाम कवचं समाप्तम्।*

## अथ शिवस्य

नमः शिवायेति मन्त्रः पञ्चार्णात्तारपूर्वकः।
षडक्षरोऽयं विप्राणां भुक्तिमुक्तिप्रसाधकः ॥ ३९७ ॥
वामदेवो मुनिः पङ्क्तिश्छन्दो देवः सदाशिवः।
षड्वर्णैस्तु षडङ्गानि कल्पयेत्साधकोत्तमः ॥ ३९८ ॥

---

४३ ह्रीं क्षे क्रीं फट् पाठो=न्यत्र।
४४ त्वरिताष्टादिभिः पाठो=न्यत्र।

ततो ध्यायेत गोक्षीर रजताद्रिसमप्रभम्।
चारुचन्द्रकलाराजजटामुकुटमण्डितम् ॥ ३९९ ॥
पञ्चवक्त्रधरं शम्भुं पञ्चवक्त्रं त्रिलोचनम्।
शार्दूलचर्मवसनं रत्नावरणभूषितम् ॥ ४००
दक्षोर्ध्वहस्ते रङ्गं च वरं च दधतं करैः।
वामोर्ध्वहस्ते हरिणं दधानमभये पर ॥ ४०१ ॥
सुप्रसन्नमुखाम्भोजं निविष्टं कुशविष्टरे।
ब्रह्मविष्णुमहेशाद्यैः स्तुतं भक्त्या सुरासुरैः ॥ ४०२ ॥
विश्वाद्यं विश्ववपुषं भवभीति हरं भवम् ॥ ४०३ ॥

*समाप्तश्चायं भुवनेश्वरीक्रमः।*

## अथ धूमावतीक्रमः

अथातः संप्रवक्ष्यामि धूमावत्या मनुं परम्।
धूँ धूँ धूमावती स्वाहा मन्त्रोऽष्टाक्षर ईरितः ॥ ४०४ ॥
पिप्पलादो मुनिश्छन्दो निवृज्ज्येष्ठाऽस्य देवता।
षड्दीर्घबिन्दुयुक्तेन धकारेणषडङ्गकम् ॥ ४०५ ॥
आद्यबीजद्वयान्तस्थैः षड्वर्णैर्न्यासमाचरेत्।
अङ्गुष्ठादौ षडङ्गेषु पुनर्देवीं विचिन्तयेत् ॥ ४०६ ॥
विवर्णा चञ्चला कृष्णा दीर्घा च मलिनाम्बरा।
विमुक्त कुण्डला दीर्घा विधवा विरलद्विजा[४५] ॥ ४०७ ॥
काकध्वजरथारुढा विलम्बितपयोधरा।
शूर्पहस्ताऽतिरुक्षाक्षी धूतहस्ता त्वरान्विता ॥ ४०८ ॥
प्रवृद्धयेमा तु भृशं जटिला कुटिलेक्षणा।
क्षुत्पिपासार्दिता नित्यं सदा कलहतत्परा ॥ ४०९ ॥
एवं विधां सदा ध्यायेत् ततः कर्म समाचरेत्।
पूर्वोक्ते पूजयेत्पीठे ज्येष्ठां शत्रुनिवृत्तय ॥ ४१० ॥
केशरेषु षडङ्गानि पत्रस्था अष्टशक्तयः।
क्षुधा तृष्णा रतिर्निद्रा निर्ऋति दुर्गतीरुषा ॥ ४११ ॥
अक्षमेति ततो देवा इन्द्राद्या आयुधान्विताः।
एवं ज्येष्ठं समाराध्य सिद्धमन्त्रः प्रजायत ॥ ४१२ ॥

४५ ध्याने विवर्णामित्यादि द्वितीयान्त प्रयोगो=न्यत्र – मेरौ।

## [46]अथ धूमावतीकवचम्

पार्वत्युवाच
देवदेव महादेव भक्तानुग्रहकारक।
धूमावत्यास्तु कवचं ब्रूहि मे करुणानिधेः ॥ ४१३॥

## महादेव उवाच

अस्ति गुह्यतमं लोके कवचं शत्रुनिग्रहम्।
सर्वेप्सितप्रदं देवि तव स्नेहात्प्रकाश्यत ॥ ४१४॥
यच्छ्रुत्वा रामचन्द्रेण समरे रावणो हतः।
भार्गवेनाऽपि यच्छ्रुत्वा जितं सर्वं चराचरम् ॥ ४१५॥
तमेव कवचं वच्मि सावधानावधारय[47]।
कवचस्य महादेवि पिप्पलाद ऋषिः स्मृतः ॥ ४१६॥
छन्दो विराट् देवता च श्रीमद्धूमावती प्रिये।
शत्रूणां मारणे देवि विनियोगः प्रकीर्तितः ॥ ४१७॥
ॐ धूमावती सदा पातु शिरो मे शत्रूमर्दिनी।
चण्डरूपा महादेवी ललाटे पातु मां सदा ॥ ४१८॥
क्षुत्क्षामा नयने पातु पातु भीमा श्रुतौ मम।
काकध्वजा नासिकां मे सर्वशत्रुविनाशिनी ॥ ४१९॥
प्रलम्बोष्ठी सदा पातु वदनं मुण्डमालिनी।
विकृतास्या सदा पातु गलं मे रिपुसूदिनी ॥ ४२०॥
धूँ बीजाख्या सदा पातु घ्राणं[48] मेऽरिष्टतारिणी।
स्कन्धौ कङ्कालिनी पातु नृमुण्डस्रग्विभूषणा ॥ ४२१॥
शुष्कमांसा सदा पातु भीषणा मे भुजद्वयम्।
लम्बस्तनी सदा पातु धूमवर्णा स्तनद्वयम् ॥ ४२२॥
शूर्पहस्ता च हृदयं पातु भैरवनादिनी।
शत्रुमांसप्रिया पातु पृष्ठं मे रुधिरप्रिया ॥ ४२३॥
मदिराघूर्णनयना पातु पीवकरङ्किनी।
करालिनी सदा पातु कुक्षिं मे शववाहिनी ॥ ४२४॥

---

४६ मा. ख. अत्र धूमावत्यास्तोत्रं पतितमित्युल्लेखः।
४७ सावधानो=वधारय उत सावधानेन धारय पाठ उचितः।
४८ घारं पाठ मा. क. ख.।

बज्रतुण्डा पातु नित्यं कटिदेशं शिवप्रिया।
करालवदना पातु गुह्यदेशं दिगम्बरी ॥ ४२५ ॥
घोराट्टहासिनी पातु जानुनी विरलद्विजा।
पादौ मे पातु सततं क्षुत्पिपासाकुला सदा ॥ ४२६ ॥
घोरघण्टा सदा पातु सर्वाङ्गे शङ्करप्रिया।
इति ते कथितं देवि कवचं रिपुनिग्रहम् ॥ ४२७ ॥
यस्य प्रपठनाद्देवि सर्वसिद्धिः करे स्थिता।
न तस्य शत्रुपीडा स्यादुष्टपीडा कदापि न ॥ ४२८ ॥
ग्रहपीडा भूतपीडा न भवेत् कुलसुन्दरि।
धूमावतीं समभ्यर्च्य कृष्णपुष्पिण साधकाः॥ ४२९ ॥
मत्स्यमांसाऽऽसवैर्देवीं पूजयित्वा यथाविधि।
महामांसस्य धूपेन धूपयेत्तान्नु मन्त्रवित् ॥ ४३० ॥
अष्टोत्तरशतावृत्तिं पठेदेकमना प्रिये।
पक्षमात्रेण देवेशी रिपुं हन्यान्न संशयः ॥ ५३१ ॥
एतत्सर्वं महेशानि मारणेषु नियोजयेत्।
कवचं स्मरणाद्देवि रिपुर्याति यमालयम् ॥ ४३२ ॥
इति श्रीरुद्रयामले धूमावतीकल्पे धूमावतीकवचम्

## अथाघोरस्य

अथातः सम्प्रवक्ष्यामि चाऽघोरास्त्राह्वयं मनुम्।
मायां स्फुरद्वयं चैव प्रस्फुरद्वितयं वदेत् ॥ ४३३ ॥
पश्चाद् वदेच्चरतररूपान्ते च चरद्वयम्।
प्रचर द्वितयं पश्चात्कहद्वयं वमद्वयम् ॥ ४३४ ॥
बन्धद्वयं घातय द्वि हूँ फट् च शरवर्णकः।
मनुः प्रोक्तो ऽघोरमुनिः त्रिष्टुप्छन्दोऽस्य देवता ॥ ४३५ ॥
अघोररुद्रो वँ बीजं ह्रीँ शक्तिः परिकीर्तता।
शरं तु दशदिग्दन्तिदिवाकरमितैर्मनोः ॥ ४३६ ॥
वर्णैः कुर्यात्षडङ्गानि पदन्यासोऽथ वक्ष्यते।
कटौ च वक्त्र गलहृण्नाभ्यधुकरजानुषु ॥ ४३७ ॥
सजङ्घापादयोश्चैवं पदान्येकादशं न्यसेत्।
शरन्तुनेत्र वस्वद्धि रसवेदाब्धिवदेकैः ॥ ४३८ ॥

रसनेत्रमितैर्वर्णैस्तत्पदानि भवन्त्युमे ।
ध्यायेत्ततो मेघकालं भीमदंष्ट्रं त्रिलोचनम् ॥ ४३९ ॥
भुजङ्गभूषणं रक्तवसनाऽऽलेपशोभितम् ।
परशुं करवालं च बाणाँस्त्रिशिखमेव च ॥ ४४० ॥
दधानं दक्षिणैर्हस्तैरुर्ध्वादिक्रमतः परैः ।
डमरुं खेटकं चापं नृकपालं च बिभ्रतम् ॥ ४४१ ॥
समाप्तश्चायं धूमावतीक्रमः ।

### अथ बगलामुखीक्रमः

अथातः संप्रवक्ष्यामि स्तम्भिनीं बगलामुखीम् ।
नारायणो मुनिस्त्रिष्टुप्छन्दश्च बगलामूखी ॥ ४४२ ॥
देवी बीजन्तु हृल्लेखा स्वाहा शक्तिः समीरिता ।
विनियोगोऽस्य विख्यातः पुरुषार्थचतुष्टय ॥ ४४३ ॥
हृल्लेखा हृदयं प्रोक्तं शिरश्च बगलामुखी ।
शिखा तु सर्वदुष्टानां ततो वाचं मुखं पदम् ॥ ४४४ ॥
स्तम्भयेति च वर्मोक्तं जिह्वां कीलय नेत्रकम् ।
बुद्धिं विनाशयास्त्रं स्यात्षडङ्गन्यास ईरितः ॥ ४४५ ॥
मूर्ध्नि भाले भ्रुवोर्मध्ये नेत्रयोः श्रोत्रयोर्नसोः ।
गण्डद्वये तथा चोष्ठेऽधराऽऽस्यचिबुकेषु च ॥ ४४६ ॥
गले च दक्षदोर्मूले तन्मध्ये मणिबन्धके ।
अङ्गुलीनां तथा मूले हस्ताग्रे चैकमेव हि ॥ ४४७ ॥
न्यसेद्वामभुजादौ च दक्षोनृमूलके ततः ।
दक्षजानुनि गुल्फे चाङ्गुलीमूले पदाग्रतः ॥ ४४८ ॥
गभीराञ्च मदोन्मत्तां तप्तकाञ्चनसन्निभाम् ।
चतुर्भुजां त्रिनयनां कमलासनसंस्थिताम् ॥ ४४९ ॥
मुद्गरं दक्षिणे पाशं वामे जिह्वां च वज्रकम् ।
पीताम्बरधरां सान्द्रवृत्तपीनपयोधराम् ॥ ४५० ॥
हेमकुण्डलभूषां च पीतचन्द्रार्धशेखराम् ।
पीतभूषणभूषां च स्वर्णसिंहासनस्थिताम् ॥ ४५१ ॥
एवं ध्यात्वा च देवेशीं शत्रुस्तम्भनकारिणीम् ।
भूप्रदेशे मनोरम्ये पुष्पामोदसुधूपित ॥ ४५२ ॥

गोमयेनाथ संलिप्ते मण्डपेत्वासनं चरेत्।
सौवर्णे वाऽथ रौप्ये वा पैत्तले वाऽथ भूर्जक ॥ ४५३ ॥
कर्पूरागुरुकस्तूरीश्रीखण्डकुङ्कुमैरपि।
लिखेद्यन्त्रं प्रयत्नेन लेखन्या हेमतारयोः ॥ ४५४ ॥
मध्ये योनिं समालिख्य तद्बाह्ये तु षडस्रकम्।
तद् बाह्येऽष्टदलं पद्मं तद् बाह्ये षोडशच्छदम् ॥ ४५५ ॥
चतुरस्रत्रयं बाह्ये चतुर्द्वारोपशोभितम्।
शुभ नोक्तं देवतायाः पीठं वा पीठशक्तयः ॥ ४५६ ॥
तत्र मयोदितं पीठं ज्ञेयं ता एव शक्तयः।
तद् बीजेन यजेत्पीठं यद्वा मायाणुनाथ वा ॥ ४५७ ॥
तत्राऽऽवाह्य यजेद्देवीं सुपीतैरुपचारकैः।
यजेदङ्गानि षट्कोणे पूर्वद्वारादिषु क्रमात् ॥ ४५८ ॥
गणेशं बटुकं चापि योगिनीं क्षत्रपालकम्।
ईशानादिनिर्ऋत्यन्तं गुरुपङ्क्तिं समर्चयेत् ॥ ४५९ ॥
बगलां पूर्वपत्रं तु स्तम्भिनीं च ततः परम्।
जृम्भिनीं मोहिनीं चैव प्रगल्भामचलां[४९] जयाम् ॥ ४६० ॥
दुर्धर्षाकल्पषाधीरा कल्याण्या[५०]कालकर्षिणीः।
भ्राहिकां मन्दगमनां भोग्याख्यां चैव योगिकाम् ॥ ४६१ ॥
एताः षोडशपत्रेषु गन्धपुष्पाक्षतैर्यजेत्।
षोडशस्वरसंयुक्ताः संप्रदायात् कुलागम ॥ ४६२ ॥
यजेच्च पत्रमध्येषु कल्पिते चाष्टपत्रके।
ब्राह्म्याद्यौ च पूर्वादौ वाहनायुधसंयुताः ॥ ४६३ ॥
लोकेशाँश्च तदस्त्राणि पूजयेद् वाह्यतस्तथा।
योनिमध्ये मूलदेवीं त्रिपुष्पाञ्जलिभिर्यजेत् ॥ ४६४ ॥
धूप-दीप-सुनैवेद्यैर्गन्धताम्बूलदीपकैः।
नीराज्य विधिवत्पश्चाज्जपसङ्ख्यां निवेदयेत् ॥ ४६५ ॥

## अथ बगलामुखीस्तोत्रम्

१. ॐ पीतवस्त्रां सुनेत्रां च द्विभुजां दाहकोज्ज्वलाम्।
शिलापर्वतहस्तां च स्मरतीं बगलामुखीम् ॥ ४६६ ॥

४९ मा .क. वल्या अचला चञ्चला तथा पाठः।
५० मा.ख. कल्पग पाठः।

२.	मध्ये सुधाब्धिमणिमण्डपरत्नवेद्यां
सिंहासनोपरिगतां परिपीतवर्णाम्।
पीताम्बराभरणमाल्यविभूषिताङ्‍गीं
देवीं नमामि धृतमुद्‍गरवैरिजिह्वाम् ॥ ४६७ ॥
३.	जिह्वाग्रमादाय करेण देवीं
वामेन शत्रुं परिपीडयन्तीम्।
गदाभिघातेन तु दक्षिणेन
पीताम्बराढ्यां द्विभुजां नमामि।
४.	त्रिशूलधारिणीमम्बां सर्वसौभाग्यदायिनीम्।
सर्वश्रृङ्‍गारवेशाढ्यां देवीं ध्यात्वा प्रपूजयेत् ॥ ४६९ ॥
चलत्कनककुण्डलोल्लसितचारुगण्डस्थलां
लसत्कनकचम्पकच्युतिविराजितचन्द्राननाम्।
गदाहतविपक्षकाकलितलोलजिह्वाचलां
स्मरामि बगलामुखीं विमुखसन्मुखस्तम्भिनीम् ॥ ४७० ॥
पियूषोदधिमध्यचारुविलसद्रत्नोज्ज्वले मण्डपे,
तत्सिंहासनमौलिपाटितरिपुप्रेतासनाध्यासिनीम्।
स्वर्णाभां कलपीडितारिरसनां भ्राम्यद् गदां विभ्रतीम्।
यस्त्वां पश्यति यान्ति तस्य किलयं सद्योऽपि सर्वापदः ॥ ४७१ ॥
देवि त्वच्चरणाम्बुजे वितनुते यः पीतपुष्पाञ्जलिं
मुद्रां वामकरे निधाय च पुनर्मन्त्री मनोज्ञाक्षरम्।
पीतध्यानपरोऽपि कुम्भकवशाद् बीजं स्मरेत्पार्थिवं
तस्यामित्रमुखस्य वाग्घृदयगो स्तम्भो भवेत्तत्क्षणात् ॥ ४७२ ॥
मन्त्रस्थानदलं विपक्षदलने स्तोत्रं पवित्रं च ते,
यन्त्रं वादिति मन्त्रिणां त्रिजगतां यन्त्रं पवित्रं च ते।
मातः श्रीबगलेति नाम ललितं यत्स्तूयते ते मुखे,
तन्नामग्रहणेन संसदि मुखस्तम्भो भवेद्वैरिणाम् ॥ ४७३ ॥
वादी मूकति शङ्कति क्षितिपतिर्वैश्वानरः शीतति ,
क्रोधी शान्तति दुर्जनः सुजनति क्षिप्रं मुखं खण्डति।
गर्वी खर्वति सर्व एव जगति त्वद्यन्त्रणायन्त्रितः
श्रीनित्ये बगलामुखि प्रतिदिनं कल्याणि तुभ्यं नमः ॥ ४७४ ॥
दुष्टस्तम्भनकं च विघ्नशमनं दारिद्र्यविध्वंसनं

भूभृत्सङ्गमनं यन्मृगदृशां चेतः समाकर्षणम् ।
सौभाग्यैकविकेतनं मम दृशोः कारुण्यपूर्णेक्षणं
मृत्योर्मारणमाविरस्तु पुरतो मातस्त्वदीयं वपुः ॥ ४७५ ॥
त्वं विद्या परमा त्रिलोकजननी विघ्नौघसंछेदिनी ।
योगाकर्षणकारिणी च सुमहद्द्वन्द्वैकसंछेदिनी ।
दुष्टोच्चाटनकारिणी जनमनः संमोहसंधायिनी ।
जिह्वाकीलनवैभवा विजयते ब्रह्मास्त्रविद्या परा ॥ ४७६ ॥
मातः स्तम्भय मद्विपक्षवदनं जिह्वाञ्चलं कीलय,
ब्राह्मि मुद्रय मुद्रयासुधिषणां वह्नेर्गतिं स्तम्भय ।
शत्रूञ्चूर्णय चूर्णयाशु गदया गौराङ्गि पीताम्बरे,
विघ्नौघं बगले हर प्रतिदिनं कारुण्यपूर्णे क्षण ॥ ४७७ ॥
मातर्भैरवि भद्रकालि विजये वाराहि विश्वाश्रये,
श्रीनित्ये समये महेशि बगले कामेशि वामे रमे ।
मातङ्गि त्रिपुरे परात्परतरे स्वर्गापवर्गप्रदे ।
दासोऽहं शरणागतं करुणया विश्वेश्वरि त्राहि माम् ॥ ४७८ ॥
शङ्काद्ये[५१] चौरसङ्घे प्रहरणसमये बन्धने वारिमध्ये,
वह्नौ वादे विवादे प्रकुपितनृपतौ दिव्यकाले निशायाम् ।
वाक्यानां[५२] स्तम्भने वा रिपुवधसमये निर्विपत्तौ रणे वा,
गच्छाँस्तिष्ठँस्त्रिकालं स्तव पठनमिदं कार्यसिद्धिप्रदं च ॥ ४७९ ॥
मातर्यश्च नरः सदा स्तपमिदं देव्याः पठेत्सादरम्
धृत्वा यन्त्रमिदं तथैव समये बाहौ करे वा गले ।
राजानो वरयोषितोऽपि करिणः सर्पा मृगेन्द्राः खलाः ,
स्तम्भं यान्ति निषेविता रिपुगणा लक्ष्मीर्यथा सिध्यति ॥ ४८० ॥
अनुदिनमभिरामं साधको यस्त्रिकाले
पठति त्रिभुवनेशः पूज्यते देववर्गैः ।
भवति सकलकृत्यं तस्यदृष्टं हि लोके[५३]
भवति परमसिद्धिस्लोकमातस्तथैव ॥ ४८१ ॥
इति नारदविरचितं पीताम्बरास्तोत्रं सम्पूर्णम् ।

---

५१ मा. क ख शार्ङ्गद्ये पाठ ।

५२ वाच्यात्वं पाठः ।

५३ दृष्टावलोके पाठः ।

## अथ बगलामुखीकवचम्

श्रीमहोग्रतारोवाच
राज्ञां मण्डलकादीनां मण्डलोपरि सर्पताम् ।
सगर्वाणां महादेव धनैर्विकृतचेतसाम् ॥ ४८२ ॥
गज सर्वारिजन्तूनां भञ्जनं वद शङ्कर ।

## श्री भैरव उवाच

पुरा कृतयुगे देवि वातक्षोभमुपस्थित ॥ ४८३ ॥
सप्तार्णवानामेकत्वगमक्षोभं ययुः सुराः ।
सेन्द्राः सविष्णवः सर्वे सभायां समुपस्थिताः ॥ ४८४ ॥

## देवा ऊचुः

शिव शङ्कर रुद्रेश रक्षास्मान् शरणागतान् ।
महावातादिविक्षोभक्षुब्धानस्मान् महार्णवात् ॥ ४८५ ॥
तच्छ्रुत्वाहं सुरेशानि कवचं पूर्वनिर्मितम् ।
दत्तवान् सर्वदेवेभ्यो महाभयनिकृन्तनम् ॥ ४८६ ॥
कवचं बगलामुख्याः शिवप्राणप्रदं महान् ।
पूर्वं भस्मासुरत्रासाद् भयविद्रावितः स्वयम् ॥ ४८७ ॥
पठ्यते तच्च मत्प्राणान् रक्षस्व परमेश्वरि ।
शिवप्राणप्रदं तस्माद् विश्रुतं रक्षकं परम् ॥ ४८८ ॥
षट्त्रिंशदक्षं वामेऽन्याद् बगला परमा शिरः ।
सहस्रारे गुरुः पातु शक्त्या परमयोज्ज्वलः ॥ ४९८ ॥
चिद्रूपा परमा शक्तिर्ललाटं शिवगेहिनी ।
भ्रूयुगं मे महाकाली नेत्र युग्मं परेश्वरी ॥ ४९० ॥
कर्णयुग्मं पीतपुष्पं प्रिया मेऽव्यात्कपोलयोः ।
चिबुके परमा शक्तिरोष्ठयो परमा कला ॥ ४९१ ॥
वदनं सकला पातु परब्रह्मस्वरूपिणी ।
पीतपुष्पार्चिता कण्ठे स्कन्धौ स्कन्दस्तनप्रदा ॥ ४९२ ॥
पीताम्बरा दक्षभुजं वामं वामाङ्गहारिणी ।
हृदयं सस्तनद्वन्द्वं भानुविम्बमुखैकधृक् ॥ ४९३ ॥

पातु मां परमा शक्तिश्चामरी कुटिलालका।
षट्त्रिंशदक्षरा विद्या पीता पीतवपुर्धरा ॥ ४९४ ॥
पीतपुष्पार्चिता पीतनैवेद्यादिबलिप्रिया।
सर्वाङ्गं मे शुभा पातु वैरिस्तम्भनकारिणी ॥ ४९५ ॥
ब्रह्मरन्ध्रेषु परमा संसारार्णवतारिणी।
तारयेन्मां महादेवी मनोवाञ्छितदायिनी ॥ ४९६ ॥
आज्ञाचक्रे गुरौ (रूपा) पातु महाभयविनाशिनी।
सर्वविद्यावरा पातु जिह्वाशास्त्रवपुर्धरा ॥ ४९७ ॥
विशुद्धौ षोडशदले जीवेश्वरवपुर्धरा।
षट्त्रिंशत्तत्त्वरूपाख्या कण्ठस्था मां सदाऽवतु ॥ ४९८ ॥
हृत्पङ्कजे भवानीशरूपा रूपपरात्मिका।
इन्द्रियादिमहाशत्रून् विदारयतु दारुणा ॥ ४९९ ॥
मणिपूरे दशदले महाविष्णुस्वरूपधृक्।
दारयेन्नखिलान्मोहान्मां माया सा पराऽवतु ॥ ५०० ॥
प्रजापतिस्वरूपेयं स्वाधिष्ठाने च षड्दले।
सृष्टिस्थिता पराविद्या मां मोहाद् बगलाऽवतु ॥ ५०१ ॥
गणेशरूपधृक् पातु त्वाधारे मां चतुर्दले।
षोडशस्वररूपेयं पातु मां परमा कला ॥ ५०२ ॥
कँ खँ गँ घँ तथा ङँ चँ छँ जँ झँ ञँ तथाऽवतु।
टँ ठँ डँ ढँ त्वदाकारा णँ तँ थँ दँ तथाऽवतु ॥ ५०३ ॥
धँ नँ पँ फँ तु शत्रूभ्यः पातु मां ध्यानतत्परम्।
बँ भँ मँ यँ विदार्याथ शत्रून् मां वाक्स्वरूपिणी ॥ ५०४ ॥
रँ लँ वँ शँ तथा षँ सँ शत्रुजिह्वां विदार्य तु।
मे वाचो मे मुखं जिह्वां सदा रक्षतु शाङ्करी ॥ ५०५ ॥
हँ लँ क्षँ सकलं पातु रक्षेन्मे परमं यशः।
प्रणवं स्थिरमाया च तृतीयं कात्रयं[५४] तथा ॥ ५०६ ॥
पा तृतीयं स्वरा युग्मं पादाद्यं स्वरपञ्चमम्।
का द्वितीयं दक्षनेत्रे सर्वपुष्टबहुस्मृतम् ॥ ५०७ ॥
षष्ठस्वरा तथा वाचं स्तम्भयाथाऽपि जिह्वया।
द्वितीयया कीलयेति तथा बुद्धिं विनाशय ॥ ५०८ ॥

---

५४ मा. क. ख. कात्रितयं पाठः।

स्थिरमाया तथा तारं चान्ते बह्निबधूप्रिया ।
एषा विद्या महाविद्या शत्रुस्तम्भनकारिणी ॥ ५०९ ॥
त्रिधा मन्त्रं समुच्चार्य सर्वाङ्गे व्यापकं कुरु ।
जयत्येव न सन्देहः शत्रून् शूरान्महाहव ॥ ५१० ॥
कुलालमृत्तिकां गृह्य वामहस्तेन दीपकम् ।
कृत्वा प्रज्ज्वाल्य तैलेन वामे स्थाप्य मनुं जपेत् ॥ ५११ ॥
त्रिरात्रं स्तम्भयत्वेव शत्रुसेनां महाहवे ।
गौरवर्णां पीतपुष्पैर्बालां सम्पूज्य भावतः ॥ ५१२ ॥
न्यासान् विधाय देहेन भजन् योगी जपेन्मनुम् ।
पीतोपचारै स्तां शक्तिं संतोष्य परिचारणाम् ॥ ५१३ ॥
वशयत्येव लोकेशं किं पुनः क्षुद्रमानुषम् ।
वाचः स्तम्भनकामस्तु[५५] वीरशक्तिं शुभाननाम् ॥ ५१४ ॥
षोडाशाब्दां सुवर्णां च ह्यलंकृत्य यजेत्प्रिये ।
सहस्रमूलमन्त्रं तु जप्त्वा वाचस्पतेरपि ॥ ५१५ ॥
स्तम्भयत्वेन परमां वाचं किं क्षुद्रमानुषम् ।
वशीकरणकामस्तु बध्द्वा परिकरं दृढम् ॥ ५१६ ॥
शक्तिलिङ्गोपरि स्थाप्य त्रिसहस्रं जपेन्मनुम् ।
इन्द्राणीं वशयत्वेव किं पुनः क्षुद्रमानुषम् ॥ ५१७ ॥
मण्डलाधीशवशकृदुत्तराभिमुखः स्थितः ।
दशाननां सुन्दरीं तु षोडशाब्दां शुचिस्मिताम् ॥ ५१८ ॥
कुचयोस्तु करौ दत्त्वा पीताढ्यां हसिताननाम् ।
लिङ्गे संस्थाप्य सञ्चुम्बन्मुखं पीत्वा मनुं जपन् ॥ ५१९ ॥
त्रिसहस्रं महाराजं वशयत्येव नान्यथा ।
येन केनाप्युपायेन बगलाभक्तितत्परः ॥ ५२० ॥
स्तम्भयेत्सकलान् लोकान् वशयत्येव शाङ्करि ।
मारयेच्छत्रुसंघातमुच्चाटयति पार्वति[५६] ॥ ५२१ ॥
देवानां स्थपतिं चन्द्रं छादयेत् किं परं जनम् ।
अस्य पार्वति माहात्म्यं कवचस्य क्व वर्णितम् ॥ ५२२ ॥
महाद्रौ दारुणे चान्ते प्रलयादावुपस्थिते ।

५५ मा. ख. 'वाचस्तम्भनकामस्तु' इत्यतो 'बध्द्वा परिकरं दृढम् (श्लोकः ५१६) इत्यन्त एव पाठः । तन्मध्यस्थितो 'वीरशक्तिं शुभाननाम् इत्यतो 'वशीकणकामस्तु' इत्यन्तः पाठो मा. क अधिकः ।

५६ मा. ख पर्वते पाठः ।

स्तम्भितं च तदा देवि वातसङ्घं सकृज्जपात् ॥ ५२३॥
एते सा परमा विद्या महाशत्रुविदारिणी।
नास्तिके तस्करे दुष्टे मूढे पण्डितमानिनि ॥ ५२४॥
न देया हृदया विद्या ददन्बन्धमवाप्नुयात्।
सुशीलाय सुदान्ताय गुरुभक्तिपराय च ॥ ५२५॥
विशुद्धाय महामन्त्रजापिने देयमुत्तमम्।
कृत्वा पुरा सुकवचं जपेन्मन्त्रं समाहितः ॥ ५२६ ॥
नान्यथा स्तम्भिनी विद्या सिद्धा स्यादिति निश्चयः ॥ ५२७ ॥

*इति एकवीरातन्त्रे महोग्रतारासंवादे बगलामुखीकवचं सम्पूर्णम्।*

## अथ मृत्युञ्जय भैरवस्य

ॐ जूँ स इति मन्त्रस्य प्रोक्तो मृत्युञ्जयाभिधः।
ऋषिः कहोलो दैत्यादि गायत्री छन्द ईरितम् ॥ ५१७॥
मृत्युञ्जयो महादेवो देवता परिकीर्तितः।
षड्दीर्घयुक्तभृगुणा षडङ्गविधिरीरितः ॥ ५१८॥
पद्मद्वयस्थितं स्मेरं चन्द्रार्काग्निविलोचनम्।
हस्तेषु ज्ञानमुद्रां च पाशमक्षाक्षिमालिकम् ॥ ५१९॥
कर्पूराभं शीर्षचन्द्रकरोद्वामृतधारया।
ऊर्ध्वाङ्गं बहुभूषाढ्यं कान्त्या विश्वविमोहनम् ॥ ५२०॥

*समाप्तश्चायं बगलामुखीक्रमः।*
*इति श्रीतन्त्रचिन्तामणौ त्रिपुरभैरवी-महालक्ष्मी-मातङ्गी-भुवनेशी-धूमावती-बगलामुखीविद्यानां नित्यार्चननिर्णयनाम सप्तविंशतितमः प्रकाशः।*



# अष्टाविंशतितमः प्रकाशः

अथ प्रत्येकं नित्यार्चनं निर्णीय सकलेष्टसाधनोपयुक्तत्वात्प्रथमतश्चक्रपूजामाह।
चक्रपूजां प्रवक्ष्यामि सर्वतन्त्रेषु गोपिताम्।
अभीष्टसिद्धिदा नातः परं किञ्चन विद्यते ॥ १ ॥
सर्वेषामेव देवानां श्रिया प्रोक्तोप्सितप्रदा।
वैदिकैरपि कर्तव्याऽभिष्टसिद्धयै पुरोहितम् ॥ २ ॥
कृत्वा तु कौलिकं देवि पूर्णाः स्युस्तन्मनोरथाः।
शान्तिके पौष्टिके वश्ये चाकृष्टौ स्तम्भमारणे ॥ ३ ॥
विद्वषोच्चाटने मोहे परसैन्यपराजये।
आज्ञाबृद्धौ च मोक्षार्थे सिद्धिसाधनहेतवे ॥ ४ ॥
उपसर्गविनाशाय ग्रहदोषनिवारणे।
राज्यभ्रंशे नरेन्द्राणामलक्ष्मीहरणाय च ॥ ५ ॥
अपत्यलाभे चानिष्टे-उपव्याधिनिवारणे।
प्रजाशान्तावनावृष्ट्यां मातृचक्रं प्रतिष्ठितम् ॥ ६ ॥
दीक्षाकाले च मदने पवित्रे गुरुपर्वणि।
विपत्तौ देशिकेन्द्राणामथवा गोत्रमेलने ॥ ७ ॥
प्रस्थाने च प्रवासे वा ह्युत्सवानन्दसंपदि।
अपेक्षितं तदा कार्यं मनुजैश्चक्रपूजनम् ॥ ८ ॥
सर्वदेवप्रियं गोप्यं तद्विधिं कथयाम्यथ।
समयश्चक्रपूजाया अष्टधा परिकीर्त्तिताः ॥ ९ ॥
सहसोत्पत्तिके कार्ये कार्ये वा पूर्णताङ्गते।
देवतोत्साहदिवसे कौलिकस्यागमेऽपि वा ॥ १० ॥
उमामाहेश्वरे योगे योगे वा शक्तिसङ्गमे।
बलिराज्ये कामदिने चक्रपूजाऽतिहर्षदा ॥ ११ ॥
प्रदोषे वाऽभिजिति वा निशीथे चाष्टमीयुते।
नवम्यां चेद् भवेद् योग उमामाहेश्वराभिधः ॥ १२ ॥
भौमाष्टम्यां चतुर्दश्यां योगोऽयं शक्तिसङ्गमः।

आश्विनस्याः सिते पक्षे त्रयोदश्यादि पञ्च च ॥ १३ ॥
बलिराज्यमिदं प्रोक्तं यथेच्छं क्रीडनाय तु ।
तत्कामदिनमित्याहुः सोमवारे त्रयोदशी ॥ १४ ॥
पूर्वस्मिन्दिवसे स्नात्वा देवीमभ्यर्च्य कामनाम् ।
कृत्वा सङ्कल्पयेच्चक्रपूजां दद्याद्बलिं पशोः ॥ १५ ॥

**बलिदानप्रकारस्तु अग्रे वाच्यः**

एवं दत्त्वा बलिं सम्यङ् नित्यकृत्यं विधाय च ।
तृतीये प्रहरे रामा नराँश्चार्थं निमन्त्रयेत् ॥ १६ ॥
अमुक्याः प्रीतये देव्या मन्मनोरथसिद्धये ।
चक्रपूजोत्सवार्थं त्वं श्वो मयाऽऽमन्त्रितो ह्यसि ॥ १७ ॥

**अथ निमन्त्रणप्रकारमाह**

ततो निमन्त्रयेत्सर्वा योगिनीर्योगिनो ह्यपि ।
पुष्पं दत्त्वा करे सव्ये सम्भाषावरणं तथा ॥ १८ ॥
अद्य गृहाण पूजार्थं निमन्त्रणं करोम्यहम् ।
ततः आगमनं कुर्यात्त्वादौ क्षालित पाणिना ॥ १९ ॥
आचार्यप्रमुखं देवि मन्त्रेणैव निमन्त्रयेत् ।
अष्टाधिका निमन्त्र्यास्तु स्त्रियोऽन्यूनास्तु तत्कृते ॥ २० ॥
स्त्रिभ्योस्तु पुरुषा न्यूना अधिकास्ते तु हानिदाः ।
सर्वे कौलव्रतस्था वा प्राग्दीक्षा[1] ह्यपवर्जिताः ॥ २१ ॥
भवन्ति दीक्षानिरता निमन्त्र्याश्चक्रपूजने ।
तस्यां रात्रौ तु संपूज्य देवं स्वयमतन्द्रितः ॥ २२ ॥
कुलशब्दो द्विधा प्रोक्तः कुलजेति पिशाचिनी ।
त्रयोदशार्णं स्वाहान्तमष्टोत्तरसहस्रकम् ॥ २३ ॥
जपेन्निशि ततः पश्येच्चक्रे विघ्नं तथा शुभम् ।
विघ्ने दृष्टे न कर्तव्यं कार्यं वा शान्तिपूर्वकम् ॥ २४ ॥
शान्तिर्गणेश्वरो होमो ग्रहाणां भैरवस्य च ।
ततो बहिर्बलिं दद्यादिमं मन्त्रमुदीरयेत्[2] ॥ २५ ॥

१ मा. क दक्ष्या मा. ख दक्षा पाठः ।
२ उदीरयत् पाठः मा. ख ।

ॐ नमश्च त्रिरुच्चार्य ह्यमुकः क्षेत्रपालकः।
एह्येहि भगवन्पूजां गृह्णयुग्मं बलिं तथा ॥ २६ ॥
भक्षयुग्मं चक्रविघ्नकरात् स्तम्भयुग्मकम्।
हूँ फट् स्वाहा सप्तचतुर्वर्णो मन्त्रः प्रकीर्तितः ॥ २७ ॥
दिनस्य कृत्यं निर्वर्त्त्य सायं चक्रं प्रपूरयेन्।
साम्प्रतं श्रोतुमिच्छामि निर्णयं मेलकस्य तु ॥ २८ ॥
कस्मिन् स्थाने प्रकुर्वीत कुलचक्रसमुद्भवम्।
केन चक्रं प्रकर्तव्यं कथयस्व महेश्वर ॥ २९ ॥

## श्रीभैरव उवाच

कथयामि वरारोहे चक्रस्थानपरं शृणु।
श्मशाने एकवृक्षे च पर्वते मातृकाग्रहे ॥ ३० ॥
प्रासादे शून्यवासेषु नदीतीरे ह्यरण्यके।
एतेष्वेकं च संमार्ज्य प्रलिप्तं गोमयेन तु ॥ ३१ ॥
तुषकेशादिकं शोध्य किङ्करीकिङ्करेण वा।
श्मशानं तु प्रयागं च वरणा एकवृक्षकम् ॥ ३२ ॥
पर्वताग्रे भवेत्कोलागृहमात्राट्टहासकम्।
प्रासादस्तु जयन्ती च चरितं शून्य वेश्म च ॥ ३३ ॥
एकाम्रकं नदीतीरमरण्यं देवीकोटकम्।
स्थानं च कथितं भद्रे उद्भवं कथयामि ते ॥ ३४ ॥
अ-वर्गं पूर्वमुद्दिष्टं क-वर्गाऽग्नेय संस्थितम्।
च-वर्गं दक्षिणे भागे ट-वर्गं नैर्ऋते स्मृतम् ॥ ३५ ॥
त-वर्गं पश्चिमे भद्रे वायव्ये तु प-वर्गकम्।
य-वर्गमुत्तरे भागे श-वर्गमीशसंस्थितम् ॥ ३६ ॥
एषु स्थानेषु सुश्रोणि चक्रस्य तु समुद्भवम्।
तत्स्थाने तु समागत्य कुर्याद् वीरस्य योजनम् ॥ ३७ ॥
वर्त्तनं कथयिष्यामि ह्याचार्यस्य तु लक्षणम्।
बहुशास्त्रश्रुता धीरा दशपन्थानुगामिनः ॥ ३८ ॥
पारम्पर्यक्रमज्ञानगुरुसिद्धप्रपूजकाः।
पूर्णाभिषेकसम्पन्ना अद्वैताचारवर्तिनः ॥ ३९ ॥
लब्ध्वाऽनुज्ञां गुरोः सम्यक् स्यात्कुसङ्गमतं स्मृतः।

सर्वसत्त्वदयाभूतो दम्भमात्सर्यवर्जितः ॥ ४० ॥
क्षान्तो दान्तः शुचिर्नित्यः पुत्रवच्छिष्यपालकः ।
एभिर्गुणैः समायुक्त आचार्यः स्यात्तु सुन्दरी ॥ ४१ ॥

## अथ मण्डलमाह

क्षौमिकेन सुसूत्रेण सुमितं कारयेत्प्रिये ।
सुरेषांपातयेद्भूमावष्टकोणष्टपत्रिकाम् ॥ ४२ ॥
केशरं च षडङ्गुल्यं कर्णिकाऽष्टाङ्गुलानि च ।
द्वादशाङ्गुलपत्राणि दलसन्धिर्द्विरङ्गुलः ॥ ४३ ॥
चतुरङ्गुलचन्द्राणि वर्त्तुलाकारमण्डलम् ।
तद्बाह्ये द्वारभागाश्च द्वादशाङ्गुलमानतः ॥ ४४ ॥
चतुर्द्वारं चतुष्कोणं कोणेषु पद्मलाञ्छनम् ।
कर्णिका पीतवर्णा च केशरं रक्तमेव च ॥ ४५ ॥
पत्रं श्वेतकृतं भद्रे दलसन्धिर्हरीतकम् ।
कृष्णद्वारकृतं देवि शुक्लं चन्द्रांशुमण्डलम् ॥ ४६ ॥
रोगोपद्रवशान्त्यर्थं भद्रमण्डलमालिखेत् ।
शिवोक्तं तद् वदिष्यामि श्रूयतां वरवर्णिनी ॥ ४७ ॥
पीतसूत्रेण सुश्रोणि सुमितं कारयेत् प्रिये ।
आहूँठानि च हस्तानि भूमौ सूत्रेण पातयेत् ॥ ४८ ॥
षडङ्गुलां कर्णिका च चतुरङ्गुलकेशरम् ।
द्वादशाङ्गुलपत्राणि शशिमण्डलशोभनम् ॥ ४९ ॥
पीतद्रव्यैर्दलं भद्रे कृष्णेन दलसन्धिषु ।
चन्द्रं शुक्लेन कुर्वीत रक्तेन द्वारमेव च ॥ ५० ॥
पूर्वं कपाल शुक्लेन कृष्णेनाषिञ्च दक्षिणे ।
पश्चिमे हरितं भद्रे डमरुं च सुशोभनम् ॥ ५१ ॥
उत्तरे शुक्लपीतेन त्रिशूलं वरसुन्दरि ।
शिखांशग्रहणे देवि पौष्ट्याकर्षणकर्मणि ॥ ५२ ॥
विषोत्कटोऽयं सर्वत्र ह्यालिखेत् मण्डलानि च ।
गणेश्वरं वदिष्यामि ह्यधुना वरवर्णिनि ॥ ५३ ॥
रक्तसूत्रेण सुमितं त्रिहस्तायनमण्डलम् ।
कर्णिका केशरे पत्रे हस्तमेकं तु वाहयेत् ॥ ५४ ॥

[3]सूर्यचन्द्रजलस्थाने हस्तमेकन्तु वर्त्तयेत् ।
द्वारकं हस्तमालिख्य चतुरस्रं सुशोभनम् ॥ ५५ ॥
कर्णिका केशरं पत्रे हस्तमेकन्तु वाहयेत् ।
सूर्यचन्द्रजलस्थाने हस्तमेकन्तु वर्त्तयेत् ॥ ५६ ॥
द्वारकं हस्तमालिख्य चतुरस्रं सुशोभनम् ।
कर्णिका हरिता प्रोक्ता केशरं पीतमेव च ॥ ५७ ॥
जलरूपं सितेनैव सूर्यं रक्तेन चालिखेत् ।
चन्द्रं श्वेतेन द्रव्येण पत्रं रक्तं सुशोभनम् ॥ ५८ ॥
द्वारं श्वेतं सुशोभाढ्यमसिं पूर्वे तु कृष्णकम् ।
दक्षिणे श्वेतनरकं कृष्णशूलं च पश्चिमे ॥ ५९ ॥
उत्तरे हरिताकारं डमरं च सुशोभनम् ।
वश्याकर्षणवेधेषु मण्डलेन महेश्वरि ॥ ६० ॥
प्रतानकं वदिष्यामि इदानीं वीरमातरः ।
गोचर्मरज्जुना भूम्यां पातयेत्सुमितेन च ॥ ६१ ॥
द्विहस्तमारभ्य मितं चतुर्द्वारविभूषणम् ।
कर्णिका पञ्च अङ्गुल्या केशरं चतुरङ्गुलम् ॥ ६२ ॥
पत्रं षोडशमङ्गुल्या द्विहस्तं जलभागतः ।
शिरश्चतुरङ्गुलिभिः सर्वद्वाराणि वाहयेत् ॥ ६३ ॥
कर्णिका हरिता भद्रे केशरं रक्तमेव च ।
दलं कृष्णेन कुर्वीत दलसन्धिं जलं तथा ॥ ६४ ॥
रक्तेन तु शोभनानि धूम्रेण द्वारं वाहयेत् ।
असिं कपालं परशुं त्रिशूलं च चतुष्टयम् ॥ ६५ ॥
चतुर्द्वारेषु ह्यालिख्य यथाशोभां व्रजेत् प्रिये ।
महासाधनकाले तु मारणे च विशेषतः ॥ ६६ ॥
प्रतानकं लिखेद् भद्रे मण्डलं सर्वसिद्धिदम् ।
शान्तिकं पौष्टिकं वश्यं मारणं च सुलोचने ॥ ६७ ॥
विशेषमण्डलं येन ज्ञात्वा कर्म समारभेत् ।
पुनरन्यप्रकारेण प्रवक्ष्यामि विशेषतः ॥ ६८ ॥
स्थूलेन कलिरित्याहुः कृष्णेन मरणं भवेत् ।
वक्रे हानिर्भवेद् घोरा च्छिन्ने राजभयानि च ॥ ६९ ॥

---

३ मा. क श्लोकः ५६, ५७ पुनरुक्तं भाति मा. ख तन्न दृश्यते ।

असदृशकृते पत्रे मन्त्रसिद्धिर्न जायते।
तस्मात्प्रयत्नं कुर्वीत यदीच्छेत्सिद्धिमुत्तमाम् ॥ ७० ॥
एवं कर्मविभागाँश्च ज्ञात्वा कर्म समारभेत्।
किमन्यत् पृच्छसि देवि कथितं रज्जुपातनम् ॥ ७१ ॥

## अथ पूजाद्रव्यमाह

यत्सर्वं भक्ष्यं पेयञ्च द्रव्यं वित्तानुसारतः।
कल्पयित्वा तु सुश्रोणि सर्वं द्रव्यं क्षमापयेत् ॥ ७२ ॥
चन्दनञ्च पवित्रञ्च गन्धं माल्यञ्च मोहिनि।
आसनं धूपं सिन्दूरं स्थापयेच्च यथाक्रमम् ॥ ७३ ॥
नानाविधानि मांसानि ह्यनेका मत्स्यजातयः।
चतुर्विधानि भक्ष्याणि उपदंशापदंशकाः ॥ ७४ ॥
पूर्वोक्तं सकलं द्रव्यं पूर्णमत्र प्रकल्पयेत् ॥ ७५ ॥

अत्र क्रमेण अष्टकाष्टकमाह। तत्रादौ वीरादीनां पादप्रक्षालनद्रव्यमाह।
पादप्रक्षालनं देवि साम्प्रतं कथयामि ते।
वचः प्रियङ्गु सुरभिरुशिरं चन्दनं चथा ॥ ७६ ॥
वारं मांसि तथा चौरं समभागाँश्च कारयेत् ॥
पिष्ट्वोदकेन भागेन श्लक्ष्णं कृत्वा यथार्थत ॥ ७७ ।
ऊष्णोदकघटे मध्ये बहिः स्थाने निधापयेत्।
[४]एकैक वीरपादौ च क्षालयेदुदकेन तु ॥ ७८ ॥
अट्टहासेव चोत्पन्नं चरित्रायां प्रियङ्गुकम्।
कोलापुर्यां तु सुरभिर्जयन्त्यां च उशीरकम् ॥ ७९ ॥
उज्जैन्यां चन्दनं भद्रे प्रयागे बालमेव च।
वाराणस्यां च मासिं च कर्णमोद्यां तु चौरकम् ॥ ८० ॥
एते ह्यष्टौ समाख्याता अष्टौ क्षेत्रस्य लाञ्छनम्।
उपहारविधिं वक्ष्ये श्रृणु त्वं वरवर्णिनि ॥ ८१ ॥
चन्दनञ्च पवित्रञ्च गन्धमाल्ये च मोहिनीम्।
आसनं धूपसिन्दूरं दापयेच्च यथाक्रमम् ॥ ८२ ॥
चन्दनं विरजं भद्रे पवित्रं मेलनं तथा।

४ मा. क श्लोकः ७८ ख, ७९, ८० ख न दृश्यते।

हादापुरं भवेद् गन्धं माल्यं मेलापुरं स्मृतम् ॥ ८३ ॥
काश्मीरं मोहिनी ज्ञेया आसनं मेरुकन्तथा।
नगरं धूपमित्याहुः सिन्दूरं पुण्ड्रबर्धनम् ॥ ८४ ॥
एतान्यष्टौ भूषणानि उपक्षेत्रस्य लक्षणम्।
यथाक्रमेण दातव्यमाचार्यादीन्विचक्षणः ॥ ८५ ॥
उपहारविधानञ्च संक्षेपात्कथितं मया।
बलिसंस्थापनं भद्रे ह्यधुना कथयामि ते ॥ ८६ ॥
बृहद्दारुमये पात्रे ओदनैः परिपूरितम्।
समुच्छ्रितं वैजयन्त्या पञ्चरङ्गिककारयेत् ॥ ८७ ॥
अच्छिद्रेनान्त्रमाल्येन दापयेद् बलिभाजने।
विचित्रपुष्पमाल्येन यथा शोभां ब्रजेत् प्रिये ॥ ८८ ॥
तथा तेन प्रकर्तव्यं देवतालयशोभनम्।
मत्स्यमांसश्च धूपानि तिलं पिष्ठं च मोदकम् ॥ ८९ ॥
वृक्षाम्लरुधिरं भद्रे आरक्तकं तथैव च।
एते ह्यष्टौ मया ख्याताः सन्दोहं बलिकर्मणि ॥ ९० ॥
पटत्तिरे भवेन्मांसं मत्स्यं पृष्ठापुरन्तथा।
कुकुण्डिवो भवेद्धूपं सोपारे तिलपिष्ठकम् ॥ ९१ ॥
क्षीरके मोदकं भद्रे मायापुर्य्याऽप्लमेव च।
आम्रातके भवेद् रक्तं गृहराजे ह्यलक्तकम् ॥ ९२ ॥
समुद्रं दारुपात्रं च ह्योदकं मेरुमेव च।
अहिराजं तु मालां तु स्रग्दामं रक्तकाल्यकम् ॥ ९३ ॥
ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः।
पञ्चरङ्गपताकाञ्च श्रद्धा[५] पञ्चनिवासिनी ॥ ९४ ॥
सामुद्रमुदरं भद्रे नाभिर्मेरुः प्रकीर्तितः।
कुण्डलाख्या हि राजं च नेत्ररोमं च सर्वशः ॥ ९५ ॥
प्राणोऽपानः समानश्च ह्युदानो व्यान एव च।
देवताः पञ्च हे भद्रे शुद्धासन निवासिनः[६] ॥ ९६ ॥
ऊर्ध्वश्वासो ह्यर्धश्वासश्चन्द्रसूर्यौ प्रकीर्तितौ।
त्रयस्त्रिंशत्कोटिदेवा रोमकूपे व्यवस्थिताः ॥ ९७ ॥

५ मा. क शुद्धा पाठः।
६ मा. क ख देवता पञ्चमं भद्रे शुद्धासननिवासनाम् पाठः

बलिसंस्थापनं भद्रे सबाह्याभ्यन्तराणि च।
कथितं सर्वशास्त्रेषु दध्नो घृतमिवोद्धृतम् ॥ ९८ ॥
मद्यं चाष्टविधं प्रोक्तं महामांसाष्टकं तथा
अष्टौ च भैरवास्तेषां स्थाने च प्रकीर्तिताः ॥ ९९ ॥
भैरव्यस्तु तथा प्रोक्तास्तथा चाष्टौ च मातरः।
तासां स्थाने शक्तयः स्युरेतद्वै चाष्टकाष्टकम् ॥ १०० ॥

**अथ पूजामाह**

अर्चाचक्रं स्वविद्यायास्तन्मध्ये स्थापयेद् घटम्।
मद्यपूर्णं तत्र देवीमावाह्यार्चनमाचरेत् ॥ १०१ ॥
नानाविधानि मांसानि ह्यनेका मत्स्यजातयः।
चतुर्विधानि मक्ष्याणि उपदंशोपदेशकाः ॥ १०२ ॥
एतैः सम्यक् पूजयित्वा साङ्गां सावरणां सुराम्।
शक्तयश्च तथा वीराः पूज्याः पुष्पाक्षतादिभिः ॥ १०३ ॥
अथवा
प्रत्यक्षं पूजयेद्देवीं शक्तिं शक्तिस्वरूपिणीम्।
वीरभैरवरूपेण पुरुषेषु प्रयोजयेत् ॥ १०४ ॥
यावत्प्रमाणं योगिन्यः स्वचक्रे परिपूजिताः।
यावत्प्रमाणं देवेशि गुरवो भैरवादयः ॥ १०५ ॥
दिक्पालान्ता महेशानि पुरुषा यन्त्रमध्यगाः।
तावत्प्रमाणं देवेशि नार्यञ्च पुरुषास्तथा ॥ १०६ ॥
चक्रस्थानविभागैश्च तत्तद्बुद्ध्या निवेशयेत्।
मध्ये बिन्दौ मया सार्धं त्वां वै युग्मात्मिकां यजेत् ॥ १०७ ॥
पूर्वोक्तैर्मन्त्ररूपैश्च पूजाकल्पे प्रकीर्तितैः।
सर्वं विविच्य विधिवदुपचारैः प्रपूजयेत् ॥ १०८ ॥
चक्रे या देवता संख्या संज्ञा चार्धासनानि च।
पात्राणि पूर्णकुम्भश्च प्रत्यक्षाणि निवेदयेत् ॥ १०९ ॥
नानाविधैरलङ्कारैर्वस्त्रयुग्मैः पृथक् पृथक्।
पुष्पधूपाक्षतैश्चैव सुगन्धैश्च मनोहरैः ॥ ११० ॥
श्रीखण्डागुरुकर्पूरैर्मृगनाभिविलेपनैः।
मुद्राभिश्च नमस्कारैर्गीतवाद्यैस्तथैव च ॥ १११ ॥

विनयेन महादेवि तोषयेदिष्टदेवताः।
सन्तर्प्य जपहोमादि सर्वं पूर्ववदाचरेत् ॥ ११२ ॥

## अथ काम्यादौ ध्यानविशेषमाह

वरदाभयहस्तास्तु प्रसन्नवदनाः शुभाः।
शुक्लाम्बरपरीधानाः शान्तिकर्मणि चिन्तयेत् ॥ ११३ ॥
पाशाङ्कुशमहाचाप पुष्पबाणधरायुधाः।
रक्ताम्बरधरा देव्यो वश्यकर्मणि चिन्तयेत् ॥ ११४ ॥
कृष्णा कृष्णाम्बरा रौद्रा रौद्रायुधपरिग्रहाः।
भीमकङ्कालधारिण्यो मन्त्रमालावलीकराः ॥ ११५ ॥
कपालकर्त्रिकाहस्ताः पिवन्त्यो रुधिरासवम्।
चर्वन्त्योऽस्थीनि खादन्त्यो मारणे च विचिन्तयेत् ॥ ११६ ॥
पीताम्बरपरीधाना वज्रहस्ता महाबलाः।
स्तम्भने कटिकुम्भस्था ध्यातव्याः श्रीकुलाम्बिके ॥ ११७ ॥
उच्चाटने मृगारूढा ध्वजहस्ताः सुचञ्चलाः।
धूम्रवर्णा महादेव्यो पर्वतात्पातयन्त्यपि ॥ ११८ ॥
मोहने नीलरूपाश्च आकृष्टौ कपिलारुणाः।
कपोताभाश्च विद्वेषे चित्रारोगविवर्धने ॥ ११९ ॥
एवं कर्मानुरूपेण चक्राम्नायमिदं प्रिये।
यष्टिं फलप्रदं सम्यग् भविष्यति न चान्यथा ॥ १२० ॥
पूजा जपस्तथा होमो मन्त्रविद्यागणस्य च।
ध्यानं चक्रोक्तमार्गेण शान्तिकादौ यथाविधि ॥ १२१ ॥

## अन्य बलिदानम्

पूजागृहादुत्तरतस्त्रिकोणे भूगृहान्तरे।
उच्छिष्टभैरवं तत्र गन्धपुष्पादिभिर्यजेत् ॥ १२२ ॥
उच्छिष्टदोषो भविता चक्रपूजामहोत्सवे।
तद्दोषपरिहारार्थं भैरवं पूजयाम्यहम् ॥ १२३ ॥
तारत्रयं तथोच्छिष्टं भैरवो हि द्वयं तथा
बलि गृह्ण युगं हूँ फट् स्वाहा द्वाविंशदक्षरः ॥ १२४ ॥

अनेन बलिदानं तु पूजान्तेऽस्याः प्रकल्पयेत्।
पूजागारं समागम्य प्रणमेच्चक्रसंस्थिताम् ॥१२५॥
पठेत्स्तोत्रमिदं भद्रे एकाकारासुभावितः।
नमस्ते चक्रवत्तिस्तु नमस्ते ज्ञानदायिने ॥१२६॥
नमस्ते शिवरूपाय नमस्ते भवतारक।
अष्टाष्टकास्तु योगिन्य क्षत्रपालास्तथैव च ॥१२७॥
भैरवञ्च इमं चक्रं एकाकारं नमाम्यहम्।
एवं स्तोत्रं पठेदाद्यं निवेश्य स्वयमासने ॥१२८॥
ज्येष्ठानुक्रमतः स्थाप्यं चासनेषु यथाविधि।
स्त्रीणामन्यतमं स्थानं पुंसामन्यतमं पृथक् ॥१९२॥
अथवा मिथुनं कृत्वा क्रमात्समुपवेशयेत्।
पङ्क्ताकारेण वा सम्यक्चक्राकारेण वा पुनः ॥१३०॥
शिवशक्तिधिया सर्वान् चक्रमध्ये समर्चयेत् ॥१३१॥

१. गुरुपात्रं समादाय मद्यामृतयुतं करे।
परिषिञ्चेत् सामयिका नीति शान्तिं स्वयं पठन् ॥१३२॥

२. जयन्ति[७] देव्यो हरपादपङ्कजं प्रसन्न वामामृतमोक्षदायकम्।
अनन्तसिद्धान्तमतिप्रबोधकं नमामि साष्टाष्टकयोगिनीगणम्॥१३३॥

३. योगिनीचक्रमध्यस्थं मातृमण्डलवेष्ठितम्।
नमामि शिरसा नाथं भैरवं भैरवीप्रियम् ॥१३४॥

४. अनादि घोरसंसारध्वान्त विध्वंसकारिणे।
नमः श्रीनाथ वैद्याय कुलौषधिविधायिने ॥१३५॥

५. आपदो दुरितं रोगाः समयाचारलङ्घनात्।
ये सर्वे ते व्यपोहन्तु दिव्यचक्रस्य मेलनात् ॥१३६॥

६. आयुरारोग्यमैश्वर्यं कीर्त्तिलाभः शुभं जयः।
कान्तिर्मनोरथस्यास्तु पान्तु सर्वाश्च देवताः ॥१३७॥

७. सम्पूजकानां प्रतिपालकानां यतीन्द्रयेणीन्द्रतपोधनानाम्।
विश्वस्य राष्ट्रस्य पुरश्च राज्ञः करोतु शान्तिं भगवान् कुलेशः ॥१३८॥

८. नन्दन्तु साधक कुलान्यपि दर्शका ये
सृष्ट्या जना अथ गुरुक्त महान्वया ये।[८]

---

७ जयन्ति पाठो=न्यत्र।

८ मा. क ख सृष्ट्याद्यनाख्यचतुरुक्तमहान्वया ये पाठः।

नन्दन्तु सर्वकुलकौलरताः परा ये
त्वन्ये विशेषपदभेदकशाम्भवा ये ॥ १३९ ॥
नन्दन्तु सिद्धगुरवस्तदनुक्रमौघा
ज्येष्ठानुजाः समयिनो बटुकाः कुमार्यः ।
षड्योगिनी प्रवरवीरकुलेप्रसूता
नन्दन्तु भूमिपतिगोद्विजसाधुलोकाः ॥ १४० ॥

१०. नन्दन्तु नीतिनिपुणा निरवद्यनिष्ठा
निर्मत्सरा निरुपमा निरुपद्रवाश्च ।
नित्यं निरञ्जनरता गुरवो नितान्त[९]-
शान्ता गुणान्तमनसो[१०] हृतशोकशङ्का ॥ १४१ ॥

११. नन्दन्तु योगनिरताः कुलयोगयुक्ता,
आचार्यसामयिकसाधकपुत्रकाश्च ।
गावो द्विजा युवतयो यतयः कुमार्यो
धर्मे भवन्तु निरता गुरुशिष्ययुक्ताः ॥ १४२ ॥

१२. नन्दन्तु साधककुलान्यणिमाद्यनिष्ठाः
शापाः पतन्तु समये द्विषि योगिनीनाम् ।
सा शाम्भवी स्फुरतु काऽपि ममाप्यवस्था,
यस्यां गुरोश्चरणपङ्कजमेव लभ्यम् ॥ १४३ ॥

१३. याश्चक्रक्रमभूमिका वसतयो नाडीषु या संस्थिता
या कामद्रुमरामकूपनिलया या सुस्थिता धातुषु ।
उच्छ्वासोर्मि मरुत्तरङ्गनिलया निःश्वासवासाश्च[११] या-
स्तादेव्यो रिपुपक्ष भक्षणपरास्तृप्यन्तु कौलार्चिताः ॥ १४४ ॥

१४. या दिव्याः कुलसम्भवाः क्षितिगता या देवतास्तोयगा
या नित्यं प्रथितप्रभा शिखिगता या मातरः स्वश्रयाः ।
या व्योमामृतमण्डलामृतमया या सर्वगाः सर्वदा
ता सर्वाः कुलमार्गपालनपराः शान्तिं प्रयच्छन्तु मे ॥ १४५ ॥

१५. ऊर्ध्वं ब्रह्माण्डके वा दिवि गगनतले भूतले निष्कले वा
पाताले वानले वा सलिलपवनयोर्यत्र कुत्र स्थिता वा ।

---

९ निरन्ता पाडो मा. क ख ।

१० मा. कख शान्तोग्रशान्तमनसो पाठः ।

११ विश्वास पाठः अन्यत्र मेरौ ।

क्षेत्रे पीठोपपीठादिषु च कृतपदा धूपदीपादिमांसैः[१२]
प्रीता देव्यः सदा नः कृतबलिविधयः पान्तु वीरेन्द्रवन्द्याः ॥ १४६ ॥
१६. ब्रह्मा-श्रीशेशदुर्गाग्रहबटुकगणा भैरवाः क्षेत्रपाला
वेतालादित्यरुद्राग्रहवसुमुनयः सिद्धयो गुह्यकाद्याः ।
भूता गन्धर्व-विद्याधर-ऋषिपितरः किन्नरा यक्षनागा
योगीशाश्चारणाद्याः[१३] पुरुषमुनिसुराश्चक्रगाः पान्तु सर्वे ॥ १४७ ॥
१७. देहस्थाऽखिलदेवता गुणमुखाः क्षेत्राधिपा भैरवा,
योगिन्यो बटुकाश्च यक्षपितरो भूताः पिशाचा ग्रहाः ।
अन्ये भूचरदिग्चराश्च खचरा वेतालकाश्चेटका-
स्तृप्ताः स्युः कुलपुत्रकस्य पिबतः पानं मदीयं कुरु[१४] ॥ १४८ ॥
१८. सत्यं चेद्गुरुदक्षदेवपितरो वेदागमा योगिनी
प्रीताश्चेत्परदेवता यदि भवेद् वेदाः प्रमाणं हि चेत् ॥
शाक्तेयं यदि दर्शनं भवति चेदाज्ञाप्य मेधाऽस्ति चेत्
सत्यं चापि च कौलिको यदि तदा स्यान्मे जयः सर्वदा ॥ १४९ ॥
१९. तृप्यन्तु साधकाः सर्वे समुद्राः सगणाधिपाः ।
योगिन्यः क्षेत्रपालाश्च मम देशे व्यवस्थिताः ॥ १५० ॥
२०. शिवाद्यवनिपर्यन्तं ब्रह्मादिस्तम्बसंयुतम् ।
कलाज्ञादिशिवान्तञ्च पानयज्ञेन तृप्यताम् ॥ १५१ ॥
२१. पठित्वेत्यर्चनापत्रं[१५] समुद्वास्य गुरुस्ततः ।
दद्याच्छिष्याय कुम्भस्थं योगिनीभ्यः पृथक् पृथक् ॥ १५२ ॥
२२. पात्रं तथैव वीरेभ्यश्चेतरेभ्यः स्वयं पिवेत् ।
वक्ष्येऽथ कौलिकाचारं लोकद्वयफलप्रदम् ॥ १५३ ॥
पात्रमेलापकं कर्म प्रोच्यते सख्यकारकम् ।
न भ्राता न पिता मित्रं पात्रमेलापकादृते ॥ १५४ ॥
अदीक्षितैरनाचारैरमन्त्रज्ञैरदैवतैः ।
दूषकैः समयभ्रष्टैः प्रपञ्चव्रतधारिभिः ॥ १५५ ॥
स्त्रीदुष्टैर्गुरुशप्तैश्च भक्तिहीनैर्दुरात्मभिः ।
अनभिज्ञैरन्यपानैः पशुभिः क्षुद्रकर्मभिः ॥ १५६ ॥

---

१२ मासैः पाठो मेरौ ।
१३ मा. ख, चारणाकिंपुरुष... पाठः ।
१४ चारुं पाठ मा. क ख ।
१५ तत्पात्रन्तु समुत्थाप्य पाठो मेरौ ।

पदवाक्यप्रमाणज्ञैः श्रुतिस्मृत्यर्थवेदिभिः।
कुलोपदेशहीनैश्च वैष्णवव्रतकादिभिः ॥ १५७ ॥
ब्रह्मतेजोमुखैः पात्रमेलनं नैव कारयेत् ।
त्वत्पूजानिरतैः शान्तैः परद्रव्यपराङ्मुखैः ॥ १५८ ॥
कुलोपदेशकुशलैः कुलगर्भप्रवर्तकैः।
स्त्रीप्रियैः स्त्रीस्तुतैर्धन्यैः सुन्दरैर्मृदुवादिभिः ॥ १५९ ॥
कुलमार्गेनिगुप्तैश्च विद्यावह्निस्वरूपकैः[१६]।
प्रयोगसिद्धैर्द्रव्याढ्यैर्भाग्यवद्भिश्च कामुकैः ॥ १६० ॥
ब्रह्मभक्तैराजमान्यैर्मिलितैर्दैवयोगतः।
कुर्यात्पात्रस्य मेलापं सौख्यवृद्धिद्वयं भवेत् ॥ १६१ ॥
एकपात्रं न कुर्वीत यदि साक्षात् कुलेश्वरः।
मन्त्राः पराङ्मुखा यान्ति विघ्नाश्चैव पदे पदे ॥ १६२ ॥
न दद्याद्भैरवायापि स्वपात्रस्थितहेतुकम्।
यदि दद्याच्च मोहेन देवताशापमाप्नुयात् ॥ १६३ ॥
आसनं भोजनं पात्रमन्यच्च शयनादिकम्।
अनभिज्ञैरनर्हैश्च सङ्करं नैव कारयेत् ॥ १६४ ॥
भ्रातृभेदेन[१७] वा कुर्यात् कौलिकः पात्रमेलनम्।
पूर्वदक्षिणयोरैक्यमुदक्पश्चिमयोस्तथा ॥ १६५ ॥
योगिभिर्योगिनीभिश्च प्रदत्तं पूर्णपात्रकम्।
स्वमन्त्र[१८]पादुकामूलमन्त्रजप्तं पिबेत्ततः ॥ १६६ ॥
क्वचिद्यदिच्छयाप्राप्तमलिपात्रं तु भक्तितः।
आदाय पूर्ववज्जप्त्वा पिबेत्तच्च गुरुं स्मरेत्[१९] ॥ १६७ ॥
गुरुशक्तियुतानाञ्च गुरुज्येष्ठकनिष्ठयोः।
स्वजेष्ठस्यापि चोच्छिष्टं खादेन्नान्यस्य कर्हिचित् ॥ १६८ ॥
ज्येष्ठैः कनीयसे योज्यं न पुनर्ग्राहयेत्ततः।
शक्त्युच्छिष्टं पिबेन्मद्यं वीरोच्छिष्टं तु चर्वणम् ॥ १६९ ॥
आत्मोच्छिष्टं न दातव्यं परकीयं न भक्षयेत्।

---

१६ मा. क सुरूपकैः पाठः।

१७ मा. ख स्रोतो भेदेन पाठः।

१८ मा. ख समन्त्र पाठः।

१९ मा. ख स्मरन् पाठः।

उच्छिष्टं भक्षयेत्स्त्रीणां ताभ्यो नोच्छिष्टमर्पयेत्[20] ॥ १७० ॥
स्वस्य मेलापकस्यापि स्थापयेदेकमण्डले ।
पात्रं ततोऽर्चयेद्देवीं तर्पणादि समाचरेत् ॥ १७१ ॥
उत्थाप्योऽन्योऽन्यपात्रं च दद्यादन्योऽन्यहस्तयोः ।
द्वयोरैक्यं स्मरन्पेयमिति पात्रस्य मेलनम् ॥ १७२ ॥
बालोऽपि दीक्षितः पूर्वं ज्येष्ठः स तु कुलागमे ।
द्विजोऽपि दीक्षितः पश्चादन्त्यजः पूर्वदीक्षितः ॥ १७३ ॥
द्विजः कनिष्ठः स ज्येष्ठ इति शास्त्रविनिश्चयः ।
स्वशक्तिं वीरशक्तिञ्च दीक्षितां गुरुरूपिणीम् ॥ १७४ ॥
पाययित्वा पिवेन्मद्यमिति शास्त्रस्य निश्चयः ।
तस्मात्सुलक्षणां शक्तिं गन्धपुष्पाक्षतादिभिः ॥ १७५ ॥
अभ्यर्च्य देवताबुद्ध्या भोगपात्रं निवेदयेत् ॥ १७६ ॥

१. श्रीमद्भैरवशेखरामृतलसच्चन्द्रामृतप्लावितं,
क्षेत्राधीश्वरयोगिनीजनगणैः सिद्धैः समाराधितम् ।
आनन्दार्णवकं नवात्मकमिदं साक्षात्त्रिखण्डामृतं,
वन्दे श्रीप्रथमं कराम्बुजयुतं पात्रं विशुद्धिप्रदम् ॥ १७७ ॥

२. सर्वाम्नायकलाकलापकलितं कौतूहलद्योतकं,
चन्द्रोपेन्द्रमहेन्द्रशम्भुवरुणब्रह्मादिभिः सेवितम् ।
ध्यातं देवगणैः परं मुनिगणैर्मोक्षार्थिभिश्च सदा
लोकानामतिवर्ध्दनं सुखकरं पात्रं द्वितीयं मम ॥ १७८ ॥

३. मद्यं मांसकमत्स्यकं हरिहरब्रह्मादिभिः पूरितं
मुद्रा-मैथुन-धर्मकर्मसुखदं क्षाराम्लतिक्ताश्रयम् ।
आचार्यार्चितमष्टभैरवकलान्यासेन संशोधितं
पायात्पञ्चमकारसंयुतमिदं पात्रं तृतीयं नमः ॥ १७९ ॥

४. आविर्भूतसगोलकुण्डसुखदं ब्रह्मादिरुद्रार्चितं
नाराज्यं प्रथमाङ्गजातकुसुमं दिव्याधिकूटं परैः ।
मच्छोच्छामलमुत्तमोत्तमरसं संसेव्य दिव्यामृतं
भूयः पञ्चकमुक्तिकामकमिदं पात्रं चतुर्थं मुदे ॥ १८० ॥

५. आधारे भुजगाधिराजबलये पात्रं महीमण्डलं
मद्यं सप्तसमुद्रवारि पिशितं चाष्टौ च दिग्दन्तिनः ।

---

२० समर्पयेत् पाठः ।

सोहं भैरवमर्चयन् प्रतिदिनं तारागणैर्रक्षितं
आदित्यप्रमुखैः सुरासुरगणैराज्ञाकरैः किङ्करैः ॥ १८१ ॥

६. छत्रं चामरभद्रपीठपरमानन्दायितं दायितं
रामाराज्यमनोहरं सुखकरं सायुज्यसाम्राज्यदम् ।
नानाव्याधिभवान्धकारहरणं जन्मान्तरनाशनं
श्रीमत्सुन्दरितर्पणेन्द्रवरदं पात्रं च षष्ठं भजेत् ॥ १८२ ॥

७. जाग्रत्स्वप्नसुषुप्तितुर्य्यपुरतो चैतन्यशाक्षात्प्रदं,
विद्युद्भाष्करवह्निचन्द्रधनुषज्योतिः कथाभाषितम् ।
इडा-पिङ्गल-मध्यगात्रिबलयासत्कुण्डली चोद्धगा,
पात्रं सप्तमपूरणेन तरुणानन्दोधिकः पातु माम् ॥ १८३ ॥

८. खड्गं पादुकमज्जनं च गुटिकं सारस्वतं सत्पदं
मृत्योर्वञ्चनमुग्रकार्यग्रहणं देहस्थिरकारणम् ।
पायात्सिद्धिकरं मनःस्थिरकरं वश्यं जगत्पोषितं[21]
पात्रं चाष्टमष्टसिद्धिकरणं प्रौढप्रसन्नं सदा ॥ १८४ ॥

९. सर्वानन्दकरं सदाशिवपदद्वन्द्वैकमुक्तिप्रदं,
साम्राज्यं सुखदं मनोरथकरं त्वज्ञानविध्वंसनम् ।
आयुः कीर्तियशोविवर्धनकरं संसारमोहच्छिदं
पात्रेयं नवनाथशक्तिनवकं प्रौढप्रतापोदितम् ॥ १८५ ॥

**त्रिपात्रं पञ्चपात्रं वा सप्तपात्रमथापि वा**

नवपात्रं पिवेद्वापि षोडषार्धं पिवेन्न हि ॥ १५६ ॥
यावन्न चलते दृष्टिर्यावन्न चलते मनः ।
तावत्पानं प्रकुर्वीत पशुपानमतः परम् ॥ १८७ ॥
ब्रह्मज्ञानी कुलाचारे सुरां पीत्वा स्खलन्मुहुः ।
भूमौ पतति तस्याङ्गे लगन्ति यदि रेणवः ॥ १८८ ॥
तावत्कालं रेणुसङ्ख्यां ब्रह्मलोके स मोदते ।
पीत्वा पीत्वा जपित्वा च मुक्तकोटिकुलैः सह ॥ १८९ ॥
ब्रह्मलोके वसेद्देवि सत्यं सत्यं न संशयः ।
तत्रैव व्याप्तिमाप्नोति न पुनः प्रपतेदिह[22] ॥ १९० ॥

---

२१ मा. ख मनःस्थिरकरं वश्यं जगत्पोषितं पाठः खण्डितः ।

२२ मा. ख प्रयतेदिह पाठः ।

पीत्वा च पूजयित्वैशामीशत्वं लभते ध्रुवम् ।
तत्रैव लयमाप्नोति पुनर्नैव निवर्त्तते ॥ १९१ ॥
तत्र मत्तेषु वीरेषु कार्याकार्यं न विद्यते ।
तत्र यद्यत्कृतं कर्म शुभं वा यदि वाऽशुभम् ॥ १९२ ॥
तत्सर्वं देवताप्रीत्यै जायते नात्र संशयः ।
जल्पो जपफलं तन्द्रा समाधिरभिधीयते ॥ १९३ ॥
विक्रिया पूजनं प्रोक्तं छर्दितं भैरवो बलिः ।
मुक्तिः स्याच्छक्तिसंयोग स्तोत्रं तत्कालभाषणम् ॥ १९४ ॥
न्यासोऽवयवसंस्पर्शो भोजनं हवनक्रिया ।
ध्यानं तु वीक्षणं प्रोक्तं शयनं वदनं भवेत् ॥ १९५ ॥
तदुल्लासकृतानां च या चेष्टा सा च सत्क्रिया ।
कार्याकार्यविचारं तु यः करोति स पातकी ॥ १९६ ॥
एतच्चक्रगता वीरा विज्ञेयाः परयोगिनः ।
ये नाऽऽप्नुवन्ति मनुजाः साक्षाद् भैरवरूपताम् ॥ १९७ ॥
संमोदकोपशमनं पतनोद्गाननर्त्तनम् ।
वेणुवीणादिवाद्यं च कवितारचनादिकम् ॥ १९८ ॥
रोदनं भाषणं पातः समुत्थानं विजृम्भणम् ।
गमनं विक्रिया देवि योग इत्याभिधीयते ॥ १९९ ॥
विकृतिं मनसो हीत्वा यदोल्लासः प्रवर्त्तते ।
तदा तु देवताभावं भजन्ते योगिपुङ्गवाः ॥ २०० ॥
कौलिकान्भैरवावेशान्यो वा निन्दति मूढधीः ।
तन्नाशयन्त्यसंन्देहो योगिन्यो नात्र संशयः ॥ २०१ ॥
यद्यद्वक्ति मदावेशाददद्भूतं कौलिको जनः ।
तत्तद्भवत्यसन्दिग्धं शुभं वा यदि वाऽशुभम् ॥ २०२ ॥
तारो नमो भगवति मद्यमांसविहारिणि ।
रतिप्रिये चक्रदेवि वद कौलिकवल्लभे ॥ २०३ ॥
सत्यं मनोगतं मद्येत्युक्त्वा मद्यं पलान्वितम् ।
प्रदद्यात्कौलिकानभ्यतान्मन्त्राश्च[२३] प्रब्रुवन्ति ते ॥ २०४ ॥
तत्र कश्चित्कौलिकश्चेन्न सा स्फुरति भारती ।
न निन्देन्न हसेत्कुप्येच्चक्रे मधुमदाकुलान् ॥ २०५ ॥

---

२३ तन्मन्त्रान् पाठो मेरौ ।

एतच्चक्रगतां वार्तां बहिर्नैव प्रकाशयेत्।
तेभ्यो द्रोहं न कुर्वीत नाभितं च समाचरेत् ॥ २०६ ॥
भक्त्या[२४] संरक्षयेत्तान्वै गोपयेच्च प्रयत्नतः।
चक्रे मदाकुलां दृष्ट्वा चिन्तयेद्देवताधिया ॥ २०७ ॥
मोदते वन्दते भक्त्या स गच्छेद् योगिनीपदम्।
प्रवृत्ते भैरवीचक्रे सर्वे वर्णाः द्विजातयः ॥ २०८ ॥
निवृत्ते भैरवीचक्रे सर्वे वर्णाः पृथक् पृथक्।
स्त्रियोऽथ पुरुषः षण्डश्चाण्डालो वा द्विजोत्तमः ॥ २०९ ॥
चक्रमध्ये न भेदोऽस्ति सर्वे देवसमाः स्मृताः।
चक्रमध्ये गताः सर्वे पुरुषाः शिवरूपिणः ॥ २१० ॥
स्त्रियः सर्वाश्च पार्वत्यस्तस्माद् भेदं न कारयेत्।
कामुको न स्त्रियं गच्छेदनिच्छन्ती मदीक्षिताम् ॥ २११ ॥
सद्यः संस्कारसंशुद्धां विहितत्वाद् व्रजेत्स्त्रियम्।
सहस्रचक्रपूजातो राज्यभ्रष्टो नृपो भवेत् ॥ २१२ ॥
पञ्चाशद्भिश्च पुमाप्तो नीरोगो दशभिर्भवेत्।
यस्य चक्रस्य पूजायां रतात्स्खलति चाङ्गना[२५] ॥ २१३ ॥
अवश्यं सार्वभौमोऽसौ वर्षमध्ये भविष्यति।
यथेप्सितप्रियाप्राप्त्यै पञ्चधा पूजनं चरेत् ॥ २१४ ॥
सप्तभिः स्याद् धनप्राप्तिश्चक्रपूजाविधिस्त्वयम्।
भगिनीं वा सुतां भार्यां यो दद्यात्कुलयोगिने ॥ २१५ ॥
मधुमत्ताय चक्रान्ते तस्य पुण्यं न गण्यते।

## अथ कौलिकार्चनम्

महेश्वरं समालोक्य पूजयेद् विधिपूर्वकम् ॥ २१६ ॥
यथा विभवरूपेण पञ्चतत्त्वं निवेद्य च।
सदा तुष्टा भवेद्देवि सर्बान् कामान् लभेदपि ॥ २१७ ॥
अन्यथा नैव सिद्धिः स्यात्क्रुद्धा भवति योगिनी।
मेदिनी यस्तु पूर्णाञ्च ब्राह्मणे वेदपारगे ॥ २१८ ॥
दत्त्वा यत्फलमाप्नोति तत्फलं कौलिकार्चने।

---

२४ रक्ष्यां पाठो मेरौ।

२५ रतिं स्खलति योगत इति पाठो मेरौ।

अश्वमेधसहस्राणि वाजपेयशतानि च ॥ २१९ ॥
इष्ट्वा यत्फलमाप्नोति तत्फलं कौलिकार्चने ।
मेरुतुल्यसुवर्णन्तु ब्राह्मणे वेदपारगे ॥ २२० ॥
दत्त्वा यत्फलमाप्नोति तत्फलं कौलिकार्चनात् ।
वापीकूपतडागादि कृत्वा यत्फलमाप्नुयात् ॥ २२१ ॥
तत्फलाल्लक्षगुणितं कौलिकानां प्रपूजनात् ।
कपिलां च गवां दत्त्वा यत्फलं लभते नरः ॥ २२२ ॥
तत्फलं कोटिगुणितं कौलिकानां प्रपूजनात् ।

**अथ दूतियाग :**

पुरुषेण विना किञ्चित्प्रकृत्या क्रियते न हि ॥ २२३ ॥
तथा शक्तिं विना देवो फलं दातुं क्षमो न हि ।
तस्मात्पुंशक्तिसंयोगं कृत्वा मन्त्रं प्रसाधयेत् ॥ २२४ ॥
कौलिके वाममार्गे च पुमान् देवो न सिद्ध्यति ।
आत्मानं तु शिवं ध्यायेद्देवतां शक्तिरूपिणीम् ॥ २२५ ॥
क्रीडेत्पञ्चमकारैस्तु सुप्रीता तस्य देवता ।
दक्षमार्गे मातृबुद्धिः स्त्रीबुद्धिः कौलिके पथि ॥ २२६ ॥
यस्य जाता दृढतरा तस्य तुष्टा तु देवता ।
एतद्रहस्यमाख्यातं गोप्यं मातरिजारवत् ॥ २२७ ॥
शैवाः स्मार्ता याज्ञिकाश्च तां न कुर्वन्ति[२६] पार्वति ।
कौलिकानामागमाज्ञानां तान्त्रिकाचारवर्त्तिनाम् ॥ २२८ ॥
अनुकल्पप्रदातॄणां मध्यस्थानां तथैव च ।
देवीति बुद्धियोषित्सु येषां मतिरचञ्चला ॥ २२९ ॥
तेषां काली सुभक्तानां सर्वदा निश्चितात्मनाम् ।
आवश्यकी शक्तिपूजा पीठपूजावदीश्वरि ॥ २३० ॥
कालीबुद्ध्यैव संपूज्या पीठपूजावदीश्वरि ।
कालीवुद्ध्यैव संपूज्या न कामाकुलयाधिया ॥ २३१ ॥
चतुर्थाश्रमिणो मुक्ता ये काल्यर्चनतत्पराः ।
कौलिका वाऽप्यकौला वा ये चैतन्मतवर्त्तिनः ॥ २३२ ॥
तेषां नित्या शक्तिपूजा प्राहैवं मां पुरद्विषः ।

२६ मा. क कुर्वीत पाठः ।

सा शक्तिर्द्विविधा ज्ञेया स्वकीया च पराङ्गना ॥ २३३ ॥
स्वजातिसम्भवा या तु परिणीता भवेत् प्रिये ।
स्वकीया सा समुद्दिष्टा तथा नेयं प्रशस्यते ॥ २३४ ॥
परकीयाः पञ्चविधास्ताः क्रमेण ब्रवीम्यहम् ।
सञ्जीवद्भर्तृकाऽन्येका तादृगेव भृतप्रिया ॥ २३५ ॥
दासी वेश्या तथाऽनूढा प्रशस्ता चोत्तरोत्तरम् ।
अजातवत्सा युवति तास्वाद्यैव प्रशस्यते ॥ २३६ ॥
कदाचिज्जातवत्सापि सा सर्वसदृशी मता ।
अभावे पूर्वपूर्वायाः परा ग्राह्या हि साधकैः ॥ २३७ ॥
साधिकायास्तु कौलाया एवमेव पुमानपि ।
न साधकं विना नार्यो न पुंसः साधिकामृते ॥ २३८ ॥
मन्त्राः सिद्ध्यन्ति देवेशि कल्पकोटिशतैरपि ।
परस्त्रीसङ्गमो मद्यो यस्य वा[२७] प्राणिमारणम् ॥ २३९ ॥
स्वार्थं चेन्नरकायैव देव्यर्थं सुकृताय हि ।
को हेतुर्न विजानामि देवीप्रीतिकरा इमे ॥ २४० ॥
न पापजनकं यद्वद्यज्ञार्थं पशुघातनम् ।
न किल्विषकरस्तद्वत्परस्त्रीसङ्गमादिकः ॥ २४१ ॥

## अथ शक्तीनां जातिविशेषः

नटी कापालिनी वेश्या रजकी नापिताङ्गना ।
ब्राह्मणी शूद्रकन्या च तथा गोपालकन्यका ॥ २४२ ॥
मालाकारस्य कन्या च नव कन्याः प्रकीर्तिताः ।
नान्यूनाङ्ग्यो नाधिकाङ्ग्यो न स्थूला नाधिकं कृशाः ॥ २४३ ॥
न च्छिन्ननासाङ्गुलिका न दीर्घा न च वामनाः ।
न मुण्डिता न कुब्जाश्च मूकान्धवधिरा न च ॥ २४४ ॥
न केकरा न खञ्जाश्च भिन्न योगिगलत्कुचाः ।
बालापत्याश्च विभ्यत्यो न कार्याः शक्तयस्त्विमाः ॥ २४५ ॥
वदामि योग्याः साधिक्यो याभिस्तुष्यति कालिका ।
गौराङ्गी युवती रम्या स्मेरास्या चारुविग्रहा ॥ २४६ ॥
विशाललोलनयना पीनोन्नतपयोधरा ।

२७ मा. क मद्योपसेवा पाठः ।

विशालजघना भोगा बलित्रयविराजिता ॥ २४७ ॥
सुपार्श्वतनुमध्या च सुस्वरा कुञ्चितालका ।
विचित्रवेशाभरणा विचित्राम्बरधारिणी ॥ २४८ ॥
विचित्रस्रक्समाकीर्णा विचित्ररतिदायिका ।
सदा प्रसन्नवदना देव्या भक्तिपरायणा ॥ २४९ ॥
कौलिकाचरणज्ञा च साधके भक्तितत्परा ।
भयहीना स्मेरमुखी सर्वदा प्रियवादिनी ॥ २५० ॥
समयाचारसम्पन्ना मन्त्रज्ञा भयवर्जिता ।
विदग्धा चाप्रसूता च धैर्यस्वातन्त्र्यसंयुता ॥ २५१ ॥
एवं गुणसमायुक्ताः पूजयेत्सर्वयोषितः ।

## अथ विद्याविशेषे शक्तिविशेषमाह

गन्धरूपजातिभेदैर्महाविद्याः प्रकीर्तिताः ॥ २५२ ॥
तत्क्रमं देवदेवेशि श्रृणु यत्नेन साम्प्रतम् ।
रूपगन्धक्रमेणैव नाम दद्यान्महेश्वरि ॥ २५३ ॥
मातृपितृकृतं नाम त्यक्त्वा यत्नेन पार्वति ।
स्वयं नाम प्रदद्याद्वै यथायोगेन पार्वति ॥ २५४ ॥
या कृष्णा नीलकृष्णाभा मधुपिङ्गललोचना ।
साधकाऽऽकाङ्क्षिहृदया पुंगन्धाऽनिन्द्यगन्धिका ॥ २५५ ॥
तस्यां काली समायोज्या सा काली परिकीर्तिता ।
[२८]मद्यगन्धा तु या नारी रक्तनेत्राऽतिनिष्ठुरा ॥ २५६ ॥
महोग्रतारा सा प्रोक्ता महापापविनाशिनी ।
सर्वदा भोजनासक्ता बहुभोज्याऽतिचञ्चला ॥ २५७ ॥
त्रैलोक्यमोहनाकारा छिन्ना विद्या प्रकीर्तिता ।
सर्वलक्षणसंयुक्ता नानागन्धसमाकुला ॥ २५८ ।
सुन्दरीचारुकेशी च दीर्घनेत्रा मनोहरा ।
नाना विलासकुशला कुलशास्त्रविचारिणी ॥ २५९ ॥
गुरुवक्षस्थलाऽऽक्रान्तमध्या विरलदर्शिनी ।
सुन्दरी सा भवेद्गौरी सर्वकार्यप्रवर्तिनी ॥ २६० ॥
या सा तृतीया गौराङ्गी मधुगन्धाऽनुलेपना ।

२८ मा. ख मद्यगन्धा इत्यतः छिन्ना विद्याप्रकीर्तिता इत्यन्तो भागो न प्राप्यते ।

त्रिपुरा नाम सा देवी स्वपुष्पक्रमसाधिनी ॥ २६१ ॥
चार्वङ्गी चारुनेत्रा च कञ्जपद्मासनस्थिता ।
पीताभरणाभूषाङ्गी कमला परिकीर्तिता ॥ २६२ ॥
गुञ्जाहारविभूषाढ्या श्यामा चञ्चललोचना ।
चारुहासा च मातङ्गी विद्या ख्याता महेश्वरी ॥ २६३ ॥
दिव्यवर्णा कृशाङ्गी च दिव्यगन्धानुलेपना ।
भुवनेशी मया प्रोक्ता नानाभूषणभूषिता ॥ २६४ ॥
पिङ्गनेत्रा पिङ्गकेशा किञ्चिदुच्चातिहासिनी ।
धूमावती च सा प्रोक्ता सिद्धविद्यां श्रृणु प्रिये ॥ २६५ ॥
लम्बवक्त्रा च लम्बोष्ठी पीतवर्णाऽतिनिश्चला ।
बगला सा महेशानि कीर्तिता तव सुव्रते ॥ २६६ ॥
दश विद्या इमा ख्याताः शक्तिरूपेण पार्वति ।
दश विद्या महेशानि माता स्त्री भगिनी क्रमात् ॥ २६७ ॥
क्रीडन्ति सततं देवि विद्या एव न संशयः ।
दशक्रमो महेशानि दशविद्यासु यत्नतः ॥ २६८ ॥
सर्वथा कारयेद्देवि नान्यथा युगकोटिभिः ।
न हि सिध्यन्ति देवेशि दशपद्मजपेन वै ॥ २६९ ॥
तस्मात्सर्वप्रयत्नेन स्वस्वविद्याक्रमं चरेत् ।
आत्मीया च परा चैव शक्तिमात्रं महेश्वरि ॥ २७० ॥
मन्त्राधिदेवताबुद्ध्या पूज्याः सर्वोपचारकैः ।
विविधैः फलताम्बूलैर्वस्त्रालङ्कारहेमभिः ॥ २७१ ॥
सम्पूज्य विधिवद् भक्त्या बहुहेतुं प्रदापयेत् ।
सम्भोगवासनां धृत्वा यः कुर्याच्छक्तिपूजनम् ॥ २७२ ॥
स दारिद्र्यमवाप्नोति नारकी च भवेद्ध्रुवम् ।
बहुभिः किं वचोजालैः समासात्समयं श्रृणु ॥ २७३ ॥
निर्दिश्यते शक्तिपूजा कौलिकानां दिने दिने ।
प्रत्यहं च सुरादानं तत्स्वीकारोऽन्वहं तथा ॥ २७४ ॥
नित्यतोक्ता तयो देवि कुलमार्गरतेषु च ।
हेयाहेयविचारोऽपि विरलः शक्तिषु प्रिये ॥ २७५ ॥
अनुकल्पप्रदातॄणामपि नित्यत्वमेव हि ।
विहाय गर्हिताः शक्तिर्योग्या एव हि गृह्यते ॥ २७६ ॥

इतरेषां शक्तिपूजा काम्या नैमित्तिकी तथा।
समाधिष्ठितचित्तानामितरासां निराकृतिः ॥ २७७ ॥
विधानं कलयेदानीं मन्त्रानपि च पार्वति।
स्नातां दिव्याम्बरधरां नानालङ्कारमण्डिताम् ॥ २७८ ॥
युवतीं पीनवक्षोणां तथा चाकृतभोजनाम्।
हस्ते गृहीत्वा वामोरौ स्थापयेच्छक्तिरुत्तमाम् ॥ २७९ ॥
अशक्नुवानां बोढुं तां देव्या वामेऽथवाऽऽसने।
वामभागे समालिख्य त्रिकोणं पद्मवर्तुलम् ॥ २८० ॥
श्वेतरक्तसमायुक्तं बालं सिन्दूरचर्चितम्।
साधकः प्राङ्मुखो भूत्वा देवीं प्रत्यङ्मुखीं यजेत् ॥ २८१ ॥
उड्डियानं तु त्रेतायां कृते पूर्णगिरिं यजेत्।
जालन्धरं द्वापरेषु कामपीठं कलौ युगे ॥ २८२ ॥
तानि चत्वारि वक्ष्यामि गुह्याद्गुह्यतराणि च।
शाक्तेः सर्वशरीरं यत्पीठं पूर्णगिरिर्मतः ॥ २८३ ॥
तस्याः शिरश्चन्द्रभागे उड्डियानं कीर्त्तितं मया।
स्तनौ जालन्धरं प्रोक्तं कामपीठं भगः स्मृतः ॥ ३८४ ॥
प्राणायामत्रयं कृत्वा ऋष्यादिन्यासमाचरेत्।
ऋष्यादिञ्च चरेदादौ ततः शोधनमाचरेत् ॥ २८५ ॥
ऋष्यादिकं श्रृण्विदानीमेतस्य सुरवन्दिते।
श्रीशक्तिपूजनस्यास्य गोवर्द्ध ऋषिरीरितः ॥ २८६ ॥
विकृतिश्छन्द आख्यातं शक्तिरूपा-पदादनु।
महाकाली देवता च कामो बीजमुदाहृतम् ॥ २८७ ॥
शक्तिर्बधूर्भौवनेशी कीलकं समुदाहृतम्।
शिवशक्तिसामरस्यप्रकाशे विनियोगता ॥ २८८ ॥
ससर्गा पञ्चवर्गाद्यैर्बधूबीजैः षडङ्गकम्।
विधायाऽऽत्मनि शक्त्यङ्गे न्यासं वाच्यमथाचरेत् ॥ २८९ ॥
स्त्री चेच्छक्ति पदस्थाने भैरवेति पदं वदेत्।
योषिद्योनिपदस्थाने स्याल्लिङ्गपदकल्पना ॥ २९० ॥
गुरुपदेशतश्चापि स्वबुद्ध्या वा सुरेश्वरि।
ऊहः सर्वत्र कर्तव्यो लिङ्गे तत्तत्पदेऽपि च ॥ २९१ ॥
समानः किन्तु गायत्र्यां साऽसमानोभयत्र हि।

न्यासोद्धारमिदानीं त्वं सावधाना निशामयि ॥ २९२ ॥
त्रपाकामो रामा रामो योगिनी रोषयोषितौ।
डाकिनी प्रलयो हारः फेत्कारी कर्णिकाऽपि च ॥ २९३ ॥
प्रेतो नृसिंहः कुलिकं चिच्छक्तिः सर्वशेषगा।
एकैकं परतो दद्याद्बीजं नाम्नां सुरार्चिते ॥ २९४ ॥
तान्यप्यादौ कौलिकी च भगमालिन्यनन्तरम्।
रतिप्रिया तथाऽनङ्गोऽकुला समयपालिनी ॥ २९५ ॥
मदनोन्मादिनी कामा वशिनी तदनन्तरम्।
चित्तोन्मथिन्यपि ततो मोहन्याकर्षिणी तथा ॥ २९४ ॥
स्मरातुराऽनङ्गरूपा हृत्प्रमोदिन्यनन्तरम्।
सन्तापिनी ततः संक्षोभिणी च त्रिदशार्चिते ॥ २९७ ॥
सर्वशेषे परिज्ञेया सामरस्यस्वरूपिणी।
एताः षोडश वै कार्या ङेन्ताः पूर्वार्णसंयुताः ॥ २९८ ॥
स्त्रीकर्तृकत्वे पुंल्लिङ्गा भैरवार्चनकर्मणि।
नमः शेषेषु सर्वेषु स्थानानि कलयाधुना ॥ २९९ ॥
शिरः कपोलौ च गलः स्कन्धौ वक्षः कुचौ तथा।
पार्श्वौ कुक्षिश्च नाभिश्च वस्तिर्वक्षण एव च ॥ ३०० ॥
उरु जङ्घे च जानू च पादौ योनिश्च शेषगाः।
जीवन्यासः वदेत्तस्याः सामरस्यमथाऽऽचरेत् ॥ ३०१ ॥
एतदेवेति संप्रोक्तं शक्तिशोधनमीश्वरि।
कृत्वा प्रहस्तं तु करं दत्त्वा हृदुरोजयोः ॥ ३०२ ॥
कामपीठेऽथवा देवि नाभौ मौलेयके मते।
मनुं गृणन्वक्ष्यमाणं वारैकं वा त्रिवारकम् ॥ ३०३ ॥
जीवन्यासात्मकमिदं शक्तिशोधनमाचरेत्।
अनेन शुध्यते शक्तिर्नान्यथा[२९] मन्त्रकोटिभिः ॥ ३०४ ॥
माया कामो बधूर्लक्ष्मीः कूर्चः प्रासाद एव च।
शाकिनी डाकिनी चापि बीजान्यष्टौ पुनः स्मरेत् ॥ ३०५ ॥
भोगानन्द कलाशक्तिर्जीवात्मपरमात्मकाः।
प्रतिविम्बाद्वैतसंज्ञैकात्म्यनामलयाभिधान् ॥ ३०६ ॥
दश कूटान् क्रमात्प्रोच्य ब्रह्म तद्विपरीतकम्।

२९ मा. ख 'अन्यथा' इत्यतो 'कलाशक्ति' इत्यन्तो भागस्त्रुटितः

द्वयं दशार्णमुचार्य[30] मेवमध्दार्ध्दसम्मितम् ॥ ३०७ ॥
ततो ममानुहृदये तदानुहृदयं वदेत् ।
दधातु मम वाच्युक्त्वा ते वाचं समुदीरयेत् ॥ ३०८ ॥
ममेन्द्रियेषु तदनु प्रवदेत् कमलानने ।
ते इन्द्रियाणि च संभाष्य मम वाचं जुषत्व च ॥ ३०९ ॥
ततः सिद्धिकरालीति त्वा मह्यं नियुनक्तु च ।
यैव त्वं च स एवाहं य एवाहमितीरयेत् ॥ ३१० ॥
सैव त्वं सन्धिनायुक्तमुभौ तदनु कीर्तयेत् ।
शिवशक्तिसामरस्यमापन्नौ तदनन्तरम् ॥ ३११ ॥
तदैक्यमिति सङ्कीर्त्य साधयाव इतीरयेत् ।
स सन्धिस्तारहृच्छीर्ष मन्त्रस्तदनु सुन्दरि ॥ ३१२ ॥
अयं मन्त्रः समुद्दीष्टः शक्तिशोधनकर्मणि ।
अष्टोत्तरशतार्णाढ्यो न न्यूनो नापि चाधिकः ॥ ३१३ ॥
ध्यानं पूर्वोदितं यत्ते भगवत्त्या मया तव ।
शक्तिं तादृगाकारां ध्यायेद् वीक्ष्याङ्गसञ्चयम् ॥ ३१४ ॥
भैरवध्यानसदृशमात्मानं च विभावयेत् ।
तत आवाहयेद्देवीं शक्त्यङ्गे पीठसन्निभे ॥ ३१५ ॥
वक्ष्यमाणेन मन्त्रेण साधकाञ्जलिमुद्रया ।
माया काम बधू राव कमला योगिनीरुषः ॥ ३१६ ॥
डाकिनी चापि फेत्कारी नैवतान्यादिगानि हि ।
ऐह्येहि भगवत्युक्त्वा महाकालि समीरयेत् ॥ ३१७ ॥
शक्तिपीठेऽनु सान्निध्यमावेशय समुद्धरेत् ।
ततस्त्वामहमुल्लिख्याऽऽवाहयामि च कीर्तयेत् ॥ ३१८ ॥
सर्वशक्तिसमाभाष्य स्वरूपिणि ततो वदेत् ।
तारं प्रतीष्ठ शीर्षञ्च शक्तिमूल मनु श्रृणु ॥ ३१९ ॥
माया रावः स्मरो नारी शक्तये हृदयन्ततः ।
मन्त्रो नवाक्षरः प्रोक्तः शक्तिपूजनकर्मणि ॥ ३२० ॥
ऋष्यादिर्नास्ति चैतस्य न छन्दो बीजशक्तयः ।
किन्तु पाद्यादि सर्वोपचाराद्यर्पणहेतुकः ॥ ३२१ ॥
जप्तव्यो नैव चायं हि त्रिपुरघ्नवचो यथा ।

---

३० मा. क द्वयं दशान्तमुच्चार्य इति पाठः ।

सर्वोपचाराण्येतेन प्रदद्यात् किन्तु शक्तये ॥ ३२२ ॥
पाद्य दानादिनैवेद्यदानान्तं यद्यदिष्यते ।
न चान्यमन्त्रो भिन्नोऽस्ति मन्यते जगदीश्वरि ॥ ३२३ ॥
कुर्वते यत्तु मौलेया तदमूलं विभाव्यताम् ।
शक्तिपूजावशिष्टं यत् पुष्पस्रगनुलेपनम् ॥ ३२४ ॥
यदात्मने दीयते तत्सामरस्यार्चनं भवेत् ।
तदमन्त्रं प्रकर्तव्यमेवमीशानशासनम् ॥ ३२५ ॥
ततो दत्त्वा करं शक्तिर्योनिपीठे जपं चरेत् ।
साधकः शक्तिगायत्र्या शतमद्धार्द्धमेव वा ॥ ३२६ ॥
योनिपीठं जपः प्रख्यो न जपः क्वापि विद्यते ।
सद्यः प्रभावजनको मन्त्राणां पीठ उत्तमः ॥ ३२७ ॥
मन्त्राणां बलहीनानां प्रयोग क्षीणचेतसाम् ।
अनुद्धृतानां शापेभ्यो न्यूनाधिक्यार्णताजुषाम् ॥ ३२८ ॥
गुरुनिष्ठानामपि च प्रदानोनौजसां तथा ।
अज्ञातविधिपूजानां मयात्रार्पणभागिनाम् ॥ ३२९ ॥
त्यक्तानां विस्मृतानां च तथाचैवाप्रभाविनाम् ।
सन्धूक्षणार्थमुभयं प्रोक्तं त्रिपुरवैरिणा ॥ ३३० ॥
एकं निर्वाणमन्त्रेण संपुटीकृत्य तज्जपम् ।
कौलासनेनापरं च योनिपेठे जपक्रिया ॥ ३३१ ॥
कौलासनं योनिपीठे जपः स्त्रीभ्यो मनुग्रहः ॥
गुरुस्त्रीशक्तिना चापि मिश्रीभूय जपेद्द्वयोः ॥ ३३२ ॥
अन्यैः समिन्धनं मन्त्रं बीजाधिक्यकरं परम् ॥ ३३३ ॥
अथातः शक्तिगायत्रीं श्रृणु देवि महाफलम् ।
कामबीजाद् भगवतीं ङेन्तां पुरत ईरयेत् ॥ ३३४ ॥
विद्महे योनिमालिन्यै धीमहीति ततः परम् ।
तन्नः शक्तिरिति प्रोच्य सर्वशेषे प्रचोदयात् ॥ ३३५ ॥
एषा हि शक्तिगायत्री सर्वागमसुगोपिता ।
एतां विना न शक्त्यर्चा न शक्त्यर्चाङ्गिको जपः ॥ ३३६ ॥
यथाशक्ति जपित्वैनां तत्समर्प्य च शक्तये ।
वामोरावुपवेश्यैव कुर्यान्मूलजपं प्रिये ॥ ३३७ ॥
पूजयेन्मदनागारे रक्तचन्दनचर्चिते ।

भगे तदीये विज्ञेया नान्यास्तिस्रः प्रवाहिकाः ॥ ३३८ ॥
एकोत्तरा हि का चान्द्री सौरी चान्या तु वाहिका।
आग्नेयी चापरा ज्ञेया पूजयेत्तास्तु साधकः ॥ ३३९ ॥
अम्बु श्रवति सा चान्द्री पुष्पं श्रवति भानवी।
बीजं श्रवति चाग्नेयी तास्तु नामभिरर्चयेत् ॥ ३४० ॥
वाग्भवाद्येर्नमोयुक्तैः पूजयेत् सुप्रसन्नधीः।
ध्यानं कुर्यान्महेशानि गह्वरे मेकरानने ॥ ३४१ ॥
ताम्रचूडशिखाकारं गजवक्त्रसमप्रभम्।
तत्रस्थां चिन्तयेद्देवीं विद्यां भुवनमोहिनीम् ॥ ३४२ ॥

**भगमालामन्त्रस्तु**

वाग्भवं भगशब्दान्ते भगे भगिनि चालिखेत्।
भगोदरि भगान्ते तु भगमाले भगावहे ॥ ३४३ ॥
भगग्रह्ये भगप्रान्ते योनिप्रान्ते भगान्तके।
निपातिनि च सर्वान्ते ततो भगवशंकरि ॥ ३४४ ॥
भगरूपे ततो लेख्यं नीरजायतलोचने।
नित्यक्लान्ते भगप्रान्ते स्वरूपे सर्वमालिखेत् ॥ ३४५ ॥
भगानि मेह्यानमोन्ते वरदेऽथ समालिखेत्।
रेतेश्वरे ते भगवक्लिन्ने क्लिन्नद्रवे ततः ॥ ३४६ ॥
क्लेदय द्रावय चाथ सर्वसत्त्वान् भगेश्वरि ॥
अमोघे भगविच्चे च क्षुभ[३१]: क्षोभय सर्व[३२] च ॥ ३४७ ॥
सत्त्वान् भगेश्वरि ब्रूयाद् वाग्भवं ब्लूँ[३३] जमादिकम्।
भैं ब्लूँ मौं ब्लूँ च हैं क्लिन्ने .... [३४]ततः परम् ॥ ३४८ ॥
सर्वाणि च भगान्यन्ते मे वशञ्चानयेति च।
स्त्रीबीजञ्च हरप्रान्ते बलमात्मकमक्षरम् ॥ ३४९ ॥
भुवनेशीं समालिख्य विद्येयं भगमालिनी।
चतुर्थ्यन्ते यजेद्देवि भगे पुष्पं विनिक्षिपेत् ॥ ३५० ॥
<u>प्रक्षाल्य कुलद्रव्येण ग</u>न्धपुष्पैः समर्चयेत्।

३१ मा. ख . कुंभ पाठः।
३२ सर्वतः पाठ उचितः।
३३ मा. ख ब्रूँ पाठः।
३४ छन्दोभङ्गः, अत्र पाठ त्रुटित इवाभाति।

धूपदीपादिकं कृत्वा पश्चादावरणं यजेत् ॥ ३५१ ॥
इहाप्यावाहनं नास्ति जीवन्यासो महेश्वरि ।
तथैवं च विधानेन तां षोडशोपचारकैः ॥ ३५२ ॥
इष्टदेवीं प्रपूज्याथ सर्वसिद्धीश्वरो भवेत् ।
अर्चयेद् गन्धपुष्पाद्यैः स्वशिवं तदनन्तरम् ॥ ३५३ ॥
अथ न्यासं प्रवक्ष्यामि शिवात्मानं विभावयेत् ।
पञ्चवक्त्रं महादेवं कलायुक्तं न्यसेत्क्रमात् ॥ ३५४ ॥
ईशानः सर्वविद्यानां शशिनी प्रथमा कला ।
ईश्वरः सर्वभूतानामङ्गदा तदनन्तरम् ॥ ३५५ ॥
ब्रह्माधिपति शब्दान्ते ब्रह्मणोऽधिपति पुनः ।
ब्रह्मेष्टदा शिवो मेऽस्तु मरीचि संपुटं न्यसेत् ॥ ३५६ ॥
सदाशिवां समुच्चार्यं अंशुमालिन्यथा परा ।
तत्पुरुषाय विद्महे कला शान्तिरितीरिता ॥ ३५७ ॥
महादेवाय धीमहि कलाविद्या तथैव च ।
तन्नो रुद्रः पदं पश्चात् प्रतिष्ठा कथिता कला ॥ ३५८ ॥
प्रचोदयात् समुच्चार्य निवृत्तिः स्यात् ततः परम् ॥
पूर्व-पश्चिम-याम्येषु ह्युत्तरेष्वप्यनुक्रमात् ॥ ३५९ ॥
हृदये विन्यसेद्देवि अघोरेभ्यस्तमः कला ।
अथ घोरेभ्यो मोहाञ्च[३५] ग्रीवायां विन्यसेत्ततः ॥ ३६० ॥
घोरान्ते स्यात्क्रिया पश्चाद्दक्षिणांशे प्रविन्यसेत् ।
नमस्तेऽस्तु क्षुधां पश्चात् कलां पृष्ठे न्यसेत्क्रमात् ॥ ३६१ ॥
रुद्ररूपेभ्य इत्यन्ते तृषान्तारनमोऽन्तकाः ।
वामदेवाय नमोन्ते रणा स्याद् गुह्यदेशके ॥ ३६२ ॥
मुखे सव्ये प्रतिन्यस्य रक्ष्यां ज्येष्ठाय वै नमः ॥
रुद्राय नमो रतिं पश्चाद् वामं मुखे कलामिमाम् ॥ ३६३ ॥
कालाय नम इत्यन्ते पालिनी उरुदक्षिणे ।
कलकामा च देवेशि वामे विकरणाय च ॥ ३६४ ॥
नमः पदं समुच्चार्य सयमनीं दक्षजानुनि ।
बलक्रिया समादिष्टा वामे विकरणाय च ॥ ३६५ ॥
नमोन्ते बृद्धिमुच्चार्य दक्षिणे स्फिचि विन्यसेत् ।

---

३५ मा. ख अघोरेभ्यो मोहाञ्च पाठः ।

बलप्रमथनाय नमो रात्रिं वामे प्रविन्यसेत् ॥ ३६६ ॥
सर्वभूतदमनाय नमोन्ते ब्राह्मणीकला ।
कटिदेशे प्रविन्यस्य मनान्ते मोहिनीङ्कलाम् ॥ ३६७ ॥
दक्षिणे पार्श्वके न्यस्य उन्मनाय नमोज्वलाम् ।
पादयोस्तननासासु मूर्ध्नि बाहुयुगे न्यसेत् ॥ ३६८ ॥
सद्योजातोद्भवाः सम्यगष्टौ मन्त्री कलाः क्रमात् ।
सद्योजातं प्रपद्यामि सिद्धिः स्यात् प्रथमा कलाा ॥ ३६९ ॥
सद्योजाताय वै भूयो नमः स्याद् बृद्धिरीरिता ।
भवेद्युतिस्तृतीया स्यादभवे तदनन्तरम् ॥ ३७० ॥
लक्ष्मीश्चतुर्थी कथिता ततो नातिभवे पदम् ।
मेधाख्या पञ्चमी प्रोक्ता कला[३६] भूयो भवस्व माम् ॥ ३७१ ॥
प्रज्ञा समीरिता षष्ठी भवान्ते स्यात् प्रभा कला ।
उद्भवाय नमः पश्चात्सुधा स्यादष्टमी कला ॥ ३७२ ॥
प्रणवाद्याश्चतुर्थ्यन्ता नमोन्ताश्च प्रविन्यसेत् ।
एवं न्यासविधिं कृत्वा स्वयं शैवं विभावयेत् ॥ ३७३ ॥
पञ्चाक्षरं पुरस्कृत्य रुद्रध्यानपरायणः ।
सामरस्यभवं कृत्वा रक्षार्थं कवचं पठेत् ॥ ३७४ ॥
बध्वा तु क्षोभिणीं मुद्रां यन्त्रमध्ये विनिक्षिपेत् ।
भगं कुण्डं श्रुवो लिङ्गंमाज्यं चैव तु वीर्यकम् ॥ ३७५ ॥
सर्वतत्त्वं समुच्चार्य सहस्रं जपमाचरेत् ।
धर्माधर्महविर्दीप्तमात्माग्नौ मनसा श्रुचा ॥ ३७६ ॥
सुषुम्णावर्त्मना नित्यमक्षवृत्तिं जुहोम्यहम् ।
स्वाहान्तोऽयं महामन्त्र आरम्भे परिकीर्तितः ॥ ३७७ ॥
शिवशक्तिसमायोगो योग एव न संशयः ।
शीत्कारो मन्त्ररूपं च वचनं स्तवनं भवेत् ॥ ३७८ ॥
आलिङ्गनं च कस्तूरी कर्पूर चुम्बनं भवेत् ।
नखदंष्ट्राक्षतादीनि पुष्पाणि विविधानि च ॥ ३७९ ॥
मथनं तर्पणं विद्धि बीजपातो विसर्जनम् ।
आलिङ्गनं चुम्बनं च स्तनयोर्मर्दनं तथा ॥ ३८० ॥

---

३६ मा. क कला पदं न प्राप्यते ।

दर्शनं स्पर्शनं योनिर्विकारं[३७] लिङ्गघर्षणम् ।
प्रवेशः स्थापनं शक्तेर्नवपुष्पाणि पूजयेत् ॥ ३८१ ॥
न दद्याच्चुम्बनं यस्तु दरिद्रो जायते ध्रुवम् ।
आलिङ्गनं विना देवि कुष्ठी भवति पार्वति ॥ ३८२ ॥
विना दन्तक्षतैर्देवि लोके भवति निन्दितः ।
आलिङ्गने हरेद्रोगान् धनधान्यादि चुम्बने ॥ ३८३ ॥
नखदन्तक्षताद्यैश्च तदा मोक्षः प्रजायते ।
सायुज्यं सङ्गमेन स्यात् सत्यमेव न संशयः ॥ ३८४ ॥
प्रकाशाकाशहस्ताभ्यामवलम्ब्योन्मनी श्रुचा ।
धर्माधर्मकलास्नेहपूर्णमग्नौ जुहोम्यहम् ॥ ३८५ ॥
स्वाहान्तोऽयं महामन्त्रः शुक्रत्यागे प्रकीर्तितः ।
शुद्धमन्त्रौषधैनैव योनेस्तु मथनं चरेत् ॥ ३८६ ॥
मथ्यमाने च तस्या हि जायते तत्त्वमुत्तमम् ।
गृह्णीयात्तत्प्रयत्नेन द्रव्यं कुण्डोद्भवं शुभम् ॥ ३८७ ॥
तेनामृतेन दिव्येन कालिकां तर्पयेत्सदा ।
सान्निध्यात्तत्क्षणाद्वाऽपि प्रीता सिद्धिं प्रयच्छति ॥ ३८८ ॥
समस्तदेवतानाञ्च तर्पनञ्च सदाऽमृतैः ।
गुरूणां साधकानाञ्च सर्वेषां तर्पणञ्चरेत् ॥ ३८९ ॥
तेनामृतेन दिव्येन सर्वे तुष्टा भवन्ति च ।
यत्कामं कुरुते मन्त्री तत्क्षणादेव सिध्यति ॥ ३९० ॥
कुलामृतं समादाय तत्रार्धे निः क्षिपेद् बुधः ।
ततः सोमकलाः पूज्याः साधकैर्निर्मलाशयैः ॥ ३९१ ॥
मधुभाण्डसहस्रैस्तु मांसभारशतैरपि ।
नैव तुष्टा भवेद्देवि भगलिङ्गामृताद्धृते ॥ ३९२ ॥
कुलद्रव्यं च संशोध्य शिवशक्तिमयं प्रिये ।
जीवामृतं परं ब्रह्मरूपं निक्षिप्य सुन्दरि ॥ ३९३ ॥
अर्घ्यपात्रामृतैर्यष्ट्वा निर्विकल्पः सदानघः ।
अर्घ्यद्रव्यैश्च देवेशि योनौ देवीं प्रपूजयेत् ॥ ३९४ ॥
योनिपूजां विना पूजा कृता चाप्यकृता भवेत् ।
दूतीयागे कृते मन्त्री सर्वज्ञो जायते ध्रुवम् ॥ ३९५ ॥

---

३७ योनेरिति पाठ उचितः ।

न तस्य पुनरावृत्तिः कल्पकोटिशतैरपि।
यैः कृतं यजनं दूत्या तैरिष्टाः ऋतवोऽखिलाः ॥ ३९६ ॥
सर्वतीर्थमयः प्रोक्तः सर्वदेवमयो भवेत्।
पुरश्चर्यादि सकलं कृतं तेन न संशयः ॥ ३९७ ॥
अश्वमेधसहस्राणि वाजपेयशतानि च।
आसमुद्रा च धरणी दत्ता तेन च दक्षिणा[३८] ॥ ३९८ ॥
मेरुमन्दरतुल्यानि सुवर्णान्यर्पितानि वै।
गोकोटिदानाद् यत्पुण्यं तत्पुण्यं जायते प्रिये ॥ ३९९ ॥
तस्मात्सर्वप्रयत्नेन दूतीयागं समाचरेत्।
पूजा संपूर्णदा भद्रे सर्वारिष्टप्रणाशिका ॥ ४०० ॥
योनिपूजायुता पूजा कृता सर्वाक्षयाा भवेत्।
आयुरारोग्यविभवानमितान् लभते नरः ॥ ४०१ ॥
अनेनैव विधानेन विषार्तो निर्विषो भवेत्।
पुत्रार्थी लभते पुत्रं धनार्थी लभते धनम् ॥ ४०२ ॥
मातङ्गीशक्तिमभ्यर्च्य तया साकं समर्चयेत्।
मातङ्गीं मन्यथोपेतां सर्वकामार्थसिद्धये ॥ ४०३ ॥
शक्त्या साकं सदा पूज्या मातङ्गी मन्त्रदेवता।
सा देवी शक्तिहीना तु न ददाति मनोरथम् ॥ ४०४ ॥
पूर्णाभिषेकरहितो यः शक्तिं शोधयेन्नरः।
सोऽधमः पतितो रोगी पञ्चत्वं लभते ध्रुवम् ॥ ४०५ ॥
इन्द्रियाणामधृष्यत्वात्कामलोभादिसम्भवात्।
प्रायः कलौ कौलिकोऽयं पन्था नरकहेतवे ॥ ४०६ ॥
उत्तमा नित्यपूजा स्यान्मध्यमं पर्वपूजनम्।
मासपूजाऽधमा प्रोक्ता मासादूर्ध्वं पशुर्भवेत् ॥ ४०७ ॥
मासेऽथवा त्रिमासे वा षण्मासे वत्सरेऽपि वा।
श्रीगुरुं पूजयेद् भक्त्या प्राप्तौ तत्स्त्रीसुतादिकान् ॥ ४०८ ॥
तदभावे तत्कुलीनं तच्छिष्टां वाऽन्ययोगिनम्।
सन्तोषयेत्कुलद्रव्यैश्चक्रपूजापुरः सरम् ॥ ४०९ ॥

---

३८ मा. क ख सदक्षिणा पाठः।

### अथ चक्रस्य विशेषाचारमाह

उच्छिष्टो न स्पृशेच्चक्रं कुलद्रव्यं तथा गुरुम्।
बहिः प्रक्षाल्य च करौ कुलद्रव्याणि दापयेत् ॥ ४१० ॥
मद्यभाण्डं समुध्दृत्य स पात्रं परिपूरयेत्।
भोगपात्रं सुराकुम्भं निःक्षिपेन्न कदाचन ॥ ४११ ॥
चक्रमध्ये शुचिधिया करस्यक्षालनादिकम्।
यः करोति हि मूढात्मा स भवेदापदां पदम् ॥ ४१२ ॥
निष्ठीवनं मलं मूत्रमधोवायुविसर्जनम्।
श्रीचक्रमध्ये यः कुर्यात्स भवेद् योगिनी पशुः ॥ ४१३ ॥
चक्रमध्ये घटे भिन्ने पात्रे वा स्खलिते तथा।
दीपनाशे राष्ट्रपीडा तच्छान्त्यै चक्रपूजनम् ॥ ४१४ ॥
परिहासं प्रलापं च विडम्बं बहुभाषणम्।
औदासिन्यं भयं क्रोधं चक्रमध्ये विवर्जयेत् ॥ ४१५ ॥
पात्रहस्तं चक्रमध्ये न भ्रमेत् पूर्णपात्रकम्।
चिरं न स्थापयेद्धस्ते नालपेत् पात्रपाणिके ॥ ४१६ ॥
पादाभ्यां न स्पृशेत्पात्रं न च भिन्द्यात्कदाचन।
नैकहस्ते न दातव्यं न बिन्दुं पातयेदधः ॥ ४१७ ॥
पात्रं न चालयेत्स्थानान्न मुद्रां वर्जित पिवेत्।
सशब्दं न पिवेन्मद्यं न कुर्यात्पात्रसङ्करम् ॥ ४१८ ॥
पात्रस्थांशद्वयं मद्यं पूर्णत्र्यंशं तुरीयकम्।
नान्योन्यं ताडयेत्पात्रं न पात्रं ताडयेदधः ॥ ४१९ ॥
साधारं नोद्धरेत्पात्रमनाधारेण निः क्षिपेत्।
रिक्तं पात्रं न कुर्वीत न पात्रं लङ्घयेत्तथा ॥ ४२० ॥
प्रक्षाल्य गोपयेत्पात्रं नमोन्तं विप्रमीक्षयेत्।
श्रीचक्रस्थं कुलद्रव्यं दद्याद्यो वा कुले जने ॥ ४२१ ॥
फलानि तस्य नश्यन्ति क्रोधी शपति देवता ॥ ४२२ ॥

*इति श्रीतन्त्रचिन्तामणौ सकलसाधारणचक्रार्चननिर्णय नामाष्टाविंशतितमः प्रकाशः।*



# उनत्रिंशत्तमः प्रकाशः

## अथ यन्त्रनिर्माणप्रतिष्ठामाह

**श्रीदेव्युवाच**

देवेश श्रोतुमिच्छामि यन्त्रस्थापननिर्णयम्।
यन्त्रं तु गृहमित्युक्तं यन्त्रं पीठं प्रकीर्तितम् ॥ १ ॥
स्थिरयन्त्रे प्रतिकृतौ नावाहनविसर्जने।
प्रतिष्ठाप्य महायन्त्रं न तद्यन्त्रं विसर्जयेत् ॥ २ ॥
यन्त्रप्रतिष्ठामासाद्य विद्यां तत्र विभावयेत्।
जीवन्यासं तत्र कृत्वा विद्यां तत्र विभावयेत् ॥ ३ ॥
यन्त्रप्रतिष्ठां कृत्वादौ देवं तत्र प्रतिष्ठयेत्।
तदा विसर्जनं नास्ति न चावाहनमेव च ॥ ४ ॥
अतः कालस्य व्यत्यासाद्यन्त्रमेव प्रतिष्ठयेत्।
मूर्तिं स्वहृद्गतां तत्र ध्यात्वा पूज्य विसर्जयेत् ॥ ५ ॥
स्फटिकादिं स्वर्णरौप्यं यन्त्रं च कारयेत् प्रिये।[1]
यावज्जीवं सुवर्णे स्याद् रौप्ये द्विविंशतिं प्रिये ॥ ६ ॥
ताम्रे द्वादशकं वर्षं तदर्धं भूर्जपत्रके।
ताम्रे द्वादशवर्षाणि धारणेन तु पूजने ॥ ७ ॥
ताम्रोर्घ्ये ताम्रयन्त्रे च देवता सर्वदा स्थिता।
संस्कृत्य पूजयेद्देवि स्फटिकादौ तु सर्वदा ॥ ८ ॥
ताम्रे लक्षगुणं प्रोक्तं रौप्ये कोटिगुणं स्मृतम्।
सौवर्णेऽनन्तफलदं गण्यादौ किं वदामि ते ॥ ९ ॥
विद्रुमे रचिते यन्त्रे पद्मरागेऽथवा प्रिये।
इन्द्रनीलेऽथ वैदूर्ये स्फाटिके मरकतेऽपि वा ॥ १० ॥
धनं पुत्रं तथा दारान् यशांसि लभते ध्रुवम्।

---

१ मा. ख अथ इत्यतः कारयेत् प्रिये इत्यन्तः पाठो न प्राप्यते। किन्तु तत्र 'अथासां विद्यानां नित्यपूजायां प्रत्यहं यन्त्रं लिखितुं अशक्तश्चेत् तदा स्फटिकादौ तदा यन्त्रं स्थिररेखात्मकं लिखेत्।' इति अधिकः पाठो मा. क न प्राप्यते।

सुवर्णे रचिते पीठे भूपाला वशवर्तिनः ॥ ११ ॥
रजतेन कृतं यन्त्रमायुरारोग्य कामदम् ।
ताम्रेण रचितं यन्त्रं सर्वैश्वर्यप्रदं मतम् ॥ १२ ॥
यन्त्रं तु स्फाटिकं स्वच्छं मनोभिलषितप्रदम् ।
माणिक्यरचितं यन्त्रं राज्यदं भुक्तिमुक्तिदम् ॥ १३ ॥
कृतं मरकते यन्त्रं सर्वशत्रुविनाशनम् ।
लोहत्रयोद्भवं यन्त्रं सर्वसिद्धिकरं मतम् ॥ १४ ॥
श्रीखण्डं शान्तिदं ज्ञेयं पौष्टिकं रक्तचन्दनम् ।
श्रीपर्णीपीठमुद्दिष्टं पूजार्थं धनराज्यदम् ॥ १५ ॥
वैद्रुमे बहुला संपत् भूर्जपत्रे चतुष्पदा ।
गण्डकीभवपाषाणे भुक्तिर्मुक्तिरदूरतः ॥ १६ ॥
भूमौ सिन्दूररजसा रचितं सर्वकामदम् ।
सीसकांस्यादिषु कृते संपत्तिं सन्ततिं हरेत् ॥ १७ ॥
फलकायां पटे भित्तौ स्थापयेन्न कदाचन ।
स्थापिते यदि मोहेन नाशयेत्तद्धनं कुलम् ॥ १८ ॥
तेषां मध्ये स्फाटिकं तु सर्वसिद्धिप्रदं भवेत् ॥ १९ ॥

## अथ त्रिलोहानां संस्थामाह

दशभागं सुवर्णस्य ताम्रस्य द्वादशं तथा ।
षोडशं रजतस्यापि ह्येतल्लोहत्रयं स्मृतम् ॥ २० ॥

## अथ परिमाणमाह

अर्धाङ्गुल्येन हेमस्य रजतस्य तथैव च ।
ताम्रस्य पूर्वसंख्यायां माणिक्यादौ यथेच्छया ॥ २१ ॥
पलाप्रमाणं कर्तव्यमर्चापीठं मनोहरम् ।
अग्निरङ्गुलविस्तार प्राक्प्रत्यग्दक्षिणोत्तरम् ॥ २२ ॥
पराद्धार्धं प्रकुर्वीत चतुरस्रं समन्ततः ।
माणिक्यादिकपीठन्तु मानन्यूनं न दोषकृत् ॥ २३ ॥
श्रीपर्णीचन्दनादीनामधिकं चेन्न दोषकृत्[२] ।
महाशङ्खशिलायां च न च यन्त्रविचारणा ॥ २४ ॥

---

२ मा. ख पलाप्रमाणमित्यतः न दोषकृत् इत्यन्तं श्लोक २२, २३, २४ क न प्राप्यते ।

## अथ संख्यामाह[३]

एकतोलं द्वितोलं वा त्रितोलं पञ्चतोलकम् ।
रसतोलं वेदतोलं सप्ताष्टतोलकं तथा ॥ २५ ॥
दशतोलं सूर्यतोलं कलासंख्यकतोलकम् ।
रदतोलं चतुःषष्टितोलकं शततोलकम् ॥ २६ ॥
यन्त्रं मनोज्ञं सुखदं सुरेखं पीठमुत्तमम् ।

## अथ प्रस्तारमाह

चतुर्विधा हि चक्रस्य प्रस्ताराः संभवन्ति हि ॥ २७ ॥
भू-कूर्म-पद्मप्रस्तारा मेरुश्चापि तथाविधः ।
निम्नरेखा समायोगो भूप्रस्तारे मयोदितः ॥ २८ ॥
कूर्मे पद्मे च प्रस्तारे ऊर्ध्वरेखा मयोदिता ।
भूप्रस्तारो द्विधा देवि ऊर्ध्वपातालभेदतः ॥ २९ ॥
त्रिः त्रिः क्रमादुन्नतं[४] स्यात्क्रमोत्क्रममथापि वा ।
द्वित्रिः क्रमादुन्नतोऽपि द्विद्विक्रममथापि वा ॥ ३० ॥
यवान्तरं यवार्धं वा तिलयुक्तिलमेव वा ।[५]
तण्डुलार्धं तच्च वा स्यात्तद् इयं क्रमभेदतः ॥ ३१ ॥
मनुः स्वर्गे च कैलाशे मर्त्यलोके प्रकीर्तितः ।
भूप्रास्तारस्तु पाताले त्रित्यं कीर्तितं मया ॥ ३२ ॥
कञ्जकूर्मरत्नगर्भाः सर्वत्र पूजने शुभाः ।
शुभाः सर्वे महेशानि सर्वसिद्धिप्रदायकाः ॥ ३३ ॥
ऊर्ध्वरेखाभिधेयस्तु पूजार्थं मृत्युगोचरः ।
स्थापनार्थं तु पाताले रेखा च कुत्रचिन्मता ॥ ३४ ॥

अथ यन्त्रलिखने कर्णिकादीनां लिखने स्थानमाह ।
पञ्चवृत्तानि संल्लिख्य तत्र यन्त्रं लिखेद् बुधः ॥
आद्यं स्यात् कर्णिका स्थानं केशराणां द्वितीयकम् ॥ ३५ ॥
तृतीयं दलमध्यस्य दलाग्राणां चतुर्थकम् ।
पञ्चमे भूपुरं लेख्यमेवं यन्त्रविधौ स्मृतम् ॥ ३६ ॥

---
३ मा. क अथ संख्यामाह इति पाठो नास्ति ।
४ मा. ख त्रिविक्रमात् पाठः ।
५ मा. ख श्लोकार्धमिदं न प्राप्यते ।

केशरद्वययुक्तं च दलं प्रोक्तं महेश्वरि।
दण्डाकारं बिन्दुवक्त्रं तद्द्वयोक्तं महेश्वरि ॥ ३७ ॥
पातालरेखाप्रस्तारे केशरे मुख्यबिन्दुना।
ऊर्ध्वरेखाविधौ देवि रेखा केशरता मता ॥ ३८ ॥
श्रीविद्यायां कालिकायां केशराणि क्वचिच्च वा।
श्रीविद्यायां महादेवि केशराणि न कारयेत् ॥ ३९ ॥
यथादलं केशरेण वियुक्तं कर्मवर्जितम्।
तथा त्रिकोणं देवेशि बिन्दुना वर्जितं भवेत् ॥ ४० ॥
बिन्दुहीनन्तु यद्यन्त्रं तद्यन्त्रं शववद् भवेत्।
तथैवाष्टदलस्योर्ध्वे वृत्तं यत्नेन कारयेत् ॥ ४१ ॥
वृत्तं विना चाष्टदलं गर्भभूषणवर्जितम्।
ऋजुरेखा भवेल्लक्ष्मीर्वक्ररेखा दरिद्रता ॥ ४२ ॥
न रात्रावङ्कयेद्यन्त्रं साधकस्तु कदाचन।
प्रमादादङ्किते चैव देवताशापमाप्नुयात् ॥ ४३ ॥
यन्त्रमात्रे महेशानि निर्णयः कथितो मया।
आभिरूप्याच्च विम्बस्य पूजायाश्च विशेषतः ॥ ४४ ॥
साधकस्य च विश्वासाद्देवसान्निध्यमिच्छति।

## अथ यन्त्राणां ध्यानमाह

**देव्युवाच**

पूर्वं संसूचितं नाथ यन्त्रध्यानं त्वया प्रभोः ॥ ४५ ॥
कथं ध्येयं किं विशिष्टं किं ध्येयाध्येयमेव हि।
वृत्तं मूर्त्तिस्वरूपं वा मेखलावत्स्वरूपकम् ॥ ४६ ॥
किं वा रेखामयं ध्येयं किं वा वै भूस्वरूपकम्।
विश्वरूपं स्मरेद्वापि तत्सर्वमपि कथ्यताम् ॥ ४७ ॥

**ईश्वर उवाच**

ध्यानन्तु त्रिविधं प्रोक्तं यन्त्रमात्रे महेश्वरि।
आदौ विराड् विश्वरूपं विश्वचण्डस्वरूपकम् ॥ ४८ ॥
यन्त्रं सम्भावयेद्देवि सर्वत्र कथितं त्विदम्।
श्रीचक्रादौ महादेवि विराड्रूपेण साम्यता ॥ ४९ ॥
द्वितीयं च कथं ध्येयं तन्मे वद महेश्वरि।

तेजः पुञ्जनिभा रेखा सर्वचैतन्यरूपिणी ॥ ५० ॥
सर्वं दर्पणवद् भाव्यं सर्वप्रकाशरूपकम् ।
चैतन्यं भावयेत्सर्वं बिन्द्वादि भूपुरात्मकम् ॥ ५१ ॥
मूलं तेजः प्रकाशेन ह्यभिन्नं भावयेत्प्रिये ।
तृतीयं श्रृणु देवेशि मेरुरूपं सनातनम् ॥ ५२ ॥
उत्तरोत्तरमुच्चं स्याद् बिन्द्वारभ्य विभावयेत् ।
बिन्द्वधो भावयेद् देवि एकैकोत्तरतः शिवे ॥ ५३ ॥
नवोत्तरक्रमेणैव भावयेद् वा महेश्वरि ।
कालीविद्याविधौ देवि नवरत्नस्वरूपिणीम् ॥ ५४ ॥
रेखां संभावयेद्देवि मेरुप्रस्तारवच्च वा ।
श्रीचक्रं बीजसंयुक्तं निष्फलं परमेश्वरि ॥ ५५ ॥
बीजहीनन्तु यच्चक्रं निर्बीजं सिद्धिदं न हि ।
सृष्टिचक्रं भवेदादौ स्थितिचक्रं द्वितीयकम् ॥ ५६ ॥
लयचक्रं तृतीयं स्यात्त्रिधाचक्रं विभेदितम् ।
बीजसंलेखनं देवि त्रिधाऽत्र गदितं मया ॥ ५७ ॥
बीजं विना तु निर्जीवं शववत् परिकीर्तितम् ।
बीजयुक्तं भवेद्यन्त्रं निः शप्तं सिद्धिदायकम् ॥ ५८ ॥
बीजाभावे मातृकार्णान्संलिखेद् बिन्दुभूषितान् ।
यन्त्रमध्ये तु संलिख्य तद्यन्त्रं पूजयेच्छिवे ॥ ५९ ॥
दलाकारं तु यद्यन्त्रं तद्यन्त्रं सिद्धिदायकम् ।
दलाकारं कलौ पूज्यं नान्यथा सिद्धिदं शिवे ॥ ६० ॥
मन्त्रचैतन्यकं देवि यन्त्रचैतन्यकं तथा ।
गुरुचैतन्यकं देवि स्वस्मिन् त्रितयभावना ॥ ६१ ॥
न तत्र ध्यानरूपादि तेजोयन्त्रविभावना ।
सप्रपञ्चे तु संसारे दुराचारावृते शिवे ॥ ६२ ॥
भावेनैव तु संप्रोक्ता भावना सिद्धिदा मता ॥ ६३ ॥

## अथ सर्वसाधारणयन्त्रसंस्कारमाह ।

**श्रीदेव्युवाच**

चक्रभेदो महादेव त्वत्प्रसादान्मया श्रुतः ।
इदानीं श्रोतुमिच्छामि प्रतिष्ठाकर्मनिर्णयम् ॥ ६४ ॥

**श्रीशङ्कर उवाच**

श्रृणु देवि प्रवक्ष्यामि जगत्कारिणि कौलिनि ।
तस्योद्यापक कर्माङ्गं सर्ववर्णविनिर्णयम् ॥ ६५ ॥
लग्ने शुभग्रहोपेतेऽनुकूलगुणशालिनि ।
प्रतिष्ठां कारयेदेषामृक्षतिथ्यादिके क्षणे ॥ ६६ ॥
स्नात्वा संकल्पयेन्मन्त्री गुरोरर्चनमाचरेत् ।
गुरुमन्त्रेणविलिखेद्यन्त्रं स्वर्णशलाकया ॥ ६७ ॥
पञ्चगव्यं ततः कृत्वा शिवमन्त्रेण मन्त्रितम् ।
तत्र चक्रं क्षिपेन्मन्त्री प्रणवेन समाहितः ॥ ६८ ॥
तस्मादुद्धृत्य तच्चक्रं स्थापयेत्स्वर्णपङ्कजे ।
पञ्चामृतेन दुग्धेन शीतलेन जलेन च ॥ ६९ ॥
स्थापयेच्चन्दनेनाऽपि कस्तूरीकुङ्कुमेन च ।
हाटकैः कलशैर्देवि ह्यष्टभिर्वारिपूरितैः ॥ ७० ॥
कखाय जलसम्पन्नैः स्नापयेन्मन्त्रमुच्चरन् ।
तत उत्तोल्य तद्यन्त्रं स्थापयेद्धेमपात्रके ॥ ७१ ॥
यन्त्रराजाय विद्महे महायन्त्राय धीमहि । ।
उच्चरेदेतदन्ते तु तन्नो यन्त्रः प्रचोदयात् ॥ ७२ ॥
स्पृष्ट्वा यन्त्रं कुलाग्रेण गायत्र्या चाभिमन्त्रयेत् ।
अष्टोत्तरशतं देवि देवताभावसिद्धये ॥ ७३ ॥
आत्मशुद्धिं ततः कृत्वा षडङ्गैर्देवतां यजेत् ।
तत्रावाह्य यजेद्देवीं जीवन्यासं च कारयेत् ॥ ७४ ॥
उपचारैः षोडशभिर्महामुद्रादिभिः सदा ।
फलताम्बूलनैवेद्यैर्देवीं तत्र समर्चयेत् ॥ ७५ ॥
पट्टसूत्रादिकं दद्याद् वस्त्रालङ्कारमेव च ।
मुकुटं चामरं घण्टां यथायोग्यं महेश्वरि ॥ ७६ ॥
सर्वमेतत्प्रयत्नेन दद्यादात्महिते रतः ।
त्रिरात्रं पूजयेद्देवीं त्रिसन्ध्यं च पुनः पुनः ॥ ७७ ॥
ततो जपेत्सहस्रं तु सकलेप्सितसिद्धये ।
बलिदानं ततः कृत्वा प्रणमेद्यन्त्रराजकम् ॥ ७८ ॥
अष्टोत्तरशतं हुत्वा संपाताज्यं विनिक्षिपेत् ।
होमकर्मण्यशक्तश्चेद्द्विगुणं जपमाचरेत् ॥ ७९ ॥

धेनुमेकां समादाय स्वर्णश्रृङ्गाद्यलङ्कृताम्।
गुरवे दक्षिणां दद्यात्ततो देव्या विसर्जनम् ॥ ८० ॥

## अथ कौलिकादेर्विशेषमाह

**देव्युवाच**

देवेशः श्रोतुमिच्छामि रहस्यातिरहस्यकम्।
वामिनां चैव कौलानां यन्त्रसंस्कारकर्म च ॥ ८१ ॥

**शिव उवाच**

अथोच्यते महायन्त्रसंस्कारः सर्वसिद्धिदः।
शुभेह्नि स्नानमाचर्य्य शुभलग्ने शुभेक्षणे ॥ ८२ ॥
कृतनित्यक्रियो मन्त्री प्राङ्मुखो वाप्युदङ्मुखः।
पूर्वोक्तधातुद्रव्यैश्च सुन्दरं सुमनोहरम् ॥ ८३ ॥
सुरेखं शुभदं यन्त्रं लेखयित्वा विधानतः।
प्रतिष्ठां च ततः कुर्याद्यथाशास्त्रं प्रमाणतः ॥ ८४ ॥
शुभे लग्ने पुण्यकाले शैलादिविहितस्थले।
मन्त्री कल्पानुसारे तु पूर्वेद्युरधिवासयेत् ॥ ८५ ॥
सायं सङ्कल्य विधिवद् घटस्थापनपूर्वकम्।
गणेशादीन् समभ्यर्च्य दिक्पालान् परिपूजयेत् ॥ ८६ ॥
मद्यं मांसं तथा मत्स्यं मुद्रां मैथुनमेव च।
यन्त्रसंस्कारकर्मादौ द्रव्यमेतन्मयेरितम् ॥ ८७ ॥
यथाशक्त्युपचाराद्यैः पूजयेन्मूलदेवताम्।
सुगन्धतैलगन्धाद्यैर्द्रव्यैः समधिवासयेत् ॥ ८८ ॥
चन्द्रेत्यादि च मन्त्रेण जपघोषपुरस्सरम्।
इत्यधिवासितं कृत्वा संयतो विजितेन्द्रियः ॥ ८९ ॥
प्रातर्नित्यं विधायादौ ततो योगस्थले विशेत्।
पताकाध्वजसङ्कीर्णे दिव्यमण्डलमण्डिते ॥ ९० ॥
वितानचामरछत्रपुष्पमालाविराजिते।
मङ्गलाङ्कुर पद्माद्यैः कलशैः परिभूषिते ॥ ९१ ॥
मण्डलं सर्वतोभद्रं रेखासाहस्रसंयुतम्।
सामान्यभद्रं वा देवि वेद्याश्चोपरितो लिखेत् ॥ ९२ ॥

अथवा दक्षिणे वामे वक्ष्ये वारुणमण्डलम्।
चतुरस्रं चतुः षष्टिकोष्ठं विद्यां निवेशयेत् ॥ ९३ ॥
अन्त्योपान्तिमपङ्क्त्योस्तु दिक्षु कोष्ठानि मार्जयेत्।
मध्यस्थचतुरक्षीणि द्वाराख्यानि च पूर्ववत् ॥ ९४ ॥
पीतश्यामश्वेतहरिद्रजोभिः परिपूरयेत्।
कोणकोष्ठं विहायैकपञ्चाशत् पादसंज्ञिताः ॥ ९५ ॥
पीठस्य पाण्डुरारक्तपीतकृष्णैः प्रपूरयेत्।
आग्नेयीतः कोणकोष्ठान्यारक्तहरितासितैः ॥ ९६ ॥
श्वेतवर्णेन चत्वारि मध्ये वृत्तानि कारयेत्।
पूरयेदथ तस्यार्धं वितानं बाधयेद्यथा ॥ ९७ ॥
षट्त्रिंशदंशव्यासार्धं वृत्तमाद्यन्तु पीततः।
ततरितं कर्णिकाकारं सितरेखावृतं ततः ॥ ९८ ॥
द्वितीयं द्विगुणं व्यास भूयकेशरसंयुतम्।
पीतरक्तश्वेतवर्णमूलमध्याग्रकेशरम् ॥ ९९ ॥
द्विसप्तत्यंशिकाश्वेतां तस्याग्रे कुरु रेखिकाम्।
तृतीयं तु तृतीयांशे तुल्यव्यासं तु वर्तुलम् ॥ १०० ॥
श्वेतमष्टदलं तत्र रक्ताग्रं तद्दलान्तरे।
श्वेतं बहिः कृष्णवर्णां प्राग्रेखां च सितां कुरु ॥ १०१ ॥
तद्बहिर्वृत्तसंलग्नान्षोडशारान्प्रकल्पयेत्।
श्यामपीतारुणश्चेतैस्तदन्तस्तु यवाकृती ॥ १०२ ॥
सितपीतारुणश्यामहरिताः पञ्चरेखिकाः।
कार्याः सुरुचिराः पञ्चस्यात्तदेवं प्रपूरयेत् ॥ १०३ ॥
वज्रशक्तिदण्डखड्गपाशध्वजगदां लिखेत्।
पूर्वतस्तु तथैशान्यां शूलचक्राम्बुजान्वितम् ॥ १०४ ॥
वामदक्षिणतो रेतन्मण्डलं वारुणाह्वयम्।
प्राङ्मुखो वाग्यतो भूत्वा[६] संकल्पाभिष्टसिद्धये ॥ १०५ ॥
पञ्चशुद्धिं समाचर्य कुर्वन्नक्षतसंयुतम्।
संस्थाप्य मण्डले तत्र यजेदाधारशक्तितः ॥ १०६ ॥
पीठमन्त्रं समास्तीर्य स्थापयेतकलशं बुधः।
दीक्षाक्रमोक्तविधिनाऽभिषेककलशं तथा ॥ १०७ ॥

---

६ मा. ख कुर्यात् पाठः।

पञ्चगव्यं ततः कुर्याच्छिवमन्त्रविबोधितम्।
तेन सुस्नापयेन्मन्त्री यन्त्रं च प्रणवं[७] जपेत्[८] ॥ १०८ ॥
पञ्चामृतेन हविषा दध्ना च पयसा क्रमात्।
तत उद्वर्तनं कृत्वा जलेन स्नापयेदपि ॥ १०९ ॥
पञ्चगव्यं समानीय तत्र यन्त्रं समाहितः।
जपन् क्षिपेत्सुवर्णादौ वेदमूलं पुरस्सरम् ॥ ११० ॥
तत उद्धृत्य स्वर्णादिपात्रे संस्थाप्य यन्त्रवित्।
पञ्चामृतेन तीर्थेन शीतलेन जलेन च ॥ १११ ॥
सहस्रशीर्षामन्त्रेण मूलमन्त्रपुरस्सरम्।
सुस्नाप्य पावमानेन कर्पूरागुरुनीरतः ॥ ११२ ॥
सर्वौषधिजलैर्गन्धजलैर्यत्नेन मार्जनम्।
ततः शुद्धदुकुलेन जलमुत्सार्य साधकः ॥ ११३ ॥
परिधाय दुकूले द्वे स्वर्णनिर्मितदोलया।
मण्डले तं समानीय नृत्यगीतैर्जयस्वनैः ॥ ११४ ॥
कुङ्कुमाद्यैर्विलिप्याथ पूज्य सर्वोपचारकैः।
पीठपूजां ततः कुर्यात्स्वस्वकल्पोक्तमानतः ॥ ११५ ॥
कुशैः कुलीनैर्वा देवि शतमष्टोत्तरं जपेत्।
पूर्वोक्तां यन्त्रगायत्रीं जप्त्वा देवत्वमाप्नुयात् ॥ ११६ ॥
अथेष्टदेवतां ध्यात्वा मुद्रयाऽऽवाहयेत्ततः।
जीवन्यासं ततः कुर्यात्पूजयेदिष्टदेवताम् ॥ ११७ ॥
नृत्यगीतैश्च वादित्रैः पञ्चघोषपुरस्सरम्।
ततो जपेदिष्टमन्त्रमष्टोत्तरसहस्रकम् ॥ ११८ ॥
कुण्डे वा स्थण्डिले मन्त्री हविषा संस्कृतेऽनले।
यथाविधि विधानेन श्रुचा होमं समाचरेत् ॥ ११९ ॥
ग्रासप्रमाणं च चरुं मूलेनाऽऽकृष्य मन्त्रवित्।
घृतश्रुचं ततो दत्त्वा जुहूयादग्निसम्मुखे ॥ १२० ॥
पञ्चविंशतितत्त्वैश्च तत्त्वेन तर्पणं चरेत्।
इन्द्रादिदिग्पतिभ्यश्च दद्यात्पूर्वोदितं बलिम् ॥ १२१ ॥
तत आवृत्तिदेवेभ्यो घृतेनाऽऽहुतिमाचरेत्।

---

७ सप्रणवं पाठ उचितः।

८ मा. ख जपन् पाठः।

तदन्ते देवीमन्त्रेण हुनेदष्टोत्तरं शतम् ॥ १२२ ॥
मातृकायुक्तमन्त्रं तु जपेज्जयजयस्वनैः[९]।
गत्वा होमसमीपे तु दत्त्वा पूर्णाहुतिं ततः ॥ १२३ ॥
इष्टसिद्ध्यै बलिं दत्त्वा प्रणमेच्चक्रमुत्तमम्।
तोषयेत्स्वर्णवस्त्राद्यैः प्रदद्यादक्षिणामपि ॥ १२४ ॥
मकारैः पञ्चभिर्देवि वीरपूजां समाचरेत्।
शक्तिं कुमारिकां बालां पूजयेत्पञ्च पञ्चकम् ॥ १२५ ॥
कुर्याद्दशाष्टकं वाऽपि कुलद्रव्यैः समस्तकैः।
त्रैलोक्यनाथो भवति यन्त्रपूजनयोगतः ॥ १२६ ॥
भूतशुद्ध्यादिकं कृत्वा कल्पोक्तन्यासमाचरेत्॥
निशायां शक्तिपूजाञ्च दूतीयागञ्च कौलिकाः ॥ १२७ ॥
मकारैः पञ्चभिर्युक्तं चरेयुर्वामिनोऽर्चनम्।
एवं दिनत्रयं कृत्वा ततो नित्यक्रमं भजेत्[१०] ॥ १२८ ॥
सृष्टिस्थितिलयत्वेन सुन्दरीयन्त्रपूजनम् ॥ १२९ ॥
सृष्टिसंहारमार्गेण तारा छिन्ना च पीतभा।
एवं देवी प्रतिष्ठायां क्रमः सान्निध्यकारकः ॥ १३० ॥
स्त्रीशूद्राणां वामिनां च कौलिकायामयं विधिः।
विधियुक्तं प्रकर्तव्यं विधिहीनं न कारयेत् ॥ १३१ ॥
विधिहीनस्य विघ्नानि यानि ते कथयाम्यहम्।
कलहोद्वेगद्वन्द्वश्च व्याधिशूलं ज्वरस्तथा ॥ १३२ ॥
राजोपद्रवहानिश्च द्रव्यनाशं रूजं तथा।
चिल्ला काकश्च काकुल्यो शिवा फेत्करदारुणाः ॥ १३३ ॥
कपोताश्च गृहेस्तस्य आरोहन्ति विशन्ति च।
विघ्नं कुर्वन्ति वै तस्य विधाने गुप्तसंस्थिताः ॥ १३४ ॥
छिन्दन्ति तस्य योगिन्यो नानाविघ्नैः प्रबाध्यते।
सर्पवृश्चिकलूताश्च कीटाश्चैव तु दारुणाः ॥ ३१५ ॥
दशन्ति च महा उग्रा प्रेरितास्ते मरीचिभिः।
वृषैश्चाश्वैर्गजेन्द्रैश्च मेघैर्वज्रासनिस्तथा ॥ १३६ ॥

---

९ मा. क स्वरैः पाठः।
१० मा. ख यजेत् पाठः।

उपद्रवन्ति दुष्टाश्च ज्वरो भूतादयस्तथा ।
लूता गदमपिस्मारा अभिभवन्ति नान्यथा ॥ १३७ ॥[११]

*इति श्रीतन्त्रचिन्तामणौ यन्त्राधारादिपूर्वकप्रतिष्ठान्तनिर्णयनामोनत्रिंशत्तमः प्रकाशः ।*



११ कदाचित् लुप्तचिह्नं वा स्फुटितादिविभूषणम् । भग्नं करोति यो मोहान्मृत्युस्तस्य भवेद्ध्रुवम् । तस्माच्च तीर्थराजे वा गङ्गादिसरितां परे । समुद्रे वा क्षिपेद्देवि अन्यथा दुःखमाप्नुयात् । इति भागो मा. ख अधिकः , मा. क, न्यूनः ।

# त्रिंशत्तमः प्रकाशः

अथ मालां प्रवक्ष्यामि द्विविधा सा स्थिराचला।
स्थिरा तु स्थिरचित्तानां चञ्चला चलचेतसाम् ॥ १ ॥
तत्साधनं त्रिधा प्रोक्तं प्रथमा वर्णमालिका।
द्वितीया जपमाला स्यात्तृतीयाऽङ्गुलिमालिका ॥ २ ॥

**अथाचलमालामाह**

अकारादि क्षकारान्तैर्बिन्दुमन्मातृकाक्षरैः।
अनुलोमविलोमस्थैः क्लृप्तया वर्णमालया ॥ ३ ॥
एकैकं वर्णमुच्चार्य वर्णेनान्तरितं मनुम्।
सुधीरेवं लकारान्तं तत आन्तं समानयेत् ॥ ४ ॥
क्षकारं मेरुरूपं तु लङ्घयेन्न कदाचन।
सकृदेवोच्चरेत्क्षान्तं तदन्ते नोच्चरेन्मनुम् ॥ ५ ॥
मेरुहीना च या माला मेरुलङ्घ्या च या भवेत्।
अशुद्धा तु भवेदत्र सा माला निष्फला भवेत् ॥ ६ ॥
चित्रिणी विसतन्त्वाभा ब्रह्मनाडीगता तु या।
तया संग्रथिता ध्येया सर्वकामफलप्रदा ॥ ७ ॥
अष्टोत्तरशते जप्ते त्वादौ क्लीबं समुच्चरेत्।
ऋॠऌॡवर्णचतुष्टयं क्लीबं प्रचक्षते ॥ ८ ॥
वर्गाणामष्टकं वाऽपि काम्यभेदक्रमेण तु।
अकचटतपयशा इत्येवं चाष्टवर्गकम् ॥ ९ ॥
किंवामृतत्रयं प्रोच्यं प्रणवान्ते च मातृका।
अनुलोमविलोमाभ्यां तत्वष्टोत्तरशती भवेत् ॥ १० ॥
माया वाक् काम श्रीयोगान् मातृकावर्णयोगतः।
अनुलोमविलोमाभ्यां त्वष्टोत्तरशती भवेत् ॥ ११ ॥
त्रयं गुरौ त्रयं देवि गाणपे परिकीर्तितम्।

न्यूनातिरिक्ते द्वितयं शेषमिष्टाय योजयेत् ॥ १२ ॥
अष्टोत्तरशती माला सर्वकार्यार्थसिद्धिदा ।
मातृकावर्णरूपत्वात्प्रोक्तेयं स्थिरमालिका ॥ १३ ॥
अकारादि क्षकारान्ता सैवेयं त्वक्षमालिका ।
माला पञ्चाशिका प्रोक्ता सूत्रशक्तिः शिवात्मिका ॥ १४ ॥
ग्रथने कुण्डलीशक्तिर्लयान्ते मेरुसंस्थितम् ।
एतद् गुप्ततरं कुर्यादक्षसूत्रशिवात्मकम् ॥ १५ ॥
प्रकटं नैव कर्तव्यं न मेरुं लङ्घयेत्क्वचित् ।[1]
सुप्तकीलितसंरुद्धछिन्नव्याकीर्णयोगतः ॥ १६ ॥
धनी वैरी वीर्यहीन काण खञ्जादयोऽपि यो ।
तेऽपि सिद्धा भवन्त्येव सिद्धमालाप्रभावतः ॥ १७ ॥

## अथास्या ध्यानम्

अन्तर्विद्रुमभासमानभुजगी सुप्तोथ वर्णोज्वलाम्
आरोहामनरोहिकां शतमयीं वर्गाष्टकाष्टोत्तराम् ।
साक्षाद्ब्रह्ममयीं सुमेरुशिखरीं श्रीमातृकाक्षावलीं
विद्यां नौमि समस्तमन्त्रजननीं ज्ञानैकदीपाङ्कुराम् ॥ १८ ॥
इदानीं देवताभेदं मालाभेदं वदाम्यहम् ।[2]
दन्ताक्षमाला श्रीकाल्यां तारायां नरशङ्खजा ॥ १९ ॥
छिन्नमस्ताविधौ शस्ता नरास्थिमालिका शुभा ।
रक्तचन्दनबीजानां मालास्यात्त्रिपुराविधौ ॥ २० ॥
स्वयंभूमालिका देवि भैरव्यां मालिकाविधौ ।
मुञ्जामाला तु मातङ्ग्यां धूम्रायां खरदन्तजा ॥ २१ ॥
हरिद्राख्या तु ब्रह्माण्डे कमलाख्या रमाविधौ ।
बालायां भुवनेश्वर्यां स्फाटिकापरिकीर्तिता ॥ २२ ॥
श्वेतगुञ्जा सिद्धिविद्याविधौ प्रोक्ता महेश्वरि ।
शङ्खमाला वैष्णवे च रुद्राक्षा[3] शक्तिमात्रके ॥ २३ ॥
रुद्राक्षा शरभे प्रोक्ता गणेशे गजदन्तजा ।

---

१ मा. ख माला पञ्चाशिका इत्यतः क्वचित् इत्यन्तो भागः न प्राप्यते ।
२ मा. ख इदानीमित्यतः वदाम्यहमित्यन्तं श्लोकार्धं न प्राप्यते ।
३ मा. क इन्द्राक्षा पाठः ।

त्रिपुरायां पुत्रजीवी गोविन्दे तुलसी मता ॥ २४ ॥
रक्तस्वर्णरौप्यमयी तथा ताम्रमयी शिवे ।
औदुम्बरबीजमयी बटबीजमयी तथा ॥ २५ ॥
पुगीफलमयी माला जातीफलमयी तथा ।
मधुमत्याः कर्षणार्थे वीरविद्याविधावपि ॥ २६ ॥
पूर्वाम्नाये स्फाटिकजैर्दक्षिणे रुद्रनेत्रजैः ।
प्रबालैर्मौक्तिकैर्देवि पश्चिम्नाय दैवते ॥ २७ ॥
उत्तराम्नायदेवानां महाशङ्खाख्यमालिका ।
ऊर्ध्वाम्नाये स्वयंभूत्थ पाताले रत्नसम्भवा ॥ २८ ॥
प्रबालैः सूर्यमन्त्रे च मौक्तिकैः शक्तिमात्रके ।
शिवशक्तिमयी माला रुद्राक्षस्फटिकैर्युता ॥ २९ ॥
रुद्राक्षा स्वर्णसंयुक्ता माला हरिहरात्मिका ।
सर्वमन्त्रेषु रुद्राक्षा शक्तिमन्त्रे दिवा न हि ॥ ३० ॥
रुद्राक्षा रौप्यसंयुक्तामाला विधिशिवात्मिका ।
शक्तिरूपी साधकः स्याद्रुद्राक्षः शिवरूपधृक् [४] ॥ ३१ ॥
शिवशक्तिविहीनत्वान्न[५]रुद्राक्षैर्दिवा जपः ।
वियोगे पूजिता काली सहसा न प्रसीदति ॥ ३२ ॥
रुद्राक्षैः शक्तिमन्त्रं तु दिवा यो जपति प्रिये ।
स दुर्गतिमवाप्नोति जपस्तस्य निरर्थकः ॥ ३३ ॥
इति शापः पुरादत्तस्तत्कथा कथ्यते श्रृणु ।[६]
कदाचित्समये देवि दक्षो यज्ञपरायणः ॥ ३४ ॥
सकला ऋषयो देवा यक्षविद्याधरोरगाः ।
पुत्री जामातृसंबन्धाद्गृहे नाऽऽकारिता च सा ॥ ३५ ॥

---

४ मा. क सर्वमन्त्रेषु इत्यतः शिवरूपधृक् इत्यन्तः पाठो न प्राप्यते ।

५ मा. क वियोगत्वात् पाठः ।

६ मा. ख मातृकायामधोलिखितोऽधिकः पाठः –
शक्तिस्त्रीमन्त्रजाप्येषु रुद्राक्षैर्न दिवा जपेत् । इति कारणतो देवि रात्रावेन जपः स्मृतः ।
वैष्णवः सौर-शैवादि रुद्राक्षं न स्पृशेन्निशि ।
कार्तिकेय उवाच ।
भगवन्देव देवेश ह्यनेक फलमद्भुतम् । किमर्थं शस्यते तत्तु रुद्राक्षं परमेश्वर ।
रुद्राक्षाणां यदुत्पत्तिः प्रभेदं वाऽपि लक्षणम् । रुद्राक्षं कीदृशं देव को देवः किं फलं भवेत् ।
धारणे किं फलं वाऽपि स्थाने देहे कथं कथम् । भगवन् श्रोतुमिच्छामि ब्रूहि मे परमेश्वर ॥
इति मा. क उक्तः पाठो न प्राप्यते ।

महादेवः सत्यवती तेन नाकारिता क्रतौ ।
सती च भर्तृनिकरे उक्ता तत्र प्रगम्यते ॥ ३६ ॥

## शिव उवाच

ममैवाऽऽकारणं तेन न कृतं प्राणबल्लभे ।
तव लज्जा कथं नास्ति त्वया तत्र प्रगम्यते ॥ ३७ ॥
प्रियो देवः प्रियाः प्राणाः प्रियमेव हि भूषणम् ।
मां विहाय कथं देवि त्वया तत्र प्रगम्यते ॥ ३८ ॥
पातिव्रत्यमिदं क्वास्ति प्रतियोगिविहीनतः ।
तथापि तव वाञ्छाचेच्छीघ्रं गन्तुं कृपां कुरु ॥ ३९ ॥
भर्त्तुराज्ञां गृहीत्वा च प्रस्थिता यागमण्डपे ।
तत्सिंहेन क्षणान्नीता ब्रह्मणो योगमण्डपम् ॥ ४० ॥
तेन नादरिता कन्या दुःखिता दीनमानसा ।
अधोमुखी स्थिता तत्र पार्वती रूपमावहन् ॥ ४१ ॥
सर्वे देवाश्चात्र सन्ति मद्भर्त्ता नात्र दृश्यते ।
महद् दुःखं मम कृते एतावद्धृदयस्थितम् ॥ ४२ ॥
एतस्मिन्नन्तरे देवि दक्षप्रजापतिः स्वयम् ।
शिवनिन्दापरो भूत्वा पुनर्निन्दार्थमुद्यतः ॥ ४३ ॥
अनाचारितरूपोऽभूत् विष्णुना वारितोऽपि च ।
मुहुर्निन्दापरो भूत्वा भङ्गी वृषभवाहनः ॥ ४४ ॥
श्मशानवासी मांसाशी नग्नो धीरतरो विराट् ।
कपाली च त्रिशूली च मुण्डमालाविभूषितः ॥ ४५ ॥
भष्मोद्धूलितसर्वाङ्गो व्याघ्राजिनसमास्थितः ।
लम्पटोलोलुपश्चेति बहुनिन्दापरोऽभवत् ॥ ४६ ॥
दुःखिता निन्दिता त्वं हि मण्डपाद् बहिरागता ।
दूरे नेत्रान्तरे गत्वा वह्निकुण्डं विधाय च ॥ ४७ ॥
सती त्यक्त्वा तत्र देहं वह्निरूपत्वतां[७] गता ।
शिवोऽहं क्रोधरूपेण ज्वालाभास्वरमण्डलः ॥ ४८ ॥
मत्क्रोधेन महेशानि भष्मीभूतं जगत्त्रयम् ।

---

७ बहिरूपत्वमागता पाठ उचितः ।

मज्ज्वालया समुत्पन्नो वीरभद्रो महाप्रभुः[८] ॥ ४९ ॥
कोटिकालान्तदहनो दुःसहः सर्वजन्तुषु ।
दक्षप्रजापतेर्यज्ञध्वंसनार्थं समुद्यतः ॥ ५० ॥
त्रिशूलहस्तः क्रूरश्च यज्ञध्वंसपरायणः ।
शवरूपां शिवां देवि गृहीत्वा स्कन्धगोचराम् ॥ ५१ ॥
रोदनं चक्रतुस्तस्मात्पतिताश्चाश्रु बिन्दवः ।
तत्राश्रुबिन्दवो जाता महारुद्राक्षवृक्षकाः ॥ ५२ ॥
स्थावरत्वंमनुप्राप्य मर्त्यानुग्रहकारणात् ।
फलन्ति सर्वकालं हि ह्यवच्छिन्न फलप्रदाः ॥ ५३ ॥
श्रूयते तेन रुद्राक्षं त्रिषु लोकेषु विश्रुतम् ।
नेत्रत्रयात्समुपन्नास्त्रिविधा[९] जातयः शुभाः ॥ ५४ ॥
दक्षनेत्रात्समुत्पन्नो धनाश्रीकः प्रकीर्तितः ।
वामनेत्रात्समुत्पन्नो मोरङ्गीयः प्रकीर्तितः ॥ ५५ ॥
मध्यनेत्रात्समुत्पन्नो मलाकी परिकीर्तितः ।
धनाश्री कोष्ठदशकं पार्वतीयो मनुर्भवेत् ॥ ५६ ॥
एकविंशति वक्त्रान्तं मलाकी परिकीर्तितः ।
एवं वक्त्राणि जातानि रुद्ररोदन संभवात् ॥ ५७ ॥
स्फुटवक्त्रे पार्वतीये प्रतिष्ठा स्फुटमेव च ।
धनाश्री केशरा कान्ति रेखायां जायते प्रभा ॥ ५८ ॥
मलाकीये वह्निनाशस्तत्कालं जलमध्यतः ।
जलोपरि समायाति स मलाकी प्रकीर्तितः ॥ ५९ ॥
तेन यत्क्रियते कर्म तदनन्तफलं भवेत् ।
अन्यमन्त्रे सिद्धिरूपा शक्तिमन्त्रो दिवा न हि ॥ ६० ॥
इति कारणतो देवि रात्रावेव जपः स्मृतः ।
रात्रिः संयोगरूपा स्याद्विद्या त्वं च महेश्वरि ॥ ६१ ॥
वियोगरूपो देवेशो मन्त्रशास्त्रे प्रकीर्तितः ।[१०]
अथरुद्राक्षमाहात्म्यं वर्णयामि समासतः ॥ ६२ ॥
रुद्राक्षं मोक्षकामन्तु रुद्राक्षं श्रेयसाधनम् ।

८ क्वचित् महाविभु पाठः । मा. ख महाद्युति पाठः ।

९ मा. ख रुद्राक्षास्त्रिविधा कलौ पाठः ।

१० मा. ख दक्षनेत्राद् इत्यतः प्रकीर्तितः इत्यन्तः पाठः (श्लोकः ५५ – ६२ क ) न प्राप्यते । मा. ख धनाश्री दक्षनेत्रोत्थो मोरङ्गोयस्तु चा परः । तृतीयस्तु मल्लकी स्यान्नाग्निर्दहति तत्तनुम् । इत्यधिकः पाठः ।

रुद्राक्षं हरते दुःखं रुद्राक्षं पापनाशनम् ॥ ६३ ॥
सर्वपापक्षयकरं पठतां श्रृण्वतामपि ।
अभक्तो वापि भक्तो वा नीचो नीचतरोऽपि वा ॥ ६४ ॥
रुद्राक्षं धारयेद्यस्तु मुच्यते सर्वपातकात् ।
रुद्राक्षधारणं पुण्यं केन वा सदृशं भवेत् ॥ ६५ ॥
महाव्रतमिद प्राहुर्मुनयस्तत्त्वदर्शिनः ।
सहस्रं धारयेद्यस्तु रुद्राक्षाणां धृतव्रतः ॥ ६६ ॥
तं नमन्ति सुराः सर्वे यथा रुद्रस्तथैव सः ।
शिरोमाला तु षट्त्रिंशद्द्वात्रिंशत्कण्ठमालिका ॥ ६७ ॥
कूर्परे षोडशः प्रोक्ता द्वात्रिशन्मणिबन्धयोः ।
अष्टोत्तरशतैर्युक्तमुपवीतं विधीयते ॥ ६८ ॥
तदर्धमुरसो माला शिखायामेकमुच्यते ।
कर्णयोश्चापि षट्संख्या धारणक्रममीरितम् ॥ ६९ ॥
संख्याहीनं न कर्तव्यमधिकं नैव दुष्यति ।
रुद्राक्षान्धारयन्नेव देहान्ते स शिवो भवेत् ॥ ७० ॥
बहुलं लभते पुण्यं भाग्यवानिह जायते ।
स्नाने दाने जपे होमे वैश्वदेवसुरार्चने ॥ ७१ ॥
प्रायश्चित्ते तथा श्राद्धे दीक्षाकाले विशेषतः ।
रुद्राक्षधारी भूत्वा च यत्किञ्चित्कर्म वैदिकम् ॥ ७२ ॥
यो विप्रः सततं कुर्यात्तत्कर्म सफलं भवेत् ।
खादन्मांसं पिवन्मद्यं संगच्छन्नन्त्यजातिषु ॥ ७३ ॥
सद्यो भवति पूतात्मा रुद्राक्षं मूर्ध्नि धारयेत् ।
देवान् पुष्णन्ति[११] ये देवाः पशवस्ते तु वैदिकाः ॥ ७४ ॥
तान् पातयन्ति ये कौला[१२]स्तेषां शास्ता स्वयं शिवः[१३] ।
तेषां संरक्षणार्थाय नान्यो रुद्राक्षतो भुवि ॥ ७५ ॥
रुद्राक्षाः सर्वदेवानां मन्त्रसिद्धिविधायकाः ।
रुद्राक्षं कण्ठमाश्रित्य शुनको म्रियते यदि ॥ ७६ ॥
सोऽपि रुद्रत्वमाप्नोति किं पुनर्मानुषादयः ।
उच्छिष्टो वाऽपि कर्मस्थो युक्तो वा सर्वपातकैः ॥ ७७ ॥

११ मा. ख दुष्यन्ति पाठः ।
१२ मा. ख कौले पाठः ।
१३ मा. ख यमः पाठः ।

मुच्यते सर्वपापेभ्यो नरो रुद्राक्षधारणात्।
रुद्राक्षमालिकां कण्ठे धारयन् भक्तिवर्जितः ॥ ७८ ॥
पापकर्माऽपि यो नित्यं रुद्रलोके महीयते।
यो धारयति रुद्राक्षान् रुद्रवत्सोऽपि पूज्यते ॥ ७९ ॥
मुक्ता प्रबालस्फटिकरौप्यवैदूर्यकाञ्चनैः।
समं तान्धारयेद्यस्तु रुद्राक्षान् स शिवो भवेत् ॥ ८० ॥
केवलाान् वाऽपि रुद्राक्षान् यद्यालस्याद्बिभर्त्ति यः।
तन्न स्पृशन्ति[१४] पापानि तमांसीन विभावसुम् ॥ ८१ ॥
रुद्राक्षमालया जप्तो मन्त्रोऽनन्त फलप्रदः।
अरुद्राक्षो जपः पुंसां तावन्मात्र फलप्रदः ॥ ८२ ॥
यस्याङ्गे नास्ति रुद्राक्ष एकोऽपि बहुपुण्यदः।
तस्य जन्म निरर्थं स्यात्त्रिपुण्ड्ररहितस्य च ॥ ८३ ॥
रुद्राक्षं मस्तके धृत्वा शिरः स्नानं करोति यः।
गङ्गास्नानफलं तस्य जायते नात्र संशयः ॥ ८४ ॥
रुद्राक्षं पूजयेद्यस्तु विना तोयाभिषेचनम्।
यत्फलं लिङ्गपूजायां तदवाप्नोति निश्चितम् ॥ ८५ ॥
भक्त्या संपूजितो नित्यं रुद्राक्षः शङ्करात्मकः।
दरिद्रं चापि कुरुते राजराजसमाश्रितम् ॥ ८६ ॥
गङ्गास्नानसमं पुण्यं दर्शनात्फलमाप्नुयात्।
लक्षकोटिसहस्राणि लक्षकोटिशतानि च ॥ ८७ ॥
रुद्राक्षधारणाद् वाऽपि नात्र कार्या विचारणा ॥ ८८ ॥
एकवक्त्रः शिवस्तस्य मालया जपतो हरेत्।
ब्रह्महत्यादि पापानि तथा राज्यादिकेष्टदः ॥ ८९ ॥
एकवक्त्रसमायुक्तं रुद्राक्षं यस्य तिष्ठति।
स साम्राज्यमवाप्नोति सत्यं जानीहि पार्वति ॥ ९० ॥
उमा-शङ्करनामाख्यो द्विमुखोऽयं व्यपोहति।
गोहत्यादिकपापानि गार्हस्थ्यादिकसौख्यदः ॥ ९१ ॥
त्रिमुखस्त्वग्निरूपः स्यात्स्त्रिहत्यादिकपापहा।
धर्मार्थकामा : सिद्ध्यन्ति धारणात्तज्जपादपि ॥ ९२ ॥
चतुर्मुखो भवेद् ब्रह्मा गुरुहत्यादिनाशकः।

---

१४ मा. ख रुद्राक्षं हन्ति पाठः।

स्फुरन्ति सकला विद्या वाक्सिद्धिश्चापि जायते ॥ ९३ ॥
पञ्चवक्त्रः शिवः साक्षात्कालाग्निर्नामनामतः ।
शैवगाणेशशाक्तानां द्रुतसिद्धिस्तु तज्जपात् ॥ ९४ ॥
अगम्यगमनं चैव अभक्ष्यस्यापि भक्षणम् ।
मुच्यते पातकं घोरं पञ्चवक्त्रस्य धारणात् ॥ ९५ ॥
कार्तिकेयैश्च षड्वक्त्रैः स्खलितव्रतपापहा ।
भ्रूणहत्यादिभिः पापैर्मुच्यते नात्र संशयः ॥ ९६ ॥
विधिना दक्षिणे वाहौ धारणात्समरे जयः ।
सप्तवक्त्रो महानागोऽनन्तो नामाथ तज्जपात् ॥ ९७ ॥
अनन्ताः सिद्धयः सर्पविषभीश्च न जायते ।
सुवर्णैः सुभगैश्चैव दरिद्रोऽपीश्वरो भवेत् ॥ ९८ ॥
गुरुतल्पादिभिः पापैर्हत्वा बहुतराण्यपि ।
मुच्यते नात्र संदेहो रुद्राक्षस्य तु धारणात् ॥ ९९ ॥
अष्टवक्त्रो गणेशः स्यात्सर्वविघ्ननिवारकः ।
नश्यन्ति तज्जपात्सर्वकामक्रोधादिशत्रवः ॥ १०० ॥
पृष्ठोदरकरेणापि संस्पृशेद् वा गुरुस्त्रियम् ।
एवमादीनि पापानि अतिपापानि सर्वशः ॥ १०१ ॥
विघ्नास्तस्य च नश्यन्ति मुक्तो याति परांगतिम् ।
जीवेद् वर्षशतं साग्रं मृत्युर्नास्ति स शूलभृत् ॥ १०२ ॥
गुणा ह्येतेषु सर्वेषु अष्टवक्त्रस्य धारणात् ।
नव वक्त्रो भैरवः स्यात् कपिलं मुक्तिदं स्मृतम् ॥ १०३ ॥
जपादेव प्रसीदन्ति वाममार्गस्थदेवताः ।
धारयेद्वामहस्ते च मम तुल्यबलो भवेत् ॥ १०४ ॥
लक्षकोटिसहस्राणि ब्रह्महत्यां करोति यः ।
तत्सर्वं दहते क्षिप्रं नव वक्त्रस्य धारणात् ॥ १०५ ॥
दशवक्त्रो महासेनः स्वयं देवो जनार्दनः ।
सहसैव पिशाचाद्या वेताला ब्रह्मराक्षसाः ॥ १०६ ॥
डाकिन्यो मातरश्चैव तथा वै प्रेतनायकाः ।
पन्नगाश्च विनश्यन्ति दशवक्त्रस्य धारणात् ॥ १०७ ॥
वक्त्रैकादशरुद्राक्षं रुद्रैकादशकं स्मृतम् ।
शिखायां धारयेन्नित्यं तस्य पुण्यफलं श्रृणु ॥ १०८ ॥

अश्वमेधसहस्राणि वाजपेयशतानि च ।
गवां शतसहस्रस्य सम्यग्दत्तस्य यत्फलम् ॥ १०९ ॥
स तु तत्फलमाप्नोति रुद्रैकादशधारणात् ।
वक्त्रद्वादशरुद्राक्षं भाष्करद्वादशात्मकम् ॥ ११० ॥
धारयेत्कण्ठदेशे च जपेद्वापि समाहितः ।
तेजस्वी च प्रतापी च आदित्यसदृशो भवेत् ॥ १११ ॥
न पीड्यते महाघोरैरादित्यादिनवग्रहैः ।[१५]
दुर्भगाः सुभगा यान्ति रोगी रोगात्प्रमुच्यते ॥[१६] ॥ ११२ ॥
गोमेधनरमेधादि सर्वक्रतुफलप्रदः ।
हस्त्यश्वमृगमार्जारान्महिषशूकरादिकान् ॥ ११३ ॥
श्वानं श्रृगालवृकलान् बध्वा बहुतराण्यपि ।
मुच्यते नात्र सन्देहो द्वादशादित्यधारणात् ॥ ११४ ॥
वक्त्रं त्रयोदशं वत्स लब्ध्वा तु यदि धारयेत् ।
पूज्यते सततं देवैः प्राप्यते पुण्यमुत्तमम् ॥ ११५ ॥
सर्वं फलमवाप्नोति सौभाग्यं चोत्तमं भवेत् ।
रसं रसायनं खड्गं धातुर्वादमनेकधा ॥ ११६ ॥
कामधेनुश्च रुद्राक्षमिच्छासिद्धिमवाप्नुयात् ।
सिद्ध्यते तेन रुद्राक्षं भाग्यहीनोऽपि यद्यसौ ॥ ११७ ॥
माता पिता तथा बन्धुर्गुरुर्वा यदि हन्यते ।
मुच्यते पातकैर्घोरैस्तथान्यैरुपपातकैः ॥ ११८ ॥
पुण्यैश्चतुर्दशवक्त्ररुद्राक्षं यदि लभ्यते ।
धारयेत्तत्प्रयत्नेन शिखायज्ञोपवीतके ॥ ११९ ॥
चामुण्डा तु स्वयं वत्स शक्तिपीण्डं शिवस्य तु ।
अन्तयित्वा धृते कण्ठे न पुनर्जायते ह्यसौ ॥ १२० ॥
सिद्धयते नात्र सन्देहो सत्यं सत्यं च षड्मुख ।
विचरेन्मर्त्यलोकेऽसौ प्राणदश्च[१७] यथा तथा ॥ १२१ ॥
योगीवद् विचरेत्[१८] सर्वं सर्वेषु च प्रियो भवेत् ।
पशुश्च पुरुषो वाऽपि नगरं चापविन्त्रकम् ॥ १२२ ॥

१५ मा. ख न पीड्यते इत्यादिश्लोकार्धं न प्राप्यते ।
१६ मा. ख दुर्भगा इत्यादि श्लोकार्धं त्रुटितं मा. ख पूर्यते ।
१७ मा. क प्रसादशच पाठः ।
१८ विहरेत् पाठ उत्तमः ।

रसं रसायनं चैव जरामृत्युविनाशनम्।
लभेद् वेतालखड्गं चाष्टसिद्धिं महाद्भुताम् ॥१२३॥
न पुण्यं  न च पापं च न व्याधिर्न प्रपीडनम्।
जीवेद् वर्षहसस्राणि मृते भवति शूलधृक् ॥१२४॥
अप्रार्थिताल्लभेदर्थान् नचार्थस्य क्षयो भवेत्।
मुच्यते सर्वपापेभ्यो ज्ञानयज्ञफलं[१९] लभेत् ॥१२५॥
चतुर्दशैर्मुखैर्जप्तं तदानन्त्याय जायते।
पूज्यते देव मनुजैरक्षय्यां लभते गतिम् ॥१२६॥
[२०]यथा हरिश्च देवेषु सदेहः क्षत्तुमर्भके।
रविर्यथा ग्रहाणाञ्च मुनीनां कश्यपो यथा ॥१२७॥
नदीनां जाह्नवी यद्वत्तीर्थेषु च यथोदधिः।
आयुधानां धनुर्यद्वद्व्रतानां च चतुर्दशी ॥१२८॥
कुमाराणां यथा स्कन्दो देवानां च महेश्वरः।
देवीनां च उमादेवी ऐरावत गजेश्वरः ॥१२९॥
धेनूनां च सुनन्दा वै अश्वानां हरितस्तथा।
एवं गण्येषु सर्वेषु रुद्राक्षस्तु विशिष्यते ॥१३०॥
षण्मुखं शिरसा धार्यं त्रिमुखं कण्ठके स्मृतम्।
पञ्चवक्त्रं मतं बाहौ चतुर्वक्त्रं करे शुभम् ॥१३१॥
द्विमुखं धारयेत्कट्याम् एकवक्त्रं च मूर्द्धनि।
नववक्त्रं च रुद्राक्षं धारयेद्वामबाहुना ॥१३२॥
चतुर्दशमुखं चैव शिखायां धारयेद् बुधः ॥
रुद्राक्षान् धारयेद्विप्रः संध्यादिषु च कर्मसु ॥१३३॥
तत्सर्वं सफलं प्रोक्तं लक्षकोटिगुणं ध्रुवम्।
लिङ्गदर्शनवत्पुण्यं भवेद्रुद्राक्षदर्शनात् ॥१३४॥
तत्तुकोटिशतं पुण्यं लभते धारणान्तरः।
शिरसा धारयन्कोटिः कर्णयोर्दशकोटयः ॥१३५॥
गले बद्ध्वा कोटिशतं मूर्ध्नि कोटिसहस्रकम्।
अयुतं चोपवीते च लक्षकोटिभुजद्वये ॥१३६॥
अप्रमेयफलं हस्ते सुरुद्राक्षधरो भवेत् ॥१३७॥

१९ मा. क ज्ञानी यज्ञफलं पाठः।

२० मा. ख शतमष्टोत्तरं ज्येष्ठं पञ्चाशच्चतुरधिकम्। सप्तविंशत्तथा वाऽपि कुर्याद्रुद्राक्षकालिकाम् ॥ गुरोः सकाशात्संगृह्य योजयेत्तेन सिद्ध्यति। इति अधिकः पाठः।

निश्छिद्राश्चैव पक्वाश्च रुद्राक्षा धारणे स्मृताः।
परीक्षा तत्र कर्तव्या रुद्राक्षस्य तु षण्मुख ॥ १३८ ॥
सुपक्वं सुदृढं चैव सुवेद्यं[21] सुसमं मुखम्।
निश्छिद्रं निर्वणं चैव कल्पोक्तफलदायकम् ॥ १३९ ॥
पाण्डुरं चाधमं ज्ञेयं मध्यमं कृष्णवर्णकम्।
उत्तमं रक्तवर्णन्तु सर्वसिद्धिप्रदायकम् ॥ १४० ॥
वक्त्रं च खण्डितं चैव छिद्रं[22] चैव विशेषतः।
किञ्चित् किञ्चिद् भवेत् वत्स फलं दोषेण हन्यते ॥ १४१ ॥
[23]फलं प्रत्येकमेतेषामधुना त्वं निशामय।
दन्ताक्षमालया देवि षष्ठिसिद्धिश्वरो भवेत् ॥ १४२ ॥
अकस्माद्दीक्षिता सिद्धिर्महाशङ्खाख्य मालया।
रचिता चास्थिमणिभिः सर्वशत्रुविनाशिनी ॥ १४३ ॥
रक्तचन्दनजा माला भोगमोक्षप्रदा मता।
स्वयम्भूकुसुमैर्देवि सर्वविद्येश्वरो भवेत् ॥ १४४ ॥
गुञ्जया मोहनं प्रोक्तं खरदन्तैरिपुक्षयः।
हरिद्र्या स्तम्भनं शस्तं पद्माक्षैः पुष्टिरुत्तमा ॥ १४५ ॥
वाक्सिद्धिः स्फाटिकी या स्यात्सर्वकाम फलप्रदा।
धनार्थं श्वेतगुञ्जायाः कीर्तिः श्रीः शङ्खजा मता ॥ १४६ ॥
इन्द्राक्षै राज्यदा प्रोक्ता भद्राक्षैर्भोगसम्पदा।
गजदन्तस्य सर्वार्थसिद्धिर्भवति सर्वदा ॥ १४७ ॥
धनधान्यसुतप्राप्तिर्भवेद् वै पुत्रजीवकैः।
तुलस्या मोक्षमाप्नोति रत्नैर्भोगाँश्च यच्छति ॥ १४८ ॥
सौवर्णे राज्यलक्ष्मीः स्यात् सर्वसौख्यं तु रौप्यजैः।
अङ्गुलीपर्वभिः सर्वसिद्धिं राज्यं च विन्दति ॥ १४९ ॥
औदुम्बरैर्भूतनाशो प्लक्षैर्दारिद्र्यनाशनम्।
बटबीजैर्यक्षिणी स्यात्कपर्दीभिर्महोदयः।
प्रबालैर्वश्यसिद्धिः स्यान्मौक्तिका मुक्तिदा मता।
किल्विषौघक्षयकरी कुशग्रन्थिविनिर्मिता ॥ १५१ ॥

---

२१ सुविद्धं पाठ उचितः।

२२ छिन्नं पाठ उचितः।

२३ मा. ख कुशग्रन्थ्या जपेद् विप्रः सुवर्णमणिभिनृपः। पुत्रजीवैर्जपेद्वैश्यः पद्माक्षैः सर्व एव च ॥ इत्यधिकः पाठः।

विद्रुमोत्था वश्यकरा मोहने ताम्रजा मता।
कुचन्दनैः समाकर्षो विद्वेषोऽरिष्टमालया ॥ १५२ ॥
मारिचैर्ह्रासने माला पिचुमर्दैर्विनाशनम्।
अर्क्कस्योच्चाटने चैव मारणे चायसी मता ॥ १५३ ॥
ज्वरहर्त्री च लाक्षायाः खड्गस्य पितृतृप्तये।
विषोत्तारे चादनोत्था शान्तये श्वेतकाष्ठजा ॥ १५४ ॥
पद्मकाष्ठोद्भवा पुष्ट्यै देवदारुद्भवैर्निरुक्।
कृष्ठाकाष्ठसमुद्भूता तामसकर्मसिद्धये ॥ १५५ ॥
भूतस्तम्भे निम्बजाता जनस्तम्भे समीभवा।
महानिम्बेन डाकिन्या भूविम्बैः स्तम्भनं रुजाम् ॥ १५६ ॥
इद्रवृक्षाद्रणस्तम्भोऽभिचारो वानरास्थितः।
ऋक्षास्थितो वन्यसिद्धिः शार्दूलात्तस्य देवताः ॥ १५७ ॥
नरास्थ्ना राक्षसा वश्या वीरा वश्या हयास्थिभिः।
रासभस्थ्ना क्षुद्रसिद्धिर्मान्यता तु गजास्थिभिः ॥ १५८ ॥
मृत्तिकाभृष्टमणिजा मालाऽऽशावरसिद्धिदा।
श्रीफलैर्ज्ञानमाप्नोति रुद्राक्षैः सर्वसिद्धयः ॥ १५९ ॥

## अथ मालाफलम्[२४]

रुद्राक्षैः सर्वकार्याणि पद्माक्षैः पुष्टिरुत्तमा।
कीर्त्तिः श्रीः शङ्खमणिभिर्मौक्तिकैर्युक्तिमान् भवेत् ॥
प्रबालैर्वश्यसिद्धिः स्याद् गुञ्जया मोहनं भवेत्।
रुद्राक्षैर्भाग्यसम्पत्तिर्द्राक्षाभिरायुरुत्तमम् ॥
धनधान्यसुतप्राप्तिर्भवेद् वै पुत्रजीवकैः।
अरिष्टमाला विद्वेषे वदरी मारणे मता ॥
मारीचैर्हासने माला पिचुमर्दैर्विनाशने।
अकस्माद्दीक्षिता सिद्धिर्महाशङ्खाख्यमालया ॥
दन्ताक्षमालया देवि षष्ठीसिद्धिश्वरो भवेत्।
रचिता ऽस्थिमणिभिः सर्वशत्रुविनाशिनी ॥
खरदन्तैः शत्रुनाशो गजदन्तैर्गुणो भवेत्।
कुचन्दनैः समाकर्षो हारिद्रैः स्तम्भनं भवेत् ॥

२४ मा. ख मालाफलनिर्वचनं मा. क मातृकातो भिद्यते। अत्र स्रोतो ग्रन्थभेदः कारणमित्यनुमीयते।

तुलस्या मोक्षमाप्नोति लोहैर्मारकमादिशेत्।
ताम्रैः शान्तिर्लौहरौप्यैः सर्वसौख्यकला भवेत्॥
सौवर्णैः राज्यलक्ष्मीः स्यात् सर्पास्थिमालया रिपून्।
त्रासयेत्त्रासयेद्देवि नात्र कार्या विचारणा॥
वाक्सिद्धिः स्फाटिकैर्भूयात् शङ्खाभावेऽपि मालया।
अङ्गुलीपर्वभिः सर्वसिद्धिं राज्यं च विन्दति॥
औदुम्बरैर्भूतनाशः प्लक्षैर्दारिद्र्य नाशनम्।
बटबीजैर्यक्षिणीसिद्धिः कपर्दीभिर्महोदयः॥
अथातो ग्रथनं वक्ष्ये मालानां तत्र बोधनम्।
चतुर्थ्यां प्रोतयेन्मालां गणनाथस्य मन्त्रकैः ॥ १६० ॥
मध्यान्हेऽर्कस्य सप्तम्यां रवौ वा तस्य मन्त्रकैः।
द्वादश्यां वैष्णवी माला प्रोतव्या विष्णुमन्त्रतः ॥ १६१ ॥
त्रयोदश्यां तु सन्ध्यायां तन्मन्त्रैः शिवमालिकाम्।
अष्टम्यां वा चतुर्दश्यां नवम्यां भूमिनन्दने ॥ १६२ ॥
शक्तीनामपि कर्तव्या[२५] भुक्त्वा रात्रौ यथाविधि।
येन मन्त्रेण या माला कृता तन्तु जपेत्तया ॥ १६३ ॥
अन्यमन्त्रजपाच्छापो देवतायाः प्रजायते।
अथवा मातृकाभिश्च ग्रथनं कारयेत्प्रिये ॥ १६४ ॥
पञ्चाशन्मणिभिर्माला क्षकारो मेरुसंज्ञकः।
अनुलोमविलोमेन माला शतमयी भवेत् ॥ १६५ ॥
अष्टवर्गं प्रकल्प्याथ माला त्वष्टोत्तरं शतम्।
मातृकामालया जापः सर्वमन्त्रे प्रशस्यते ॥ १६६ ॥
सर्वसिद्धिमयी माला द्रुतसिद्धिकरी परा।
तत्तन्त्रमयी देवी तत्र ध्यात्वा तु यत्क्षणे ॥ १६७ ॥
जपं कुर्यात्प्रयत्नेन नात्र कार्या विचारणा।
सर्वसिद्धिप्रदा माला सर्वकार्यकरी परा ॥ १६८ ॥
ध्रुवेन ग्रथनं कार्यं प्रत्येकं मणिका क्रमात्।
सर्वमन्त्रमयी माला सर्वसिद्धिकरी मता ॥ १६९ ॥
तन्मन्त्रदेवतारूपं ध्यात्वा तु मालिकान्तरम्।

---

२५ ख मातृकायां मालाग्रथनप्रसङ्गो क मातृकामनुसृत्य नायातः। मा. ख अथ मालाग्रथने मन्त्र विवेकमाह इत्यन्तर्गतत्वेन केचन श्लोकाः समुल्लिखिता इति प्रकारभेदः।

सर्वमन्त्राः प्रजप्तव्याः सर्वकार्यार्थसिद्धये ॥ १७० ॥
शक्तिमन्त्रेण संग्रथ्य शिवमन्त्रं जपेच्छिवे ।
शिवमन्त्रेण संग्रथ्य शक्तिमन्त्रं जपेच्छिवे ॥ १७१ ॥
शिवशक्त्योरभेदेन माला कार्यकरी परा ।
येनैव ग्रथ्यते देवि तेनैव प्रजपेन्मनुम् ॥ १७२ ॥
इत्याद्युक्तं त्वया पूर्वं किं त्वया विस्मृतं प्रभोः ।
इदानीमन्यथा प्रोक्तं संशयोऽस्ति मम प्रभोः ॥ १७३ ॥
[२६]मातृका तारभिन्नानि शिवशक्तिविहीनके ।
मालिकायामिदं प्रोक्तमन्यमालाविधौ मतम् ॥ १७४ ॥
अन्यप्रकारग्रथने येनैव ग्रन्थनं चरेत् ।
तमेव प्रजपेन्मन्त्रं नान्यमन्त्रं जपेच्छिवे ॥ १७५ ॥
मातृकादावपि शिवे माला तन्मन्त्ररूपिणी ।
[२७]ग्रथिता पट्टसूत्रेण देव्याः प्रीत्यै तु मालिका ॥ १७६ ॥
कार्या सा वैष्णवी माला पट्टसूत्रैरथापि वा ।
अर्णाभिर्वा वाल्कलैर्वा शैवी कार्पाससूत्रजा ॥ १७७ ॥
कार्यं सद्धर्मकर्मादि साधनं सर्वसिद्धिदम् ।
प्रायशः सर्व देवानां सूत्रोत्पत्तिविधिं श्रृणु ॥ १७८ ॥
सूत्रं द्विजेन्द्रपुण्यस्त्रीनिर्मितं ग्रन्थिवर्जितम् ।
या जीवत्वत्सका नारी सुन्दरी पतिवल्लभा ॥ १७९ ॥
तया कर्त्तितसूत्रं च कुमारीकर्त्तितं च वा ।
त्रिगुणं त्रिगुणीकृत्य ग्राह्यं प्रक्षाल्य यत्नतः ॥ १८० ॥
मेरुः सूत्रेण पट्टेन त्रसरेणुविनिर्मिता ।
निर्मिता स्वर्णरजतैः स्वर्णेनापि शुभा मता ॥ १८१ ॥
हारिद्रं सर्वथा सूत्रं ग्रामकार्पाससम्भवम् ।
चैत्रकार्पासजं चाथ[२८] त्यजेद्ग्रथनकर्मणि ॥ १८२ ॥
गुरुणा ग्रथिता श्रेष्ठा स्वयं कृता ततोऽवरा ।
शक्त्या च ग्रथिता श्रेष्ठा न शूद्रादिभिरीश्वरि ॥ १८५ ॥
एतेषु ब्राह्मणाः श्रेष्ठा जपमालाकृते भृशम् ।

२६ मा. क मातृकातारभिन्नानि शिवशक्तिविहीनके । मातृकायामिदं नोक्तम् ... इति पाठः मा. ख २७९ (क) ।

२७ ख मातृकायाम् अथ सूत्रभेद इति अन्तर्गत्वेन मालाग्रथनसूत्रविषयकाः श्लोका प्रकारान्तरेण समुल्लिखिताः ।

२८ मा. ख वाऽपि पाठः ।

कलौ तु दुर्लभा विप्रा[२९] यथा विप्राः स्वधर्मणा ॥ १८४ ॥
अलाभे तु द्विजातीनामपि वा स्वस्वजातयः ।
अथास्याः शोधनं वक्ष्ये समासात्परमेश्वरि ॥ १८५ ॥
कुलमार्गानुसारेण स्मृत्युक्त विधिनाऽपि वा ।
कृतनित्यक्रियः शुद्ध उक्तक्षेत्रेष्वतन्द्रितः[३०] ॥ १८६ ॥
उपवासं हविष्यं वा तथैकभक्षमेव वा ।
विधाया पट्टकार्पासं शनैः सूत्रं विनिर्ममेत् ॥ १८७ ॥
उपवासदिने देहि तानि सर्वाणि पूजयेत् ।
द्विगुणं त्रिगुणं वाऽपि तच्च त्रिगुणमाचरेत् ॥ १८८ ॥
चन्दनाक्षतधूपाद्यैः कुसुमैर्बलिदीपकैः ।
कर्तव्यानि समासानि न स्थूलानि कृशानि च ॥ १८९ ॥
प्रातस्तत्सूत्रमादाय कामना कार्यभेदतः ।
श्वेतं नीलं तथा पीतं रक्तं वर्णं च कारयेत् ॥ १९० ॥
रुद्राक्षस्फटिकादीन् वै समानीय प्रयत्नतः ।
एकवक्त्रैर्द्विवक्त्रैश्च चतुर्वक्त्रैश्च पञ्चभिः ॥ १९१ ॥
षड्वक्त्रैर्वथ कर्तव्या मिथो मिश्राँस्तु वर्जयेत् ।
मुखे मुखन्तु कर्तव्यं मुखं मूले तु वर्जयेत् ॥ १९२ ॥
मुखं मुखेन संयोज्य पृष्ठं पृष्ठेन योजयेत् ।
रुद्राक्षस्योन्नतं प्रोक्तं मुखं पुच्छं तु निम्बकम् ॥ १९३ ॥
धात्रीफलोपमः श्रेष्ठो मध्यो बदरसन्निभः ।
अधमश्चणकाभः स्यात्ततो हीनो विपत्तिकृत् ॥ १९४ ॥
अतिस्थूलोऽति सूक्ष्मश्च फुटितो भङ्गुरो लघुः ।
भिन्नः पुराधृतो जीर्णो रुद्राक्षो न शुभः स्मृतः ॥ १९५ ॥
न जीर्णानि न कीटादिविद्धानि सुनवानि च ।
आद्यं स्थूलं ततस्तस्मान्यूनं न्यूनतरं ततः ॥ १९६ ॥
एको मेरुस्तत्र देयः सर्वेभ्यः स्थूलसम्भवः[३१] ।
अस्योर्ध्ववक्त्रं जानीयान्मेरोस्तं नैव लङ्घयेत् ॥ १९७ ॥
मणिमेकैकमादाय सूत्रं संपातयेत्सुधीः ।
सर्पाकाराऽतवा कार्या गोपुच्छसदृशी तथा ॥ १९८ ॥

२९ विद्या पाठो मेरुतन्त्रे ।
३० उक्तेष्वेक्षेषु पाठोऽन्यत्र ।
३१ स्थौल्यवुक् च यः पाठो मेरुतन्त्रे ।

एकैकमणिमध्ये तु ब्रह्मग्रन्थिं प्रकल्पयेत्।
त्रिरावृत्त्या तु मध्येन चार्धवर्त्त्यान्तदेशतः ॥ १९९ ॥
ग्रन्थिः प्रदक्षिणवर्त्तो ब्रह्मग्रन्थिरितीरितः।
अथवा ग्रन्थिरहितां दृढरज्जुसमन्विताम्[३२] ॥ २०० ॥
दृढसूत्रं नियुञ्जीत जपे त्रुट्यति नो यथा।
अष्ठोत्तरशतैः सर्वसिद्धिरुक्ता मनीषिभिः ॥ २०१ ॥
पञ्चाशद्भिः काम्यसिद्धिः स्यात्तथा चतुरुत्तरैः।
सर्वार्थः सप्तविंशत्या पञ्चदश्याऽभिचारके ॥ २०२ ॥
पञ्चविंशतिभिर्मोक्षं त्रिंशद्भिर्धनसिद्धये।
एवं निर्माय वै मालां प्रतिष्ठामाचरेद् बुधः ॥ २०३ ॥
अप्रतिष्ठिताभिर्मालाभिर्मन्त्रं जपति यो नरः।
सर्वन्तन्निष्फलं विद्यात् क्रुद्धा भवति देवता ॥ २०४ ॥
अथ सामान्यमालायाः संस्कारं प्रवदामि ते।
तान्त्रिकं वैदिकं वाऽपि सद्योजाताह्वयं मनुम् ॥ २०५ ॥
पठित्वा पञ्चगव्येन स्नापयेन्मालिकां पुनः।
गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् ॥ २०६ ॥
पञ्चगव्यमिति प्रोक्तं महापातकनाशनम्।
दुग्धं काञ्चनवर्णाया श्वेतायाश्चैव गोमयम् ॥ २०७ ॥
गोमूत्रं चाम्रवर्णाया नीलायाश्च भवेद्दधि।
घृतन्तु कृष्णवर्णाया एवं पञ्चामृतेऽपि च ॥ २०८ ॥
गवां वर्णास्तु सुलभाः सन्ति देशेषु कुत्रचित्।
तत्र वर्णविभागेन पञ्चगव्यानि चाहरेत् ॥ २०९ ॥
वर्णालाभेन दोषोऽस्ति मात्राहीनं तु वर्जयेत्।
गो सकृद् द्विगुणं मूत्रं सर्पि दद्याच्चतुर्गुणम् ॥ २१० ॥
क्षीरमष्टगुणं प्रोक्तं पञ्चगव्यं तथा दधि।
अथवा पञ्चगव्यानां समानो भाग उच्यते ॥ २११ ।
गायत्र्याऽऽदाय गोमूत्रं गन्धद्वारेतु गोमयम्।
आप्यायस्वेति च क्षीरं दधिक्राव्णेति वै दधि ॥ २१२ ॥
तेजोऽसि शुक्रमित्याज्यं देवस्यत्वा कुशोदकम्।
क्षालयेत्पञ्चगव्याद्यैः सद्योजातेति मन्त्रतः ॥ २१३ ॥

---

३२ दृढरश्मि समन्वितं पाठो मेरुतन्त्रे तथा चक्र पाठोऽपि अन्यत्र।

चन्दनागुरुगन्धाद्यैर्वामदेवेन घर्षयेत्।
धूपयेदप्यघोरेण कृष्णागुरुसुगुग्गुलैः ॥ २१४ ॥
तत्पुरुषाख्यमन्त्रेण लेपयेच्चन्दनादिभिः।
ईशानः सर्वमिति च प्रत्येकं मन्त्रयेच्छतम् ॥ २१५ ॥
तेनैव मन्त्रयेन्मेरुमघोरेण च मन्त्रयेत्।
प्राणप्रतिष्ठामेतस्यां विश्वरूपेण चाचरेत् ॥ २१६ ॥
एवं संस्कृत्य मालां तां गुरुहस्ते समर्पयेत्।
अभिवाद्य गुरुं मूर्ध्ना गृह्णीयात्तत्करात्स्वयम् ॥ २१७ ॥
तन्मन्त्रस्य गायत्रीं पुरः पञ्चशतं जपेत्।
ततो जपेन्मूलमन्त्रमित्येतस्य विनिश्चयः ॥ २१८ ॥
अथान्यमालासंस्कारं वक्ष्येऽश्वत्थपत्रकैः।..
पद्माकारेण नवभिः स्थापितैस्तत्र विन्यसेत् ॥ २१९ ॥
मणिं सूत्रं च गन्धाद्यैः क्षलयित्वाऽथ मन्त्रयेत्।
ॐ ह्रीं पूर्वमातृकार्णैः क्रमादेकैकशो मणिम् ॥ २२० ॥
सूत्रं च तत्र विन्यस्य पूजयित्वा हुनेत्ततः।
तिलाज्यैः केवलाज्यैर्वा सद्योजातादिभिः पृथक् ॥ २२१ ॥
पञ्चमन्त्रैः शतं चाष्टावष्टाविंशतिरेव वा।
होमाभावे जपः प्रोक्तः प्रोतयन्मालिकान्ततः ॥ २२२ ॥
गोपुच्छसदृशी कार्या एकाग्रा चा समेरुका।
आवाहनादिमुद्राणामष्टकं दर्शयेत्ततः ॥ २२३ ॥
सद्योजातादिभिर्मन्त्रैः पूर्ववत् क्षालनादिकम्।
कौलिकादौ विशेषोऽयं सुरया मणितर्पणम् ॥ २२४ ॥
संस्कृत्यैव बुधो मालां तत्प्राणाँस्तत्र स्थापयेत्।
मूलमन्त्रेण देवेशि संपूज्य भक्तिभावतः ॥ २२५ ॥
गुरुं सम्पूज्य तद्धस्ताद् गृह्णीयादक्षमालिकाम्।
शूद्रार्थं च स्त्रियामर्थे मालासंस्कार उच्यते ॥ २२६ ॥
गणेशसूर्यविष्ण्वीशदुर्गाः संपूज्य भक्तितः।
मालयामथ तां मालां ह्सौं बीजेनाभिमन्त्रिताम् ॥ २२७ ॥
अष्टोत्तरशतं पञ्चगव्ये तां स्थापयेत्त्र्यहम्।
चतुर्थे तु समुद्धृत्वा क्षालयेदस्त्रमन्त्रतः ॥ २२८ ॥
ह्रीं मन्त्रेण ग्रथयित्वा स्थण्डिले तां निधापयेत्।

ततस्तूत्तोल्य तां मालां स्थापयेद्धेमपात्रके ॥ २२९ ॥
पञ्चामृतेन संस्नाप्य शीतलेन जलेन च।
चन्दनेन सुगन्धेन कस्तूरीकुङ्कुमादिभिः ॥ २३० ॥
अभिषेकं ततः कुर्याद् ह्सौँ मन्त्रेण साधकः।
नवग्रहान् पूजयित्वा दिक्पालाँश्चापि पूजयेत् ॥ २३१ ॥
तिलेनामृतयुक्तेन शक्तितो होमयन्ततः।
स्वर्णान्तु दक्षिणां दद्यात् गुरवे मणिसंख्यकान् ॥ २३२ ॥
तन्मन्त्रजापिनो विप्रान् भोजयेद् वाऽथ वैदिकान् ॥
अभावे स्वर्णपात्रस्य ग्राह्यमश्वत्थपत्रकम् ॥ २३३ ॥
मालासंस्कार इत्युक्तो जपः स्यात्सिद्धिदायकः।
अथापरं प्रवक्ष्यामि मालासंस्कार उच्यते ॥ २३४ ॥
वर्णमानेन सा कार्या पञ्चगव्ये त्र्यहं क्षिपेत्।
सूत्रं वाऽपि चतुर्थेऽह्नि क्षालयेदस्त्रमन्त्रकैः ॥ २३५ ॥
समानवर्णसूत्रेण ग्रथयेद् हृदयामृनना।
सुवर्णादिगुणैर्वापि ग्रथयेत्साधकोत्तमः ॥ २३६ ॥
ब्रह्मग्रन्थिं ततो दद्यान्नागपाशमथापि वा।
सार्धं ग्रन्थिद्वयं देवि नागपाशः प्रकीर्तितः ॥ २३७ ॥
सार्धं ग्रन्थित्रयं देवि ब्रह्मग्रन्थिः प्रकीर्तितः।
ब्रह्मग्रन्थ्या सर्वकर्म साधयेत्परमेश्वरि ॥ २३८ ॥
नागपाशे क्रूरकर्म द्वैविध्यं परिकीर्तितम्।
कवचेन च ग्रथ्नीयान्मालां ध्यानपरायणः ॥ २३९ ॥
सर्वशेषे ततो मेरुं सूत्रद्वयसमन्वितम्।
ग्रन्थयेत्तारयोगेन बध्नीयात्साधकोत्तमः ॥ २४० ॥
एवं निष्पाद्य देवेशि प्रतिष्ठां च समाचरेत्।
स्थण्डिले मण्डलं कृत्वा यथाभागं विधिक्रमात् ॥ २४१ ॥
पूजयित्वा यथा न्यायमिष्टदेवमनुक्रमात्।
न्यासपूर्वं जपेन्मन्त्रमष्टोत्तरसहस्रकम् ॥ २४२ ॥
जुहूयाच्च दशांशेन यस्य देवस्य यत् प्रियम्।
ततो मण्डलमध्ये तु तां मालां स्थापयेद् बुधः ॥ २४३ ।
अस्त्रमन्त्रं ततो न्यस्य देववत् परिचिन्तयेत्।
अद्वैतरूपमासाद्य मालां कुर्यात्तथात्मिकाम् ॥ २४४ ॥

ततो बलिं यथान्यायं दद्यत्तैः साधकोत्तमैः।
एवं प्रतिष्ठामासाद्य मालायामिष्टदेवताम् ॥ २४५ ॥
आचार्यं पूजयेन्मन्त्री शिल्पिनं च यथाविधि।
नान्यमन्त्रं जपेत्तत्र यदिच्छेत्सिद्धिमात्मनः ॥ २४६ ॥
अथ मालाविधानञ्च कौलिकानां च वामिनाम्।
कीकसादिकमालानां कथ्यते श्रृणु पार्वति ॥ २४७ ॥
तत्रापि कालिका-तारा-विद्यायां शवसम्भवा।
माला बहुविधाः प्रोक्ता महाशङ्खादिभेदतः ॥ २४८ ॥
महाशङ्खमयी माला सर्वविद्यास्वरूपिणी।
दन्ताख्यमालिका देवि मेरुस्तु राजदन्ततः ॥ २४९ ॥
सर्वविद्याविधौ शस्ता सर्वसिद्धिपराम्बिका।
नराङ्गुल्यस्थिभिर्माला ग्रथिता पर्वभेदतः ॥ २५० ॥
सर्वसिद्धिमयी प्रोक्ता सर्वसिद्धिमयी स्मृता।
अस्थिमालाऽपि च तथा तथा खट्वाङ्गमालिका ॥ २५१ ॥
शैवी ब्रह्माण्डमाला च देहदेहान्तरा त्वया च यः।
करास्थिमालिका देवि तथा यत्पर्वमालिका ॥ २५२ ॥
जङ्घास्थि कीलकार्येऽपि मालायामपि सिद्धिकृत्।
अथ गोवाजिवृषभमृगवानरशूकरैः।
भल्लूकोलूक[33] शार्दूलव्याघ्रवारणदन्तजा।
गवयादिमृगोत्था च कस्तूरीमृगजातिजा ॥ २५४ ॥
जीवमात्रास्थि संभूता खरोष्ट्रवाजिदन्तजा।
दन्तामेव प्रतिनिधिर्महाशङ्खेन वै तदा ॥ २५५ ॥
विश्वामित्रभवं तच्च सर्वसत्त्वमयं भवेत्।
शङ्खमाला दन्तमाला नारिकेलमयी तथा ॥ २५६ ॥
अस्थिमाला महेशानि बृद्धस्त्री गोमयं विना।
माला तु त्रिविधा प्रोक्ता उत्तमा मध्यमाऽधमा ॥ २५७ ॥
दन्ताक्षमाला या चैव राजदन्तेन मेरुणाम् ।
उत्तमा मालिका प्रोक्ता कालिकाऽऽकर्षिणी परा ॥ २५८ ॥
कर्णनेत्रान्तरस्थो यो महाशङ्खेति कीर्तितः।
महाशङ्खमयी माला पञ्चाशन्मणिनिर्मिता ॥ २५९ ॥

---

३३ मा. ख भल्लूकासूकः पाठः।

मध्यमा मालिका प्रोक्ता ताराजापे प्रकीर्तिता।
अस्थिभिर्वा नृमुण्डैर्वा किं वा नरललाटजा ॥ २६० ॥
देहदेहान्तरस्थैर्वा माला प्रोक्ता कनिष्ठिका।
छिन्नादेव्या विधौ देवि एवं हि त्रिविधा मता ॥ २६१ ॥
सम्मुखौ यावुभौ दन्तौ राजदन्तौ प्रकीर्तितौ।
करालास्या महाकाल्या दानवा भक्षिताः पुरा ॥ २६२ ॥
त्रैलोक्यगामिनौ दन्तौ राजदन्ताविति स्मृतौ।
राजदन्तेति संज्ञा वै देव्या पूर्वं कृता प्रिये ॥ २६३ ॥
यौ दैत्यचर्वकौ दन्तौ मम कार्यकरावुभौ।
तस्मात्प्रीतेन मनसा मेरुकार्यनियोजितौ ॥ २६४ ॥

### श्रीदेव्युवाच

सामान्यमाला कथिता विशेषं वद शङ्कर।

**श्रीशिव उवाच**

चन्द्रमण्डलमारभ्य कर्णान्तं परमेश्वरि ॥ २६५ ॥
वामदक्षयुग्मके च माला स्यान्मेरुमण्डला।
मेरुमण्डलमाला तु सर्वसिद्धिप्रदायिका ॥ २६६ ॥
द्वितीया सार्द्धयवकैर्माला साम्राज्यमोहिनी।
एवं पङ्क्तिरन्ध्रसंख्यैः कपालं परिकीर्तितम् ॥ २६७ ॥
कर्णनेत्रान्तरस्थो यो महाशङ्खः प्रकीर्तितः।
महाशङ्खमयी माला सर्वसिद्धिप्रदायिनी ॥ २६८ ॥
कर्णनेत्रगलप्रान्ते दन्तान्तं परमेश्वरि।
मुण्डं प्रोक्तं महेशानि पूजासाधनकर्मणि ॥ २६९ ॥
दक्षभ्रूबिन्दुमारभ्य कर्णान्तं परमेश्वरि।
वामभ्रूबिन्दुमारभ्य वामश्रुत्यन्तगं शिवे ॥ २७० ॥
माला त्रिपुण्ड्रमार्गेण शिवशक्तीमयी च वा।
अर्धत्रिपुण्ड्रमार्गेण तदधः शक्तिमालवत् ॥ २७१ ॥
ऊर्ध्वक्रमेण माला तु सर्वमालोत्तमोत्तमा।
केशक्रमेण देवेशि कपालोर्ध्वं तु मालिका ॥ २७२ ॥
तथैव मणयः कार्याः शिव एव न चापरः।
महाशङ्खमयी चाद्या द्वितीया ध्रुवमण्डला ॥ २७३ ॥

उन्मनी मालिका देवि तृतीया परिकीर्तिता।
मेरुमाला चतुर्थी स्यात्पञ्चमी मेरुमण्डला ॥ २७४ ॥
दन्तमाला महेशानि मेरुमण्डलमालिका।
राजदन्तेन मेरुस्तु तेनैषा मेरुमण्डला ॥ २७५ ॥
मालापञ्चकमेतद्धि पञ्चतन्मात्रगोचरम्।
राजदन्तद्वयं मेरौ नियोज्यं पङ्क्तिमार्गतः ॥ २७६ ॥
ऊर्ध्वमूर्ध्वक्रमेणैव दंष्ट्रा दंष्ट्रान्तरं शिवे।
अधोधश्चोल्लसत्पङ्क्तिर्हारनायकतां व्रजेत् ॥ २७७ ॥
राजदन्तेन मेरुस्तु कृशाश्चतुर्दशत्यजेत्।
एवं माला महामाला पञ्चाशद्दन्तगोचरा ॥ २७८ ॥
सर्वसिद्धिमयी माला राजदन्तेन मेरुणा।
सिद्धिदा भोगदा योग त्रिराज्यश्च प्रदा तथा ॥ २७९ ॥
चतुःषष्टिसिद्धिमते माला तु पञ्चमी स्मृता।
ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः ॥ २८० ॥
यते पञ्च महाप्रेताः पञ्चमालाम्बिकाविधौ।
तारा छिन्ना तथा कामकलाकाली च कालिका ॥ २८१ ॥
श्रीविद्यादावपि शिवे मालिका मालिकामयी।
पूर्वोक्तानां मणीनां च ह्यभावे परमेश्वरि ॥ २८२ ॥
गन्धरूपाश्च मणयो दन्तस्फाटिकसम्भवाः।
मणयो यत्नतः कार्याः सर्वसिद्धिमभीप्सुभिः ॥ २८३ ॥
महाशङ्खेऽप्यशक्तश्चेत् स्फाटिक्या मालया जपेत्।

**अथ महामालाधिकारिणमाह**

सर्वास्थिमाला संशस्ता अधिकारक्रमं श्रृणु ॥ २८४ ॥
पूर्वोर्ध्वाम्नायभूषाढ्यस्तथा चरणदीक्षितः।
षडन्वयक्रमाशक्तः श्रीमेधासंयुतस्तथा ॥ २८५ ॥
महाचीनक्रमाशक्तो महानीलक्रमी च वा।
ब्रह्मदिव्यक्रमी चापि महाब्रह्मक्रमी च वा ॥ २८६ ॥
इदृग्विधः साधको हि मालाजपपरायणः।
मालाधिकारिणः प्रोक्ताः क्रमेण परमेश्वरि ॥ २८७ ॥
रहस्यमालार्थं मुण्डादानविधिस्तु साधारणपूजाप्रकरणेषूक्तः।

## अथ निर्माणप्रकारस्तूच्यते

सिद्धमुण्डं पुरा कृत्वा मालादीन् कारयेत् प्रिये ।
शिल्पिनं पूजयेदादौ वस्त्रगन्धानुलेपनैः ॥ २८८ ॥
संहृष्टः कारयेन्मालां मन्त्रपूतं पिवेन्मधु ।
यथायोग्यं वेधवतीं मालां कुर्याद्विचक्षणः ॥ २८९ ॥
दन्तमाला शङ्खमाला विश्वामित्रकपालजा ।
सर्वास्थिमाला देवेशि जीवमात्रास्थिनिर्मिता ॥ २९० ॥
अङ्गुष्ठान्मस्तकान्तञ्च ह्युत्तरोत्तरतः शुभम् ।
तत्र देवि सदा तुष्टा तत्र तिष्ठति पार्वति ॥ २९१ ॥
एतद्विद्याविधौ देवि पूर्वोक्ते च वरास्थि च ।
पञ्चाशन्मणिभिर्माला मातृकावर्णतः क्रमात् ॥ २९२ ॥
अष्टोत्तरशती चेत्सा तदाष्टौ वर्गकल्पनम् ।
अष्टोत्तरशतं कृत्वा ऋतुमत्या भगे क्षिपेत् ॥ २९३ ॥
निशामेकां समुद्धृत्य कारणैः क्षालयेत्ततः ।
शुद्धोदैर्मूलमन्त्रेणाभिषिञ्चेद्विजया रसैः ॥ २९४ ॥
प्रक्षाल्य धूपयेत्पश्चात्प्रोतयेदिष्टसूत्रकैः ।
नाड्या संग्रथनं कार्यं रक्तेन वाससा प्रिये ॥ २९५ ॥
वाससा मज्जया वाऽपि नाडीभिर्वा शुभा मता ।
स्वयंभूवाक्ता या नाडी सा नाडी सर्वतोत्तमा ॥ २९६ ॥
स्वयंभूकुसुमाक्तैस्तु तूलकैर्वीरनायिका ।
कुमारीकर्तितं सूत्रं पुण्यस्त्रीकर्तितं च वा ॥ २९७ ॥
ततो द्विजेन्द्रपुण्यस्त्रीकर्तितं ग्रन्थिवर्जितम् ।
वेश्याहस्तभवं वाऽपि मातङ्गीहस्तजं परम् ॥ २९८ ॥
रजस्वलाहस्तभवं सूत्रं च कर्तितं शुभम् ।
कुण्डाक्तं चैव गोलाक्तं स्वयंभूवाक्तं तथैव च ॥ २९९ ॥
स्वयंभुवाक्तं यत्सूत्रं तत्सूत्रं सर्वतोत्तमम् ।
सूत्रं स्वेष्टजपे नीलं कृष्णं मारणकर्मणि ॥ ३०० ॥
मोहने हरितं स्तम्भे धूमाभं द्विषितालभम् ।[३४]
शान्तौ पौष्टौ सितं द्वेषे रक्तमुच्चाटने भवेत् ॥ ३०१ ॥

---

३४ द्विषि हृयालभम् पाठ उचितः ।

वश्ये पीतं कषायं तु विपक्षकरणे मतम्।
स्वयं न ग्रथयेद्[३५] ग्रन्थिं जपमालां न ग्रन्थयेत् ॥ ३०२ ॥

## अथ मालाग्रथनाधिकारिणमाह

महामाला दन्तमाला सर्वस्थिमालिका विधौ।
क्रमेण कथ्यते देवि ग्रथने चाधिकारिणः ॥ ३०३ ॥
माता पुत्री तथा भार्या तथाष्टकन्यकाः प्रिये।
षट्त्रिंशज्जातिजास्त्री वा स्वकुलाष्टकजा च वा ॥ ३०४ ॥
ताराकुलाकुलं वाऽपि दशविद्यास्थियश्च याः।
पञ्चाशत्पीठजा वाऽपि वेश्या सप्तकमेव वा ॥ ३०५ ॥
मालाया ग्रथने देवि शकुनाशकुनं श्रृणु।
दधिमांससुरापिष्टशङ्खवदिति वेणवः ॥ ३०६ ॥
मृदङ्गकाहलोद्गीतं दुन्दुभिवाद्यदर्शनम्।
गजाश्वरथवेश्यादिस्त्रीणां पूर्णघटस्य च ॥ ३०७ ॥
जपसिद्धेर्लक्षणानि मालायां परमेश्वरि।
रोदनं गायनं मुण्डरुण्डादशनमेव च ॥ ३०८ ॥
कलहो गुरुनिन्दा च देवता वीरनिन्दनम्।
सूत्रत्रुटिरथाप्राप्ति मणिकास्फोटनं यदि ॥ ३०९ ॥
वैमनस्यं शिवस्यापि भवत्येव न चान्यथा।
माला ग्रथनकाले तु मणिस्फुरति चेद्यदि ॥ ३१० ॥
पुत्रशोको विनिर्दिष्टो दुःखभागी भवेद् ध्रुवम्।
मालाग्रन्थनकाले तु मणिः स्खलति चेद्भुवि ॥ ३११ ॥
तस्य शोको विनिर्दिष्टो नात्र कार्या विचारणा।
माणिमादाय सूत्रेण ग्रथयेन्मध्यमध्यतः ॥ ३१२ ॥
ब्रह्मग्रन्थिं विधायेत्थं मेरुश्च ग्रन्थिसंयुतम्।
ग्रथयित्वा पुरो मालां ततः संस्कारमारभेत् ॥ ३१३ ॥
सिध्यै वक्ष्यामि संस्कारं सर्वतन्त्रेषु गोपितम्।
कृत्यनित्यक्रियः शुद्धः शुद्धार्क्षेषु च मन्त्रवित् ॥ ३१४ ॥
चक्रपूजां ततः कृत्वा साष्टोत्तरसहस्रकम्।
हुनेन्मद्यपलाभ्यां च मूलमन्त्रेण साधकः ॥ ३१५ ॥

३५ कारयेद् पाठ उचितः।

ततो बलिं यथान्यायं महिषादेः प्रदापयेत्।
शक्तीश्च[३६] साधकाँश्चापि भोजयन्मणिसङ्ख्यकान् ॥ ३१६ ॥
अतः परं पृथग्रूपं माला संस्कारमाचरेत्।
मालारात्रिविधिं[३७] वक्ष्ये श्रृणु सावहिता भव ॥ ३१७ ॥
सुदिने शुभऋक्षादिदिने शुद्धदिने शिवे।
महामालां समादाय वीरपात्रं समानयेत् ॥ ३१८ ॥
वीरयन्त्रं समासाद्य वीरमालां च शोधयेत्।
देवीं सावरणां पूज्य सबल्यन्तं महेश्वरि ॥ ३१९ ॥
दशविंशत्पञ्चविंशद्दीपान् दत्त्वा बलिं चरेत्।
एवं मालां शुभां कृत्वा महासंस्कारमाचरेत् ॥ ३२० ॥
शुभे मुहूर्त्ते संलग्ने मालां वा पञ्चगव्यके।
निमन्त्र्य पञ्चगव्यं च गोमूत्रं गोमयं पुनः ॥ ३२१ ॥
दधिसर्पिः क्रमेणैव पञ्चगव्यं प्रकीर्त्तितम्।
तदुत्तार्य शुद्धजलैः संक्षाल्य संविदासवैः ॥ ३२२ ॥
मूलमन्त्रेण संक्षाल्य तद्द्रव्यैः स्थापयेद्दिनम्।
तृतीये दिवसे देवि यक्षकर्दमकैर्यजेत् ॥ ३२३ ॥
सर्वगन्धैर्यक्षगन्धैरणिमाद्यष्टकैर्यजेत् ।
अष्टनीराँश्च ताराया ताराष्टौ रोचनी मनौ ॥ ३२४ ॥
चतुर्थे दिवसे देवि प्राणाँस्थाप्य यजेत्क्रमात्।
रहस्यमालामन्त्रस्यास्य ऋषिः परमेश्वरः ॥ ३२५ ॥
श्रीमहातारिणीदेवी उष्णिक् छन्दः प्रकीर्त्तितम्।
ह्रीँ बीजं स्त्रीँ तथा शक्तिः हूँ मन्त्रः कीलकं स्मृतम् ॥ ३२६ ॥
महामाला दन्तमालाशोधने[३८] विनियोजने।
त्रिशक्त्या तु षडङ्गानि ध्यानं मन्त्रवदाचरेत् ॥ ३२७ ॥
ध्यात्वा संकल्प्य यत्नेन मन्त्रेणानेन पार्वति।
प्रणवं च तथा लज्जा श्रीलज्जाकामकूर्चकैः ॥ ३२८ ॥
फट् स्वाहेति च मन्त्रेण चसके मालिकां क्षिपेत्।
तत्राऽऽवाहनमन्त्राद्यैः कालिकां कालक्षारदाम् ॥ ३२९ ॥
सायुधान् परिवाराँश्च पूजयेत्परमेश्वरि।

३६ शिल्पिनः पाठो मेरुतन्त्रे।

३७ मालारात्रिविधिर्हि ख मातृकायामपि यथाक्रममधिगम्यते।

३८ दन्तमाला इति पाठः क मातृकायां न विद्यते, ख मातृकायाः समुद्धृतः।

मूलमावृत्त्य तार्तीयं संस्मरन् धेनुमुद्रया ॥ ३३० ॥
अमृतीकृत्य कवचेनावगुण्ठ्य महेश्वरि ।
महामुद्रया समाच्छाद्य देवीरूपी[३९] विभावयेत् ॥ ३३१ ॥
ध्यायेत्तत्र[४०] क्षिपेद् बिन्दुं तत्र मन्त्रान् शृणु प्रिये ।
प्रणवं कूर्चयुग्मं च स्वाहा प्रणवकूर्चकौ ॥ ३३२ ॥
वह्निजाया च तारास्त्रे वह्निजायाविषं तथा ।
तारां च वह्निजायां च तारलज्जासकूर्चकैः ॥ ३३३ ॥
वह्निजाया ततस्तारं लज्जा फट् वह्निजायया ।
द्वित्रिश्रृङ्खलिका व्यस्तसमस्तमन्त्रमालया ॥ ३३४ ॥
शतधाऽनेन मन्त्रेण बिन्दुप्रक्षेपमाचरेत् ।
कस्तूरीञ्चकेशरञ्च चन्द्रागुरुप्रधूपकैः ॥ ३३५ ॥
धूप्य मालां समुत्तार्य विद्यया चाभिमन्त्रयेत् ।
प्रणवं च तथा माया श्रीमहावज्रिणीति च ॥ ३३६ ॥
ततो महाघोररूपे कर्कशेति पदं वदेत् ।
महास्थिमण्डले प्रोच्य प्रविशेति पदं तथा ॥ ३३७ ॥
सर्वसिद्धिं प्रयच्छेति पणवं कूर्च्चबीजकम् ।
मायाबीजं वह्निजाया महाकपालिनीति च ॥ ३३८ ॥
ततो महाघोररूपे स्वाहा प्रणवमायया ।
माया कूर्च्चस्त्रिस्वाहान्ता विद्योक्ता चाभिमन्त्रणे ॥ ३३९ ॥
दूर्वाक्षतैः समभ्यर्च्य कामेनोद्दीपनं चरेत् ।
उपचारैः समभ्यर्च्य मातृकां मूलमन्त्रतः ॥ ३४० ॥
उद्दीपनं ततः कृत्वा हँ कारेण तु वेष्टयेत् ।
बलिं दद्यादनेनैव तारं मायाद्वयं वदेत् ॥ ३४१ ॥
वासुदेवं बिन्दुयुतं कूर्च्चेन पुटितं वदेत् ।
कूर्चतारे फट् च कूर्च्चं प्रणवद्वयमुद्धरेत् ॥ ३४२ ॥
कूर्च्चबीजं वह्निजाया प्रणवं कूर्च्चबीजकैः ।
महायोगिनि शब्दान्ते ततस्त्रिभुवनतारिणी ॥ ३४३ ॥
महाशङ्खास्थिमाला च मध्ये निवासं कुर्विति ।
कुरुशब्दं सर्वसिद्धिं देहि युक् च सुरापदम् ॥ ३४४ ॥

---

३९ देवीरूपां पाठ उचितः ।

४० ध्यायन् तत्र पाठ उचितः ।

मांसोपहारं गृह्णेति युक् गृह्णपदद्वयम्।
कुल्लुका फट् ततः स्वाहा मन्त्रेणानेन पार्वति ॥ ३४५ ॥
यथोचितेन द्रव्येण बलिं दत्त्वा विधानतः।
पञ्चद्रव्यैः पञ्चदिनं मालां स्थाप्य च पञ्चमे ॥ ३४६ ॥
मालारात्रिविधिं कुर्यात् तेन सिद्ध्यति मालिका।
निभृते स्थापयेन्मालां रहस्यमालिकाविधिः ॥ ३४७ ॥
दन्तमालाविधौ देवि विशेषं श्रृणु चापरम्।
प्रणवं हृद् भगवति मानरञ्जिनि चोच्चरेत् ॥ ३४८ ॥
विच्चे विच्चेऽवलोच्चे च हरविच्चे पदं वदेत्।
मालाविच्चे तथा मालाधारिणि हर ब्लूँ[४१] पदम् ॥ ३४९ ॥
हस ब्रूँ महाशङ्खास्थिधारिणीति पदं वदेत्।
कर्कशास्थि-महामाला वासिनीति पदं वदेत् ॥ ३५० ॥
छिन्ने तारे कालिके च तदन्ते जपमालिके।
कुल्लुको फट् महादन्तमालामध्ये पदं वदेत् ॥ ३५१ ॥
निवासं कुरु युग्मं च राजेन्द्रमालिकां ततः।
वासिनित्रितयं प्रोच्य क्रीं-त्रयं हूँ-द्वयं तथा ॥ ३५२ ॥
माया-द्वयं च फट् स्वाहा मालामन्त्रेण हृन्मनुः।
बलिदानमनुं वक्ष्ये श्रृणु सावाहिता भव ॥ ३५३ ॥
प्रणवं कर्कश पदं मण्डलेत्यम्बिके पदम्।
मालिनि-कौलिके पदं गौराङ्गधारि चोच्चरेत् ॥ ३५४ ॥
गिरिजे मायावति-पदं क्रियावति-पदं ततः।
गायत्रि गानप्रिये च शक्रप्रिये च शाङ्करि ॥ ३५५ ॥
कालिके मालिके कृष्णे[४२] मुण्डधारिणि चोच्चरेत्।
असिधारिणीति पदं तदन्ते जातवेदसे ॥ ३५६ ॥
श्रीकालि कालि च पदं रुद्राणि च मृडानि च।
इमं बलि गृह्णयुग्मं मालासिद्धिं च चोद्धरेत् ॥ ३५७ ॥
देहि दापययुग्मं च क्रीं षट् कमलयायुतम्।
बलिं दद्यादनेनैव तदन्ते जाग्रती कृतिः ॥ ३५८ ॥

---

४१ ब्रूँ पाठ उचितः।

४२ मा. क कृष्ण पाठः।

कपालकज्जलं[४३] चोर पादकज्जलयुग्मकम्[४४] ।
विश्वमोहननामानं कज्जलं विद्धि पार्वति ॥ ३५९ ॥
तत्पादभस्म देवेशि फाल्गुनोत्सवजं परम् ।
जगद्धूलीति नाम्ना तु विख्यातं शत्रुनिग्रहे ॥ ३६० ॥
अनेन मनुना गृह्य उद्भ्रान्तिं धूलिनामिकाम् ।
शत्रुमूर्ध्नि तथा देहे गेहे शय्यागणे जले ॥ ३६१ ॥
दापयेत्परमेशानि उद्भ्रान्तिधूलिरीरिता ।
उद्भ्रान्तधूल्या देवेशि भ्रमाक्रान्तं जगद्वयम् ॥ ३६२ ॥
यथा ग्रहण-युग्मं च तथा पर्वद्वयं भवेत् ।
नक्षत्रराशि वारादि शुद्धादशुद्धिं न चाचरेत् ॥ ३६३ ॥
कामबीजं तथा बीजं[४५] श्रीँ श्रीँ फट्त्रयं वदेत् ।
सिद्धे जाग्रद्धूलिसिद्धिं देहि स्वाहा मनुर्मतः ॥ ३६४ ॥
मन्त्रेणानेन संगृह्य उद्भ्रान्तिधूलिमुत्तमाम् ।
मालासिद्ध्या सर्वसिद्धिर्भवत्येव न संशयः ॥ ३६५ ॥
स्वजातकुसुमं देवि कुण्डगोलोद्भवं तथा ।
अनङ्गगन्धा देवेशि चतुर्थी परिकीर्तिता ॥ ३६६ ॥
एवं संपाद्य देवेशि जाग्रतीकरणं चरेत् ।
सिन्दूरतिलकं भाले वदने संविदासवम् ॥ ३६७ ॥
वीरासनी वीरवेशी धूपदीपप्रमोदितः ।
संविद्दुग्धरसे मालां क्षिप्त्वा दुग्धं ततो वदेत् ॥ ३६८ ॥
ततो नक्ते क्षिपेन्मालां धूपेनैव प्रधूपयेत् ।
ततो बलिं प्रदद्याद्धि मालासंसिद्धये शिवे ॥ ३६९ ॥
शक्तिं कुमारीं मालां च संपूज्य सिद्धिभाक् कलौ ।
बलिदानविधौ देवि बलिं कृत्वा विधानतः ॥ ३७० ॥
अजागलस्थरक्तेन तर्पयेत्तत्र मालिकाम् ।
रक्तधाराभिर्मज्जाभिर्योनिरक्तैरपिप्रिये ॥ ३७१ ॥
तर्पणात्सिद्धिदा माला जाग्रद्रूपा फलप्रदा ।
पूर्वक्रमेण देवेशि आवेशोक्तक्रमेण वा ॥ ३७२ ॥
तत्तद्देवी देहरूपा मालिका वरदा कलौ ।

४३ मा. क कर्जल पाठः ।

४४ मा. क कर्ज्जलयुग्मकं पाठः ।

४५ मा. क तथाबीजं पाठो नास्ति, मा. ख समृद्धतः ।

एवं कृत्वा वरां मालां साधकः सिद्धिमाप्नुयात् ॥ ३७३ ॥
अशुचिर्न स्पृशेदेनां न कदापि प्रकाशयेत्।
भूत-राक्षस-वेतालाः सिद्ध-गन्धर्व-चरणाः ॥ ३७४ ॥
हरन्ति प्रकटे यस्मात्तस्माद्गुप्तां समाचरेत्।
जीर्णसूत्रं पुनः सूत्रं ग्रथयित्वा शतं जपेत् ॥ ३७५ ॥
द्वित्रिमासैश्च षण्मासैर्मालां संग्रन्थयेच्छिवे।
षण्मासोत्तरगं देवि जीर्णसूत्रस्य मालिका ॥ ३७६ ॥
यः स्थापयेन्महेशानि तस्य नाशो भविष्यति।
छिन्ने सूत्रे भवेन्मृत्युस्तस्माद्यत्नपरो भवेत् ॥ ३७७ ॥
महाशङ्खमयी माला तथा दन्ताख्यमालिका।
न देया यस्य कस्यापि गोप्या तु मातृजारवत् ॥ ३७८ ॥
अथवाऽङ्गुलिमालाभिर्जपं कुर्यात्तदुच्यते।
अनामामध्यमारभ्य कनिष्ठानुक्रमेण तु ॥ ३७९ ॥
मध्यमा मूलपर्यन्ता कलामाला[४६] प्रकीर्त्तिता।
मध्यमाऽनामिकामध्यपर्वयुग्मं प्रकल्पयेत् ॥ ३८० ॥
मेरुं वाऽनामिकामुलात्कनिष्ठानुक्रमेण च।
तर्जन्यग्रादितो मध्यान्मूलान्तं दशसङ्ख्यकाः ॥ ३८१ ॥
अथवा कल्पयेन्मेरुं मध्यामध्यादिपर्वकम्।
अनामा मध्यपर्वा तु तर्जनीमूलकावधि ॥ ३८२ ॥
दशसङ्ख्या जपः प्रोक्तस्तथाऽयं त्रिविधो मतः।
तत्रादौ त्रिविधः प्रोक्तः शतमष्टोत्तरं श्रृणु ॥ ३८३ ॥
अनामामूलमारभ्य प्रादक्षिण्यक्रमेण तु।
तर्जनीमूलपर्यन्तं जपेन्नवसु पर्वसु ॥ ३८४ ॥
मध्यमात्रितयं ग्राह्यमनामामूलमेव च।
अनामामध्यमञ्चैकं मेरुं कृत्वा न लङ्घयेत् ॥ ३८५ ॥
इदं च द्वादशावृत्त्या ह्यष्टोत्तरशतं भवेत्।
अङ्गुल्याख्यो जपः प्रोक्तो यतोऽन्यो न ममैव च ॥ ३८६ ॥
कनिष्ठिकातश्चाङ्गुष्ठो बद्ध्वेदं दशकं भवेत्।
अङ्गुलीगतलेखाभिर्जपो लेखाजपो भवेत् ॥ ३८७ ॥
अङ्गुलीं च वियुञ्जीत जपकाले कदाचन।

---

४६ करमाला पाठो मेरुतन्त्रे।

अङ्गुलीनां वियोगेन छिद्रेषु स्रवते जपः ॥ ३८८ ॥
नोल्लङ्घयेच्च गणनां किञ्चित्संकोचयेच्च ताम् ।
न दर्शयेत्करं नो चेत् फलं गृह्णन्ति राक्षसाः ॥ ३८९ ॥

*इति श्रीतन्त्रचिन्तामणौ मालाभेदादिप्रतिष्ठान्तनिर्णयनाम त्रिंशत्तमः प्रकाशः ।*[४७]



---

४७ ख मातृकायाम् 'अथ महाशङ्खादिलक्षणरहस्यमालाभेदानाह इत्यतो मालारात्रिविधिनिरूपणान्तो भागो मा. क क्रमेण नैव समुद्दिष्टः। तथापि पौर्वापर्येणऽसो नुसन्धेयः।

# एकत्रिंशत्तमः प्रकाशः

++ ++ ++[1]

गणपते पदं पश्चाद् वरद वरदेति च।
सर्वं जनं वदेच्चैव वदेन्मे वशमानय॥२८८॥
अन्ते वह्निवधूं दद्याद् गणनाथो महामनुः।
रौद्रं त्रिकोणमुद्धृत्य नारायणं तथोद्धरेत्॥२८९॥
बीजसूक्ष्मे समुद्धृत्य मरेशं बीजमुद्धरेत्।
ङेन्तं तु क्षेत्रपालञ्च बलिं गृह्णद्वयं ततः॥२९०॥
वह्निजायान्वितो मन्त्र क्षेत्रपालस्य कीर्तितः।
वायुबीजं त्रिधा लिख्य अनन्तो माधवस्तथा॥२९१॥
वर्त्तुलाक्षीं तथोद्धृत्य योगिनीभ्यस्तथैव च।
वह्निजायान्वितो मन्त्रो वायव्यां योगिनी बलिः॥२९२॥
क्षकारं कालमारूढं तदन्ते अनलाक्षरम्।
सर्वविघ्नपदं कृद्भ्यः सर्वेभ्यो भूतमुद्धरेत्॥२९३॥
भ्यो वर्म फट् समुद्धृत्य बलिं गृह्णापयेति च।
द्विठान्तः सिद्धिदः प्रोक्तः सर्वभूतबलिं हरेत्॥२९४॥
ओदनं पायसं क्षीरं मत्स्यं मांसं तथैव च।
मोदकं पूरिकापूपं वटकं त्रिविधां सुराम्॥२९५॥
हृद्यौदनानि पक्वान्नं माज्यं मधु सशर्कराम्।
सर्वत्र विधिवत् कुर्याद् दुर्गेनोत्सङ्गमाचरेत्॥२९६॥
क्षेत्रमध्यं समाश्रित्य कूर्मचक्रं विचारयेत्।
कूर्मचक्रमधिज्ञानान्महाविघ्नो न जायते॥२९७॥
परदेशग्रामगेहभेदात्कूर्मश्चतुर्विधः।
व्यजनं देशकूर्मे स्यात्कूर्मे स्यात्तु स्वरास्तथा॥२९८॥
ग्रामकूर्मे तद्द्वितयं परकूर्मेण तद्द्वयम्।
पर्वते सिन्धुतीरे वा पुण्यारण्ये नदीतटे॥२९९॥

---

१ क. मातृकायां इतः पूर्वं पाठो नैवोपलभ्यते।

कुरुक्षेत्रे प्रयागे च गङ्गासागरसङ्गमे ।
महाकाले च काश्याञ्च कूर्मस्थानं न चिन्तयेत् ॥३००॥
वृत्तद्वयं प्रकुर्वीत नवकोष्ठकभूषितम् ।
कवर्गाद्याः सप्त लेख्याः पूर्वाशादिषु लक्षकौ ॥३०१॥
ईशान्यां विलिखेन्मध्ये वृत्तकोष्ठद्वयं द्वयम् ।
स्वराणां पूर्वतो लेख्यं श्रीबीजं मध्यकोष्ठके ॥३०२॥
प्राङ्मुखः परकूर्मस्तु सर्वदैव प्रजायते ।
देशगमादिमो वर्णो यस्यां दिशि व्यवस्थितः ॥३०३॥
देशकूर्ममुखं तस्यां दिशि स्याद्ग्रामकूर्मके ।
मुखद्वयं तु विज्ञेयं स्वराद्व्यञ्जनतस्तथा ॥३०४॥
गृहकूर्मस्य वदनं यदि द्वारमुखं भवेत् ।
मुखस्य पार्श्वयोः पाणी कुक्षी पादौ ततस्ततः ॥३०५॥
पुच्छमेकमथो मध्यं पृष्ठमेकं षडङ्गवत् ।
मुखे सर्वार्थसिद्धिः स्यात् करयोरल्पसिद्धयः ॥३०६॥
करौ न किञ्चिद्दासत्वं पादयोः पुच्छगे मृतिः ।
मध्याक्षरेण मैत्रं च दीपनाम्नो भवेद्यदि ॥३०७॥
साधकस्य च नाम्नाऽथ किन्न सिद्ध्यति मन्त्रिणः ।
पञ्चाशद्वर्णरूपेण क्षेत्रेशा विश्वविग्रहाः ॥३०८॥
तस्मात्तत्सगुणं क्षेत्रं सिद्धये स्यान्न चान्यथा ।
विगुणं चोन्मुखस्थोऽपि नैव सिद्धिमवाप्नुयात् ॥३०९॥
तस्माच्चक्रं विचार्यैवं मित्रं चेत् सर्वसिद्धिदम् ।
यस्मिन्देशे दीपपतिः सगुणो नाममन्त्रयोः ॥३१०॥
तत्र यत्नेन गन्तव्यं तत्पीठं दुर्लभं मतम् ।
क्षेत्रसाधकमन्त्राणामेकमेवाद्यमक्षरम् ॥३११॥
यदि स्यात्स ध्रुवो मन्त्रः सर्वसिद्धिफलप्रदः ।
महारित्वे जीवनाशो वैरे स्याद्धननाशनम् ॥३१२॥
किञ्चिद्वैरे सुखाल्पत्वं तदिदानीं निगद्यते ।
अगौ झठौ लृषौ जषौ पसौ जठौ इवौ अतौ [२] ॥३१३॥
फधौ भनौ यमौ चेति महारी परिकीर्तितौ ।
ऋच्छौ द्रोद्वयषौ तद्वत् जटौरिषा बुधौ ठलौ ॥३१४॥

---

२ आगौ ऋच्छौ लृषौ जाहौ पषौ एतौ इरौ उलौ । फधौ भरौ यसौ चेसत इति पाठो मेरौ ।

अनुस्वारौ ह्रस्वदीर्घौ ग्राह्यौ साधकसत्तमैः ।
वैरं ते पञ्चमे वर्गे तान् किञ्चित्करयोर्भवेत् ॥३१५॥
चटयोर्यचयोश्चापि तटयोर्युशयोरपि ।
एकवर्गे यदा प्रीतिः स्ववर्गं द्विगुणं कुरु ॥३१६॥
स्थानवर्गयुतं नवमष्टभिश्चाथ उच्यते ।
स्थानवर्गो द्विगुणितः स्ववर्गस्याष्टमे शिवतः ॥३१७॥
स्थानाद्यत्रोभयोः कार्यमन्तरं यस्य शेषकम् ।
यावत् स्थितं सार्थदः स्यात्साधकोऽर्थप्रदो न सत् ॥३१८॥
एवं क्रमेण विज्ञाय रिपुस्थानं त्यजेद् बुधः ।
रिपुत्वे निश्चिते तस्य द्वितीयार्णादि शोधयेत् ॥३१९॥
इत्थं स्थानगृहं कृत्वा तन्त्र मन्त्री बलिं हरेत् ।
दीपनार्थं लिखेन्मध्ये पूजयेत्तं विभावयेत् ॥३२०॥
अमृतो वृषभः शैलराजो वासुकिरेव च ।
अर्थकृच्छक्तिकृत्पूर्वकोष्ठादौ बलिमर्चयेत् ॥३२१॥
पद्मयोनिं महाशङ्खं छायाख्यं चापि मध्यमः ।
कूर्मपृष्ठे गृहं कृत्वा[३] गृहस्थो जपमाचरेत् ॥३२२॥
मुखं तस्य समाश्रित्य वातातपसहां कुटीम्[४] ।
चतुर्हस्तां चतुरस्रां हस्तोन्नतसुवेदिकाम् ॥३२३॥
चन्द्रातवपताकादितोरणैरप्यलङ्कृताम् ।
विविक्तामतिलिप्ताञ्च प्राकारेणाभिवेष्टिताम् ॥३२४॥
निर्माय च ततः कुर्यादेकभक्तं शुभे दिने ।
प्रातः स्नात्वाऽथ गायत्र्या अयुतं प्रयतो जपेत् ॥३२५॥
ज्ञाताज्ञातस्य दायस्य क्षयार्थं प्रथमं ततः ।
विरच्य विधिवद्विद्वान् मण्डपं सुमनोरमम् ॥३२६॥
तस्मिन् कलशमारोप्य तीर्थतोयैः प्रपूरयेत् ।
निक्षिप्य नवरत्नानि तत्र गन्धाष्टकं पुनः ॥३२७॥
आवाह्य पूजयेत्तत्र देवीमावरणैः सह ।
कलशाग्रे जपेन्मन्त्रं संख्यायाः पूरणावधि ॥३२८॥
सम्पूर्णं तु समागत्य गुरुर्देवो विधानतः ।

---

३ मा. ख गत्वा पाठः ।

४ मा. ख पुटिम् पाठः ।

अभिषिञ्चञ्छिवां मूर्ध्नि कलशोदरवारिभिः ॥३२९॥
ततः शिष्यः प्रयत्नेन धनाद्यैस्तोषयेद् गुरुम् ।
अथ वक्ष्यामि मन्त्रस्य पुरश्चरणमुत्तमम् ॥३३०॥
कृताभिषेको विधिवन्मन्त्रं लब्ध्वा गुरोर्मुखात् ।
शुभे मुहूर्ते नक्षत्रे तिथौ स्नात्वा यथाविधि ॥३३१॥
विप्रान् सन्तर्प्य यत्नेन भोजनाऽऽच्छादनादिभिः ।
भूवित्तवस्त्रभूषाद्यैः सन्तोष्य गुरुमात्मनः ॥३३२॥
आरभेत जपं पश्चात्तदनुज्ञा पुरस्सरम् ।
भुञ्जानो वा हविष्यान्नं शाकं यावकमेव वा ॥३३३॥
पयो मूलं फलं वाऽपि यत्र यत्रोपलभ्यते ।
विम्वाञ्चनालिका शाकं कलापं निकुचं तथा ॥३३४॥
कदम्बं नारिकेलञ्च व्रते कूष्माण्डकं त्यजेत् ।
मलिनाम्बरकेशादि मुखदौर्गन्धसंयुतम् ॥३३५॥
यो जपेत्तं दहत्याशु देवता गुप्तिसंस्थिता ।
आलस्यं जृम्भणं निद्रां स्फुटं निष्ठीवनं भयम् ॥३३६॥
नीचसंस्पर्शनं कायं जपकाले विवर्जयेत् ।
अधःशायी ब्रह्मचारी निशाशी प्रजपेन्मनुम् ॥३३७॥
नियमव्यतिरेकेण यद्यत्कर्म करोति यः ।
किञ्चिदप्यस्य न फलं सिद्ध्यति क्रमदोषतः ॥३३८॥
न्यूनातिरिक्तकर्माणि न फलन्ति कदाचन ।
यथाविधि कृतानीह सत्कर्माणि फलन्ति हि ॥३३९॥
तद्विधानकृतं कर्म जपहोमार्चनादिकम् ।
देवताप्रीतिदं भूयाद् भुक्तिमुक्तिफलप्रदम् ॥३४०॥
स्वभार्यायां प्रमादेन स्खलितं चेत्तदोषसि ।
स्नात्वा दुर्वाससा मौनी दशकुम्भमिदं जलम् ॥३४१॥
श्रोत्रियस्य गृहे दद्यात्परनार्यां सहस्रकम् ।
त्यजेद् विंशतिकर्माणि सिद्धिविघ्नकराणि च ॥३४२॥
कुर्याद् विंशतिकर्माणि जनसिद्धिकराणि च ।
लोभं क्रोधं च मात्सर्यं कामद्वेषं च ताडनम् ॥३४३॥
दम्भमुच्चाटनान्यंगा प्रियमिथ्यावचस्तथा ।
गीतवाद्यं मुधुच्छायां विभीतककरञ्जयोः ॥३४४॥

मांसं प्रतिग्रहं माल्यं ताम्बूलं पापभक्षणम् ।
एतानि वर्जयेद्विद्वान् कर्तव्यान्यद्य मे शृणु ॥३४५॥
मनोनिरोधो मन्त्रार्थचिन्तनं नित्यकर्म च ।
नैमित्तिकं शौचमौनं वचसां मारणं मदः ॥३४६॥
भूमिशय्या त्रिषवणं स्नानं प्रातश्चाह्निकार्चनम् ।
नित्यदानं गुरोः नदपूजाऽऽहारनियन्त्रणम् ॥३४७॥
स्नानञ्च पञ्चगव्येन पवित्रकरधारणम् ।
त्रिसन्ध्यावन्दनं पञ्चयज्ञास्तर्पणकं चतुः ॥३४८॥
यथोक्तवस्त्रधारणं प्रायश्चित्तमथोच्यते ।
सकृदुच्चरिते शब्दे प्रणवं समुदीरयेत् ॥३४९॥
प्राप्ते पामरशब्देऽपि प्राणायामं सकृच्चरेत् ।
बहुप्रलापे चावश्यं न्यस्याङ्गानि ततो जपेत् ॥३५०॥
क्षुतेप्येवं तथा स्पृश्य स्थानानां स्पर्शनेऽपि वा ।
मौनत्यागे जपेन्मन्त्रं वैष्णवो वा स्मरेद्धरिम् ॥३५१॥
पतितान्त्यजसंस्पर्शे तेजोबलं निरीक्षयेत् ।
सूर्याग्निचन्द्रमाः खे ये मुनयो भान्ति तारकाः ॥३५२॥
विद्वान् गोब्राह्मणश्चेति तेजोहीनाः पदे पदे ।
क्षुतेऽर्धा वायुगमने पतितादिकभाषणे ॥३५३॥
त्यक्त्वा जपन्तथाऽऽचम्य प्राणायामं षडङ्गकम् ।
कृत्वा पश्चाज्जपेन्मन्त्रं जृम्भायां विष्णुमुच्चरेत् ॥३५४॥
मार्जारं कुक्कुटं क्रौञ्चं स्वानं गृध्रं खरं कपिम् ।
दृष्ट्वाऽऽचम्याऽऽचरेत्कर्म स्पृष्ट्वा स्नानं विधीयते ॥३५५॥
दैवादसत्यभाषी चेत् सनृतं पौरुषं जपेत् ।
बहुवस्त्रैकवस्त्रो वा मुक्तकेशो गलावृतः ॥३५६॥
ऊष्णीषी कञ्चुकी नग्नः शिरसि आवृतोऽपि वा ।
वित्तव्याकुलचित्तो वा क्रुद्धो भ्रान्तः क्षुधान्वितः ॥३५७॥
उपानद्गूढपादो वा पानशय्यागतस्तथा ।
शयानो वा धौतपादः पश्चाद्वा दक्षिणामुखः ॥३५८॥
स्नानवस्त्रोर्ध्ववस्त्रश्च तथा द्विगुणवस्त्रकः ।
च्युतवस्त्रो समवस्त्रः स्निग्धवस्त्रो द्विकच्छकः ॥३५९॥
बहिःकच्छोऽनुत्तरीयो विकच्छश्चैककच्छकः ।

कौपीनः प्रौढपादश्च तथा जीवितवस्त्रवान् ॥३६०॥
जपाशक्तः प्रमादाच्चेद्राक्षसैर्गृह्यते फलम् ।
विश्वासास्तिक्यकरुणा श्रद्धानियमनिश्चयैः ॥३६१॥
सन्तोषैः शुद्धधर्मादिगुणैर्युक्तो जपेत् प्रिये ।
अत्याहारः प्रवासश्च प्रजल्पो नियमाग्रहः ॥३६२॥
जनसङ्गोऽक्षिलौल्यञ्च षड्भिर्मन्त्रो न सिद्ध्यति ॥३६३॥

## अथ सङ्कल्पः

ततः सङ्कल्प्य कुर्वीत पुरश्चरणमादितः ।
पुण्याहवाचनं कृत्वा कुशहस्तो वदेदिति ॥३६४॥
सूर्यः सोमो यमः कालः संध्ये भूतान्यहः क्षपाः ।
पवनो दिक्पतिर्भूमिराकाशं खेचरामराः ॥३६५॥
ब्राह्मं शासनमाधाय कल्पतामिह सन्निधिम् ।
पठित्वेत्थं ताम्रपात्रे कृत्वा कुशतिलाक्षतान् ॥३६६॥
उदङ्मुखस्तु सङ्कल्प्य कुर्यात्संवत्सरादिकान् ।
कामनान्तानुच्चरेत तत्र विंशतिसंख्यकान् ॥३६७॥
संवत्सरायते मासः पक्षः पञ्चाङ्गमेव च ।
नवग्रहस्थितिं घस्र भाग मुहूर्त्तके त्विति ॥३६८॥
स्वदेशभेदान् तत्तूल्या कामनासहितान् वदेत् ।
द्वीपेऽमुकेऽमुके खण्डेऽमुके वर्षे च नावृतिः ॥३६९॥
अमुके चामुके क्षेत्रे गोत्रप्रवरमुच्चरेत् ।
स्वनाम जातिनामान्तं द्विजाच्छर्म च वर्म च ॥३७०॥
गुप्तो दासोऽथामुकस्य मन्त्रस्य सिद्धिकामुकः ।
करिष्येऽहं पुरश्चर्यामेतत्संख्यां जपात्मिकाम् ॥३७१॥
अथारभ्य जपैरेतैरसति प्रतिबन्धके ।
करिष्ये इति सङ्कल्पं मनसैव प्रकल्पयेत् ॥३७२॥
वदेद् वाचाभिलाषाञ्च कर्मणा चोपपादयेत् ॥३७३॥

## अथारब्धं कर्म सूतकान्नत्याज्यम्

यज्ञे व्रतविवाहेषु श्राद्धे होमार्चने जपे ।
आरब्धे सूतकं न स्यादनारम्भे च सूतकम् ॥३७४॥

प्रारम्भे वरणं यज्ञे सङ्कल्पो व्रतजापयोः ।
नान्दीमुखं विवाहादौ श्राद्धे पाकपरिष्क्रिया ॥३७५॥
जपो दीक्षार्चनविधिः कार्या दीक्षान्वितैर्नरैः ।
नास्ति पापं यतस्तेषां सूतकं वा यतात्मनाम् ॥३७६॥
सूतके मृतके चैव धूमोऽङ्गारादिके तथा ।
जपं चार्घ्यं तथा कुर्यान्मन्त्रन्यासपुरस्सरम् ॥३७७॥
गुरुं गणपतिं दुर्गां मातृर्नत्वा च पूजनम् ।
सम्पूज्याथ जपं कुर्याद्यावद्वै प्रहरद्वयम् ॥३७८॥
त्रिसन्ध्यमर्चयेद्देवं द्विः सकृद्वा विधानतः ।
एकदा वा भवेत्पूजा न जपेत्पूजनं विना ॥३७९॥
जपान्ते च भवेत्पूजा पूजान्ते वा जपेन्मनुम् ।
यदि पूजादावशक्तो द्रव्याभावे न सुन्दरि ॥३८०॥
केवलं जपमात्रेण पुरश्चर्या विधीयते ।
नियमः पुरुषे ज्ञेयो न योषित्सु कदाचन ॥३८१॥
पशुभावे स्थिता मन्त्राः केवलं वर्णरूपिणः ।

## अथ जपरहस्यमाह

स्वस्वध्वनिप्रोच्चरिता प्रमुत्त्वं प्राप्नुवन्ति ते ॥३८२॥
मन्त्राक्षराणि चित्सूत्रे प्रोक्तानि परिभावयेत् ।
तामेव परमे व्योम्नि परमामृतसंज्ञके ॥३८३॥
दर्शयेदात्मसद्भावं पूजाहोमादिभिर्विना ।

## मन्त्राणां सूतकादिनिर्णयः

जातसूतकमादौ स्यान्मृतसूतकमन्तकम् ॥३८४॥
सूतकद्वयसंयुक्तो यो मन्त्रः स न सिद्ध्यति ।
गुरु कुण्डलिनीध्यानं विवाहः परिकीर्तितः ॥३८५॥
द्विरागमं भवेत्स्नानं संयोगः सन्ध्ययोर्भवेत् ।
अर्घ्यदानं भवेद्गर्भो गायत्री त्वष्टमासिकम् ॥३८६॥
भूतशुद्ध्यादिप्राणान्तं तत्रावयवकल्पनम् ।
देही चापि मातृकया प्राणायामस्तु संस्क्रिया ॥३८७॥

ध्यानोच्चारे महेशानि बालकोत्पत्तिरीरिता।
मन्त्रोच्चारणतो देवि जातसूतकमीरितम् ॥३८८॥
जातसूतस्य दोषस्य शमनार्थं महेश्वरि।
दशविंशतिपञ्चाशद्यथाशक्ति जपेच्छिवे ॥३८९॥
दशाङ्गादिपुरश्चर्या संस्कारा दश वै शिवे।
इदमादि समादिष्टं मृतिं संशृणु सादरम् ॥३९०॥
संस्कारान्सप्रणवानथ जप्त्वा हृदि शिवे।
प्रसलान्तत्क्रमेणैव तत्सिद्धिसाधनं तथा ॥३९१॥
सोऽहं भावो मातृकाप्तिष्पञ्च चैतन्यमेलनम्।
अङ्गज्ञानं च तादात्म्यं तदनन्तरमीरितम् ॥३९२॥
विसर्जनं महेशानि मृतसूतकमीरितम्।
मृतसूतकशान्त्यर्थं दशविंशति वा जपेत् ॥३९३॥
तेन तस्य निवृत्तिर्हि भवत्येव न संशयः।
अथवा
ब्रह्मबीजं मनो दत्त्वा आद्यन्तं परमेश्वरि ॥३९४॥
सप्तवारं जपेन्मन्त्रं सूतकद्वयमुक्तये।
एवं जपं पुरा कृत्वा तेजोरूपं समर्पयेत् ॥३९५॥
स्वापकाले तु मन्त्रस्य जपो न च फलप्रदः।
स्वापकालो वामवहो जागरो दक्षिणावहः ॥३९६॥
आग्नेयस्य मनोः सौम्यमन्त्रस्यैतद्विपर्ययः।
प्रबोधकालं जानीयादुभयोरुभयोरपि ॥३९७॥
ज्ञेया मन्त्रास्तु आग्नेया विद्याः सौम्याः प्रकीर्तिताः।

## अथ मन्त्रविद्ययोर्भेदमाह

मन्त्रविद्याविभागे तु द्विविधा मन्त्रजातयः ॥३९८॥
मन्त्राः पुंदेवताः प्रोक्ता विद्या स्त्रीदेवता मता।
पुंमन्त्रा हूँफडन्ताः स्युर्द्विठान्ताः स्युः स्त्रियो मताः ॥३९९॥
नपुंसका नमोन्ताः स्युरित्युक्ता मनवस्त्रिधा।
एतच्छून्या महाविद्या महामन्त्रस्तु गीयते ॥४००॥
चन्द्रात्मिका स्मृता विद्या मन्त्रा देवीप्रदीपकाः।
आग्नेयाः संप्रबुध्यन्ते प्राणे च रति दक्षिणे ॥४०१॥

भागे यस्मिन्गते प्राणे सौम्याः बोधं प्रयान्ति हि ।
नाडीद्वयगते प्राणे सर्वे बोद्धुं प्रयान्ति ते ॥४०२॥
प्रयच्छन्ति फलं सर्वे प्रबुद्धा मन्त्रिणां द्रुतम् ।

## अथ मन्त्रशिखामाह

शृणु देवि परं तत्त्वं सर्वज्ञानोत्तमोत्तमम् ॥४०३॥
येन विज्ञानमात्रेण क्षिप्रं विद्या प्रसीदति ।
मूलकुण्डे तु या शक्तिर्भुजगाकाररूपिणी ॥४०४॥
तद्भ्रमावर्त्तवादोऽयं प्राणमित्यभिधीयते ।
तं त्यक्त्वा व्यक्तमधुरां कूजन्ती सहसोत्थिता ॥४०५॥
गच्छन्ती ब्रह्मरन्ध्रेण प्रविशन्ती पुनस्तनुम् ।
यातायातक्रमेणैव तत्र कुर्यान्मनोलयम् ॥४०६॥
तेन मन्त्रशिखा जाता सर्वमन्त्रप्रदायिनी ।
तमः पूर्णे गृहे यद्वन्न किञ्चित्प्रतिभासते ॥४०७॥
शिखाहीनास्तथा मन्त्रा न सिद्ध्यन्ति कदाचन ।
शिखोपदेशः सर्वत्र गोपितः परमेश्वरि ॥४०८॥
विना येन न सिद्धिः स्याद्वर्षकोटिशतैरपि ।
तस्माद्यत्नेन कर्तव्यं शिखाया भावनं मनोः ॥४०९॥

## अथ चैतन्यमाह

मन्त्ररूपी भवेद्देवो देवरूपी गुरुर्भवेत् ।
गुरुरूपी भवेदात्मा आत्मरूपी मनुर्भवेत् ॥४१०॥
इति ते कथितं देवि मन्त्रचैतन्यमुत्तमम् ।
यस्य विज्ञानमात्रेण अद्वैतं ज्ञानमुत्तमम् ॥४११॥

### श्रीदेव्युवाच

अथ वै कुल्लुकोत्पत्तिं कथयस्व ममाधुना ।
कुल्लुका कीदृशी नाथ सेतुर्वा देव कीदृशः ॥४१२॥
कीदृशो वा महासेतुर्निर्वाणं त्वथ कीदृशम् ।
अन्यद्वा कथितं यन्मे कीदृशं तद्वद प्रभो ॥४१३॥

**श्रीशिव उवाच**

रहस्यमपि ते देवि कथ्यते शृणु साम्प्रतम् ।
विना येन महेशानि निष्फलं तु जपादिकम् ॥४१४॥
कुल्लुका च तथा सेतुर्महासेतुस्तथैव च ।
निर्वाणं कुण्डली षष्ठी सर्वोत्पत्तिं शृणु प्रिये ॥४१५॥
विद्यानां कुलपूज्यत्वात्कुल्लुका तेन कीर्तिता ।
विद्यासम्बन्धिदोषाणां भक्षयित्री यतः शिवे ॥४१६॥
तेनेयं कुल्लुका नाम्ना सर्वतन्त्रेषु गोपिता ।
विद्याऽर्णवे महादेवि येन पारं प्रगच्छति ॥४१७॥
तेन सेतुर्महेशानि विद्यामार्गः प्रकीर्तितः ।
महाविद्याप्ति सन्दर्शी महासेतुर्महेश्वरि ॥४१८॥
महाविद्यार्णवस्याथ चैतन्यस्य प्रदर्शकः ।
महासेतुर्महादेवि महाविद्यास्वरूपधृक् ॥४१९॥
देवतायास्तु निर्वाणं चैतन्यं यच्च कीर्तितम् ।
निर्वाणं कथितं भद्रे विद्यावान् मातृकार्णकैः ॥४२०॥
निर्वाणं परमेशानि चतुश्चरणरूपधृक् ।
निर्वाणञ्च महेशानि परब्रह्मात्मता मता ॥४२१॥
चतुर्थं कथितं भद्रे विद्याचरणमीरितम् ।
पञ्चमी कुण्डली देवि यथावदवधारय ॥४२२॥
मूलाधारादाबिलान्तं विसतन्तुतनीयसीम् ।
सर्वदेवस्वरूपां च सर्ववर्णप्रदीपिनीम् ॥४२३॥
महाकुण्डलिनीं देवीममलीं कुण्डलीं पराम् ॥४२४॥

**श्रीदेव्युवाच**

क्रमेण दशविद्यायाः कुल्लुकाया विधिं वद ।
**काली –**
पञ्चाक्षरी कालिकायाः कुल्लुका परिकल्प्यते ॥४२५॥
काली-कूर्च-वधू-माया फडन्ता परमेश्वरि ।
अघोराक्षो ऋषिः प्रोक्तो विराट्च्छन्दः प्रकीर्तितम् ॥४२६॥
देवता कुल्लुका कालीबीजं मायाभिधं मतम् ।
कामः शक्तिस्तथा कूर्चं कीलकं परिकीर्तितम् ॥४२७॥

षड्दीर्घाद्येन कामेन षडङ्गन्यास ईरितः।
ध्यानपूजादिकं सर्वं कालिकावत् समापयेत् ॥४२८॥

**तारा** –

मायावधू तथा कूर्चं तारिणी कुल्लुका मता।
तारिणी कुल्लुकायाश्च विरूपाक्षो ऋषिः स्मृतः ॥४२९॥
ऊष्णिक्च्छन्दः समाख्यातं देवता नीलतारिणी।
कूर्चबीजं तथा माया शक्तिर्वधू च कीलकम् ॥४३०॥
मायया तु षडङ्गानि सर्वं नीलसरस्वती।

छिन्ना –

छिन्नायाश्च महेशानि कुल्लुकाऽष्टाक्षरी भवेत् ॥४३१॥
वज्रवैरोचनी ये च अन्ते वर्म प्रकीर्तयेत्।
अतिकालो ऋषिः प्रोक्तो गायत्रीच्छन्द ईरितम् ॥४३२॥
हं बीजं भू-तथा-शक्तिः कीलकं रोचिनी मता।
शिवः षड्दीर्घयुक्तेन षडङ्गन्यासमाचरेत् ॥४३३॥
ध्यानपूजादिकं सर्वं छिन्नावत् समुपाचरेत्।

**सुन्दरी** –

सुन्दर्याः कुल्लुका देवि सम्प्रोक्ता द्वादशाक्षरी ॥४३४॥
वाग्भवं कामराजं च लज्जा च त्रिपुरे पदम्।
भगवतीति पदं प्रोच्य तदन्ते ठद्वयं वदेत् ॥४३५॥
सुन्दरीकुल्लुकायास्तु ऋषिरानन्दभैरवः।
गायत्रीच्छन्द आदिष्टं वाग्भवं बीजमीरितम् ॥४३६॥
लज्जा शक्तिर्महेशानि कामबीजं च कीलकम्।
देवता त्रिपुरेशी च षडङ्गं त्रिद्वयेन च ॥४३७॥
ध्यानपूजादिकं सर्वं सुन्दरीवत् समाचरेत्।

**भैरवी** –

संपत्प्रदायाः प्रथमं बीजं श्रीभैरवी मतौ ॥४३८॥
विकरालो ऋषिः प्रोक्तः पङ्क्तिश्छन्दः प्रकीर्तितम्।
देवता भैरवीनाम्नी कुल्लुका परिकीर्तिता ॥४३९॥
हं-बीजं सं-महाशक्तिरमन्त्रकीलकं मतम्।
षड्दीर्घाद्येन बीजेन षडङ्गन्यासमाचरेत् ॥४४०॥
मातङ्गी बगला लक्ष्मी धूमोच्छिष्टा क्रमं शृणु।

तारं कूर्चं नारसिंहैः पञ्चानां कुल्लुका मता ॥४४१॥
ऋषिर्भैरवनामा च यावच्छन्दांसि पार्वति ।
देवता सैव बीजादि स्वस्वदेवक्रमेण च ॥४४२॥
ध्यानपूजादिकं सर्वं स्वदैवतवदाचरेत् ।
इत्यन्ता कथिता देवि संक्षेपात् कुल्लुका मया ॥४४३॥
अज्ञात्वा कुल्लुकामेनां जपते योऽधमः कुधीः ।
पञ्चत्वमाशु लभते सिद्धिहानिः प्रजायते ॥४४४॥
मन्त्राः पराङ्मुखा यान्ति मन्त्रहानिश्च जायते ।
तथा जपादिकं सर्वं निष्फलं नात्र संशयः ॥४४५॥
सर्वेषामेव मन्त्राणामधिकारो न तस्य हि ।
तस्मात् सर्वप्रयत्नेन जपेन्मूर्ध्नि च कुल्लुकाम् ॥४४६॥
अथातः सम्प्रवक्ष्यामि तच्छृणुष्व प्रियम्वदे ।
यस्याज्ञानेन विफलं जपहोमादिकं भवेत् ॥४४७॥
विप्राणां प्रणवः सेतुः क्षत्रियाणां तथैव च ।
वैश्यानान्तु फडर्णः स्यान्माया शूद्रस्य कथ्यते ॥४४८॥
अजप्त्वा हृदि देवेशि यो वै मन्त्रं समुच्चरेत् ।
सर्वेषामेव मन्त्राणामधिकारो न तस्य हि ॥४४९॥
महासेतुश्च देवेशि सुन्दर्या भुवनेश्वरि ।
कालिकायाः स्वबीजन्तु तारायाः कूर्चबीजकम् ॥४५०॥
अन्यासान्तु वधूबीजं महासेतुर्वरानने ।
आदौ जप्त्वा महासेतुं जपेन्मन्त्रमनन्यधीः ॥४५१॥
धनैर्धनेशतुल्योऽसौ वाण्या वागीश्वरोपमः ।
क्रुद्धौ कृतान्तसदृशो नारीणां मदनोपमः ॥४५२॥
जपकालो भवेत्तस्य सर्वकालो न संशयः ।
निःसेतुकं यथा तोयं क्षणान्नित्यं प्रसर्पति ॥४५३॥
मन्त्रास्तथैव निःसेतुः क्षणात् क्षरति यज्वनाम् ।
तस्मात् सर्वत्र मन्त्रेषु चतुर्वर्णा द्विजातयः ॥४५४॥
पार्श्वयोः सेतुमादाय जपकर्म समाचरेत् ।
अथवा
मन्त्राणां प्रणवः सेतुर्द्विजानां परिकीर्तितः ॥४५५॥
चतुर्दशस्वरोऽन्येषां चन्द्रानुस्वारसंयुतः ॥४५६॥

अथ वक्ष्यामि निर्वाणं शृणु सावहिताऽनघे।
प्रणवं पूर्वमुच्चार्य मातृकाद्यं समुच्चरेत् ॥४५७॥
अथ मूलं महेशानि ततो वाग्भवमुच्चरेत्।
मातृकां च समस्तां च पुनः प्रणवमुच्चरेत् ॥४५८॥
एवं पुटितमूलं तु प्रजपेन्मणिपूरके।
एवं निर्वाणमीशानि यो न जानाति पामरः ॥४५९॥
वर्षकोटिशतेनापि सिद्धिस्तस्य न जायते।
तस्मात्सर्वप्रयत्नेन यदुक्तं तन्महेश्वरि ॥४६०॥
तत्तदाचर्य विधिवज्जपेन्मन्त्रमनुत्तमम्।
ऋषिच्छन्दो देवता च बीजं शक्तिश्च कीलकम् ॥४६१॥
भावयेद्यत्नतो देहि ततः स्वेष्टादिकं जपेत्।
एवं यदि जपेन्मन्त्री मन्त्रराजमनुत्तमम् ॥४६२॥
षण्मासात् सिद्धिमाप्नोति नात्र कार्या विचारणा।
साक्षात्स एव जगतामधीशो नात्र संशयः ॥४६३॥
स धन्यः स च विज्ञानी स एव मन्त्रतत्त्ववित्।
स एव निर्वृतो भूमौ विहरेत्तं यदा गृहे ॥४६४॥
तस्य दर्शनमात्रेण पलायन्ते च वैरिणः ॥४६५॥
एवं कृत्वा प्रणवपूरितं यो जपेन्मन्त्रराजं
तन्निर्वाणं भुवनमहिले कुल्लुकां तां च जप्त्वा।
तेषां तद्वन्निखिलभुवनं सिद्धयोऽष्टौ च हस्ते
स्नेहादुक्तं रहसि वचनं जन्मजन्मान्तरेषु ॥४६६॥

## अथ जिह्वाशोधनमन्त्रः[५]

अपरैकं प्रवक्ष्यामि जिह्वाशोधनमुत्तमम्।
यन्न कृत्वा महादेवि यो जपेत् स तु पापकृत् ॥४६७॥
तस्मात्सर्वप्रयत्नेन जिह्वाशोधनमाचरेत्।

**देव्युवाच**

देव देव महादेव शूलपाणे पिनाकधृक् ॥४६८॥
पृथक् पृथङ् महादेव कथयस्व दयानिधे।
शोधनं सर्वविद्यानां मुखस्य वद मे प्रभो ॥४६९॥

५ अथ जिह्वाशोधन मन्त्र इत्यतः अथ शापोद्धार इत्यन्तो भागो मा. ख. न प्राप्यते।

**महादेव उवाच**

महात्रिपुरसुन्दर्या मुखस्य शोधनं शुभे ।
श्रीबीजं प्रणवं लक्ष्मीतारे श्रीः प्रणवं तथा ॥४७०॥
इयं षडक्षरी विद्या सुन्दर्या दशधा जपेत् ।
भैरव्याः शृणु चार्वङ्गि मुखशोधनमुत्तमम् ॥४७१॥
प्रणवञ्च ह्सौं बीजं प्रणवं सुरवन्दिते ।
इयं हि त्र्यक्षरी मन्त्रं दशधा प्रथमं जपेत् ॥४७२॥
शृणु सुन्दरि श्यामाया मुखशोधनमुत्तमम् ।
निजबीजत्रयं देवि प्रणवत्रितयं पुनः ॥४७३॥
कामत्रयं वह्निबिन्दुरतिबीजयुतं त्रिकम् ।
एषा नवाक्षरी विद्या जिह्वाशोधनकारिणी ॥४७४॥
तारायाः शृणु चार्वङ्गि अपूर्वं मुखशोधनम् ।
[६]जीवनी भुवना लज्जा भुवनेशी ततः प्रिये ॥४७५॥
त्र्यक्षरी या महाविद्या विज्ञेयाऽमृतवर्षिणी ।
दुर्गाया शृणु चार्वङ्गि मुखशोधनमुत्तमम् ॥४७६॥
द्वादशस्वरमुद्धृत्य बिन्दुयुक्तं त्रिकं तथा ।
अपरैकं प्रवक्ष्यामि बगलामुखशोधनम् ॥४७७॥
वाग्भवं भुवनेशानीं वाग्बीजं सुरवन्दिते ।
मातङ्ग्याः शोधनं देवि अङ्कुशं वाग्भवं तथा ॥४७८॥
बीजं चाङ्कुशमेतद्धि विज्ञेयं त्र्यक्षरीयकम् ।
लक्ष्म्याश्च शोधनं देवि श्रीबीजं कमलानने ॥४७९॥
प्रणवं दान्तमुद्धृत्य वामकर्णविभूषितम् ।
पुनः प्रणवमुद्धृत्य विद्येयं त्र्यक्षरी मता ॥४८०॥
बालादीनाञ्च अन्यासां प्रणवं मुखशोधनम् ।
स्त्रीशूद्राणां महेशानि ओङ्कारेण तु शोधनम् ॥४८१॥
मुखशोधनमात्रेण जिह्वाऽमृतमयी भवेत् ।
अन्यथा मन्त्रविड्युक्ता जिह्वा भवति सर्वदा ॥४८२॥
भक्षणे दूषिता जिह्वा मिथ्या वाक्येन दूषिता ।
कलहैर्दूषिता जिह्वा तत्कथं प्रजपेन्मनुम् ॥४८३॥

---

६ तारायाः शृणु इत्यतः सर्वं तस्य वृथा देवि मन्त्रसिद्धिर्न जायते इत्यन्तो भागो (श्लोकः ४७५ – ४८५) मा. ख न प्राप्यते ।

तच्छोधनमनाचार्य न जपेत् पामरः क्वचित्।
शैवशाक्तवैष्णवानां सर्वेषामप्यावश्यकम् ॥४८४॥
अन्यथा प्रजपेन्मन्त्रं यदि मोहेन भाविनि।
सर्वं तस्य वृथा देवि मन्त्रसिद्धिर्न जायते ॥४८५॥
अन्ते नरकमाप्नोति भवेत् सोऽपि न चान्यथा।
देवो यदि जपेन्मन्त्रमकृत्वा मुखशोधनम् ॥४८६॥
पतनं तस्य वै देवि किं पुनर्मर्त्यवासिनाम्।[७]
महाकुण्डलिनीं वक्ष्ये सर्वतन्त्रेषु गोपितम् ॥४८७॥
प्रणवं च त्रपा जूँ सः कालमूर्तिपदं ततः।
कालप्रबोधिनिपदं कालातीते पदं वदेत् ॥४८८॥
कालदायिनी शब्दान्ते कपालपात्रधारिणी।
अमरीति कुण्डलीति जूँ सः वँ च त्रयं तथा ॥४८९॥
सोऽहं स्वाहा महेशानि महाकुण्डलिनीमनुः।
चिन्तयन् कुण्डलिनीं देवी मूलचूलिनिवासिनीम् ॥४९०॥
तदधः कामराजञ्च सा प्रोक्ता स्पर्शसुन्दरी।
महाकामकलारूपां काकिनीं मूर्ध्निसंस्थिताम् ॥४९१॥[८]

## अथ शापोद्धारः

**देव्युवाच**

शापोद्धारोत्कीलने तु तत्र भेदः कियान् भवेत्।
तन्मे वद महादेव यद्यहं तव वल्लभा ॥४९२॥

**श्रीमहादेव उवाच**

उत्कीलनं बन्धनं स्याच्छापस्तेजोनिरोधकः।
कीलने तु महादेवि न गतागतमीरितम् ॥४९३॥
गतागतं महादेवि शापोद्धारं तु वर्तते।
भक्तानुग्रहकाम्यत्वाद्देवी साधकसन्निधौ ॥४९४॥
गत्वा दत्तो वरो देवि समये जात एव हि।
मन्त्रचैतन्यरोधत्वान्मृषा जातो महेश्वरि ॥४९५॥

---

७ ४८७ (क) श्लोको मा. ख न प्राप्यते।

८ महाकुण्डलिनीमित्यतो मूर्ध्निसंस्थितामित्यन्तो भागो मा. क न प्राप्यते।

अयं शापो निगदितस्तथोत्कीलनमुच्यते ।
भक्तानुग्रहकाम्यत्वाद्दातव्यो हि वरः शिवे ॥४९६॥
बन्धनस्य यदा मुक्तिस्तदैव तु गतागतम् ।
शक्तिस्तु वर्तते देव्या वरदाने महेश्वरि ॥४९७॥
यथा दूरतरे वत्से धेनूप्रीतिस्तु वर्तते ।
बन्धनस्य यदा मुक्तिस्तनपानं तदैव हि ॥४९८॥
काली तारा तथा छिन्ना तेजःपुञ्जनिभा मता ।
त्रयाणां तेजःसंरोधो को हि कर्तुं क्षयो भवेत् ॥४९९॥
तस्माच्छायादिकं नास्ति कालिकाया महेश्वरि ।
कालिका तारिणी छिन्ना उत्कीलनविमोचिनी ॥५००॥
दामसन्त्रोटनं कृत्वा धेनूर्याति यथा सुतम् ।
भक्तानुग्रहकाम्यत्वात्तथेयं कालिका परा ॥५०१॥
तारा छिन्ना स्तम्भनेशी सर्वबन्धविमोचिनी ।
शापे तु प्रस्तवो नास्ति कीलनं प्रस्तवोऽस्ति हि ॥५०२॥
कालिकाया महादेवि सर्वदा प्रस्तवोऽस्ति हि ।
शापोद्धारनिरुक्तिस्तु शृणु यत्नेन साम्प्रतम् ॥५०३॥
वत्सो निकटवर्ती स्याद्धेनूर्निकटवर्तिनी ।
दुग्धाभावान्महादेवि नैकट्ये किं फलं भवेत् ॥५०४॥
कालान्तरे समायाते पुनर्दुग्धं यथा भवेत् ।
शापनिर्मोचनादेव पुनस्तेजः प्रवर्तते ॥५०५॥
वत्सबन्धनमुक्तित्वात्फलसिद्धिर्हि वर्तते ।
उत्कीलने बन्धनं हि फलसिद्धिः सदा प्रिये ॥५०६॥
तस्मादुत्कीलनं भिन्नं शापो भिन्नः प्रकीर्तितः ।
अक्षरव्यत्ययो देवि उत्कीलनविधौ स्मृतः ॥५०७॥
मन्त्रचैतन्यरूपत्वाच्चैतन्यव्यत्ययो न च ।
चैतन्यव्यत्ययान्मन्त्री पापभागी नरो भवेत् ॥५०८॥
तत्पापस्य निवृत्त्यर्थं प्राणायामः प्रकीर्तितः ।
देहवन्मन्त्ररूपत्वं ह्यक्षरे वर्तते शिवे ॥५०९॥
अक्षरव्यत्ययाद्देवि हीनाङ्गत्वं प्रजायते ।
शापदाने महादेवि सर्वाङ्गं सिद्धमेव हि ॥५१०॥
वत्सबन्धनकं कर्म पुनः सिद्धं यथा भवेत् ।

तथोत्कीलनकं कर्म पुनः सिद्धं महेश्वरि ॥५११॥
शापदाने महादेवि चैतन्याभाव एव हि ।
विद्यमाना यथा गावो दुग्धं नास्ति महेश्वरि ॥५१२॥
शापदाने महेशानि चैतन्यं नास्ति शाम्भवि ।
उत्कीलने महादेवि चैतन्यं सिद्धमेव हि ॥५१३॥
एकदा समये कोऽपि साधकः स्थिरमानसः ।
संस्मार दक्षिणां देवीं सदा भक्तैकमानसाम् ॥५१४॥
द्यूतक्रीडां मया सार्धं प्रवृत्तां च विहायसा ।
गता सा साधको यत्र दत्त्वा तस्मै पदं ततः ॥५१५॥
निवृत्ता सा यया शप्ता क्रुद्धेन मनसा मुने ।
यतो मां त्वां विहायैव गता साधकसन्निधिम् ॥५१६॥
अतस्त्वं शीघ्रफलदा न भविष्यसि दक्षिणे ।
ततो दीनमना देवी सन्तुतोष स्तवैर्नवैः ॥५१७॥
ततस्तुष्टोऽहमनया पुनरेनां समूचिवान् ।
महाविद्यासम्पुटितां जप्त्वा यस्त्वां सुमध्यमे ॥५१८॥
ततस्त्वं शापनिर्मुक्ता भविष्यसि फलप्रदा ।
ततः प्रभृति विद्येयं द्रुतं च फलदायिनी ॥५१९॥
साधय त्वं महाभाग जननीवधमुक्तये ।
इत्युक्त्वाऽन्तर्दधे शम्भुर्भार्गवस्य हि पश्यतः ॥५२०॥
भार्गवो हि मुनिश्रेष्ठस्तपस्येव मनो दधे ॥५२१॥
शापोद्धारं प्रवक्ष्यामि वशिष्ठमुनिना कृतम् ।
चतुर्विंशतिलक्षाणि जप्त्वा कोपेन शप्तवान् ॥५२२॥
अद्य प्रभृति देवेशि कालिके कालरूपिणि ।
तव मन्त्रेषु संसिद्धिः कष्टेनैव भविष्यति ॥५२३॥
इति श्रुत्वा महादेवी प्रादुर्भूता प्रसाद्य तम् ।
उवाच पुत्र किमिदं शापदानं वृथा कृतम् ॥५२४॥
एवं फलं यथा न स्यात्तथा कुरु मुनीश्वर ।
ज्ञानं दत्तं दुराराध्यं दुर्लभं यत्सुरैरपि ॥५२५॥
ततः प्रीत्या वरं लब्ध्वा ज्ञानविज्ञानसंयुतम् ।
उवाच प्रीतमनसा शापान्तं मन्त्रसङ्कटे ॥५२६॥
मातः क्रोधेन कथितं तत्रोपायमहं वदे ।

प्रणवं पूर्वमुद्धृत्य घोररूपे च दक्षिणे ॥५२७॥
सिद्धिं कुरुद्वयं प्रोच्य कालिकेति पदं ततः।
मयाभीष्टफलं शीघ्रं देहि द्रविणसम्पदम् ॥५२८॥
जपादौ मन्त्रमुच्चार्य जपान्ते च पुनः पठेत्।
भविष्यति ततः सिद्धिरचिरात् परमेश्वरि ॥५२९॥

## अथ मन्त्रावयवज्ञानमाह

श्रवणाऽऽस्यहृदयनेत्रज्ञानान्मोक्षो मनसः सद्यः।
सिद्धं सर्वविधानं स्याच्छिव एव साधको वन्द्यः ॥५३०॥
श्रोत्रादीनां ज्ञानाभावे मन्त्रस्य ग्रहणमात्रात्।
दारिद्र्यं च विपत्तिर्नरकप्राप्तिर्यशो वंशः ॥५३१॥
दीनोऽतिदुःखभागी पराजितः शत्रुपीडितः शोकी।
कुर्यादवस्थितचित्तो मन्त्री श्रोत्रादिविज्ञानम् ॥५३२॥
स्वेनाऽतिभक्त्या श्रोत्रादीनां गुरोर्ज्ञानं भवति तदा।
कृतकृत्यो लोकत्रयपूजितोऽनघो मन्त्री ॥५३३॥
लयश्रोत्रासृगास्यद्धृच्छून्याः सदृशाः स्वराः।
गर्जिनी धूम्रभैरव्या अभावे च ह्सौ स्मृतौ ॥५३४॥
मूलार्णं मुखमादिष्टं हृदयं स्वरशक्तयः।
सौर्ये तथा गाणपत्ये दौर्गे शैवेऽथ वैष्णवे ॥५३५॥
भौतिके च मनावास्यहृन्नेत्रं योज्यते यथा।
एभिरशेषमन्त्राणां हृन्नेत्रवदनानि च ॥५३६॥
असवोऽस्य परिज्ञेया सर्वतन्त्रेषु गोपिताः।
बीजे रक्तमुखाः सर्वे मूलार्णे हृदयं स्वराः॥ ५३७ ॥
दक्षवाम हसौ चण्डि विचारे मध्यमातरः।
बीजाभावे मनो विद्युन्नेत्रमास्यं मनोहरम्॥ ५३८ ॥
मूलार्णं हृदयं चण्डी पाशौ च स्वरशक्तयः।
चिन्तामणि नृसिंहाख्यां नेत्रास्यप्राणहृच्छ्रुतिः॥ ५३९ ॥
यत्र बीजाक्षरं मन्त्रं तत्र सर्वं स एव हि।
प्रधानपूर्वापरगाविकटा यत्र दृश्यते॥ ५४० ॥
तत्र नेत्रे विजानीयान्मुखं च शतजोक्षितम्।
रक्तवर्णमनोमूले वर्णमास्यं प्रकीर्तितम्॥ ५४१ ॥

## अथ मन्त्रार्थमाह

वाच्यवाचकभावेन सर्वे मन्त्राः प्रकीर्तिताः ।
यद्देवताया यो मन्त्रः सा वाच्या स च वाचकः ॥ ५४२ ॥
जपादौ पूजयेन्मालां तोयैरभ्यक्ष्य यत्नतः ।
विधाय मण्डलस्यान्ते सव्यहस्तगतां च वा ॥ ५४३ ॥
दुष्टमन्त्रेण मालायाः प्रोक्षणं परिकीर्तितम् ।
ॐ माले महामाये सर्वशक्तिस्वरूपिणी ॥ ५४४ ॥
चतुर्वर्गस्त्वयि न्यस्तस्तस्मान्मे सिद्धिदा भव ।
वाग्भवं च तथा लक्ष्मीमक्षादिमालिकान्तथा ॥ ५४५ ॥
ङेन्तां हृदयवर्णान्तां मन्त्रेणानेन पूजयेत् ।
पूजयित्वा ततो मालां गृह्णीयाद्दक्षिणे करे ॥ ५४६ ॥
जपं समाचरेत्पश्चात्पूर्ववद्ध्यानमास्थितः ।
चिन्तयित्वा गुरुं मूर्ध्नि यथा वर्णादिकं भवेत् ॥ ५४७ ॥
मन्त्रं ध्यायेत्कण्ठमध्ये पीतवर्णं हिरण्मयम् ।
महामायां च हृदये स्वात्मानं गुरूपादयोः ॥ ५४८ ॥
आज्ञाचक्रे ततः पश्चाद्गुरोर्मन्त्रस्य चात्मनः ।
देव्याश्चाप्येकतां नीत्वा सुषुम्णावर्त्मना ततः ॥ ५४९ ॥
तत्त्वस्वरूपमेकं तत् षट्चक्रं प्रतिलङ्घयेत् ।
षट्चक्रेऽपि महामायां क्षणं ध्यात्वा प्रयत्नतः ॥ ५५० ॥
लङ्घयेन्मूलमन्त्रेण चादिषोडशचक्रकम् ।
आदिषोडशचक्रे तां साधकानन्ददायिनीम् ॥ ५५१ ॥
चिन्तयेत् साधको देवीं जपकर्म समाचरेत् ।
भ्रुवोरूपरि नाडीनां तिसृणां प्रान्त उच्यते ॥ ५५२ ॥
तत्प्रान्तं त्रिपथस्थानं षट्कोणं चतुरङ्गुलम् ।
तत्त्वचक्रमिति प्रोक्तं शुक्लं कण्ठस्य मध्यगम् ॥ ५५३ ॥
त्रयाणामपि नाडीनां हृदये चैकता भवेत् ।
तत्स्थानं षोडशारं स्यात् सप्ताङ्गुलप्रमाणतः ॥ ५५४ ॥
तत्पीठयुक्तं योगानामादिषोडशचक्रगम् ।
एवं विचिन्त्य मध्याया मध्यभागे तु मालिकाम् ॥ ५५५ ॥
मालां स्वहृदयासन्नां धृत्वा दक्षिणपाणिना ।

जपः स्यादक्षरावृत्तिः स त्रिधा परिकीर्तितः ॥ ५५६ ॥
हीनो वाग्जपः कायिको मध्यः श्रेष्ठस्तु मानसः ।
य उच्चनीचैः स्वरितैः शब्दैः स्पष्टपदाक्षरैः ॥ ५५७ ॥
मन्त्र उच्चार्यते वाचा हीनोऽसौ वाचिकः स्मृतः ।
शनैरुच्चारयेन्मन्त्रमीषदोष्ठौ प्रचालयेत् ॥ ५५८ ॥
किञ्चिच्छ्रवणयोग्यश्च कायिकः स तु मध्यमः ।
बुद्ध्या पदाक्षरश्रेणी यथास्थानेषु चोच्चरेत् ॥ ५५९ ॥
अर्थस्मरणपूर्वं तु स श्रेष्ठो मानसो जपः ।
उच्चैर्जपाद्विशिष्टस्यादुपांशुर्दशभिर्गुणैः ॥ ५६० ॥
जिह्वाजपः शतगुणः सहस्रो मानसो जपः ।
षट्कर्मकृद्वाचिकः स्यात् कायिकः सर्वसिद्धिकृत् ॥ ५६१ ॥
मानसः साधयेन्मोक्षं ततोऽन्यः क्षुद्रकर्मकृत् ।
ऋष्यादिकं षडङ्गं च प्राणायामत्रयं पुनः ॥ ५६२ ॥
कृत्वा मन्त्रं जपेत् पश्चात् षडङ्गादिकमाचरेत् ।
देवता गुरुमन्त्राणामैक्यं सम्भावयन् धिया ॥ ५६३ ॥
शवासनां जपेद्विद्यां सन्तुष्टः स्थिरमासनः ।
[९]अङ्गुल्यग्रेणाक्षमालां चालयेज्जपकर्मणि ॥ ५६४ ॥
मध्यमा मध्ये संस्थाप्य न तर्जन्या कदाचन ।
तर्जनी न स्पृशेत् सूत्रं कम्पयेन्नैव धूतयेत् ॥ ५६५ ॥
न स्पृशेद्वामहस्तेन करसंस्थां न कारयेत् ।
पूर्वं मन्त्रं जपन्यस्तु संस्पृशेदपरं मणिम् ॥ ५६६ ॥
अङ्गुष्ठेन भवेत्तस्य निष्फलः स जपः सदा ।
जपकाले सदा विद्वान् मेरुञ्चैव न लङ्घयेत् ॥ ५६७ ॥
परिवर्तनकाले तु संघट्टं नैव कारयेत् ।
कलिः खटखटाशब्दे दोलने च चलन्मृतिः ॥ ५६८ ॥
चलिते चैव विद्वेषः स्फुटिते व्याधिसम्भवः ।
हस्तच्युते महाविघ्नः सूत्रच्छेदे विनाशनम् ॥ ५६९ ॥
प्रमादात् पतिताद्धस्ताच्छतमष्टोत्तरं जपेत् ।
एकचित्तः प्रसन्नात्मा अक्षसूत्रकरः शुचिः ॥ ५७० ॥
भग्नग्रीवोन्नतः शान्तः कण्डून्मीलनवर्जितः ।

९ अङ्गुल्यग्रेणाक्षमालामित्यतो धूतयेत् इत्यन्तो भागो मा. ख न प्राप्यते ।

सविसर्गं समात्रञ्च सबिन्दुं साक्षरं स्फुटम् ॥ ५७१ ॥
न द्रुतं नापि विश्रान्तं क्रमान्मन्त्रं जपेत् सुधीः ।
जपेदेकमना प्रातः कालान्मध्यं दिनावधिः ॥ ५७२ ॥
यत्संख्यया समारब्धं तत्कर्तव्यमहर्निशम् ।
यदि न्यूनाधिकं कुर्याद् व्रतभ्रष्टोऽभिजायते ॥ ५७३ ॥
प्रातर्मध्यदिनं यावज्जपकालः प्रकीर्तितः ।
न न्यूनं नातिरिक्तं वा जपं कुर्याद्दिने दिने ॥ ५७४ ॥
नैरन्तर्यविधिः कार्यो न दिनान्यतिलङ्घयेत् ।
दिवसातिक्रमे पुंसां सिद्धिरोधः प्रजायते ॥ ५७५ ॥
मन्त्रं जप्त्वान्तपानीयस्नानाचमनभोजनम् ।
ध्यात्वेष्टदेवतारूपमात्मानं प्रजपेन्मनुम् ॥ ५७६ ॥

## अथ जपसंख्याकृतौ द्रव्यमाह

नाक्षतैर्हस्तपर्वैर्वा न धान्यैर्न च पुष्पकैः ।
न चन्दनैर्मृत्तिकया जपसंख्यां न कारयेत् ॥ ५७७ ॥
लाक्षा कुशीतसिन्दूरं गोमयं च करीषकम् ।
विलोड्य गुटिकां कृत्वा जपसंख्यां तु कारयेत् ॥ ५७८ ॥
संख्यापूर्त्तौ पुनः कुर्याद् ऋष्यादिप्राणसंयमान् ।
जपान्तेऽष्टोत्तरशतं जप्त्वा शिरसि धारयेत् ॥ ५७९ ॥
ग्रहणे स्थापने पूजायां प्रोक्तो मालिका मनुः ।
पञ्चाक्षरस्ततो देवं स्वेष्टं सम्प्रार्थयेदिति ॥ ५८० ॥
मूलमन्त्रं समुच्चार्य देवहस्ते निवेदयेत् ।
तं जपं चार्घ्यतोयेन मध्याह्नसमये त्विदम् ॥ ५८१ ॥
तदूर्ध्वं पूर्ववत् स्नात्वा विशेषेण विधानतः ।
न्यासावसानमखिलं कर्म कुर्यात्पुरोदितम् ॥ ५८२ ॥
पूजाग्निहोमपर्यन्तं ततश्च जपमाचरेत् ।
यावद्दिनावसानन्तु भूयः स्नात्वा ततो द्विजः ॥ ५८३ ॥
उपास्य पूर्ववत् सन्ध्यां देवं सम्पूजयेत् पुनः ।
विसृज्य भोजनं कुर्यात् सततं वारकोदये ॥ ५८४ ॥
सकन्दफलमूलाशी सद्भिक्षाशी हविष्यभुक् ।
पयोव्रती भवेच्छ्रेष्ठस्तेषां लक्षणमुच्यते ॥ ५८५ ॥

आरुष्फलं रत्नमूलं[10] पिण्डारुककसेरुकम् ।
रक्तहस्ती शङ्खमधु शालुकं श्रेष्ठमुच्यते ॥ ५८६ ॥
द्राक्षाऽऽम्रजम्बू पनसं कपित्थं
खर्जूरिकादाडिमनारिकेलम् ।
परुषकं क्षीरिणिचारतिन्दु
कर्कन्धुधात्र्यारु भवेत् पवित्रम् ॥ ५८७ ॥
शतमूलं त्वचामूलं विमूलं पञ्चमी जटी ।
अकवाकुः कुवाकुश्च मूलं पावित्र्यकारकम् ॥ ५८८ ॥
वैदिकाचारयुक्तानां शुचीनां श्रीमतां सताम् ।
सत्कुलस्थानजातानां भिक्षाशी चाग्रजन्मनः ॥ ५८९ ॥
चरुमूलफलक्षीरदधिभिक्षान्नसक्तवः ।
एतत्सप्तविधं भिक्षालब्धं भक्ष्यं व्रतस्थितैः ॥ ५९० ॥
हविष्याणि च पञ्चाशच्छ्वेताः स्विन्ना हिमोद्भवाः ।
तण्डुलाः षष्टिनीवारशालिजास्त्रिविधाः मताः ॥ ५९१ ॥
मुद्गा यवास्तिलाः कृष्णाः [11]कलायास्त्रिपुरा अपि ।
कङ्गवश्च मकुण्ठाश्च पावमानः कनंशिका [12] ॥ ५९२ ॥
कालकंशो ववास्तूकं करम्बुर्हिलमोचिका ।
चक्रवर्ती चक्रमर्द[13] पलङ्कः शतपुष्पिका ॥ ५९३ ॥
मूलं हेमन्तजं श्वेतं राजकं[14] माषजं तिलम् ।
मृणालं मुसली घोण्टा शतमूली विदारिका ॥ ५९४ ॥
सर्वे पिण्डालवः पद्मो वाराही च कसेरुकम् ।
आयुष्करः कञ्चुकश्च[15] केयूरो माणवारुकौ ॥ ५९५ ॥
सामुद्रं सैन्धवं चैव दध्याज्यं गोजमाहिषम् ।
दुग्धं ससारं मधुरं फलं प्रत्यल्पबीजकम् [16] ॥ ५९६ ॥
पनसाम्रफलं चिञ्चा विफाणित गुडैक्षजम् ।
हविष्यं भेषजं सर्वं हीत्वा मीनान् सुरां पलम् ॥ ५९७ ॥

१० पद्ममूलं पाठो मेरौ ।
११ कुल्माषा इति पाठो मेरौ ।
१२ करंशिका पाठो मा. क । यावन्तालकणंशिका पाठो मेरौ ।
१३ चक्रवती चक्रमर्द्द पाठो मेरौ ।
१४ राजिकां पाठो मेरौ ।
१५ कञ्च्युकश्च श्रृङ्गाटक कसेरूकौ पाठो मेरौ ।
१६ पयोन्यत्वल्पबीजकम् पाठो मेरौ ।

श्रेष्ठं गवां दुग्धमुक्तं मध्यमं सुरभीभवम्।
अधमं माहिषं चान्यद् व्रतस्थानां निषिध्यते॥ ५९८॥
त्यजन्निषिद्धमाहारं मध्यमं शास्त्रतश्च यत्।
निषिद्धं देशकुलतः प्रशस्तं सोऽधमः स्मृतः॥ ५९९॥
निषिद्धान्यथ कथ्यन्ते पञ्चाशत्प्रमितानि[17] तु।
श्वेतमुद्गा मसूराश्च कोद्रवाश्चणकास्त्रिधा॥ ६००॥
माषाश्च भूमिलवणं पत्रं जातं रसान्तरम्।
क्षौद्रं क्षारं पलाण्डुश्च[18] गृञ्जनं कांस्यभोजनम्॥ ६०१॥
मांसञ्च स्विन्नलवणं माढकीं चारमालकीम्[19]।
अन्नं पर्युषितं तैलं ताम्बूलं क्षुद्रधान्यकम्॥ ६०२॥
पेशलञ्चैव वृन्ताकं मूलकञ्च कलिञ्जकम्।
दग्धान्नं च द्विपक्वं च गुडान्नं च विरुढकम्॥ ६०३॥
कपोदिका च लसुनं पलाण्डुः फाणितं गुडम्।
तुण्डी मलाम्बुं कूष्माण्डं गोजिह्वा च गडांविदम्॥ ६०४॥
छत्राकं क्षुद्रखर्जूरी मधुकं तालजं फलम्।
भूदं कुक्कुटपादाँश्च वंशांकुरं कचिर्मिदे॥ ६०५॥
राजकोशातमाम्रातं वन्ध्या कर्कोटकीमिति॥ ६०६॥
देवा विशेषं शृण्वन्तु वर्णाश्रमविभेदतः।
तिलतैलं मन्त्रपूतं पावनं देवदुर्लभम्॥ ६०७॥
मर्दयित्वा गृहस्थेन स्नानं कार्यं हि सर्वदा।
द्विजैस्तु भोजनं कार्यमुपस्तिर्याभिधार्य च॥ ६०८॥
याजयेद्वैदिकैर्मन्त्रैः प्रोक्षणादिककर्मणा।
पुनर्मूलेन सम्मन्त्र्य भुञ्जीयाद्धृदयाणुना॥ ६०९॥
मूलाभिमन्त्रितं तोयं भोजनं तृषि सम्पिबेत्।
पलाशपत्रे भुञ्जीयान्मध्यपत्रविवर्जिते॥ ६१०॥
तदभावे कदल्यां वा मधूकं सर्जकेऽपि च।
भुक्त्वा शयीत शयने सुशुद्धे वसुधातले॥ ६११॥
अहतास्तरणास्तीर्णे सन्दर्भेणायने शुचौ।
मन्त्रिते मूलमन्त्रेण जितक्रोधो जितेन्द्रियः॥ ६१२॥

१७ सप्तविंशमितानि पाठो मेरौ।

१८ चपलां पाठो मा. क, ख।

१९ रामठं चैव नालकम् पाठो मेरौ।

अभीष्टदेवतां ध्यायन् प्राक्शिरष्को निशि स्वपेत्।
अर्धरात्रे समुत्थाय पादशौचं विधाय च ॥ ६१३ ॥
आचम्य देवं संस्मृत्य शीघ्रं सम्पूज्य पूर्ववत्।
जपं कुर्याद्यथाशक्ति तर्पयेच्च तथेश्वरे ॥ ६१४ ॥
स्वप्ने ततस्तु यद्दृष्टं स्वप्नं तं गुरवे वदेत्।
जपश्चायं वनस्थानां प्रोक्तोऽयं ब्रह्मचारिणाम्[२०] ॥ ६१५ ॥
देशाद्युपद्रवत्रासात्त्वरया चेत् सनातनम्।
कर्तव्यं चेदयं कालः प्रोक्तोऽत्यावश्यकेऽपि च ॥ ६१६ ॥
आमध्याह्नं जपः श्रेष्ठो मध्यमः प्रहरत्रयम्।
सार्धयामत्रयं हीनोऽवश्यके प्रोक्तलक्षणः ॥ ६१७ ॥
पञ्चधा तु विधिः प्रोक्तो जपसम्पूर्णकारकः।
आद्यः कल्पः प्रतिदिनमामध्याह्नं जपं चरेत् ॥ ६१८ ॥
तद्दशांशेन कल्पोक्तद्रव्यैर्होमं प्रकल्पयेत्।
तर्पणं मार्जनं कृत्वा तथा ब्राह्मणभोजनम् ॥ ६१९ ॥
तत्तद्दशांशतश्चायं प्रथमः कल्प ईरितः।
अयं द्वितीयः कल्पस्तु लक्षमेकं जपं चरेत् ॥ ६२० ॥
होमादिकं तस्य कृत्वाऽग्रिमं लक्षं समारभेत्।
अयं तृतीयः कल्पस्तु सम्पूर्णं जपमाचरेत् ॥ ६२१ ॥
पूर्णे होमे तर्पणादि पूर्वमेवाऽऽचरेदिति।
चतुर्थस्तु तथा कल्पे दरिद्रैर्द्विगुणो जपः ॥ ६२२ ॥
होमाद्यभावे कर्तव्यस्त्र्यादिनिघ्नो तृपादिकैः।
पञ्चमस्तु तथा कल्पो यस्य देवस्य यत्प्रियम् ॥ ६२३ ॥
तदेव द्विगुणं कार्यं शीघ्रं दैवततुष्टये।
जपप्रियाः सर्वदेव्यो वामभागे बलिप्रियाः ॥ ६२४ ॥
दानप्रियास्तु सिद्धान्तो कौलिके तु रतिप्रियाः।
होमप्रियो महादेवो भास्करस्तर्पणप्रियः ॥ ६२५ ॥
मार्जनं तु गणेशस्य विष्णोर्ब्राह्मणभोजनम्।
संख्यापूर्तौ निजैर्द्रव्यैर्जपसंख्या दशांशतः ॥ ६२६ ॥
यथोक्तकुण्डे जुहुयाद्यथावत्सुसमाहितः।
अथवा प्रत्यहं जप्त्वा जुहुयात्तद्दशांशतः ॥ ६२७ ॥

---

२० ब्रह्मवादिनामिति पाठो मेरौ।

स्त्रीशूद्राभ्यां न होतव्यं मन्त्रोच्चारणपूर्वकम्।
यदि कामी भवेच्चैव शूद्रोऽपि होमकर्मणि॥ ६२८॥
वह्निजायां परित्यज्य स्वाहास्थाने नमो वदेत्।
ततो होमः दशांशेन जले सम्पूज्य देवताम्॥ ६२९॥
तर्पयामीति मन्त्रान्ते प्रोक्तादभिर्मूर्ध्नि तर्पयेत्।
तर्पणस्य दशांशेन नमोऽन्तं मन्त्रमुच्चरेत्॥ ६३०॥
अभिषिञ्चेत् स्वमूर्धानं जलैः कुम्भाख्यमुद्रया।
विशेषस्तु –
तर्पणान्ते महामन्त्री अभिषेकन्तु कारयेत्॥ ६३१॥
गोमयेनोपलिप्तायां भूमौ पद्मदलं लिखेत्।
कलशं स्थापयेत्तत्र कलाञ्चैव प्रपूजयेत्॥ ६३२॥
गन्धदुर्वाङ्कुरैर्वाऽपि अशोकैश्चूतपल्लवैः।
सम्पूज्य गन्धपुष्पाद्यैरुपचारैः प्रपूजयेत्॥ ६३३॥
मातृकामन्त्रमुच्चार्य प्रत्येकं मन्त्रमुच्चरेत्।
अभिषिञ्चामीति पदं शिरसि चाभिषिञ्चयेत्॥ ६३४॥
मार्जनस्य दशांशेन कर्तव्यं विप्रभोजनम्।
होमकर्माद्यशक्तानां विप्राणां द्विगुणो जपः॥ ६३५॥
इतरेषां तु वर्णानां त्रिचतुःपञ्चसंख्यया।
होमद्विगुणजापेन सम्पूर्णं तर्पणं भवेत्॥ ६३६॥
अकृतं मार्जनं प्रोक्तस्तर्पणाद् द्विगुणो जपः।
प्रत्याम्नायो ब्रह्मभोज्ये न कुत्रापि मया श्रुतः॥ ६३७॥
सर्वथा भोजयेद्विप्रान् कृतसाङ्गत्वसिद्धये।
विप्राराधनमात्रेण व्यङ्गं साङ्गं प्रजायते॥ ६३८॥
यानि यान्यपि कर्माणि हीयन्ते द्विजभोजनैः।
निरर्थकानि तानि स्युर्बीजान्युखरगानि च॥ ६३९॥
पुरश्चर्यां विधायेत्थं सम्यक्साधकसत्तमः।
तदन्ते महतीं पूजां कुर्याद् ब्राह्मणभोजनम्॥ ६४०॥
बह्वीभिर्वस्त्रभूषाभिः पूजयेद् गुरुमात्मनः।
दीनानाथाँश्च सन्तोष्य मन्त्रः सिद्ध्यन्ति मन्त्रिणाम्॥ ६४१॥
गुरुं सन्तोषयेत् पश्चाद् गोहिरण्याम्बरादिभिः।
गुरौ तुष्टे हि सन्तुष्टो मन्त्रः सिद्ध्यति मन्त्रिणः॥ ६४२॥

## अथ वीरपुरश्चरणमाह

गते तु प्रथमे यामे तृतीयप्रहरावधिः।
प्रजप्तव्यं निशायाञ्च रात्रिकोषे जपेन्न च ॥ ६४३ ॥
हविष्यं भक्षयेन्नित्यमेकभक्तं सुसंयतः।
लघ्वाहारं प्रकुर्वीत युवतिपूजने रतः ॥ ६४४ ॥
पुरश्चरणकाले च परशक्तिं प्रपूजयेत्।
क्षेत्रमादौ तु संशोध्य समसूत्रं मनोहरम् ॥ ६४५ ॥
वेदिकां कारयेत्तत्र मध्ये मुण्डं विनिक्षिपेत्।
अलिनाऽऽलेपनं कुर्यान्मध्ये चाष्टदलं लिखेत् ॥ ६४६ ॥
पूर्वादिक्रमतो ज्ञेयं स्वरयुग्मं लिखेत् क्रमात्।
वर्णाष्टकं लिखेत्तत्र मध्ये प्रासादमालिखेत् ॥ ६४७ ॥
गगनं बिन्दुसंयुक्तं लाङ्गूलीनां तथैव च।
सविसर्गं वरारोहे केशरेषु लिखेत्ततः ॥ ६४८ ॥
तत्राऽऽधारादि सम्पूज्य ह्यासनं पूजयेद् बुधः।
उपविश्यासने वीरो यत्र कुत्राप्यचूडके ॥ ६४९ ॥
पार्ष्णिघातत्रयं कुर्याच्छोटिकात्रितयं ततः।
दिग्बन्धनास्त्रमन्त्रेण पूर्वादिक्रमतो बुधः ॥ ६५० ॥
वकेशान्तेऽपि नाकेशं नादबिन्दुविभूषितम्।
पशुपदं समुच्चार्य रमान्तेऽस्त्रमनुत्तमम् ॥ ६५१ ॥
पाशुपताख्यविद्येयं सर्वविघ्नविनाशिनी।
गोमयेन विलिप्तायां भूमौ मण्डलमालिखेत् ॥ ६५२ ॥
अलिनालेपनं कुर्याद्यक्षकर्दमकेन वा।
सूत्रेण सूचितं पद्मं समसूत्रं मनोहरम् ॥ ६५३ ॥
रक्तं श्वेतं हरिद्वर्णं कृष्णपत्रं सुकेशरम्।
चतुरस्रं सुशोभाढ्यं तन्मध्ये योनियुग्मकम् ॥ ६५४ ॥
त्रिकोणं चैव तन्मध्ये शून्ये शून्यं विचिन्तयेत्।
योजयेद्दीक्षितां नारीं तत्र सम्पूजयेन्मनुम् ॥ ६५५ ॥
तत्रैव देवि संस्थाप्य ईषद्हासां सुलोचनाम्।
षोडशाब्देन युवतिमप्रसूतां तपस्विनीम् ॥ ६५६ ॥
स्वाधीनां स्वच्छवस्त्राञ्च भीतिहोताट्टहासिनीम्।
तीव्रबुद्धिं दृढाचारां मुक्तकेशीं दिगम्बराम् ॥ ६५७ ॥

योगमुद्राधराम्बाऽपि योगाचारपरायणाम् ।
ईदृशीं मन्त्रयुक्तां वा योगकाले प्रपूजयेत् ॥ ६५८ ॥
मातङ्गीं तन्तुकारीं च भवाब्धिभीतिनाशिनीम् ।
खड्गाकारीं चर्मकारीं शिल्पिनीं नापिताङ्गनाम् ॥ ६५९ ॥
हट्टनारीं विशेषान्तु सुपुष्पाकीर्णकोमलाम् ।
सामान्यार्घ्यं विशेषार्घ्यं स्वपात्रं शक्तिपात्रकम् ॥ ६६० ॥
तन्मध्ये निक्षिपेद् द्रव्यं सामरस्यामृतोद्भवम् ।
तत्त्वपञ्चकमन्त्रेण एकैकं शोधयेद् बुधः ॥ ६६१ ॥
वह्निसूर्यकलाचन्द्रकलान्ते हृदयं मनुः ।
त्रिकोणं विलिखेन्मध्ये त्रिकोणमकथादिकम् ॥ ६६२ ॥
खान्तं षान्तं तथा नान्तं मान्तं धान्तं सशक्रमम् ।
वामकर्णसमायुक्तं बिन्दुनादैरलङ्कृतम् ॥ ६६३ ॥
रत्नेश्वरीति विद्याख्यं पञ्चरत्नात्मकं मनुम् ।
षडङ्गेनैव सम्पूज्य मूलमन्त्रेण मन्त्रयेत् ॥ ६६४ ॥
आसनं प्रथमं दत्त्वा स्वागतं च वदेत् पुनः ।
अर्घ्यं पाद्यञ्च पानीयं मधुपर्कं जलं ततः ॥ ६६५ ॥
स्नापयेद् गन्धपुष्पाद्भिः केशे संस्कारमाचरेत् ।
धूपयित्वा ततः केशं कौशेयं विनिवेदयेत् ॥ ६६६ ॥
तान्तां शक्तिं समावाह्य मूर्ध्नि तासां समानयेत् ।
भोज्यमण्डपमध्ये तु स्वर्णपात्रे सुशोभनम् ॥ ६६७ ॥
चर्व्यञ्चोष्यं लेह्यं पेयं भोज्यं चैव हि भक्ष्यकम् ।
तत्रासां सव्यकर्णेषु ततस्तोत्रं समाचरेत् ॥ ६६८ ॥
ब्राह्मी –
मातर्देवि नमस्तेऽस्तु ब्रह्मरूपधरेऽनघे ।
कृपया हर विघ्नं मे मन्त्रसिद्धिं प्रयच्छ मे ॥ ६६९ ॥
माहेशी –
महेशि वरदे देवि परमानन्दरूपिणि ।
कृपया हर विघ्नं मे मन्त्रसिद्धिं प्रयच्छ मे ॥ ६७० ॥
कौमारी –
कौमारि सर्वविघ्नेशि कुमारक्रीडने वरे ।
कृपया हर विघ्नं मे मन्त्रसिद्धिं प्रयच्छ मे ॥ ६७१ ॥

वैष्णवी –
विष्णुरूपधरे देवि विनतासुतवाहिनि ।
कृपया हर विघ्नं मे मन्त्रसिद्धिं प्रयच्छ मे ॥ ६७२ ॥
वाराही –
वाराहि वरदे देवि द्रंष्ट्रोद्धृतवसुन्धरे ।
कृपया हर विघ्नं मे मन्त्रसिद्धिं प्रयच्छ मे ॥ ६७३ ॥
इन्द्राणी –
शक्ररूपधरे देवि शक्रादिसुरपूजिते ।
कृपया हर विघ्नं मे मन्त्रसिद्धिं प्रयच्छ मे ॥ ६७४ ॥
चामुण्डा –
चामुण्डे मुण्डमालाऽसृक् चर्चिते विघ्ननाशिनि ।
कृपया हर विघ्नं मे मन्त्रसिद्धिं प्रयच्छ मे ॥ ६७५ ॥
महालक्ष्मी –
महालक्ष्मि महामोक्षे क्षोभसन्तापनाशिनि ।
कृपया हर विघ्नं मे मन्त्रसिद्धिं प्रयच्छ मे ॥ ६७६ ॥
मितिमातृमये देवि मितिमातृबहिःकृते ।
एके बहुतरे देवि विश्वरूपे नमोऽस्तुते ॥ ६७७ ॥
एतत्स्तोत्रं पठेद्यस्तु मन्त्रारम्भेषु संयतः ।
विदग्धां वा समालोक्य तस्य विघ्नं न जायते ॥ ६७८ ॥
यदि क्रीडापरास्तास्तु भोजनं तद्गृहाद्बहिः ।
स्थितः स्तोत्रं पठेत्तावद्यावत्तृप्तिः प्रजायते ॥ ६७९ ॥
आचम्य मुखवासादि ताम्बूलञ्च निवेदयेत् ।
ततो दद्यात्पुनर्माल्यं चन्दनं पङ्कितं शुभम् ॥ ६८० ॥
विसृज्य प्रदक्षिणीकृत्य वरं प्रार्थ्य सुखी भवेत् ।
अन्या यदि न गच्छन्ति निजकन्या निजाऽनुजा ॥ ६८१ ॥
अग्रजा मातुलानी वा जननी तत्सपत्निका ।
वयस्या ज्ञातिजा वाऽपि सधवा वाऽपि निःपतिः ॥ ६८२ ॥
पूर्वाभावे वरा पूज्या मदंशा योषितो यतः ।
एका चेद् युवतिस्तत्र पूजिता वा विलोकिता ॥ ६८३ ॥
सर्वा एव तदा देव्यः पूजिताः कुलभैरव ।
आदावन्ते च मध्ये च लक्ष्ये पूर्णे विशेषतः ॥ ६८४ ॥

न पूजयन्ति चेत्कान्तां तदा विघ्नैर्विलुप्यते ।
सन्तर्प्य कुण्डलीशक्तिं पञ्चमुद्राविधानतः ॥ ६८५ ॥
अलिना पिशितं मीनं मुद्रा मैथुनमेव च ।
मकारपञ्चकं यत्र तत्र देवी न संशयः ॥ ६८६ ॥
न मद्यं माधवी मद्यं मद्यं शक्तिरसोद्भवम् ।
सुषुम्णा शङ्खिनी मत्स्यमुद्रा उन्मन्यनुत्तमा ॥ ६८७ ॥
सामरस्यामृतोल्लासं मैथुनं तत्सदाशिवम् ।
सम्यक् सिद्ध्यैकमन्त्रस्य पञ्चाङ्गोपासनेन च ॥ ६८८ ॥
सर्वमन्त्राः प्रसिद्ध्यन्ति तत्प्रसादान्महेश्वरि ।
एवं प्रकुर्वतस्तस्य प्रथमे वत्सरत्रये ॥ ६८९ ॥
भवन्ति बहवो विघ्नाः श्रद्धाभावादयोऽशुभाः ।
अस्मिन्नर्थे भवेन्मन्त्री यदि नोद्विग्नमानसः ॥ ६९० ॥
सिद्ध्यतीति च विश्वासस्तदाऽसौ सिद्धिमाग्भवेत् ॥ ६९१ ॥
न न्यासो योषितां चात्र न पूजा नापि चिन्तनम् ।
रात्रौ जपैकमात्रेण सिद्धिदा दक्षिणा भवेत् ॥ ६९२ ॥
नवगाद्वत्सरादूर्ध्वं स्वयं सिद्ध्यति मन्त्रराट् ।
सिद्धेस्तु त्रीणि चिह्नानि दाता भोक्ता अयाचकः ॥ ६९३ ॥

## अथ मन्त्रसिद्धिचिह्नानि

सिद्धिद्वारा महत्तस्य चिह्नं लक्षणमुच्यते ।
स्वप्ने वाऽक्षिसमक्षं वा आश्चर्यमतिहर्षदम् ॥ ६९४ ॥
अकस्माद्यदि जायेत न ख्यातव्यं गुरोर्विना ।
प्रकाशनीयं न क्वापि ऐहिकीं सिद्धिमिच्छता ॥ ६९५ ॥
प्रकाशयति या मोहादौत्सुक्यान्मन्त्रजं सुखम् ।
संकटस्थाश्च तास्तस्य सिद्धयो यान्ति दूरतः ॥ ६९६ ॥
आविर्भवन्ति दुःखानि शोकाश्च विविधा अपि ।
अत्पाशनं स्वस्य निद्रा सदा चित्तप्रसन्नता ॥ ६९७ ॥
नाना सौख्यानि हृदये मन्त्रसिद्धिमयानि वै ।
अत्यानन्दप्रदात्याशु प्रत्यक्षेण बहिस्तदा ॥ ६९८ ॥
जडधीस्तु क्षणं विप्रः क्षणमस्ति प्रहर्षितः ।
अलं दुन्दुभिनिर्घोषं शृणोत्यप्यन्तरिक्षतः ॥ ६९९ ॥

क्षणञ्च मधुरस्वाद्यं नानागीतसमन्वितम् ।
आजिघ्रति क्षणं गन्धान् कर्पूरमृगनाभिजान् ॥ ७०० ॥
उत्पतन्तं क्षणं वाऽपि पश्यत्यात्मानमात्मना ।
चन्द्रार्ककिरणाकीर्णं क्षणमालोकयेन्नभः ॥ ७०१ ॥
गजगोवृषनादाँश्च शृणुयाच्च क्षणं द्विजः ।
निर्भराद्यूतसंक्षोभं क्षणमाकर्णयत्यपि ॥ ७०२ ॥
तारकाणि विचित्राणि योगिनो नभसि स्थितान् ।
पश्यत्युद्ग्राहयन्त्रं च क्षणं मन्त्रव्रती सदा ॥ ७०३ ॥
क्षणं किलिकिलारावं हंसवर्हित्वं तथा ।
क्षणे मेघोदयं पश्येत् क्षणं रात्रिं दिने सति ॥ ७०४ ॥
रात्रौ च दिवसाऽऽलोकं स सूर्यं क्षणमीक्षते ।
बलेन परिपूर्णश्च तेजसा भाष्करोपमः ॥ ७०५ ॥
पूर्णेन्दुसदृशः कान्त्या गमने विहगोपमः ।
समेन युक्तः प्रौढेन गम्भीरेण मुखेन च ॥ ७०६ ॥
स्वल्पाशतेना सकृता बहुनाऽपि न खिद्यते ।
विण्मूत्रयोरल्पत्वं हि भवेन्निद्रा जपस्तथा ॥ ७०७ ॥
जपध्यानगतो मन्त्री न खेदमधिगच्छति ।
विना भोजनपानाभ्यां पक्षमासादिकं नयेत् ॥ ७०८ ॥
ज्योतिः पश्यति सर्वत्र शरीरं वा प्रकाशयुक् ।
निजं शरीरमथवा देवतामयमेव हि ॥ ७०९ ॥
इत्येवमादिभिश्चिह्नैर्महाविस्मयकारिभिः ।
प्रवृत्तेः संबोद्धव्यं प्रसन्नो मन्त्रसन्ततिः ॥ ७१० ॥
एवं सिद्धौ मनौ देवा मोक्षमार्गनिरोधकाः ।
तपः क्षयकराश्चैव जायन्तेऽनेकसिद्धयः ॥ ७११ ॥
स्वल्पसिद्धौ निमग्नश्चेन्न जायन्तेऽणिमादयः ।
अणिमादिषु मग्नश्चेन्मोक्षवार्ताऽतिदुर्लभा ॥ ७१२ ॥
अल्पं तव क्षणान्नश्येन्मध्यमं चापि गर्वतः ।
तस्मात्सिद्धावनास्थां च कृत्वा मन्त्रं समभ्यसेत् ॥ ७१३ ॥
अथवाऽन्यप्रकारेण पुरश्चरणमुच्यते ।
कृष्णाष्टमीं समारभ्य यावत्कृष्णाष्टमी भवेत् ॥ ७१४ ॥
सहस्रसंख्ये जप्ते तु पुरश्चरणमिष्यते ।

अथवाऽन्यप्रकारेण पुरश्चरणमुच्यते ॥ ७१५ ॥
वाममार्गीयमन्त्राणामेवमोन्यदुच्यते ।
कृष्णाष्टमीं समारभ्य यावत्कृष्णचतुर्दशी ॥ ७१६ ॥
देवीं ध्यात्वा जपेन्मन्त्रमयुतानां चतुष्टयम् ।
दशांशं होमयेत् पश्चात्तर्पयेदभिषिञ्चयेत् ॥ ७१७ ॥
अथवाऽन्यप्रकारेण पुरश्चरणमुच्यते ।
कृष्णां चतुर्दशीं प्राप्य नवम्यन्तं[२१] महोत्सवे ॥ ७१८ ॥
अष्टमी-नवमीरात्रौ पूजां कुर्याद् विशेषतः ।
दशम्यां पारणं कुर्यान्मत्स्यमांसादिभिर्युतः ॥ ७१९ ॥
षट्सहस्रं जपेन्नित्यं भक्तिभावपरायणः ।
चतुर्दशीं समारभ्य यावदन्या चतुर्दशी ॥ ७२० ॥
तावज्जपेन्महेशानि पुरश्चरणमिष्यते ।
केवलं जपमात्रेण मन्त्राः सिद्धा भवन्ति हि ॥ ७२१ ॥
बलिहोमादिदानेन विशेषात्पीठपूजने ।
योनिपीठं महापीठं कामरूपं तथाऽपरम् ॥ ७२२ ॥
तयोरेकतमं पूज्यं रुद्रदेह इवापरः ।
अथवाऽन्यप्रकारेण पुरश्चरणमुच्यते ॥ ७२३ ॥
महालक्ष्मीं समारभ्य आमहानवमीश्वरि ।
कृष्णाष्टम्या आनवमी मघौ शाक्ते मनौ स्मृतम् ॥ ७२४ ॥
ऊर्जे तपसि राधे वा शुक्लः पक्षस्तु वैष्णवे ।
एकादश्यान्तु[२२] ऐशें तु भूतान्तः फाल्गुने स्मृतः ॥ ७२५ ॥
भाद्रेऽपि वैद्यराजे तु माघभाद्रौ सुवासरात् ।
अन्येष्वपि च मन्त्रेषु पूर्वोक्तं नवरात्रकम् ॥ ७२६ ॥
जपो मातृकया प्रातः कालान्मध्यन्दिनावधि ।
रात्रौ यामादितः कार्यः पयोमूलफलादृतिः ॥ ७२७ ॥
चतुर्थयामे कर्तव्या मालामन्त्रे दशांशतः ।
विंशांशाद्वा दशांशाद्वा अन्येष्वपि हुतं मतम् ॥ ७२८ ॥
दक्षिणा च यथोक्ता च वित्तशाठ्यं न कारयेत् ।
एवं मन्त्रः प्रयोगार्हो भवत्येव न संशयः ॥ ७२९ ॥

---

२१ तपस्यन्तं पाठो मुण्डमलायाम् ।

२२ एकादश्यन्त पाठ उद्धृतः पुरश्चर्यार्णवे ।

अथवाऽन्यप्रकारेण पुरश्चरणमुच्यते ।
कुजे वा शनिवारे वा नारं मुण्डं समाहृतम् ॥ ७३० ॥
पञ्चगव्येन मिलितं चन्दनाद्यैर्विशेषतः ।
निक्षिप्य भूमौ हस्तार्धमानतः काननान्तरे ॥ ७३१ ॥
तत्र तद्दिवसे रात्रौ सहस्तं यदि साधकः ।
एकाकी पूजयेन्मन्त्रं स भवेत्कल्पपादपः ॥ ७३२ ॥
अथवाऽन्यप्रकारेण पुरश्चरणमुच्यते ।
शवमानीय तद्द्वारे तेनैव परिखन्यते ॥ ७३३ ॥
तद्दिनान्तद्दिनं यावत्तावदष्टोत्तरं शतम् ।
स भवेत् सर्वसिद्धीशो नात्र कार्या विचक्षणा ॥ ७३४ ॥
अथवाऽन्यप्रकारेण पुरश्चरणमुच्यते ।
अष्टम्यां वा चतुर्दश्यां पक्षयोरुभयोरपि ॥ ७३५ ॥
सूर्योदयात्समारभ्य यावत्सूर्योदयान्तरम् ।
तावज्जप्त्वा निरातङ्कः सर्वसिद्धीश्वरो भवेत् ॥ ७३६ ॥
अथवाऽन्यप्रकारेण पुरश्चरणमुच्यते ।
शरत्काले चतुर्थ्यादि नवम्यन्तं विशेषतः ॥ ७३७ ॥
भक्तितः पूजयित्वा तु रात्रौ तावत्सहस्रकम् ।
जपेदेकस्तु विजने केवलं तिमिरालये ॥ ७३८ ॥
अष्टम्यादि नवम्यन्तमुपवासपरो भवेत् ।
स भवेत् सर्वसिद्धीशो नात्र कार्या विचारणा ॥ ७३९ ॥
अथवाऽन्यप्रकारेण पुरश्चरणमुच्यते ।
अष्टमीसन्धिवेलायामष्टोत्तरलतागृहम् ॥ ७४० ॥
प्रविश्य मन्त्री विधिवत्ताः समभ्यर्च्य यत्नतः ।
पूर्वोक्तकल्पमासाद्य पूजादिकं समाचरेत् ॥ ७४१ ॥
केवलं कामदेवोऽसौ जपेदष्टोत्तरं शतम् ।
तासान्तु यत्र मूले च जप्त्वा संगृह्य मस्तके ॥ ७४२ ॥
महासिद्धिर्भवेत् सद्यो लतादर्शनपूजनात् ।
अथवाऽन्यप्रकारेण पुरश्चरणमुच्यते ॥ ७४३ ॥
आकृष्णायाः कुलागारे लिखित्वा मन्त्रमेव च ।
सम्पूज्य तत्र संस्कारं कृत्वा तस्यै निवेद्य च ॥ ७४४ ॥
किञ्चिज्जप्त्वा मनुं नीत्वा देवताभावतत्परः ।

तां विसृज्य नमस्कृत्य स्वयं सुप्त्वा सुसंयतः ॥ ७४५ ॥
प्रातः स्त्रीभ्यो बलिं दत्त्वा मन्त्रसिद्धिर्न संशयः ।
गुरुमानीय संस्थाप्य देववत् पूजनं विभो ॥ ७४६ ॥
वस्त्रालङ्काररहेमाद्यैः सन्तोष्य गुरुमेव च ।
तत्सुतां तत्सुतं चैव तत्पत्नीं चैव पूज्य च ॥ ७४७ ॥
पूजयित्वा मनुं जप्त्वा स्वयं सिद्धीश्वरो भवेत् ॥ ७४८ ॥

## अथ ग्रहणपुरश्चरणम्

चन्द्रसूर्यग्रहे देवि ग्रासावधि विमुक्तितः ।
यावत्संख्यं मनुं जप्त्वा तावद्धोमादिकं चरेत् ॥ ७४९ ॥
पञ्चाङ्गं तावदेव स्याज्जपहोमौ समौ स्मृतौ ।
सिद्धेश्वरीमतं प्रोक्तं सर्वसिद्धिप्रदायकम् ॥ ७५० ॥
चक्षुषा दर्शनं राहो यत्तद्ग्रहणमुच्यते ।
चक्षुषा दर्शनं राहो मुक्तिर्ग्रहणमोचनम् ॥ ७५१ ॥
पुरश्चरणकार्यन्तु सूर्यचन्द्रग्रहस्त्वयम् ।
चक्षुषा दर्शनं राहोरित्यत्र मुख्यता मता ॥ ७५२ ॥
अथवाऽन्यप्रकारेण पौरश्चारणिको विधिः ।
चन्द्रसूर्योपरागे च स्नात्वा प्रयतमानसः ॥ ७५३ ॥
संस्पर्शादि विमोक्षान्तं जपन्मन्त्रमनन्यधीः ।
दृष्ट्वा स्नात्वा सुसङ्कल्पो विमोक्षान्तं जपं चरेत् ॥ ७५४ ॥
तावद्धोमादिकं कुर्याद् ग्रहणान्ते शुचिः पुनः ।
अथवाऽन्यप्रकारेण पुरश्चरणमुच्यते ॥ ७५५ ॥
सूर्यचन्द्रोपरागे तु नाभिमन्त्रोदके स्थितः ।
ग्रासाद्विमुक्तिपर्यन्तं जपं कुर्यान्महेश्वरि ॥ ७५६ ॥
तद्दशांशं होमयेद्धि तद्दशांशैः स्नपं क्रमात् ।
अनेन क्रमयोगेन सङ्गमे सञ्जपेच्च वा ॥ ७५७ ॥
एकाङ्गुष्ठोपरि स्थित्वा ग्रासावधि विमुक्तितः ।
पञ्चाङ्गं चाथवाऽष्टाङ्गं दशाङ्गाख्यपुरस्क्रियाम् ॥ ७५८ ॥
कुर्याद्यत्नेन देवेशि सर्वसिद्धीश्वरो भवेत् ।
अथवाऽन्यप्रकारेण पुरश्चरणमुच्यते ॥ ७५९ ॥
ग्रहणेऽर्कस्य चेन्दोर्वा शुचिः पूर्वमुपोषितः ।

घटिकार्धं पूर्वमेव ग्रहणं परिवर्तते ॥ ७६० ॥
तदा स्नानं विधातव्यं ग्रस्ते सङ्कल्पमाचरेत् ।
जाताशौचं मृताशौचं ग्रहणे नास्ति पार्वति ॥ ७६१ ॥
विमोक्षान्तं जपं कुर्यात् सम्यग् ज्ञाने समापनम् ।
सूर्याच्छन्नेऽनायात घटिकार्धं विचारयेत् ॥ ७६२ ॥
ततः समापनं कुर्यात् सिद्धमन्त्रो भवेद् ध्रुवम् ।
प्रमादाद् गलिते योगे बहुविप्रान् प्रभोजयेत् ॥ ७६३ ॥
यद्यदङ्गं विहीयेत तत्साङ्गे द्विजभोजनम् ।
दशांशं हवनं कुर्यात्तर्पणं तद्दशांशतः ॥ ७६४ ॥
मार्जन तद्दशांशेन दशांशेनाभिषिञ्चनम् ।
दशांशं विप्रभोज्यं च देवरूपो नरो भवेत् ॥ ७६५ ॥
यद्यदङ्गे विहीयेत तत्संख्याद्विगुणो जपः ।
द्वित्रिवेदबाणभेदैर्विप्रादीनां क्रमः स्मृतः ॥ ७६६ ॥

## अथवाऽन्यप्रकारेण पुरश्चरणमुच्यते

सूर्योदयं समारभ्य यावत्सूर्योदयान्तरम् ॥ ७६७ ॥
तावज्जप्त्वा निरातङ्कः सर्वसिद्धीश्वरो भवेत् ।
अथवाऽन्यप्रकारेण पुरश्चरणमुच्यते ॥ ७६८ ॥
सूर्यास्तं च समारभ्य सूर्यास्तं यावदेव तु ।
तावज्जप्त्वा निरातङ्कः सर्वसिद्धीश्वरो भवेत् ॥ ७६९ ॥
अथवाऽन्यप्रकारेण पुरश्चरणमुच्यते ।
सूर्योदयं समारभ्य यावदस्तमयं भवेत् ॥ ७७० ॥
तावद्भक्त्या जपेद्देवि सर्वसिद्धीश्वरो भवेत् ।
अथवाऽन्यप्रकारेण पुरश्चरणमुच्यते ॥ ७७१ ॥
सूर्यास्तं च समारभ्य यावत्सूर्योदयो भवेत् ।
तावज्जपेन्महेशानि सर्वसिद्धीश्वरो भवेत् ॥ ७७२ ॥
अथवाऽन्यप्रकारेण पुरश्चरणमुच्यते ।
शरत्काले चतुर्थ्यादि नवम्यन्तं महेश्वरि ॥ ७७३ ॥
होमरूपां पुरश्चर्यां कुर्यात् सिद्धीश्वरो भवेत् ।
अथ तर्पणरूपं च पुरश्चर्यां ब्रवीमि ते ॥ ७७४ ॥
दुग्धेनाऽऽसवतोयेन रक्तैर्मज्जाभिरेव च ।

मधुना गन्धतोयेन रक्तधाराभिरेव च ॥ ७७५ ॥
केवलं शुद्धतोयस्य तर्पणेन महेश्वरि ।
अथवाऽन्यप्रकारेण पुरश्चरणमुच्यते ॥ ७७६ ॥
तथा मार्जनरूपां च पुरश्चर्यां चरेच्छिवे ।
ब्राह्मणान् कुमारिकान् भोज्य जपात् सिद्धीश्वरो भवेत् ॥ ७७७ ॥
अथवाऽन्यप्रकारेण पुरश्चरणमुच्यते ।
पूजारूपां पुरश्चर्यां केचिदिच्छन्ति तान्त्रिकाः ॥ ७७८ ॥
शरत्काले चतुर्थ्यादि नवम्यन्तं महेश्वरि ।
अथवाऽन्यप्रकारेण पुरश्चरणमुच्यते ॥ ७७९ ॥
दिवा जपेत् षट्सहस्रं रात्रावपि तथा जपेत् ।
एवं क्रमेण देवेशि सर्वसिद्धीश्वरो भवेत् ॥ ७८० ॥
अथवाऽन्यप्रकारेण पुरश्चरणमुच्यते ।
दिवा जपेत् षट्सहस्रं तावद्धोमं चरेन्निशि ॥ ७८१ ॥
सर्वसिद्धीश्वरो भूयादतोन्यच्छृणु पार्वति ।
अथवाऽन्यप्रकारेण पुरश्चरणमुच्यते ॥ ७८२ ॥
नित्यं कृत्यं दिवा कृत्वा केवलं तिमिरालये ।
रात्रौ जपेद्गानपरः सर्वसिद्धीश्वरो भवेत् ॥ ७८३ ॥
अथवाऽन्यप्रकारेण पुरश्चरणमुच्यते ।
गानमण्डलगो जप्त्वा त्रैलोक्याधिपतिर्भवेत् ॥ ७८४ ॥
अथवाऽन्यप्रकारेण पुरश्चरणमुच्यते ।
दिवा जपेद् दिक्सहस्रं रात्रौ पूजां चरेज्जपेत् ॥ ७८५ ॥
सहस्रमात्रं प्रजपेदामिषान्नपरायणः ।
सर्वसिद्धीश्वरो भूयाद् वेतालसिद्धिमाप्नुयात् ॥ ७८६ ॥
अथवाऽन्यप्रकारेण पुरश्चरणमुच्यते ।
प्रतिपत्सु समारभ्य नवम्यन्तं महेश्वरि ॥ ७८७ ॥
सव्यान्ते पर्वते शून्ये केवलं तिमिरालये ।
उदयास्तमयं ज्ञात्वा सर्वसिद्धीश्वरो भवेत् ॥ ७८८ ॥
अथवाऽन्यप्रकारेण पुरश्चरणमुच्यते ।
पर्वते विपिने शून्ये नवरात्रं जितेन्द्रियः ॥ ७८९ ॥
मुण्डोपरि भवेन्मुण्डं कपालं च ततोपरि ।
तत्र दीपञ्च प्रज्वाल्य दीपालोकनतत्परः ॥ ७९० ॥

नवरात्रं जपेद्देवि दीपालोकनतत्परः ।
मूलमन्त्रं कपालेषु कौमार्या बीजमुत्तमम् ॥ ७९१ ॥
सिन्दूरेण कृतं यन्त्रं सर्वसिद्धीश्वरो भवेत् ।

## अथ सालसपुरश्चरणम्

अयोग्यगुरुतो लब्ध्वा वार्यादिस्थानमाश्रिताः ॥ ७९२ ॥
दुर्दशत्वात्पुरश्चर्यां कर्तुं चेच्छक्यते न हि ।
राज्ञो भाग्यवतो वाऽपि सुकुमारस्य वा यथा ॥ ७९३ ॥
सिद्धिर्भवेत्तथा वक्ष्ये वर्णौषधिपुरस्क्रियाम् ।
सप्तधा सा परिज्ञेया वर्णमासैस्तु सिद्धिदा ॥ ७९४ ॥
मन्त्रवर्णौषधिकाष्ठैः रचयेद्गुटिकाः शुभाः ।
वर्णक्रमेण ताः प्रोह्या अनुलोमविलोमतः ॥ ७९५ ॥
स्थूलादिकाश्च लघ्वन्ताः कर्तव्या मणयो यथा ।
सर्पद्वयाकृती माला भवेन्नित्यं तया जपेत् ॥ ७९६ ॥
मालाया मणिसंख्याकं प्रथमोऽयं जपः स्मृतः ।
सर्वसमाना मणयः प्रोतव्याः स्वर्णसूत्रके ॥ ७९७ ॥
कण्ठे धार्या कण्ठमाला नित्यमेषा द्वितीयकः ।
तथैव राजते सूत्रे प्रोह्य ताः परिपूजयेत् ॥ ७९८ ॥
तद्देवकल्पमार्गेण प्रक्रमोऽयं तृतीयकः ।
वर्णौषधीनां क्वाथेत नित्यस्नानं चतुर्थकः ॥ ७९९ ॥
वर्णौषधीरजोलेह्यां गोधृतं न तु पञ्चमः ।
तच्चूर्णोद्वर्तनं कुर्यादिष षष्ठः प्रकीर्तितः ॥ ८०० ॥
तद्भष्मधारणं नित्यं कुर्यादिति तु सप्तमः ।
ब्रह्मद्वेषाद् गुरुद्वेषात् स्त्रीद्वेषाच्च न जायते ॥ ८०१ ॥

## अथ मन्त्रसिद्धिदीपो यथा

अथातः सम्प्रवक्ष्यामि सर्वतन्त्रेषु गोपितम् ।
मन्त्रसिद्धिकरं दीपं न वाच्यं यस्य कस्यचित् ॥ ८०२ ॥
शक्त्याद्यहर्गणर्केषु भक्तो वर्णः प्रजायते ।
मन्त्रवर्णस्य दिवसे क्रमाद्दीपं प्रकल्पयेत् ॥ ८०३ ॥

सायं तु कुडचाज्यस्य वर्त्तिर्भूपञ्चतन्तुभिः।
यावज्ज्वलति दीपोऽसौ तावत् पश्यन्मनुं जपेत्॥ ८०४॥
[23]मन्त्रार्णसंख्यदीपेषु ज्वलितेष्वथ तद्दिने।
पुनर्दीपे कृते सा तु दीपे सन्दृश्यते स्फुटम्॥ ८०५॥
दृष्टं स्वकीयं कथयेद्याचयेन्मनसेप्सितम्।
ददाति देवता तुष्टो गुह्यमेतत् प्रकाशितम्॥ ८०६॥

## अथ सावरमन्त्रपुरश्चरणम्

अथ सावरमन्त्राणां पुरश्चरणमुच्यते।
कामरूपाख्यदेशे तु कामाक्षी यत्र देवता॥ ८०७॥
कामशैलोऽस्ति यत्रासौ कामपीठं तदुच्यते।
तत्र संलेख्य मन्त्रं हि वंशोपरि यथाक्रमम्॥ ८०८॥
गुरुणा वाचनीयः स स्वयं पश्चात् पठेन्मनुम्।
गुरोरभावे तस्यैव मूले शैलस्य पर्वणि॥ ८०९॥
लिखित्वा प्रपठेन्मन्त्रं कामपीठं गुरुर्यतः।
अथवा योगिनीशैले दक्षिणस्यां दिशि ध्रुवम्॥ ८१०॥
योगाम्बा यत्र देवी सा लिखित्वा प्रपठेन्मनुम्।
ज्वालामुखीसमीपे वा हिंगुलायाः समीपतः॥ ८११॥
लिखित्वा प्रपठेन्मन्त्रं नान्यथैव प्रसिद्ध्यति।
मुख्यतः स्त्रीसमीपे हि कामपीठे मनोर्ग्रहः॥ ८१२॥
अथवा सर्वदेशेषु मन्त्रग्रहणमुच्यते।
तालपत्रे मनुं लिख्य पूर्णकुम्भे निधापयेत्॥ ८१३॥
भाष्करं तु गुरुं ध्यात्वा वाचयेत् त्रिगुरू रविः।
इति शावरमन्त्रपुरश्चरणविधिः।
अथ षोढान्यासपुरश्चरणम्।[24]
देवीभावसमायुक्तः षोढान्यासपरो भवेत्॥ ८१४॥
दशविद्याविधौ सा च दशधा भिन्नभिन्नतः।
प्रत्येकं षट् ऋषिं तं तं तद्ध्यानं च समाचरेत्॥ ८१५॥
ऋषिच्छन्दादिकं यत्र कीर्तितं परमेश्वरि।

---

२३ मन्त्राणां पाठो मा. ख।
२४ अथ षोढान्यास इत्यादि क्रमयोगत इत्यन्तं पाठो मा. ख न प्राप्यते।

तदेव तत्र गदितमनुक्तैर्मूलदेववत् ॥ ८१६ ॥
ध्यानं छन्दादिकं स्तोत्रं देवीवत्सर्वमेव तु ।
अयुतं च पुरश्चर्या न्यसनं क्रमयोगतः ॥ ८१७ ॥
अथ सहस्रनामस्तवककवचानां पुरश्चरणम् ।

## ईश्वर उवाच

सहस्रनामस्तोत्रेषु कवचेनापि पार्वति ।
तत्कवचोदिता प्रोक्ता सा वै कार्या पुरस्क्रिया ॥ ८१८ ॥
यत्र नोक्ता पुरश्चर्या तत्र किं वा विधीयते ।
अयुतं तु पुरश्चर्या स्तोत्रमात्रे प्रकीर्तिता ॥ ८१९ ॥
सहस्रनामकवचे पुरश्चर्या त्वियं मता ।
एवं पुरस्क्रियां कृत्वा दशांशं हवनादिकम् ॥ ८२० ॥
तर्पणं मार्जनं देवि कुत्रचित् परिकीर्तितम् ।
महाकालमते प्रोक्तं तन्त्रस्थं चेत्समाचरेत् ॥ ८२१ ॥
विप्रभोजनमेवात्र सर्वथा कारयेत् प्रिये ।
विप्रसन्तोषणेनैव सर्वं सिद्ध्यति पार्वति ॥ ८२२ ॥
हवनस्तु कथं कार्यं पुरश्चर्या कथं भवेत् ।
सहस्रनामरूपं वै कीदृशं परमेश्वरि ॥ ८२३ ॥
तदा च कवचं देवि किं रूपं परिकीर्तितम् ।
शिवदेव्योऽस्तु संवादो ब्रह्मरन्ध्रेति कीर्तितः ॥ ८२४ ॥
अन्ये श्लोकाः केशतुल्या ऋषिः शिर इतीरितम् ।
छन्दो मुखं भवेद्देवि देवता हृदयं भवेत् ॥ ८२५ ॥
बीजं गुह्यमिति प्रोक्तं शक्तिस्तु परमा मता ।
सर्वाङ्गं कीलकं देवि ह्यर्थवादः प्रकीर्तितः ॥ ८२६ ॥
स्तोत्रमध्ये स्थितं यद्यत्तत्सर्वं स्तोत्ररूपकम् ।
एवं च देवदेवेशि स्तोत्ररूपं प्रकीर्तितम् ॥ ८२७ ॥
तथैव कवचं देवि ज्ञात्वा पाठं पठेत् प्रिये ।
अङ्गहीने भवेन्नाशः सर्वथा परमेश्वरि ॥ ८२८ ॥
फलं स्तुत्यादिकं देवि अङ्गमित्यभिधीयते ।
आद्योपान्तं विना देवि फलमर्द्धं प्रकीर्तितम् ॥ ८२९ ॥

अत्रार्थे प्रत्ययो देवि षडङ्गाद्या यथा स्मृताः।
हवनं कवचादीनां श्लोकान्ते विहितं च वा ॥ ८३० ॥
आद्योपान्तं पठित्वा वा पश्चात्तु हवनं मतम्।
अथवा देवदेवेशि नामान्तं हवनं मतम् ॥ ८३१ ॥
कवचादावपि प्रिये मन्त्रान्ते हवनं भवेत्।
उपक्रमस्य संहारी श्लोकान्ते हवनं मतम् ॥ ८३२ ॥
आदौ पूर्णस्तु सम्पठ्य तथैवान्ते महेश्वरि।
मध्ये नामानि पद्यानि पुरश्चर्या प्रकीर्तिता ॥ ८३३ ॥
श्लोकान्ते हवनं प्रोक्तं श्लोकान्ते मार्जनादिकम्।
तत्र स्तोत्रोक्तविधिना पुरश्चर्यादिकं भवेत् ॥ ८३४ ॥
स्तोत्रमावर्त्त्य  सम्पूर्णं तदन्ते गणनां चरेत्।
सम्पूर्णो होमयोगोऽयं कथितस्तु प्रियं भवेत् ॥ ८३५ ॥
मार्जनमभिषेकञ्च कुर्यादत्र महेश्वरि।
सारूप्यं कवचाख्यं च सायुज्यं स्तोत्रमीरितम् ॥ ८३६ ॥
सान्निध्यं नाम साहस्रं त्रितयं परिकीर्तितम्।
कवचं कवचरूपं स्यात् स्तोत्रं सहचरो भवेत् ॥ ८३७ ॥
सहस्रनामस्तोत्रन्तु पूजास्थाने प्रकीर्तितम्।
पूजा दुर्गस्वरूपा स्यात् बलिदानं तु मारणम् ॥ ८३८ ॥
मन्त्रो राजा पुरश्चर्या राज्यसम्पत्तिरीरिता।
सम्पत्त्या तु विना राजा न शोभति महेश्वरि ॥ ८३९ ॥
सम्पत्तिमूलमेतद्धि सर्वमेव प्रकीर्तितम्।
होममन्त्रमिति प्रोक्तं पर्जन्यास्त्रं तु तर्पणम् ॥ ८४० ॥
जले दुर्गस्वरूपं वै त्वभिषेकः प्रकीर्तितः।
ब्राह्मणानां भोजनन्तु दुष्टसैन्यप्रभक्षणम् ॥ ८४१ ॥
देवता गुरु विद्यैक्यं त्वात्मैक्यं परिभाव्य च।
सर्वसिद्धीश्वरो भूत्वा त्रैलोक्याधिपतिर्भवेत् ॥ ८४२ ॥
यथा च राजा राज्यादौ शत्रुसैन्यभयं भवेत्।
सिद्धिराज्यं महादेवि तथैव परिकीर्तितम् ॥ ८४३ ॥
दुर्गाद्यस्त्रादिकं देवि देशराज्ये यथा मतम्।
तथैव सिद्धिराज्यस्य पुरश्चर्यादिकं मतम् ॥ ८४४ ॥
मन्त्रो राजा गुरुर्मन्त्री गणेशो द्वारपालकः।

साधनं शवमुण्डस्य सिंहासनमितीरितम् ॥ ८४५ ॥
साधकेन तथा कार्यं येन सर्वं तु सिद्ध्यति ।
नैमित्तिकं च काम्यञ्च हयद्विरहकौ मतौ ॥ ८४६ ॥
होमधूमः पताका स्यात्ततस्तु सिद्धिभूमिकाः ।
सिद्धिराजाधिपे देवि किन्न सिद्ध्यति भूतले ॥ ८४७ ॥
षोढान्यासाधिकं सेना देवता राज्यदायिका ।
यन्त्रं तु वज्रदुर्गं तु जीवचक्रं त्वभेदकम् ॥ ८४८ ॥
कवचादिपुरश्चर्या प्रोक्ता किं श्रोतुमिच्छसि ।

**अथाङ्गयन्त्रपुरश्चरणमाह**

आदौ यन्त्रस्य सिद्ध्यर्थे तन्मन्त्रस्य पुरस्क्रियाम् ॥ ८४९ ॥
कृत्वाऽयुतप्रमाणेन पश्चाद्यन्त्रस्य वा चरेत् ।
यथाऽऽधारे यथा द्रव्यैर्यन्त्रं संलिख्य यत्नतः ॥ ८५० ॥
तत्रावाह्यैव तद्देवं सम्पूज्य विधिपूर्वकम् ।
ध्यात्वा जपं बलिं होमं कृत्वा देवं विसर्जयेत् ॥ ८५१ ॥
एकैकवारमावर्त्त्य मन्त्रं यन्त्रं स्मरन् बुधः ।
इत्थं जपादिभिः सिद्धे यन्त्रस्यासाध्यता क्वचित् ॥ ८५२ ॥
दिक्सहस्रप्रमाणेन यन्त्रे कार्या पुरस्क्रिया ॥ ८५३ ॥

*इति श्रीतन्त्रचिन्तामणौ पुरश्चरणनिर्णयनामैकत्रिंशत्तमःप्रकाशः ।*



# द्वात्रिंशत्तमः प्रकाशः

अथ द्वित्रिपुरश्चरणैर्मन्त्राणामसिद्धत्वे सति पुनस्तत्रोपायमाह। तथा च -
सम्यगनुष्ठिते मन्त्रे यदि सिद्धिर्न जायते।
पुनस्तेनैव कर्तव्यस्ततः सिद्धिर्भवेद् ध्रुवम् ॥१॥
पुनश्चानुष्ठिते मन्त्रे यदि सिद्धिर्न जायते।
उपयास्तत्र कर्तव्या सप्त शङ्करभाषिताः ॥२॥
असिद्धत्वाद् गुरोरेव शिष्ये सिद्धिर्न जायते।
तदोपायं प्रकुर्याद्यत्तङ्गोप्यमधुनोच्यते ॥३॥
अनुलोमविलोमेन बिन्दुमन्मातृकाक्षरैः।
जपेत् संपुटितं मन्त्रं प्रत्यहं शतसंख्यया ॥४॥
एकमासं ततो होमादिकात् सिद्धो भवेन्मनुः।
पुरश्चर्योक्तमखिलमाह्निकं च समाचरेत् ॥५॥
क्रूरदैवतमन्त्रन्तु भूतलिप्या पुटी कुरु।
क्रमात् क्रमाच्छतावृत्तिं कुर्यात् सिद्धिस्तु मासतः ॥६॥
अचो हयरवलाँश्चान्तिमादि द्विचतुर्थकम्।
तृतीयञ्च क्रमेणैव वर्गाणामक्षरं पठेत् ॥७॥
ऊष्मत्रयं ततश्चैव द्विचत्त्वारिंशदक्षरैः।
अत्युग्रदैवते जाप्यस्त्वष्टोत्तरसहस्रकम् ॥८॥
त्रिकालं गन्धपुष्पाद्यैर्निशीथेः पञ्चमैः पुनः।
षण्मासं कौलिकाद्यैश्च अर्चिता सुप्रसीदति ॥९॥
शापतो वा कीलितत्वात्तत्रोपायाष्टकं भवेत्।
संपाताप्यायनं द्रावो बोधनञ्च वशीकृतिः ॥१०॥
पीडनं पोषशोषौ च दहनं तत्क्रियोच्यते।
भूर्जपत्रं समानीय पद्ममष्टदलं लिखेत् ॥११॥
अष्टगन्धेन देवस्य रोचनाचन्दनेन वा।
साधकस्य तु नामार्णैर्मन्त्रं सन्दर्भितं लिखेत् ॥१२॥
यावद्द्वयोः समाप्तिः स्यात्तस्य चाद्यन्तयोर्लिखेत्।

तारादिकं साधकस्य नामाथाष्टदलेषु तु ॥१३॥
द्वौ द्वौ लेख्यौ स्वरौ तच्च सम्यग्ध्यायेत् सुधात्मकम्।
तत्संवेष्ट्य मृदा सम्यग्वेष्टयेद् ब्राह्मणादिकम् ॥१४॥
शुक्लादिवर्णया पश्चात् सिकथेन च वेष्टयेत्।
क्षिपेत् त्रिमधुरं तत्तु मृण्मयं लघुभाजने ॥१५॥
क्षीरपूर्णे नवे कुम्भे तत् क्षिपेल्लघुभाजने।
अग्निसंस्थापनं कृत्वा सन्निधौ तस्य तं घटम् ॥१६॥
संस्थापयेत् त्रिमधुरैर्मूलमन्त्रेण होमयेत्।
अष्टाधिकसहस्रं तु संपातं कलशे क्षिपेत् ॥१७॥
होमं समाप्य तं कुम्भं निक्षिपेच्च जलाशये।
स्वगुरुं ब्राह्मणाँश्चान्नैस्तोषयेद्दक्षिणादिभिः ॥१८॥
संपाताप्यायनं चैतदुक्तं सिद्धिर्न चेद् भवेत्।
द्रावणं तु तदा कुर्यात्तत्प्रकार इहोच्यते ॥१९॥
वं बीजेन ग्रथयित्वा भूर्जपत्रे लिखेन्मनुम्।
उशीररोचनाभ्याञ्च शिलाकर्पूरकुङ्कुमैः ॥२०॥
क्षीराज्यमधुतोयानां मध्ये तं लिखितं क्षिपेत्।
पूजानाञ्च जपाद्धोमाद् द्रावितः फलदो भवेत् ॥२१॥
द्रावितोऽपि न सिद्धश्चेद् बोधनं तस्य कारयेत्।
वाग्भवेन च बीजेन सम्पुटीकृत्य तं जपेत् ॥२२॥
एवं बुद्धो भवेत् सिद्धो नो चेत् कुर्याद्वशाकृतिम्।
कुचन्दनं महादारुहरिद्रामदनी शिलाः ॥२३॥
एतैस्तु लिखितो मन्त्रो भूर्जपत्रे सुशोभने।
कण्ठे धृतो भवेद्वश्यो नो चेत् कुर्याच्च पीडनम् ॥२४॥
अनुदात्तस्वरेणायमुदात्तेन द्वितीयकम्।
तृतीयमनुदात्तेन पठेत्तूर्यमुदात्ततः ॥२५॥
एवं पदानि सर्वाणि पठेन्मन्त्रस्य साधकः।
अनुदात्तपदोच्चारे देवं ध्यायेदधः स्थितम् ॥२६॥
ऊर्ध्वस्थितमुदात्तस्योच्चारेऽष्टाधिसहस्रकम्।
जपेन्मन्त्रं ततो भूर्जे भानुदुग्धेन लेखयेत् ॥२७॥
मन्त्रं तमाक्रमेद्वामपादेनाथ च होमयेत्।
अष्टोत्तरशतं मन्त्रः पीडितः सम्प्रसीदति ॥२८॥

न सिद्धश्चेत्तदा पोष्यः प्रोच्यते तत्क्रियाऽधुना ।
सौः बीजपुटितं मन्त्रं विलिखेद् भूर्जपत्रके ॥२९॥
रोचनाकुङ्कुमाभ्याञ्च धारयेद्दधिदुग्धयोः ।
इदं पोषणमित्युक्तं शोषणं प्रोच्यतेऽधुना ॥३०॥
यज्ञस्य भष्मना लेख्यं वायुबीजविदर्भितम् ।
भूर्जपत्रे स्वेष्टमन्त्रं तत्कण्ठे धारयेदिति ॥३१॥
एतच्छोषणमित्युक्तं दहनं प्रोच्यतेऽधुना ।
पृथक् पृथक् स्वमन्त्रार्णान् चतुर्दिक्षु समावृतान् ॥३२॥
रं बीजेन पलाशस्य बीजतैलेन संलिखेत् ।
भूर्जपत्रेऽथ तद्धार्यं कण्ठे दाहक्रिया त्वियम् ॥३३॥

## अथ चितासाधनम्

भगवन् सर्वतन्त्रज्ञ सर्वशक्तिविशारद ।
श्मशाने च पुरश्चर्या त्वया संसूचिता पुरा ॥३४॥
कथयस्व तदेदानीं यदि स्नेहोऽस्ति मां प्रति ।

**ईश्वर उवाच**

यस्मिन् परिश्रमेणापि नृणां सिद्धिः समीरिता ॥३५॥
न जाता तत्र कर्तव्या साधकैर्वीरसाधना ।
पुरा सिद्ध्यै नृपाणाञ्च कर्तव्ये समुपस्थिते ॥३६॥
नान्यात्सिद्धिकरं शीघ्रं वीरसाधनवर्जितम् ।
तस्मात्सर्वप्रयत्नेन विधेया वीरसाधना ॥३७॥
भयमुक्तेन शुचिना सर्वसिद्धिमभीप्सता ।
नानया दुर्लभं किञ्चित्साधकस्य समीहितम् ॥३८॥
गिरिजे त्वत्प्रयत्नेन मया चेयं प्रकाश्यते ।
अष्टम्यां च चतुर्दश्यां पक्षयोरुभयोरपि ॥३९॥
कृष्णपक्षे विशेषेण साधयेदनया हितम् ॥४०॥

**देव्युवाच**

महावीरक्रमं देव सूचितं न प्रकाशितम् ।
कथयस्व महादेव सर्वसिद्धिप्रदं महत् ॥४१॥

**भैरव उवाच**

सर्वसिद्धिप्रदं साक्षात्सर्वदेव नमस्कृतम्।
सर्वपापहरं देवि सर्वरोगविनाशनम् ॥४२॥
ब्रéविष्णुशिवादीनां दिक्पालानाञ्च भामिनि।
भैरवाणाञ्च सर्वेषां गन्धर्वाणाञ्च योगिनाम् ॥४३॥
'शश्वत्सिद्धिप्रदं देवि सर्वेषामालयं महत्।
नान्यत्सिद्धिप्रदं देवि वीरसाधनवर्जितम् ॥४४॥
महाबलो महावीरो महासाहसिकः शुचिः।
महास्वच्छो दयावाँश्च सर्वभूतहिते रतः ॥४५॥
तेषां कृते महादेवि कथितं वीरसाधनम्।
धतीवस्त्रेण बन्धं वै मूलेन परिधाय च ॥४६॥
तद्बाहे च पुनर्वस्त्रं मूलेनाङ्गविलेपनम्।
कृतोष्णीशञ्च मूलेन सिन्दूरेणार्धपुण्ड्रकम् ॥४७॥
इष्टदेवं गुरुं नत्वा यात्रा प्रहरमध्यतः।
कार्या च साधकैः सार्द्धं हृदि मन्त्रं परामृशन् ॥४८॥
अक्षुब्धो भुक्तभोज्यैस्तु यदि स्याद्वीरसाधकः।
दिव्यो वाम पशुस्तत्र भुक्त्वा साधनमाचरेत् ॥४९॥
अष्टम्यां च चतुर्दश्यां पक्षयोरुभयोरपि।
भौमवारे तमिश्रायां साधयेत् सिद्धिमुत्तमाम् ॥५०॥
उपचारं समादाय कुलामृतरसं तथा।
सामिषान्नं गुडं छागं सुरापिष्टकमेव च ॥५१॥
नानाफलं च नैवेद्यं स्वस्वकल्पोक्तसाधितम्।
चितास्थाने समानीय सुहृद्भिः शस्त्रपाणिभिः ॥५२॥
समानगुणसम्पन्नैः साधको गतभिः स्वयम्।
निरीक्षेच्च चतुर्दिक्षु देवताध्यानतत्परः ॥५३॥
भीतश्चेत्साधकस्तत्र चतुर्दिक्षु च साधकाः।
नो चेत् केवलमेवासौ भैरवः परिकीर्तितः ॥५४॥
वस्त्रालङ्कारभूषाद्यैर्भूषितः पूर्वसम्मुखः।
अक्षालितां चिताभूमिं गत्वा साधकसत्तमः ॥५५॥
प्रक्षालितां यदि प्राणः कारयेदस्थिसञ्चयम्।
अस्त्रान्तमूलमन्त्रेण प्रोक्षणं यागभूमिषु ॥५६॥

गुरुपादरजो ध्यात्वा गणेशं वटुकं तथा ।
योगिनीं मातृकाश्चैव वामपादपुरस्सरम् ॥५७॥
ये चात्र संस्थिता देवा राक्षसाश्च भयानकाः ।
पिशाचाः सिद्धयक्षाश्च गन्धर्वाप्सरसोऽङ्गनाः ॥५८॥
योगिन्यो मातरो भूताः सर्वाश्च खेचरस्त्रियः ।
सिद्धिदाता भवन्त्वत्र तथा च मम रक्षकाः ॥५९॥
प्रणम्य मनुनाऽनेन पुष्पाञ्जलित्रयं क्षिपेत् ।
श्मशानाधिपतिं पश्चाद् भैरवं कालभैरवम् ॥६०॥
महाकालं यजेद्यत्नात् पूर्वादिदिक्चतुष्टये ।
पाद्यादिभिश्च मन्त्रज्ञो बलिं पश्चान्निवेदयेत् ॥६१॥
शब्दबीजं ततः पश्चात् श्मशानाधिप तत्परम् ।
इममन्ते सामिषान्नं बलिं गृह्णपदन्ततः ॥६२॥
गृह्णगृह्णापय युगं विघ्ननिवारणं ततः ।
कुरु सिद्धिं मे समुक्त्वा प्रयच्छ स्वाहयान्वितम् ॥६३॥
ताराद्य मनुना देवि प्रथमो बलिरीरितः ।
मायान्ते भैरवात्पश्चाद् भयानकपदन्ततः ॥६४॥
पूर्ववद्बलिमाहृत्य दक्षिणे बलिमाहरेत् ।
हूमन्ते च महाकालात्पश्चात्पूर्ववदुद्धरेत् ॥६५॥
पश्चिमे कालदेवाय प्रणवाद्येन कल्पयेत् ।
शब्दान्ते कालशब्दान्ते भैरवान्ते पदन्ततः ॥६६॥
श्मशानाधिप इत्येवं पूर्ववच्चोत्तरे हरेत् ।
चितामध्ये ततो दद्याद्बलित्रयमनुत्तमम् ॥६७॥
कालरात्रि महाकाले कालिके घोरनिस्वने ।
गृहाणेमं बलिं मातर्देहि मे सिद्धिमुत्तमाम् ॥६८॥
हूँ कालिकायै स्वाहेति भूतनाथाय चार्पयेत् ।
शब्दान्ते भूतनाथान्ते गणनाधिप इत्यपि ॥६९॥
प्रणवाद्येन मन्त्रेण दापेयद् बलिमुत्तमम् ।
हूँ सर्वगणनाथ श्मशानाधिप इत्यपि ॥७०॥
प्रणवाद्येन मन्त्रेण दापेयद् बलिमुत्तमम् ।
ततश्चिता पश्चिमत एकीकृत्यास्थिसञ्चयम् ॥७१॥
ॐ ह्रीं आधारशक्तये नम इत्यमुना पुनः ।

पञ्चगव्येन सम्प्रोक्ष्य भूर्जे वा वटपत्रके ॥७२॥
हसौः इति लिखेन्मन्त्रं स्थापयेत्तत्र तत्पुनः।
कम्बलाद्यासनं तत्र विन्यस्याधारशक्तये ॥७३॥
नम इत्यमुना तत्र ह्रीमाद्याञ्च प्रपूजयेत्।
वीरार्द्दनेन देवेशि उपविश्यासने ततः ॥७४॥
कूर्चबीजद्वयं देवि मायायुग्मं ततः पदम्।
कालिके घोरद्रंष्ट्रे च प्रचण्डे चण्डनायके ॥७५॥
दानवान् दारयेत्युक्त्वा हरेति द्वितयन्ततः।
परवीरं महाविघ्नं छेदय द्वितयन्ततः ॥७६॥
वर्मास्त्रान्तो द्विठान्तोऽयं वीरार्द्दनमनुर्मतः।
अनेन मन्त्रितं लोष्ठं दशदिक्षु विनिक्षिपेत् ॥७७॥
तन्मध्ये भैरवो देवो न विघ्नैः परिभूयते।
यदि प्रमादाद्देवेशि साधको भयविह्वलः ॥७८॥
तैस्तैश्च सुहृद्भिश्च रक्षितो नाभिभूयते।
अर्केन्दुसितपद्मान्तमूलैर्निर्मितवर्त्तिकाम् ॥७९॥
प्रदीपं तत्र संस्थाप्य अस्त्रं तत्र प्रपूजयेत्।
हते तस्मिन् महादीपे विघ्नैश्च परिभूयते ॥८०॥
तदधश्चास्त्रमन्त्रेण निखनेत् कुलदीपकम्।
तत्तत्कल्पविधानेन भूतशुद्ध्यादिकं चरेत् ॥८१॥
षोढाम्बा तारकाम्बाऽपि विन्यस्य पूजयेत्ततः।
ततः पञ्चोपचारेण पुरतो देवतां यजेत् ॥८२॥
निमील्य चक्षुषी पश्चाद्देवं ध्यात्वा मनुं जपेत्।
एकाक्षरी यदि भवद्दिक्सहस्रं ततो जपेत् ॥८३॥
द्व्यक्षरे चाष्टसाहस्रं त्र्यक्षरे वाऽयुतार्धकम्।
ततः परन्तु मन्त्रज्ञो यजान्तकसहस्रकम् ॥८४॥
निशार्धात्तु समारभ्य उदयान्तं समाचरेत्।
यद्यसë भयं कर्णनेत्रे वस्त्रेण बन्धयेत् ॥८५॥
ततोऽर्धरात्रिपर्यन्तं यदि किञ्चिन्न लक्ष्यते।
जयदुर्गा मनुनाऽर्धं तेनैव सर्षपान् क्षिपेत् ॥८६॥
ॐ तिलोऽसि सोमदैवत्यो गोसवस्तृप्तिकारकः।
पितॄणां स्वर्गदाता त्वं मर्त्यानां मम रक्षकः ॥८७॥

भूतप्रेतपिशाचानां विघ्नेषु शान्तिकारकः।
इति क्षिप्त्वा तिलाँस्तत्र चतुर्भागैः निवारितः ॥८८॥
ततः सप्तपदं गत्वा पुनस्तत्रैव संविशेत्।
एवं तत्रापि सम्पूज्य प्रजपेन्मणिमुत्तमम् ॥८९॥
निर्भयः प्रजपेत्तावद्यावत्सिद्धिः प्रजायते।
भयं तु स्वप्नवज्ज्ञेयं परेऽह्नि शेषमाचरेत् ॥९०॥
जपान्ते च बलिं दद्याद्देवतायै यथाविधि ।
महिषं छागलं वाऽपि गृहीत्वा वरमेव च ॥९१॥
गृह्णन्गच्छेत्सुहृद्वर्गै सार्धं संहृष्टमानसः।

## अथ वीरसाधनम्

**श्रीदेव्युवाच**

देवेश श्रोतुमिच्छामि शवानां साधनं शिवे ॥९२॥
यैः कैश्चित् क्रियते वीरसाधनं सुसमाहितैः।
सम्प्राप्नोति परां सिद्धिं देवैरपि सुदुर्लभाम् ॥९३॥

**शिव उवाच**

काली तारा तथा छिन्ना चतुर्थी सुन्दरी मता।
एवं दशसु विद्यासु वीरसाधनमाचरेत् ॥९४॥
शैवे गाणपते चान्द्रे बौद्धे स्वायम्भुवे तथा।
वैष्णवेष्वपि देवेशि वीरसाधनकं न च ॥९५॥
वैदिकेऽप्याचरेद्देवि यदि वै तादृशो मनुः।
केरलेऽप्याचरेद्देवि यदि क्रूरो भवेन्नहि ॥९६॥
मुख्या तु साधना काल्यां तारायामपि कीर्तिता।
या काली सैव तारा स्याच्छिन्नायामपि सम्मता ॥९७॥
एवं पाशुपताद्येषु वीरसाधनमाचरेत्।
बगलाद्यासु विद्यासु वीरसाधनमाचरेत् ॥९८॥
वीरसाधनकं कर्म विहाय सिद्धिकामुकः।
स चक्षुषा विना रूपं दर्पणे द्रष्टुमिच्छति ॥९९॥
तस्मात्तु साधना मुख्या दशविद्यासु पार्वति।
सिद्धमन्त्रं पुरा कृत्वा वीरसाधनमाचरेत् ॥१००॥

सर्वेषां जीवहीनानां जन्तूनां फलमुद्भवेत् ।
तत्तत्सिद्धिप्रदे देवि वीरसाधनवर्जिते ॥१०१॥
अल्पाचारादधर्माच्च भ्रष्टत्वादपि पार्वति ।
कलौ पापसमाकीर्णे कस्य वै निश्चलं मनः ॥१०२॥
सर्वदोषसमायुक्तो वीरसाधनतः पुनः ।
स एव सिद्धिदो देवि नात्र कार्या विचारणा ॥१०३॥
न वै सिद्धिर्न वै सिद्धिर्यावत्साधनवान्न च ।
महापातकसंयुक्तो वीरसाधनसंयुतः ॥१०४॥
स एव सिद्धिदो लोको सर्वदेवनमस्कृतः ।
याममात्रेण संसिद्धिर्वीरसाधनयोगतः ॥१०५॥
अष्टम्यां च चतुर्दश्यां पक्षयोरुभयोरपि ।
बिल्वमूले प्रान्तरे वा शून्यागारे नदीतटे ॥१०६॥
समुद्रे विपिने घोरे श्मशाने चत्वरे तथा ।
गङ्गागर्भे तडागे च कामिनीमण्डलेऽपि च ॥१०७॥
एकलिङ्गे विशेषेण रणमध्ये विशेषतः ।
वीरवेषं समासाद्य वीरसाधनमाचरेत् ॥१०८॥
सिद्धमन्त्रं पुरः कृत्वा देवतादर्शनोत्सुकैः।
सार्धं यामोत्तरं देवि वीरसाधनमाचरेत् ॥१०९॥
पूर्ववत् तिलकं कृत्वा बलिद्रव्याणि सङ्ग्रहेत् ।
मन्त्रं वा साधयिष्यामि देहं वा पातयाम्यहम् ॥११०॥
प्रतिज्ञामीदृशीं कृत्वा बलिद्रव्याणि चाग्रहे ।
मेष-माहिष-मार्जार-छाग-कुक्कुट-कुञ्जरान् ॥१११॥
गुडपायससम्पातमोदकापूपलड्डुकान् ।
जम्बीरपनसादीनि नानास्वादूनि पार्वति ॥११२॥
फलानि वाऽऽहरेद्देवि ताम्बूलाद्यैः समन्वितः ।
जातीपत्रं फलं चैव कङ्कोलं विजयान्तथा ॥११३॥
कस्तूरी कुङ्कुमादीनि भक्ष्यद्रव्याणि यानि च ।
तानि सर्वाणि सङ्गृह्य यथोक्तस्थानमाचरेत् ॥११४॥
साधयेत्स्वहितां सिद्धिं साधनास्थानमाश्रयेत् ।
गुरुध्यानादिकं सर्वं पूर्वोक्तमाश्रयेत् सुधीः ॥११५॥
वीरार्द्दनाङ्कितभूमौ मायामोहो न विद्यते ।

ये चात्रेत्यादिमन्त्रेण भूमौ पुष्पाञ्जलित्रयम् ॥११६॥
श्मशानाधिपतीनान्तु पूर्ववद्बलिमाहरेत्।
अघोराख्येन मन्त्रेण बलिसाधनमाचरेत् ॥११७॥
सुदर्शनेन वा रक्षा रम्भाभ्यां वा प्रकल्पयेत् ॥११८॥
माया स्फुरद्द्वयं भूयः प्रस्फुरद्द्वितयं पुनः।
घोरघोरतरेत्यन्तं तदनुरूपपदं ततः ॥११९॥
चरयुग्मान्तरे देवि प्रचरद्वितयं ततः।
कहयुग्मं वमयुग्मं ततो बन्धुयुगन्ततः ॥१२०॥
घातयद्वितयं वर्म फडन्तः समुदाहृतः।
एकपञ्चाशदर्णोऽयमघोरास्त्रमयो मनुः ॥१२१॥
हालाहालं समुद्धृत्य सहस्रारस्वरूपकम्।
वर्मास्त्रान्तं महामन्त्रं सुदर्शनस्य कीर्तितम् ॥१२२॥
भूतशुद्धिं ततः कृत्वा न्यासवालं प्रविन्यसेत्।
जयदुर्गाख्यमन्त्रेण सर्षपान् दिक्षु निःक्षिपेत् ॥१२३॥
प्रणवञ्च ततो दुर्गे दुर्गे च रक्षणीति च।
वह्निजायान्तको मन्त्रो जयदुर्गाख्य ईरितः ॥१२४॥
तिलोऽसीति च मन्त्रेण तिलानपि विनिःक्षिपेत्।
यष्टिविद्धं शूलविद्धं खड्गविद्धं पयोऽमृतम् ॥१२५॥
रज्जुविद्धं सूर्यदष्टं चाण्डालं वाऽभिभूतकम्।
तरुणं सुन्दरं शूरं रणे नष्टं समुज्ज्वलम् ॥१२६॥
पलायनं विशून्यं च सम्मुखे रणवर्तिम्।
स्वेच्छामृतं द्विवर्षं च वृद्धं स्त्रियं द्विजं तथा ॥१२७॥
अन्नाभावमृतं कुष्टं सप्तरात्र्यूर्ध्वगं तथा।
एवं चाष्टविधं त्यक्त्वा पूर्वोक्तान्यतमं शिवम् ॥१२८॥
गृहीत्वा मूलमन्त्रेण पूजास्थाने समानयेत्।
चाण्डालाद्यभिभूतं वा शीघ्रं सिद्धिफलप्रदम् ॥१२९॥
प्रणवाद्यस्त्रमन्त्रेण शवस्य प्रोक्षणं चरेत्।
प्रणवं कूर्चबीजञ्च मृतकाय नमस्तु फट् ॥१३०॥
पुष्पाञ्जलित्रयं दत्त्वा प्रणमेत् स्पर्शपूर्वकम्।
रे वीर परमानन्द शिवानन्द कुलेश्वर ॥१३१॥
आनन्दभैरवाकार देवीपर्यङ्क शङ्कर।

वीरोऽहं त्वां प्रपद्यामि उत्तिष्ठ चण्डिकार्चने ॥१३२॥
प्रणम्य तेन मन्त्रेण क्षालयेत्तदनन्तरम्।
तारं शब्दं मृतकाय नमोऽन्तं मन्त्रमुच्यते ॥१३३॥
शवस्नापनमन्त्रोऽयं सर्वतन्त्रेषु दर्शितः।
धूपेन धूपितं कृत्वा गन्धादिना प्रलिप्य च ॥१३४॥
रक्ताक्तो यदि देवेश भक्षयेत् कुलसाधकम्।
गत्वा शवस्य सान्निध्यं धारयेत् कटिदेशतः ॥१३५॥
यद्युपद्रावयेदस्य दद्यान्निष्ठीवनं मुहुः।
पुनः प्रक्षालितं कृत्वा जपस्थानं समानयेत् ॥१३६॥
कर्पूरवासितं कूपं त्रिगन्धाष्टौ च पञ्च च।
षोडशाङ्गं दशाङ्गं वा अष्टादशसमन्वितम् ॥१३७॥
श्रीखण्डधूपो देवेशि तथा चागुरुसम्भवः।
गुग्गुलुर्लोहबाणश्च रालश्च देवदारुकः ॥१३८॥
लाक्षा गुडश्च वा देवि गोघृतं शर्करा च वा।
मांसी नखी च वा देवि कर्पूरमेकमेव च ॥१३९॥
श्रीखण्डमगुरुं वाऽपि गन्धसारे शिलारसम्।
दशविद्याक्रमेणैव कीर्तिता ये मया तव ॥१४०॥
देवदारुमयो धूपः सर्वभूतविनाशकः।
एवं सम्धूप्य यत्नेन खड्गहस्तो भवेद्ध्रुवम् ॥१४१॥
मुक्तकेशो दिशावासो दूरे चोत्तरसाधकान्।
दीपं प्रज्वाल्य यत्नेन न चेद्विघ्नैः समाकुलः ॥१४२॥
कुशशय्यां परिष्कृत्य तत्र संस्थापयेच्छवम्।
एलालवङ्गकर्पूरजातिखदिरसारकैः ॥१४३॥
ताम्बूलं तन्मुखे दत्त्वा शवं कुर्यादधोमुखम्।
स्थापयित्वा तस्य पृष्ठं चन्दनेन विलेपयेत् ॥१४४॥
बाहुमूलादिकट्यन्तं चतुरस्रं विभावयेत्।
मध्ये पद्मं चतुर्द्वारं दलाष्टकसमन्वितम् ॥१४५॥
ततश्चैणेयमजिनं कम्बलोत्तरितं न्यसेत्।
द्वादशाङ्गुलमानेन यज्ञकाष्ठानि दिक्षु च ॥१४६॥
संस्थाप्य पूजयेत्तत्र इन्द्रादिदशदेवताः।
विषमिन्द्राय संलिप्य सुराधिपतये ततः ॥१४७॥

इमं बलिं गृह्णयुग्मं गृह्णापय युगं ततः।
विघ्ननिवारणं कृत्वा सिद्धिं प्रयच्छ ठद्वयम् ॥१४८॥
अनेन मनुना पूर्वे बलिं दद्याच्च सामिषम्।
स्वस्वनामादिकं दत्त्वा पूर्ववद् बलिमाहरेत् ॥१४९॥
सर्वेषां लोकपालानां ततः साधकसत्तमः।
शवाधिष्ठानभूतेभ्यो बलिं च सुरया सह ॥१५०॥
चतुःषष्टियोगिनीभ्यो डाकिनीभ्यो बलिं दिशेत्।
पूजाद्रव्यं सन्निधौ च दूरे चोत्तरसाधकम् ॥१५१॥
संस्थाप्यासनमभ्यर्च्य स्वमन्त्रान्ते त्रपान्ततः।
फडित्यन्तेन मन्त्रेण तत्राश्वारोहणं विशेत् ॥१५२॥
कुशान् पादतले दत्त्वा शवकेशान् प्रमार्ज्य च।
दृढं निबध्य गुटिकां कृतसङ्कल्पसाधकः ॥१५३॥
शवोपरि समारुह्य प्राणायामं विधाय च।
वीरार्द्दनेन मन्त्रेण दिक्षु लोहान् समाक्षिपेत् ॥१५४॥
ततो देवञ्च सम्पूज्य उपचारै सुविस्तरैः।
शवास्ये विधिवद्देवि देवस्याप्यायनं चरेत् ॥१५५॥
उत्थाय सम्मुखे स्थित्वा पठेद् भक्तिपरायणः।
ॐ वशो मे भव देवेश ममाऽमुकपदं ततः ॥१५६॥
सिद्धिं देहि महाभाग भूताश्रयपदं पुनः।
मूलं समुच्चरन्मन्त्री शवपादद्वयं ततः ॥१५७॥
पट्टसूत्रेण बध्नीयात्तदोत्थातुं न शक्यते।
ॐ भीमभीरुभयाभाव भव्यलोचनभावुकः ॥१५८॥
महिमां देव देवेश शवानामधिपाधिपः।
इति पादतले तस्य त्रिकोणं चक्रमुल्लिखेत् ॥१५९॥
तदोत्थातुं न शक्नोति शवोऽपि निश्चलो भवेत्।
उपविश्य पुनस्तस्य बाहुं निस्सार्य पार्श्वयोः ॥१६०॥
हस्तयोः पुष्पमास्तीर्य पादौ तत्र निधापयेत्।
ओष्ठौ तु सम्पुटौ कृत्वा स्थिरचित्तः स्थिरेन्द्रियः ॥१६१॥
सदा देवान् हृदि ध्यात्वा मौनी तु जपमाचरेत्।
श्मशाने प्रोक्तसंख्याभिः जपं कुर्यात् कुलेश्वर ॥१६२॥
अथवाऽऽरम्भकालात्तु यावच्चोदयते रविः।

यद्यर्धरात्रपर्यन्तं जप्ते किञ्चिन्न लक्ष्यते ॥१६३॥
तदा पूर्ववदर्घ्यादि समयादागतानि च।
कृत्वोपविश्य तत्रैव जपं कुर्यादनन्यधीः ॥१६४॥
चलासनाद् भयं नास्ति भये जाते वदन्ततः।
यत् प्रार्थयसि देवेशि दातव्यं कुञ्जरादिकम् ॥१६५॥
दिनान्तरे प्रदास्यामि स्वनाम कथयस्व मे।
इत्युक्त्वा संस्कृतेनैव निर्भयस्तु पुनर्जपेत् ॥१६६॥
पुनश्चेन्मधुरं वक्ति वक्तव्यं मधुरन्ततः।
तदा सत्यञ्च सत्कार्यं वरं च प्रार्थयेत्ततः ॥१६७॥
यदि सत्यं न कुर्याच्च वरं वा न प्रयच्छति।
तदा पुनर्जपेद् धीमानेकाग्रमानसो जपन् ॥१६८॥
नररूपेणात्र देवो नरो यो वाऽपसर्पति।
यत्नतस्तेन बोद्धव्यं नरो वा देवयोनयः ॥१६९॥
माता च तत्सुता वाऽपि मातुलानि तथाऽपि वा।
आगत्य विघ्नञ्चरते माययाऽऽच्छाद्य विग्रहम् ॥१७०॥
उत्तिष्ठ वत्स ते कार्यं सर्वं ज्ञातं न संशयः।
प्रभातसमयो जातस्तत्पिता क्रोशते गृहे ॥१७१॥
प्रायेण सकला लोका राजानो दण्डधारिणः।
कदाचित् केनाप्यादिष्टस्तदा भिन्ने करिष्यति ॥१७२॥
इत्यादिविविधैर्वाक्यैर्न जापं परिसन्त्यजेत्।
मृता पितृगणास्तत्र दूरदेशनिवासिनः ॥१७३॥
बान्धवास्तत्र आयान्ति देवरूपधरास्ततः।
स्त्रीपुत्रसेवकादींश्च[1] गृहीत्वा नीयते परैः ॥१७४॥
वदन्ति पुत्रकाः सर्वे भ्रातरोऽनुजाः स्वकाः।
निजकान्ताङ्गसंस्पर्शं वस्त्राद्याभरणादिकम् ॥१७५॥
गृहीत्वा नीयते पत्नीपालकैस्तद्भयं त्यजेत्।
दिवसे यत्र या शङ्का सैव तत्र प्रजायते ॥१७६॥
यदि न क्षुभ्यते तत्र तदा किं वा न लभ्यते।
स्त्रीरूपधारिणी देवी द्विजरूपधरः पुमान् ॥१७७॥
वरं गृह्णेति शब्दं वै त्रिवारान्ते वरं लभेत्।

१ स्त्रीपुत्रसेवकादिश्च पाठो=न्यत्र।

साधुना साधुना वाऽपि योषिच्चेद्वरदायिनी ॥१७८॥
तदा वीरपतेस्तस्य किन्न सिद्ध्यति भूतले।
निष्पापः पुरुषश्चैव कुले चैव सुसंस्कृतः ॥१७९॥
असंस्कृतवरा देवी पापयुक्ता न संशयः।
सम्मुखं सम्मुखे वाऽपि संस्कृतं वक्ति चापरम् ॥१८०॥
सैव देवी न सन्देहः स देवो भैरवः स्वयम्।
न चेद्देवं भवेच्चैव मायापूरितविग्रहात् ॥१८१॥
वरं यत्र वरं तत्र न वरं प्रवदेत् क्वचित्।
स चेत् संस्कृतमाख्यातं वक्त्रे वक्तव्यमीदृशम् ॥१८२॥
न चेत्स्वयं लौकिकोक्त्या वरं ग्राह्यं निराकुलम्।
अथवा उत्कटं किञ्चिल्लभेताप्यत्मनो हितम् ॥१८३॥
शब्दो वा जायते सम्यगमृतं वाऽपि लभ्यते।
सर्वं विचार्य ग्रहीतव्यमेवं दिक् परिकीर्तिता ॥१८४॥
अवश्यं तत्र भेतव्यं न तत्र प्रत्ययः क्वचित्।
भैरवा वटुकाश्चैव कुलशास्त्रपरायणाः ॥१८५॥
एतच्छास्त्रप्रसङ्गेन कृत्वा कुटिलविग्रहाः।
पुत्रो भूत्वा वरयेत् तं नारी भूत्वा विमोहयेत् ॥१८६॥
तस्मात्तत्त्वपरो वीरो विचारे[२] यत्नमाचरेत्।
सत्ये कृते परं लब्ध्वा सन्त्यजेच्च जपादिकम् ॥१८७॥
जप्तं फलमिति ज्ञात्वा जुटिकां[३] मोचयेत्ततः।
सम्प्रक्षाल्य च संस्थाप्य बन्धनं मोचयेत् पदे ॥१८८॥
पदचक्रं मार्जयित्वा पूजाद्रव्यं जले क्षिपेत्।
शवं जलेऽथ गर्ते वा निक्षिप्य स्नानमाचरेत् ॥१८९॥
ततस्तु स्वगृहं गत्वा बलिं दत्त्वा दिनान्तरे।
अग्रिमरात्रौ तु येषां देवानां यजमानोऽहम् ॥१९०॥
ते गृह्णन्तु मया दत्तमिमं बलिमनुत्तमम्[४]।
अथ यैर्याचितश्चाश्वनरकुञ्जरशूकरान् ॥१९१॥
दत्त्वा पिष्ठमयानेव कर्तव्यं समुपोषणम्।
यवक्षोदमयं वापि शालिक्षोदमयं च वा ॥१९२॥

२ आचारे पाठो=न्यत्र
३ गुटिकां पाठो मा. ख।
४ सामिषाम् पाठो=न्यत्र।

चन्द्रहासेन विधिवत्तत्तन्मन्त्रेण घातयेत्।
परिद्धि नित्यमाचर्य पञ्चगव्यं पिबेत्ततः ॥१९३॥
ब्राह्मणान् भोजयेत्तत्र पञ्चविंशतिसंख्यकान्।
पञ्च पञ्च विहीनाद्वा[५] क्रमाच्चैव दशावधि ॥१९४॥
ततः स्नात्वा च भुक्त्वा च निवसेदुत्तमस्थले।
यदि न स्याद् विप्रभोज्यं तदा निर्धनतां व्रजेत् ॥१९५॥
तेन चेन्निर्धनत्वं स्यात्तदा देवः प्रकुप्यति।
त्रिरात्रं वाऽथ षड्रात्रं गोपयेत् कुलसाधनम् ॥१९६॥
शय्यायां यदि गच्छेद्वै तदा व्याधिः प्रजायते।
गीतं श्रुत्वा च बधिरो निश्चक्षुर्नृत्यदर्शनात् ॥१९७॥
यदि वक्ति दिने वाक्यं तदा स मूकतां व्रजेत्।
पञ्चदशदिनान्ताद्धि देहे देवस्य संस्थितिः ॥१९८॥
गोब्राह्मणानां देवानां निन्दां कुर्यान्न कुत्रचित्।
देवगोब्राह्मणादींश्च प्रत्यहं तु स्पृशेच्छुचिः ॥१९९॥
प्रातर्नित्यक्रियान्ते तु बिल्वपत्रोदकं पिबेत्।
ततः स्नायान्तु तीर्थादौ प्राप्ते षोडशवासरे ॥२००॥
स्वाहान्तं मूलमुच्चार्य तर्पयामि नमस्पदम्।
एवं शत[६]त्रयादूर्ध्वं देवानां तर्पणं जलैः ॥२०१॥
मुनिं तर्पणशून्यस्य न स्याद्देवस्य तर्पणम्।
इत्यनेन विधानेन सिद्धिं प्राप्नोति निश्चितम् ॥२०२॥
इह भुक्त्वा वरान् दिव्यानन्ते याति हरेः पदम्।
अनङ्गं साङ्गमपि वा निष्फलं सफलं च वा ॥२०३॥
कृत्वा साधनमेवैतत् शक्तेः प्रियतमो भवेत्।
शवाभावे श्मशाने वा कर्तव्या वीरसाधना ॥२०४॥
यो भावो यस्य यः प्रोक्तस्तद्भावैर्यदि नार्चयेत्।
ईदृशः क्रमयोगेन भ्रष्टो भवति साधकः ॥२०५॥
नोपदिशेत्तत्र भावं न पूजां तत्र सन्दिशेत्।
श्मशानान्तं गृहीत्वा तु यावच्छुद्धिः प्रजायते ॥२०६॥

---

५ गृहीतान् पाठो=न्यत्र।

६ पद पाठो=न्यत्र।

अथवा प्रकारान्तरेण वीरसाधनं कुर्यात्।
श्रृणु देवि वरारोहे वीरसाधनमुत्तमम्।
नृणां शीघ्रं फलावाप्त्यै प्रकारान्तरमुच्यते ॥२०७॥
चतुष्पथे चतुर्दिक्षु पुरुषं हृदयं खनेत्।
दीपमेकं ब्रह्मरन्ध्रे दीपान् प्रज्वालयेत्ततः ॥२०८॥
मध्ये तथा खनेदेकं तत्र मृद्वासनं विशेत्।
महाकालादिदेवेभ्यो बलिं दत्त्वा यथाविधि ॥२०९॥
कल्पोक्तपूजां निर्वर्त्त्य जपेन्नियतमानसः।
दन्ताक्षमालया चैव राजदन्तेन मेरुणा ॥२१०॥
दिग्वासः प्रजपेन्मन्त्रमयुतं सर्वदैवतम्।
जपान्ते च बलिं दद्याद्दक्षिणां विभवावधि ॥२११॥
अथवा विजनेऽरण्ये अस्थिशØयासने नरः।
उदयान्तं मनुं जप्त्वा सर्वसिद्धीश्वरो भवेत् ॥२१२॥
निजक्रोडे बिल्वमूले शवमारोप्य यत्नतः।
नृसिंहमुद्रया वीक्ष्य जपेन्मातृकया नरः ॥२१३॥
सहस्रं तत्र जप्त्वा तु सर्वसिद्धीश्वरो भवेत्।
करकाञ्चीं समादाय मुण्डमालाविभूषितः ॥२१४॥
तेनैव तिलकं कृत्वा तद्भष्मपरिभूषितः।
श्मशाने च सकृज्जप्त्वा सर्वसिद्धीश्वरो भवेत् ॥२१५॥
कुङ्कुमागुरुकस्तूरीरोचनाश्चैव चन्दनम्।
एकत्र साधितं कृत्वा प्रत्येकं साधयेत्ततः ॥२१६॥
जिह्वाग्रे रुधिरं वीरः आकाशे च समाहरेत्।
तेनैव चटिकां कृत्वा भद्रकालीमनुं जपेत् ॥२१७॥
नीलां नीलपताकाञ्च ललज्जिह्वां करालिकाम्।
ललाटे तिलकं कृत्वा साधको वीरभीः स्वयम् ॥२१८॥
महाष्टमीनवम्योश्च संयोगे पुरतः स्थितः।
छागमाहिषमेषाणां चतुर्दिक्षु यवान् क्षिपेत् ॥२१९॥
कबन्धान् मुण्डपुच्छं च दीपादिभिरलङ्कृतम्।
मध्ये कबन्धमास्तीर्य तत्र गन्धर्वरूपधृक् ॥२२०॥
ताम्बूलपूरितास्यं च अञ्जनाञ्चितलोचनम्।
कृत्वाऽऽत्मानं मनुं जप्त्वा सर्वसिद्धीश्वरो भवेत् ॥२२१॥

वियद्वह्नियुतं देवि नेत्रान्तं चन्द्रभूषितम्।
बीजं प्रत्येकद्रव्याणां मिलितानाञ्च पार्वति ॥२२२॥
मूलमन्त्रेण मन्त्रज्ञो जपेत् साग्रं शतत्रयम्।
जिह्वाग्रे रुधिरं गृह्णञ्चामुण्डे घोरनिःस्वने ॥२२३॥
बलिं गृहीत्वा वरं देहि रुधिराङ्गणनिर्मले।
कालि कालि प्रचण्डाग्रे ततोऽस्त्रं कवचं ततः ॥२२४॥
कालिकेयं समाख्याता वीराणां हितकाम्यया।
कूर्चयुग्मं महादेवि लीलायाः कथितं तव ॥२२५॥
वियद्भृगुबलं देवि बला मित्रवती रतिः।
चन्द्रखण्डसमायुक्तं ततो नीलपदं वदेत् ॥२२६॥
पताके हूँ-फडन्तः स्यात् पूर्वकूटो मनुर्मतः।
संगुप्तेयं महाविद्या तव स्नेहादिहोदिता ॥२२७॥
उग्रचण्डा महाविद्या पुरा या कथिता प्रिये।
सा ललज्जिह्विका प्रोक्ता संयोज्य नीलसाधने ॥२२८॥
योऽसौ विद्या महातारा सा करालेति कीर्तिता।
भूमिपुत्रसमायुक्ता याऽमावास्या शुभप्रदा ॥२२९॥
भद्रे पुष्करयोगेन तस्यां वीरेश्वरोत्तमः।
विष्णुक्रान्तां समानीय निःक्षिपेन्मृतभूमिषु ॥२३०॥
तत्र तां साधितां कृत्वा तद्दिने मृतहट्टके।
तत्र प्रसाधितं मत्स्यमेकशूलेन दापयेत् ॥२३१॥
तज्जले नाभिषेकञ्च पूर्ववच्च शवोपरि।
साधितां विजयां तस्य उदरे मुखवर्त्मना ॥२३२॥
क्षिप्त्वा तत्र खनेन्मत्स्यं अञ्जनाञ्चितलोचनम्।
कीलकीपूर्वद्रव्येण उत्थाय च मनुं जपेत् ॥२३३॥
स्वयं वै तत्र भगवान् भैरवो लगुडाङ्कितः।
भ्रमतीतस्ततो वीरस्तद्विलोक्य मनुं जपेत् ॥२३४॥
यदि भाग्यवशाद्देवि लगुडस्तत्र लभ्यते।
तदा स्वयं भैरवोऽसौ स्वयं वीरेश्वरो भवेत् ॥२३५॥
मत्स्यमानीय देवेशि निःक्षिपेन्मृतहट्टके।
तत्रासकृज्जपित्वा तु देवतामेलनं भवेत् ॥२३६॥
तत्र नत्वा महादेवं महादेवीं च भामिनि।

तद्भष्मतिलकं कृत्वा स्वयं वीरेश्वरो भवेत् ॥२३७॥
निशायां मृतहट्टे च उन्मत्तानन्दभैरव ।
दिग्वासा विमलीभष्मभूषणो मुक्तकेशकः ॥२३८॥
कपाली खड्गहस्तश्च जपेन्मातृकया यदि ।
तदा तस्य महादेवि सर्वसिद्धिः करे स्थिता ॥२३९॥
डाकिनीं योगिनीं चापि अन्यां वाऽपि कुलाङ्गनाम् ।
आनीय तत्र सम्पूज्य सर्वसिद्धीश्वरो भवेत् ॥२४०॥
सर्वेषां जीवहीनानां जन्तूनां नीलसाधने ।
ब्राह्मणं गां स्त्रियं त्यक्त्वा साधयेद् वीरसाधनम् ॥२४१॥
मृतासनं विना देवि पूजयेत् पार्वतीं शिवाम् ।
तावत्कालं वसेद् घोरे यावदाहूतसंप्लवम् ॥२४२॥
महासवाः प्रशस्ताः स्युः प्रधाने साधने प्रिये ।
क्षुद्राः प्रयोगकर्तॄणां शस्ताः सर्वाः सुसिद्धिदाः ॥२४३॥
एवं नीलक्रमो देवि कथितश्च तवानघे ।
न कस्यचित्प्रवक्तव्यं मम प्रीत्या महेश्वरि ॥२४४॥
अथवाऽन्यप्रकारेण साधनं कथयामि ते ।
जपस्थानं तु संशोध्य खननादिप्रयत्नतः ॥२४५॥
तन्मध्ये च बलिं दद्याल्लिखेद्यन्त्रं त्रिकोणकम् ।
तन्मध्ये च महाशङ्खं निवेश्य मुण्डपञ्चकम् ॥२४६॥
तत्रोपरि महाप्रेतं अखण्डाङ्गं सुशोभनम् ।
उद्वर्तनादिकं कुर्यात् स्नापयेद् विधिपूर्वकम् ॥२४७॥
परिधाय रक्तवस्त्रं नेत्राञ्जनं समीरितम् ।
ताम्बूलादि मुखे दद्याल्ललाटे रक्तचन्दनम् ॥२४८॥
हृदये च लिखेद्यन्त्रं पद्ममध्ये त्रिकोणकम् ।
पूजायन्त्रं ललाटे च शस्त्रेण विलिखेत्ततः ॥२४९॥
मूर्ध्नि बाहौ तथा हस्ते पादे चैव तथा करौ ।
खदिरादीनि काष्ठानि कीलान्यारोपयेत् सुधीः ॥२५०॥
रज्जुकं बन्धयेत्तत्र दृढबन्धेन बन्धयेत् ।
षट्पात्रेषु बलिं दद्यात् कीले कीले पृथक् पृथक् ॥२५१॥
माषं मांसं तथा मत्स्यं पायसं त्रिविधां सुराम् ।
मोदकञ्च तथाऽपूपं दुग्धेनोत्सर्गमाचरेत् ॥२५२॥

क्रोधीशं वह्निमारूढं तूर्यस्वरसबिन्दुकम्।
वर्मबीजं समुच्चार्य श्मशानकालिकेति च ॥२५३॥
पूर्वबीजं समालिख्य अस्त्रान्तो मन्त्र उत्तमः।
मायाबीजं समुच्चार्य श्मशानभैरवाय च ॥२५४॥
महाकालाय देवाय सर्वविघ्नहरो भवेत्।
श्मशानवासिनो भद्रा अस्थिमांसबलिप्रियाः ॥२५५॥
विघ्नं निवारय सम्यग् बलिं गृह्णन् द्विधा पुनः।
विघ्नं निवारय युग्मं वरं चैव प्रयच्छ मे ॥२५६॥
द्विठान्तो मन्त्र इत्युक्तो बलियुग्मविधानतः।
माया लज्जा तथा लक्ष्मीर्लाङ्गलीशत्रयं लिखेत् ॥२५७॥
नारायणस्तथा सूक्ष्मं परन्तु मधुसूदनः।
योगिनीभ्यः पदं पश्चात् श्मशानवासिनीति च ॥२५८॥
प्रचण्डा चण्डरूपायै कर्त्री खर्परधारिणी।
बलिं गृह्णापय युगं सर्वविघ्नं निवारय ॥२५९॥
वरं देहि पदं ब्रूयाद् द्विठान्तं योगिनीबलिः।
रौद्रं वह्निसमारूढं चतुर्दशस्वरान्वितम् ॥२६०॥
बिन्दुनादकलाक्रान्तं क्षेत्रपालञ्च ङेन्तकम्।
श्मशानवासिने ब्रूयाच्छोणितास्थिप्रियाय च ॥२६१॥
द्विठान्तं मन्त्रमुच्चार्य क्षेत्रपालबलिं हरेत्।
वाराहीबीजमुद्धृत्य बीजपञ्चान्तकं पुनः ॥२६२॥
वक्रतुण्डायेति पदं वर्म चैव समुद्धरेत्।
बलिं गृह्ण पदं ब्रूयाद्विघ्नं निवारयेति च ॥२६३॥
सिद्धिं प्रयच्छ मे चैव अस्त्रान्तो मनुरुत्तमः।
पात्रस्याऽऽसादनं कुर्यान्मदिरानन्दविग्रहः ॥२६४॥
हृदयोपरि महावीर शक्तिं चैव शवोपरि।
विवस्त्राञ्च मुक्तकेशीं कर्त्रीं खर्परधारिणीम् ॥२६५॥
प्रक्षाल्य कुलद्रव्येण कुलचक्रं प्रपूजयेत्।
धूपदीपादिनैवेद्यैः पञ्चभूतबलिं हरेत् ॥२६६॥
यथाशक्ति जपं कुर्यान्मूलमन्त्रं समर्पयेत्।
विपरीतरता नारी मैथुनञ्च शवोपरि ॥२६७॥
अयुतं च जपेत्तत्र सर्वसिद्धीश्वरो भवेत्।

यदा वै भयभीतोऽसौ भक्षयन्ति च तत्क्षणात् ॥२६८॥
देहि देहि यदा ब्रूयात्तदा छागबलिं हरेत् ।
बलिदानं विना हिंसा न कर्तव्या कदाचन ॥२६९॥
पुरश्चरणयुङ्मन्त्रसिद्धिर्भवति निश्चितम् ।
कालीताराछिन्नमस्तावीरसाधनमार्गतः ॥२७०॥
याममात्रेण सिद्धिः स्यान्नात्र कार्या विचारणा ।
साधनारहिते देवि वर्णलक्षत्रयं जपेत् ॥२७१॥
कालिका सिद्धिदा प्रोक्ता तारा स्याच्छैवतत्त्वकैः ।
छिन्नमस्ता चतुःषष्टिलक्षजापेन सिद्ध्यति ॥२७२॥
चतुरशीतिलक्षैस्तु सुन्दरी सिद्धिदा क्वचित् ।
बाला कोट्यर्धजापेन बगला पञ्चसप्ततिः ॥२७३॥
श्रीमहाराजमातङ्गी वर्णलक्षैस्तु सिद्ध्यति ।
सिद्धा विद्या महेशानि मासलक्षैः प्रसिद्ध्यति ॥२७४॥
महालक्ष्मीश्च भुवना तथा धूमावती प्रिये ।
मासलक्षेणैव सिद्धा भवत्येव न संशयः ॥२७५॥

*इति श्रीतन्त्रचिन्तामणौ मन्त्रसिद्ध्युपायपूर्वकचितावीरसाधनभेदान्तनिर्णयनाम द्वात्रिंशत्तमः प्रकाशः ।*



# त्रयस्त्रिंशत्तमः प्रकाशः

नित्यं नैमित्तिकं काम्यं सापेक्षं पूर्वपूर्वतः ।
अन्यथा चिन्तयेदित्थं कुर्यादापत्परं परम् ॥१॥
नित्याचाररतो मन्त्री कुर्यान्नैमित्तिकार्चनम् ।
नैमित्तिकार्चनं सिद्धः कुर्यात् काम्यमखण्डितम् ॥२॥[1]

## अथ नैमित्तिकमाह

**श्रीमहाकाल उवाच**
एतावान्नित्यपूजाया विधिरुक्तो मया तव ।
नैमित्तिकानि काम्यानि साम्प्रतं त्वं निशामय ॥३॥
निमित्तं किञ्चिदुद्दिश्य यदाऽऽयाति सुरेश्वरि ।
तन्नैमित्तिकमुद्दिष्टं नित्यवत्तदपि प्रिये ॥४॥
कामनां कामपि स्वीयां चित्ते कृत्वा प्रवर्तते ।
तत्काम्यमिति निर्दिष्टं कामना फलसाधकम् ॥५॥
तत्रापि प्रथमं वक्ष्ये कर्म नैमित्तिकं शिवे ।
नैमित्तिका अपि प्रायो विज्ञेया नित्यवद्बुधैः ॥६॥
यस्तु नैमित्तिकीं पूजां निमित्तत्वैरूपस्थिताम् ।
कुरुते नित्यपूजावदज्ञानपरिबृंहितः ॥७॥
तस्मात् पापो नरे को वा कालिकाद्वेषभाजनः ।
अङ्गहान्यपि नित्यस्य न हानिरूपकल्प्यते ॥८॥
नैमित्तिकस्याङ्गहानिः फलहानिः प्रजायते ।
तस्मात् साङ्गं प्रकर्तव्यं शास्त्रं दृष्ट्वा गुरुक्रमैः ॥९॥
अङ्गानि कानिचिच्चास्याः पात्राधिक्यं शिवावलिः ।
पञ्चायतनरीतिश्च मन्त्रपार्थक्यमेव च ॥१०॥
पूजावलिः पशुबलिः पूजायाः क्रममेव च ।

---

१ नित्यं नैमित्तिकमित्यतः काम्यमखण्डितमित्यन्तो भागो मा. ख न प्राप्यते । नैमित्तिकमित्यादिकं सर्वं ३४ प्रकाशे पठ्यते । मा. ख उक्तश्लोकद्वयं श्लोकः १४ पश्चात्पठ्यते ।

धूपदीपादिसम्भारः शक्तिपूजा जपो दशः ॥११॥
नित्यपूजासु सन्त्येव यद्यप्येतेषु केचन ।
स्यान्नित्यनैमित्तिकयोर्भिन्नारीतिस्तथापि हि ॥१२॥
शरद्वासन्तिकी पूजा तथा चैवोपरागिकी ।
निमित्तत्वेनाभ्युपेता तेन नैमित्तिकी मता ॥१३॥
एतयोरननुष्ठानाज्जायते न च नित्यता ।
नानातन्त्रोदिताः सन्ति प्रधानस्तत्र तन्मतम् ॥१४॥
एवं सर्वत्र बोद्धव्यं सर्वेष्वेव निमित्तिषु ।
शुद्धा नैमित्तिकी पूजा प्रोक्ता विंशतिभेदिका ॥१५॥
पर्वाणि च महायाता व्यतिपातः स वै धृतः ।
मन्वादयो युगाद्याश्च वेदाङ्गं देवता भवम् ॥१६॥
पुष्याश्च रविवारश्च त्रिगुरूणां स्वकीयकम् ।
जन्माहश्चापि दीक्षाया दिवसं नवरात्रके ॥१७॥
चन्द्रसूर्योपरात्रौ च सुतसंस्कार एव च ।
तीर्थयात्राभिगमनं तथा चाऽऽगमनान्तरम् ॥१८॥
पीठे पीठागमे पुण्यलाभे होमे व्रतोत्सवे ।
उत्पातानां दर्शनञ्च बन्धमोक्षौ रिपून्नतिः ॥१९॥
रोगेष्वापत्सु दोषेषु दुःसङ्गे दुर्निमित्तके ।
ग्रहपीडा राजभयं शान्तिरभ्युदयस्तथा ॥२०॥
एवं नानाप्रकारेण निमित्तानीरितानि ते ।
दमनारोपणं नाम पवित्रारोहणन्तथा ॥२१॥
अन्तर्भवन्ति कृत्येषु तिथीनामेव पार्वति ।
तिथिपर्वाणि कथ्यन्ते येषु नैमित्तिकार्चनम् ॥२२॥

## अथ कुलवारादिनिर्णयः

कुलवारे कुलाष्टम्यां चतुर्दश्यां विशेषतः ।
योगिनीपूजनन्तत्र प्रधानं कुलपूजनम् ॥२३॥
रविश्चन्द्रो गुरुः सौरिश्चत्वारस्त्वकुला मताः ।
भौमशुक्रौ कुलाख्यौ तु बुधवारः कुलाकुलः ॥२४॥
द्वितीया दशमी षष्ठी कुलाकुलमुदाहृतम् ।
कुलानि समधिष्ठ्यानि तच्छेषन्यकुलानि तु ॥२५॥

अष्टमी नवमी चैव तथा चैव चतुर्दशी ।
उभयोः पक्षयोरेताः पूर्णिमा दर्श एव च ॥२६॥
एवं क्रमाद् द्वादश तथा चत्वारस्तेष्वपीरिताः ।
अयने द्वे द्वे विषुवे षडशीति चतुष्टयम् ॥२७॥
चतुष्कं विषुवत्याश्च नैते पूर्वसमाः प्रिये ।
आद्येश्वराणां चत्वारो द्विरूपाणां ततः परम् ॥२८॥
ततः स्थिराणां तावन्तो येषां पुण्योदयः शुभः ।
व्यतिपातो वैधृतिश्च तिथीनां क्षय एव च ॥२९॥
चतस्रोऽपि युगाद्यास्ता महापुण्यफलप्रदाः ।
शुक्ला तृतीया राधीया तादृगुर्जनवम्यपि ॥३०॥
भाद्री त्रयोदशी कृष्ण तापसा दर्श एव च ।
शुक्ला वा सप्तमी कृष्णा रविवारेण संयुता ॥३१॥
सोमान्विताप्यमावास्या चतुर्थी भौमसंयुता ।
अष्टमी सौम्यसहिता दशमी गुरुणापि च ॥३२॥
षष्ठी भार्गवसंयुक्ता शनिना च त्रयोदशी ।
वैशाखी सप्तमी शुक्ला ज्यैष्ठीया च चतुर्थ्यपि ॥३३॥
ज्येष्ठस्य शुक्ला षष्ठी च दशमी गुरुणापि च ।
श्रावणी पञ्चमी कृष्णा शुक्ला पञ्चम्यपि प्रिये ॥३४॥
द्वितीया तिथिमारभ्य तिथिः स्याद्यावदष्टमी ।
शुक्लपक्षे तु भाद्रस्य तिथयः सप्त पुण्यदा ॥३५॥
सामान्येनाष्टमीत्वेन पर्वत्वे प्रत्युपस्थिते ।
दुर्वाष्टमी विशेषेण दुर्गाप्रीतिप्रदा तिथिः ॥३६॥
दुर्वाङ्कुरारोपणाख्यं मौलेया अत्र कुर्वते ।
आरभ्येवाष्टमीं कृष्णां यावस्याद्दशमी सिता ॥३७॥
अष्टादशे मास्तिथयो देवीप्रीतिकराः स्मृताः ।
तिस्रो विशेषतः पुण्याः सप्तमाद्या वरानने ॥३८॥
सर्वैर्निर्वर्त्त्यते यासु शारदीयो महोत्सवः ।
त्रयोदश्यादयस्तिस्रात्तिथयः कार्तिकस्य तु ॥३९॥
कृष्णपक्षे वरारोहे स्युरनन्तफलप्रदाः ।
फलत्रयोदशीनाम्नाऽघोराख्या च चतुर्दशी ॥४०॥
दर्शे तु सुखरात्र्याख्यो अथवा दीपमालिका ।

प्रतिपद् बाहुले या च सिता तस्यां यजेच्छिवाम् ॥४१॥
शुक्लाऽष्टमी तु गोष्ठाख्या सा भूरि सुकृतप्रदा ।
युगाद्या नवमी प्रोक्ता तस्या जागर्ति कालिका ॥४२॥
अतस्तु पूजाविस्तारः कार्यस्तस्यां विशेषतः ॥४३॥

## अथ तिथिनिर्णयः

तिथीनां निर्णयं वच्मि सूक्ष्मां तां न तु विस्तरात् ।
नैमित्तिकीषु पूजासु तिथयो या निरूपिताः ॥४४॥
ग्राह्या निशीथव्यापिन्यः पक्षयोरुभयोरपि ।
प्रशस्तमर्धरात्रं हि भगवत्यर्चने सदा ॥४५॥
योगो निशीथे न यदा तिथीनां नैव जायते ।
तदा विवेकः कर्तव्यो द्वयोरेव हि पक्षयोः ॥४६॥
या सूदितो रविः शुक्ले तिथयो विहिता हिताः ।
कृष्णे यास्वस्तमायाति सामान्योऽयं विधिर्मतः ॥४७॥
मुहूर्तमात्रादधिका या तिथिः शुक्लपाक्षिकी ।
सा स्नानदानपूजादौ विहितत्वेन गृह्यते ॥४८॥
न्यूना मुहूर्तमात्राद्वा मुहूर्तेन मिताऽपि वा ।
तिथिः कालमतत्वेन सा न ग्राह्या कदाचन ॥४९॥
यावती या तिथिस्तिष्ठेत्तावत्यां तदुदीरिता ।
क्रियारभ्य समाप्तव्या तत्तत्कर्मोपयोगिनी ॥५०॥
कृष्णेऽप्येवं यदा सा तु तिथिः कालेन युज्यते ।
तदा तद्विहितं कर्म कार्यं रात्रौ दिनेऽपि वा ॥५१॥
निशीथयोगाभावे तु पक्षयोरुभयोरपि ।
पूजादिकं तु कर्तव्यं पूर्वाह्णे नापराह्णतः ॥५२॥
देवानामिह पूर्वाह्णे मध्याह्ने तु नृणां भवेत् ।
अपराह्णः पितॄणां स्यादेवं धर्मविनिर्णयः ॥५३॥
तिथिद्वैधविचारोऽयमधुना वै निरुप्यते ।
दिनद्वयेऽपि चेल्लभ्या पूर्वाह्णव्यापिनी तिथिः ॥५४॥
परविद्धो पूर्वविद्धो तिथ्या नैवाद्यया क्वचित् ।
चतुर्थीसहिता कार्या तृतीया न द्वितीयया ॥५५॥
चतुर्थी पूर्वविद्धैव कर्तव्यार्चनवासरे ।

पञ्चम्या सहितान् कुर्वन् सद्यो नश्यति सान्वयः ॥५६॥
चतुर्थ्या सहिता कार्या सर्वदा कालिकार्चने ।
सप्तम्या सहिता षष्ठी प्रशस्ता सर्वकर्मसु ॥५७॥
षष्ठीविद्धा प्रकर्तव्या सप्तम्यत्र तु वासरे ।
न त्वाश्विने तु शारद्यां पूजायां जगदीश्वरि ॥५८॥
पक्षद्वयोऽप्यष्टमी तु विधातव्या परान्विता ।
अष्टम्या सहिता कार्या नवमी पुण्यदा तिथिः ॥५९॥
नवमी दशमीविद्धा सर्वसौख्यकरी मता ।
नैकादशी दशाविद्धा कर्तव्या भूतिमिच्छता ॥६०॥
नैकादशी द्वादशी च न द्वादश्या त्रयोदशी ।
चतुर्दशी प्रकर्तव्या त्रयोदश्या समन्विता ॥६१॥
अमा परयुता कार्या चतुर्दश्या न योजिता ।
इति देव्यर्चनविधौ तिथिकर्तव्यतेरिता ॥६२॥

**अथ वीररात्र्यादिनिर्णयः**[२]

देवेश श्रोतुमिच्छामि वीररात्र्यादिनिर्णयम् ।
वीररात्रिर्महारात्रिः कालरात्रिस्तथैव च ॥६३॥
मोहरात्रिर्घोररात्रिः क्रोधरात्रिस्तथैव च ।
तथैव चाचलारात्रिस्ताराररात्रिस्तथैव च ॥६४॥
शिवरात्रिर्दिव्यरात्रिर्दारुणा च यथाक्रमात् ।
कथ्यते परमेशानि शृणु सावहिता भव ॥६५॥
चतुर्दश्यां सङ्क्रमे च कुलर्क्षे कुलवासरे ।
अर्धरात्रे तदा योगो वीररात्रिः प्रकीर्तिता ॥६६॥
शुक्लाष्टमी चाश्विनस्य नवरात्रं तु तस्य वै ।
महारात्रिर्महेशानि कालरात्रिं शृणु प्रिये ॥६७॥
दीपोत्सवचतुर्दश्यां त्वमाया योग एव च ।
कालरात्रिर्महेशानि ताराकाली प्रियङ्करी ॥६८॥
जन्माष्टमी महेशानि मोहरात्रिः प्रकीर्तिता ।
मासे मार्गशिरे प्राप्ते कृष्णाष्टम्यां महेश्वरि ॥६९॥
महाकालस्वरूपा या घोररात्रिः प्रकीर्तिता ।

२ वीररात्र्यादिनिर्णयो मा. ख न प्राप्यते ।

चैत्रे मासि नवम्यां च शुक्लपक्षे च भूसुते ॥७०॥
क्रोधरात्रिर्महेशानि ताराख्पा भविष्यति ।
प्राप्ते फाल्गुनके मासि कृष्णैकादशिका तु या ॥७१॥
भृगुभौमयुता चेत् स्यादचला रात्रिरीरिता ।
ज्यैष्ठी वा दशमी शुक्ला दशयोगसमन्विता ॥७२॥
दशयोगसमायुक्ता रात्रावेकादशी यदि ।
सा तिथिर्दिव्यरात्रिश्च कीर्तिता परमेश्वरि ॥७३॥
तृतीया माधवे शुक्ला कुलवारर्क्षसंयुता ।
दारुणा कीर्तिता देवि सर्वसिद्धीश्वरी परा ॥७४॥[३]
अथ–
चान्द्रादिमासः परिग्राह्यो शौचादौ च सुरेश्वरि ।
रात्रिक्रमेण यो मासो विवाहादौ स हि स्मृतः ॥७५॥
ऋणदानप्रयोगे च शावनश्वाध्वजादिषु ।
शान्तिके पौष्टिके वाऽपि नाक्षत्रो मास ईष्यते ॥७६॥
इन्द्राग्न्योराहुतिर्यत्र दीयते सुरवन्दिते ।
मासस्यादिः स विज्ञेयो व्रतारम्भादिकर्मणि ॥७७॥
होमाग्नीषोमयोर्यत्र मास मध्यक उच्यते ।
पितृणामाह्वयं कर्म यदा निर्वहति प्रिये ॥७८॥
अन्तो मासस्य विज्ञेयः प्रतिमासमियं क्रिया ।
नैमित्तिकार्चने कालाः प्रातर्मध्याऽसंग वा ॥७९॥
प्रदोषरात्रिर्विघ्नेशरविविष्ण्वीशशक्तिजा ।
विहितं कालमुल्लङ्घ्य या काचित् क्रियते क्रिया ॥८०॥
तया किञ्चित्फलमपि जायते सुरवन्दिते ।
वित्तनाशस्तथायासो भवतीत्याहुरागमाः ॥८१॥
तस्मात् काले प्रकर्तव्यं कर्म स्वर्गफलार्थिभिः ।
यथाकालं यथाश्रद्धं यथाद्रव्यं यथोचितम् ॥८२॥
यथाबलं यथादेशं तथा पूजां समाचरेत् ।[४]
नैमित्तिकमहाकृत्ये श्वः कर्तव्यं सुरेश्वरि ॥८३॥
एकवारं हविष्यान्नं भुञ्जीत विजितेन्द्रियः ।

---

३ दशयोगसमायुक्ता इत्यतः सर्वसिद्धिश्वरी परा इत्यन्तो भागो मा. ख न प्राप्यते ।

४ यथाकालमित्यतः पूजां समाचरेत् इत्यन्तो पाठो मा. ख न प्राप्यते ।

मलीमशां शुकत्यागं क्षौरकर्मधरोषिताम् ॥८४॥
मूर्तिपीठादिसंसृष्टिं तत्प्रसादेऽपि च लेपनम् ।
पूजापात्रादिसंशुद्धिं ततो द्रव्यैर्विशेषतः ॥८५॥
नैमित्तिकक्रियायां हि षडेतानि समाचरेत् ।
धूमोद्गारे दन्तरक्ते सुतके च गलद्व्रणे ॥८६॥
पूजापूर्वं मैथुनञ्च स्त्रीद्विजाक्रोशने तथा ।
नैमित्तिकं न कुर्वीत कुर्वन्नैवाऽऽप्नुयात् फलम् ॥८७॥
कौलाचाररतः सर्वान् योषितश्च कुलाध्वगाः ।
निमन्त्रयीत यत्नेन सर्वेषां प्रथमं गुरुम् ॥८८॥
नैवेद्यधूपदीपानां कुर्याद्यत्नेन सम्भृतिम् ।
विशेषतश्च पुष्पाणां माल्यानाञ्च वरानने ॥८९॥
रजन्यां दिवसे वाऽपि विहितार्चनसम्भृतिः ।
कृतनित्यक्रियो दर्भपाणिः श्रुतिरनन्यधीः ॥९०॥
पूर्वाक्तासनमासीनो वसानो धौतवाससाम् ।
उत्तराभिमुखो भूत्वा आचमेद्देशिकः शनैः ॥९१॥
पूर्वार्चितां पूर्वमूर्तिं स्नापयित्वा पुनर्जलैः ।
अपनीय प्रसूनादीन् गन्धादीन् स्थापयेत् पुरः ॥९२॥
पूर्ववत् सर्वपात्राणि प्रक्षाल्य च सुरेश्वरि ।
मृद्वासने सुखासीनो यथाविभवकल्पिते ॥९३॥
प्राचूर्यं वकुलानाञ्च वैशाखे मासि कारयेत् ।
नागकेशरपुष्पाणां ज्येष्ठे मासि समाचरेत् ॥९४॥
आषाढे[५] तु प्रकर्तव्यः करवीरस्य सञ्चयः ।
चम्पकोत्पलपद्मानां भूयस्त्वं नभसीष्यते ॥९५॥
बाहुल्यमोघपुष्पस्य मासि भाद्रपदे चरेत् ।

---

५ मा.ख. अधिकः पाठः -
अथ विशिष्य वार्षिकमाह –
अश्विनामलपक्षस्य यथा प्रतिपदि प्रिये ।
शारदीयार्चनारम्भः समाप्तिर्नवमीतिथौ ।
वासन्तीपूजनस्यापि ज्ञेय ईदृग् विधौ विधिः ।
चैत्रशुक्लप्रतिपदि प्रारम्भोऽस्या विधीयते ।
महापूजा ततोऽष्टम्यां समाप्तिर्नवमीदिने ।
शारदीया यथा पूजा वासन्त्यपि तथा मता ।
तयोर्भेदन्न कुर्वीत कालिकार्चनकर्मभिः ॥ इति ।

भूरीष्टता विधातव्या बन्धूकस्याऽऽश्विने पुनः ॥९६॥
अगस्त्यकुसुमानां हि भूरितामूर्ज आचरेत् ।
आधिक्याद् बिल्वपत्राणां मार्गशीर्षे समाचरेत् ॥९७॥
पौषे दूर्वाङ्कुराणां हि सन्दोहोऽतिफलप्रदः ।
कौन्दस्तोमौ माघमासे सर्वकल्याणदायकः ॥९८॥
फाल्गुने माधवीपुष्पं सर्वसिद्धिप्रदायकम् ।
चैत्रेऽशोकस्य कलिका कलिकालविनाशिनी ॥९९॥
मातली यूथिका चैव दमनं कर्णिकारकम् ।
कुरुण्टकं कुरुवकमम्लानं पाटलां तथा ॥१००॥
नवमालिकार्कपुष्पं तथा चैवातिमुक्तिदम् ।
एकादशैतानि सदा कुसुमानि वरानने ॥१०१॥
माघस्य वाऽथ पौषस्य दर्शोर्केण युतो यदि ।
व्यतीपातश्रवणभयोगादर्धोदयो भवेत् ॥१०२॥
युगाद्या कोटिभिस्तुत्या विज्ञेया सा महातिथिः ।
अनन्तफलदं तत्र बलिं दत्त्वा विधानतः ॥१०३॥
धनधान्यसुतान् प्राप्य देहान्ते मोक्षमाप्नुयात् ।
माघशुक्ला तृतीया च वरानाम्नाऽभिधीयते ॥१०४॥
अत्रार्चिता कालिका हि कन्याभ्यो वरमृच्छति ।
धूपदीपौ रात्रिबलिपुष्पनैवेद्यचन्दनैः ॥१०५॥
अर्चनं कालिकादेव्याः कोटिकोटिगुणं भवेत् ।
एतस्या अपरेद्युस्तु या चतुर्थी तिथिर्भवेत् ॥१०६॥
सा शान्ताख्या बुधैरुक्ता तृतीयावद् फलप्रदा ।
अस्या यद्विहितं देव्या बलिर्न्यासं जपार्चनम् ॥१०७॥
भवेत्तत्कोटिगुणितं नात्र कार्या विचारणा ।[६]
तस्या या पुनः परेद्युः सञ्जाता तिथिरुत्तमा ॥१०८॥
ख्याता श्रीपञ्चमी नाम्ना सर्वतिथ्युत्तमोत्तमा ।
अस्यामाराधिता काली बहुसम्भारसञ्चयैः ॥१०९॥
ददाति चतुरोऽप्यर्थान् प्रसन्ना परमेश्वरि ।
तिथिश्चतुर्दशी प्रोक्ता या वै तस्या अनुप्रिये ॥११०॥
शिवरात्रिस्तु सा प्रोक्ता कोटिपापविनाशिनी ।

---

६ एतस्या अपरेद्युस्तु इत्यतो नात्र कार्या विचारणा इत्यन्तः पाठो मा. क. न प्राप्यते ।

एकीकृत्यैकासने तु शिवशक्ती प्रपूजयेत् ॥११११॥
चतुर्युगावधि कृता पूजा भवति यावती ।
तावती सकला देवि दिनेनैकेन लभ्यते ॥११२॥
उपवासो विधेयोऽत्र पूजा जागरणान्वितः ।
वारुणीति तु विख्याता चैत्रकृष्णत्रयोदशी ॥११३॥
क्षीराब्धिमथनाज्जाता पूजाऽस्यामेव वारुणी ।
दुहितृत्वेन जग्राह तामेवापां पतिः स्वयम् ॥११४॥
अत एवात्र सम्पूज्या विशेषेण महेश्वरि ।
मधुमासस्य या शुक्ला तृतीया परिकीर्तिता ॥११५॥
सा सौभाग्यतृतीयाख्या तस्यां पूजा महाफला ।
स्त्रीभिः सौभाग्यकामाभिः पुंभिः सौभाग्यकामिभिः ॥११६॥
पूज्या भगवती तत्र धर्मकामार्थसिद्धये ।
अमावास्यां समुत्पन्नः स्कन्दश्चैत्रस्य पापकात् ॥११७॥
ततः षष्ठ्यान्तु शुक्लायां चैत्रमासस्य पार्वति ॥११८॥

## अथ रहस्यारहस्यभेदेन ग्रहणार्चनमाह ।

**श्रीदेव्युवाच**

देवेश श्रोतुमिच्छामि रहस्यातिरहस्यकम् ।
यज्ज्ञानयोगतो देवि त्रैलोक्यविजयी भवेत् ॥११९॥

**शिव उवाच**

रहस्यमपि देवेशि यन्न कस्यापि कीर्तितम् ।
तदेव कथ्यते देवि यथावदवधारय ॥१२०॥
ग्रहणं विविधं देवि बाह्याभ्यन्तरभेदतः ।
चान्द्री कुण्डलिनीयोगाद् भवेदभ्यन्तराभिधम् ॥१२१॥
भावयोगात् क्रियायोगाद् द्विधा तत्रापि पार्वति ।
भावयोगो भवेच्छक्तौ क्रियायोगो विधौ स्मृतः ॥१२२॥
नटी कापालिका वेश्या रजकी नापिताङ्गना ।
मालाकारस्य कन्या च कुम्भकारस्य कन्यका ॥१२३॥
कन्याष्टकमिदं प्रोक्तं कुलाष्टकमथ शृणु ।
राजवेश्या गुप्तवेश्या देववेश्या विलासिनी ॥१२४॥

नृत्यपात्री तीर्थवेश्या कुट्टिनी व्यभिचारिणी।
पञ्चलिङ्गहता वेश्या दशलिङ्गा भगेश्वरी॥१२५॥
पञ्चविंशतिलिङ्गा च लिङ्गतुष्टा प्रकीर्तिता।
पञ्चाशल्लिङ्गसंयुक्ता लिङ्गसिद्धा प्रकीर्तिता॥१२६॥
शतलिङ्गा भगानन्दा सहस्रा भगसुन्दरी।
असङ्ख्यलिङ्गसंयुक्ता भगब्रह्मपरा मता॥१२७॥
कुलाष्टकमथेदानीं शृणु पार्वति तत्त्वतः।
मध्यलिङ्गा महेशानि भगमाला महोत्तमा॥१२८॥
विश्वलिङ्गा सर्वयोनिः सर्वासामपि चोत्तमा।
कुला कुलाष्टके देवि द्विविधे परिकीर्तिते॥१२९॥
राजवेश्यादिका युग्मं गोपयेच्च यथादिशम्।
माता पुत्री तथा पौत्री स्वसा चैव स्नुषा तु या॥१३०॥
शालिका केलिकुञ्ची च भातृजाया तथाऽष्टमी।
कुलाष्टकमिदं प्रोक्तं सर्वसिद्धिप्रदायकम्॥१३१॥
तरुणीं सुन्दरीं रम्यां चञ्चलां कामलोलुपाम्।
गुरुभक्तां मन्त्रयुक्तां सर्वलक्षणसंयुताम्॥१३२॥
इदृग्विधां समानीय प्रसूनतुलिकोपरि।
कुचौ तु कलशौ प्रोक्तौ सामान्यार्घ्यन्तु नामका॥१३३॥
भगध्वजौ विशेषार्घ्यौ त्रिकोणं यन्त्रमीरितम्।
गमागमावृत्तिरुक्ता पुष्पं प्रहसितं स्मृतम्॥१३४॥
आलापस्तु तपः प्रोक्तं त्ववलोको वरः स्मृतः।
क्रोधस्तु निग्रहः प्रोक्तः करग्राहो भयं भवेत्॥१३५॥
तस्याः पादप्रहारस्तु पृथिव्यास्तु प्रदक्षिणा।
चुम्बनं स्तोत्रपाठोऽत्र कुचधारस्तु सत्क्रिया॥१३६॥
गले पादस्य निःक्षेपः सिंहासनमितीरितम्।
विपरीतं दोलिकाख्या पूजा प्रोक्ता महेश्वरि॥१३७॥
विसर्जनं बीजपातां मुद्रा त्वालिङ्गनं भवेत्।
ओष्ठे सञ्चुम्बनं देवि खेचरीयोग ईरितः॥१३८॥
कपोले चुम्बनं देवि गुटिका परिकीर्तिता।
ललाटे चुम्बनं देवि पादुका परिकीर्तिता॥१३९॥
नेत्रसञ्चुम्बनं देवि अञ्जनं परिकीर्तितम्।

करसञ्चुम्बनं देवि खड्गसिद्धिः प्रकीर्तिता ॥१४०॥
योनिसञ्चुम्बनं देवि मनोरथमयी गतिः ।
जिह्वाप्रदानं देवेशि कालवञ्चनमीरितम् ॥१४१॥
रससंलेहनं देवि ब्रह्मरूपं न संशयः ।
आलोचनं पृथिव्यास्तु देवतादर्शनं भवेत् ॥१४२॥
तत्सङ्गिता सदा भाव्यं तामालोक्य जपेत् सदा ।
कोटिब्रह्माण्डदानादि एकतः परिकीर्तितम् ॥१४३॥
तस्याश्चालोकनं देवि सर्वश्रेष्ठकरं भवेत् ।
तपः स्यात् कोटितीर्थेषु योगानामपि कोटयः ॥१४४॥
देवालयानामानन्त्यं कृतं येन निरन्तरम् ।
तेनेदं प्राप्यते देवि दर्शनं बिन्दुरूपिणः ॥१४५॥
ब्रह्मणो दर्शनं देवि शब्दब्रह्म महत्तरम् ।
चन्द्रामृतं राहुभीत्या तथा स्वर्गामृतं पिबेत् ॥१४६॥
राक्षसानान्तु संभीत्या ओष्ठं योनौ विराजते ।
चन्द्रामृतं चाधरोष्ठे योनौ स्वर्गामृतं प्रिये ॥१४७॥
सदा तिष्ठति देवेशि ज्ञानात् सिद्ध्यति नान्यथा ।
अज्ञानाद्विषरूपं स्यान्नात्र कार्या विचारणा ॥१४८॥
मुखे हाला करे माला योनिशाला च चक्षुषि ।
हृदये स्त्रीकराला तु दीपमाला गृहाङ्गणे ॥१४९॥
न करोति परं यस्तु स कथं मम पूजकः ।
संयोगो गूहनं देवि महाकल्पान्ततोऽपि च ॥१५०॥
सूर्यग्रहो यथायोगे विपरीतं निशाकरे ।
तया यदुच्यते वाक्यं न तच्च कारयेत् प्रिये ॥१५१॥
तदा योगे समारब्धे पूर्णयोगो यदा च न ।
पुरुषस्य न जातो हि तेन स क्रीडते मुहुः ॥१५२॥
ग्रस्तास्तः स तु विज्ञेयः सर्वतश्चोत्तमोत्तमः ।
स्वयं योगे समारब्धे स्वस्य पूर्वं तु सञ्च्युतिः ॥१५३॥
तया कार्यं समाचर्यं तस्याः स्वापो न जायते ।
ग्रस्तोदयः स विज्ञेयः सर्वसिद्धिप्रदायकः ॥१५४॥
इदं रहस्यं यत् प्रोक्तं दिवायोगं शृणु प्रिये ।
स्वस्थः क्रमेणैव तस्य न स्यादग्रता स्त्वर्धोदयो मतः ॥१५५॥

महोदयः स्वयोगं स्याद्वार्ता दशहरः स्मृतः।
तद्वार्ताक्षय्यरूपाख्यस्तृतीयः परिकीर्तितः ॥१५६॥
इति संक्षेपतः प्रोक्तं विशेषं शृणु पार्वति।
मासद्वादशकं देवि क्रमेण परिकीर्तितम् ॥१५७॥
शतयोगे महेशानि महासाम्राज्यमीरितम्।
दिव्यादीनामिति प्रोक्तं पशूनां शृणु चापरम् ॥१५८॥
बाह्यं शृणु महेशानि सूर्यचन्द्रक्रमो द्विधा।
दर्शे वा पूर्णिमायां वा राहुः सूर्यनिशाकरौ ॥१५९॥
सम्पादयति देवेशि ब्रह्मणो वरदानतः।
भूमिच्छायानुगश्चान्द्रश्चन्द्रगीर्कं कदाचन ॥१६०॥
एकराशावेकभेदा यदा ताभ्यां निलत्ययम्।
सति योगे सप्तमे वा राकादर्शावसानतः ॥१६१॥
तदोपरागो भवति कोटिपुण्यफलप्रदः।
सूर्यभेदत्रयं देवि चन्द्रभेदत्रयं तथा ॥१६२॥
सूर्योपरागग्रस्तास्तस्तथा ग्रस्तोदयः स्मृतः।
चन्द्रेऽपि भेदत्रितयं शक्तावपि त्रिधा त्रिधा ॥१६३॥
सार्धद्वयाङ्गुलोत्तरं ग्रस्तत्वं परिकीर्तितम्।
स्नाने जपे तथा होमे दाने श्राद्धेऽम्बिकार्चने ॥१६४॥
स महान् पुण्यकालो हि विज्ञातव्यः सुरेश्वरि।
अहोरात्रोषितः पूर्वं ग्रहणे चन्द्रसूर्ययोः ॥१६५॥
जपित्वाऽभ्यर्च्य वा देवीं दानं दत्त्वा तथैव च।
कृत्वा श्राद्धं विधानेन सर्वपापैः प्रमुच्यते ॥१६६॥
यद्यत्करोति तत्काले तस्य स्यादक्षयं हितम्।
धनदोऽप्यत्र पुण्येन मोदते ब्रह्मणा सह ॥१६७॥
भास्करस्य च चन्द्रस्य ग्रहणे प्रत्युपस्थिते।
आपः कौप्यापि देवेशि गङ्गाजलसमाः स्मृताः ॥१६८॥
तस्माच्छतगुणं ज्ञेयं सारसं सलिलं शुचिः।
तस्मात् सहस्रगुणितं नादं हि परिकीर्तितम् ॥१६९॥
तस्मात् कोटिगुणितं गाङ्गेयं पावनं महत्।
स्नानात् सहस्रगुणितो होमो ज्ञेयो विचक्षणैः ॥१७०॥
होमाच्छतगुणं श्राद्धं श्राद्धाच्छतगुणो जपः।

जपात् सहस्रगुणितं दानमाहुर्मनीषिणः ॥१७१॥[७]
दानात् कोटिगुणा पूजा भगवत्या विशिष्यते ।
तत्र नैमित्तिकी पूजा कार्या नित्या कदापि न ॥१७२॥
पूर्वेद्युरुपवासे तु पूजा कोटिगुणा भवेत् ।
उपोषणस्यासामर्थ्ये पूजा लक्षगुणा मता ॥१७३॥
चन्द्रार्कौ तमसा ग्रस्तौ दृष्ट्वैवार्चां समाचरेत् ।
अदृष्टे तु ग्रहे देवि सर्वं विफलमीरितम् ॥१७४॥
न तत्र प्रत्ययात् स्वस्य प्रत्ययो देवकर्मणि ।
स्नाने दाने जपे होमे श्राद्धेऽर्चायां प्रतिग्रहे ॥१७५॥
दर्शनानन्तरं नृणामधिकारो न चान्यथा ।
अन्तर्दृष्टे दृशा दृष्टे मध्यग्रासे महेश्वरि ॥१७६॥
मेघाच्छन्ने मुक्तिहीने स्नानदानादिकं चरेत् ।
जपमात्रं विधातव्यं मध्यग्रासे तु सूर्यके ॥१७७॥
ग्रस्तोदयं समारभ्य ग्रस्तास्ते परमेश्वरि ।
शास्त्रं दृष्ट्वा समालोक्य स्नानदानादिकं चरेत् ॥१७८॥
कदा लग्नं कदा मुक्तिः सर्वं ज्ञात्वा प्रयत्नतः ।
स्नानदानादिकं कार्यं नान्यथा शाङ्करं वचः ॥१७९॥
स्वराशितो वरारोहे त्रिषष्ट्यैकादशे ग्रहे ।
सदोषे पश्यतो राहुमिति तत्रापदोषतः ॥१८०॥
यतः फलानां बाहुल्यं दोषाणामल्पता तथा ।
जायतेऽतः प्रकर्तव्यमवश्यं राहुदर्शनम् ॥१८१॥
नाडीमाष्टमचन्द्रादि दोषाणामपनुत्तये ।
किञ्चिद्दानं प्रकर्तव्यं तत्तद्विघ्नोपशान्तये ॥१८२॥
उद्धृता ये मया प्रोक्ताः कालीमन्त्राः शुचिस्मिते ।
तेषामेकोऽप्येकवारं जप्तश्चेद्राहुदर्शने ॥१८३॥
पापानि नाशयत्येवं कोटिजन्मकृतान्यपि ।
षोडशार्णां सप्तदशीमेकवारं य उच्चरेत् ॥१८४॥
सप्तद्वीपवती पृथ्वी दानस्य फलमश्नुते ।
तस्माद्विशेषतः कार्यो जपपूजासमन्वितः ॥१८५॥
पुरश्चरणमत्रैव गौणं कुर्वन्ति केचन ।

---

७ श्लोकः १६९-१७१ मा. ख न प्राप्यते ।

कर्मैकं कार्यमेतत् स्यान्न ते पूजाधिकारिणः ॥१८६॥
आवश्यकतया तैस्तु प्रकर्तव्यमुपोषणम् ।
पूजाकर्तुर्न मुख्यन्तत्कृते तु फलपूरिता ॥१८७॥
यामत्रयं न भोक्तव्यं चन्द्रग्रहणपूर्वतः ।
सूर्यग्रहणतः पूर्वं प्रहराणां चतुष्टयम् ॥१८८॥
राहुनिर्मुक्तमरुणं तथैव रजनीकरम् ।
दृष्ट्वैव भोजनं कुर्यादन्यथा नारकी भवेत् ॥१८९॥
ग्रस्तास्तौ चेदुभौ स्यातामथवा च निमीलितौ ।
दिवारात्रमुपोष्यैव ततोऽश्नीयाद्यथाक्रमम् ॥१९०॥
अत्र केचिदपीच्छन्ति भवशास्त्रविमोहिताः ।
उपवासं प्रकुर्वीत ग्रस्तास्ते परमेश्वरि ॥१९१॥
शास्त्रदर्शस्तु सन्दर्शः प्रत्यक्षे पूर्णरूपता ।
दिव्यानामपि देवेशि अङ्गुलद्वयतो भवेत् ॥१९२॥
उपवासं त्रिरात्रं तु शैवानां परिकीर्तितम् ।
विष्णुगाणपसौराणां द्विरात्रं परिकीर्तितम् ॥१९३॥
शाक्तानां पूर्वरात्रन्तु पुरश्चर्यायुतो भवेत् ।
पुरश्चरणहीनानां पूर्वमेतन्मया तव ॥१९४॥
चान्द्रे स्वायम्भुवे देवि द्विरात्रं परिकीर्तितम् ।
नोपवीतं प्रकुर्वीत जीवपुत्रो हि कर्हिचित् ॥१९५॥
नैमित्तिकद्वयं यत्र तत्राल्पं काम्यवाचकम् ।
अभिधाय नरो यस्तु विमुक्तस्नानमीश्वरि ॥१९६॥
भुक्तं सकेवलं मद्यं भुङ्क्ते विश्वं सकेवलम् ।
श्राद्धकृद्धोमकृद्वाऽपि दानकृज्जपकृच्च वा ॥१९७॥
निवर्तितप्रात्ययिकः कलाकाङ्क्षी स्थितो भवेत् ।
ग्रहं दृष्ट्वा शुचे स्नात्वा तत्तत् कर्म समाचरेत् ॥१९८॥
आशौचं जन्ममरणजनितं चेत् प्रजायते ।
न कार्याः श्राद्धदानार्चाः केवलं स्नानमाचरेत् ॥१९९॥
सूतकद्वययुक्तोऽपि यो मूर्खो स्नाति न ग्रहे ।
सद्यः स मृत्युमाप्नोति स्नायी पापान्न विन्दति ॥२००॥
जपे दाने तथा होमे श्राद्धे चैव सुरार्चने ।
आशौचदोषः सर्वत्र न तु स्नाने सुरेश्वरि ॥२०१॥

मासयोर्भाद्रनभसोः सरितः स्यू रजस्वलाः।
चन्द्रसूर्यग्रहे प्राप्ते रजोदोषो न विद्यते ॥२०२॥
स्नात्वा पुण्योदके तीर्थे शुचिः पूर्वमुपोषितः।
स्पर्शाद्विमुक्तिपर्यन्तं जपेन्मन्त्रमनन्यधीः ॥२०३॥
अनन्तरं दशांशेन क्रमाद्धोमादिकं चरेत्।
अथवा महतीं पूजां कुर्याद्दानं तथैव च ॥२०४॥
मूलमन्त्रस्य सिद्ध्यर्थं गुरुं यत्नेन तोषयेत्।
एवञ्च मन्त्रसिद्धिः स्याद् देवता च प्रसीदति ॥२०५॥
न च तीर्थे विशेषेण विशेषः स्यात्फलेष्वपि।
स्नानादौ तेन कर्तव्यं तीर्थाभिगमनं प्रिये ॥२०६॥
गङ्गाफलसमानि स्युः सर्वाण्यम्भांसि भूतले।
तथापि तत्तत्तीर्थानां विशेषः कोऽपि कथ्यते ॥२०७॥
दशजन्मकृतं पापं गङ्गास्नानेन नश्यति।
त्रिंशज्जन्मकृतं पापं गङ्गायमुनासङ्गमे ॥२०८॥
शतजन्मकृतं पापं गङ्गासागरसङ्गमे।
जन्मनां तु सहस्रेण यत्पापं समुपार्जितम् ॥२०९॥
कृत्वा सूर्यग्रहे स्नानं तन्मुञ्चति महोदधौ।
जन्मनामयुतेनैव यत्किञ्चिन्नृभिरर्जितम् ॥२१०॥
वाराणस्यां ग्रहे स्नानान्तदा चैव व्यपोहति।
नरैः पापं कृतं यद्यज्जन्मनां कोटिकोटिभिः ॥२११॥
तत्सर्वं सत्रिहत्यायां राहुग्रस्ते निशाकरे।
नाशयेत् स्नानमात्रेण सत्यं सत्यं सुरेश्वरि ॥२१२॥
सूर्यग्रहः सूर्यवारे सोमं सोमग्रहस्तथा।
चूडामणिरिति ख्यातस्तदा योगो महाफलः ॥२१३॥
सर्वेभ्यो देवि दानेभ्यो द्वे दानेऽतिमहत्फले।
भूमेरथ सुवर्णस्य वर्णोऽद्भिश्च प्रशस्यते ॥२१४॥
पूजायामपि देवेशि परिवारगणार्चनात्।
षोडश-द्वादशाष्टाब्दकुलपूजा प्रशस्यते ॥२१५॥
ततः कोटिगुणं ज्ञेयं निश्चितं बिन्दुपूजनम्।
चन्द्रसूर्यग्रहे वाऽपि यन्त्रस्थापनमाचरेत् ॥२१६॥
यन्त्रसंस्थापनं कुर्याच्चन्द्रसूर्यग्रहे शिवे।

तद्यन्त्रस्था देवता तु सहसा वरदायिनी ॥२१७॥
चन्द्रसूर्यग्रहे देवि यद्यत्कर्म करोति च ।
तत्तदक्षयमायाति विद्याराजा प्रसादतः ॥२१८॥
चन्द्रसूर्योपरागे तु मेरुसाधनमाचरेत् ।
दुष्टमन्त्रोऽपि देवेशि क्रमेण सिद्ध्यति ध्रुवम् ॥२१९॥
तारापिण्डे ग्रहे प्राप्ते तथा सूर्यग्रहेऽपि च ।
जपादिकं विधातव्यं शक्तिपूजां ततश्चरेत् ॥२२०॥
सर्वसिद्धीश्वरो भूयान्नात्र कार्या विचारणा ।
ऋतुस्नातां स्त्रियं ज्ञात्वा सूर्यचन्द्रग्रहान्तरे ॥२२१॥
पितृपार्वणमासाद्य पिण्डं तस्मै प्रदापयेत् ।
वन्ध्यापुत्रप्रदो योगः सर्वसिद्धिप्रदायकः ॥२२२॥
सूर्योपरागे देवेशि स्नात्वा पूजां समाचरेत् ।
साङ्गां सावरणां पूज्य सबल्यन्तं महेश्वरि ॥२२३॥
कुमारीपूजनं कृत्वा सर्वसिद्धीश्वरो भवेत् ।
चन्द्रसूर्यग्रहे देवि शतसंख्यां कुमारिकाम् ॥२२४॥
पूज्य सिद्धीश्वरो भूयान्नात्र कार्या विचारणा ।
सूर्यग्रहे महेशानि काम्यं होमं चरन् शिवः ॥२२५॥
तर्पणं कुरुते यस्तु तस्य श्रीः सर्वतोमुखी ।
मार्जनन्तु प्रकर्तव्यं सर्वदुःखप्रशान्तये ॥२२६॥
सूर्यग्रहे समायाते पारधिर्यदि वै भवेत् ।
पारभृद्वाऽभिधो योगः सर्वसाम्राज्यदायकः ॥२२७॥
तारापिण्डोपरागे तु गुरुं सम्पूज्य दैवतम् ।
सन्तोष्य तद्वरो ग्राह्यः सर्वसिद्धीश्वरो भवेत् ॥२२८॥
तारापिण्डग्रहे प्राप्ते शवमानीय साधकः ।
शवासने जपेद्देवि ग्रासादुद्ग्रासतः शिवे ॥२२९॥
सर्वसिद्धीश्वरो भूयात्तदन्ते शिवतां व्रजेत् ।
सूर्योपरागे देवेशि शुद्धान्तःकरणो यदि ॥२३०॥
स्नात्वा यथोक्तविधिना सम्पूज्य जगदम्बिकाम् ।
शिरःपुष्पं कर्तयित्वा देवतायै निवेदयेत् ॥२३१॥
देवता पश्यति शिवे वरदानपरा ध्रुवम् ।
सूर्योपरागे सम्प्राप्ते स्नात्वा प्रोक्तेन वर्त्मना ॥२३२॥

शक्तिमानीय तद्ग्रात्रे न्यासजालं प्रविन्यसेत् ।
मद्यैर्मांसैस्तथा मत्स्यैर्भगलिङ्गामृतैरपि ॥२३३॥
देवतां तत्र सम्पूज्य साङ्गां सावरणां शिवे ।
तत्र जिह्वां प्रदत्त्वा तु जपात्त्रैकाल्यविद् भवेत् ॥२३४॥
अतीतानागतज्ञाने वर्तमानं च पश्यति ।
सूर्यग्रहे महेशानि वेश्यामानीय सादरम् ॥२३५॥
शक्तिं लिङ्गोपरि स्थाप्य जपेद्यत्नेन पार्वति ।
त्रैलोक्यविजयी भूयान्नात्र कार्या विचारणा ॥२३६॥
अनुकल्पप्रदातॄणां द्विजानां श्राद्धमेव च ।
कौलानामपि सर्वेषां विमुक्तानां महेश्वरि ॥२३७॥
पात्राणां ग्रहणं शान्तं ग्रहमध्ये कदाचन ।
इति संक्षेपतः प्रोक्तां ग्रहणस्य विनिर्णयः ॥२३८॥

## अथ दमनारोपणम्

दमनारोपणाख्यैका पवित्रारोपणी परा ।
प्रतिसंवत्सरञ्चैते यो न कुर्वीत साधकः ॥२३९॥
तस्य वर्ष कृता पूजा व्यर्था भवति भामिनि ।
कृतामपि विलुम्पन्ति भूतप्रेतादयो गणाः ॥२४०॥
प्रतिसंवत्सरं तस्मात् कुर्याद्यत्नेन साधकः ।
दमनारोपणं कर्म पवित्रारोपणं तथा ॥२४१॥
दमनेन च यो देवं वर्षमध्ये न पूजयेत् ।
तस्य वर्षकृतं पूजाफलं गृह्णाति कामराट् ॥२४२॥

## अथास्योत्पत्तेर्बीजमाह

**पार्वत्युवाच**

एकं विज्ञातुमिच्छामि प्राणनाथ महेश्वर ।
आस्थाय परमं योगं योगीन्द्रेण त्वया प्रभो ॥२४३॥
आवां युयुक्षुर्मदनो दग्धो नयनवह्निना ।
किमर्थं परिणीताहमथ भोगं समुद्यतः ॥२४४॥
आवयोः किं सुखं तस्मिन् मृते रति विवर्धते ।

यद्यसि त्वं मया सार्धं चिकीर्षुः केलिमुत्तमाम् ॥२४५॥
सञ्जीवय तदा कामं प्रीतये मम धूर्जटे ।
श्रुत्वैतां गिरिजावाक्यं रतिलीला सुखावहम् ॥२४६॥
स्मितं विधाय प्रोवाच मानयन् प्रेयसी भव ।

## श्रीमहादेव उवाच

ईदृशी यदि ते श्रद्धा कामसञ्जीवने प्रिये ॥२४७॥
न दास्यसि रतिञ्चापि तं विना चेद् गिरीन्द्रणे ।
एष सञ्जीवयाम्येनं प्रीतये तव पार्वति ॥२४८॥
ख्यातिं प्रख्यापयिष्यामि तवानेन च कर्मणा ।
विधास्यामि तथा चान्यां व्यवस्थां भुवनत्रये ॥२४९॥
अद्योत्तराफल्गुनीयं तिथिश्चापि त्रयोदशी ।
शुक्लपक्षश्चैत्रमासो योगो वृद्धिस्तथैव च ॥२५०॥
पूजामृतमयेऽप्येनं मुदे तव ममापि च ।
पुष्पधन्वेति नामास्य पुष्पैरेवास्य विग्रहम् ॥२५१॥
सङ्कल्प्य रचयिष्यामि पश्यन्त्यास्तव पार्वति ।
इत्युक्त्वा ज्ञाप्य गणपानालोप्य कुसुमानि च ॥२५२॥
कामं सञ्जीवयामास तत्तदङ्गं प्रकल्प्य सः ।
सर्वं शरीरं दमनैर्वदनं कमलेन च ॥२५३॥
नासां चम्पकपुष्पेण दृशौ कुवलयेन च ।
मल्लिकाभिः कपोलौ द्वौ यूथिभिरलकं तथा ॥२५४॥
द्वौ कर्णौ करवीरैश्च पाटलाभिर्हनुद्वयम् ।
माधवीभिर्जानुनी द्वे शिरीषैर्गण्डयोर्युगम् ॥२५५॥
नासापुटे द्वे बकुलैः कर्णिकारैर्गलस्तथा ।
चूताङ्कुरैर्बाहुयुगं केशपाशः कुरुण्टकैः ॥२५६॥
काञ्चनारैरंशुयुगं कुन्दैः कुक्षियुगं तथा ।
वक्षस्थलमशोकैश्च जठरं केतकीदलैः ॥२५७॥
पार्श्वद्वयं जातिभिश्च वक्षश्च किंशुकैरपि ।
शतवर्गैरुरुयुगं द्वे जङ्घे जवया तथा ॥२५८॥
पारिजातैर्मरुवकैः कदम्बैर्बन्धुजीवकैः ।
अङ्गोपाङ्गानि सर्वाणि प्रत्येकं कुसुमैर्भव ॥२५९॥

चकार कामदेवस्य समग्रं तु कलेवरम् ।
दमनैः कल्पयामास शराँश्चापि शरासनम् ॥२६०॥
वसन्तं कोकिलान् भृङ्गान् मलयानिलमेव च ।
रतिञ्च वामदिग्भागे प्रीतिं दक्षिणतस्तथा ॥२६१॥
प्रकल्प्य भगवानीशो मृतसञ्जीवनीं मनुम् ।
गृणन् सञ्जीवयामास स्वशक्त्या प्रथमाधिपः ॥२६२॥
स जीवितः समुत्थाय स्वसहायसमन्वितः ।
उमामहेश्वरौ भक्त्या ननाम भुवि दण्डवत् ॥२६३॥
विज्ञापयामास तथा प्राप्तदेहः स्मरो हरम् ।
किं कर्तव्यं मया देव तदनु ज्ञातुमर्हसि ॥२६४॥
उवाच तमथेशानो भक्तिप्रणतकन्धरम् ।
त्रिजगन्मोहयन्नित्यं पौष्पेण धनुषा स्मर ॥२६५॥
विचरेः स्वेच्छयैताभिः शक्तिभिः परिवारितः ।
मित्रीभूतसहायैश्च तथाऽमीभिरपि ध्रुवम् ॥२६६॥
मोहयन् युवतीर्भूतः शरैः पञ्चविधैः सदा ।
मत्तः कलेवरं लब्धं त्वया देव्याः प्रसादतः ॥२६७॥
इयं तिथिरनङ्गाख्या तव नाम्ना भविष्यति ।
त्वामस्यां येऽर्चयिष्यन्ति गन्धपुष्पादिविस्तरैः ॥२६८॥
नैवेद्यधूपदीपाद्यैर्गीतवाद्यादिनर्त्तनैः ।
अश्लीलवचनाक्षेपैर्मादकद्रव्यभोजनैः ॥२६९॥
योनिलिङ्गादिशब्दानां प्रलापैर्हास्यकारकैः ।
तत्तदाधारवचनैर्महोत्सवसमन्वितैः ॥२७०॥
त्वं वरानीप्सितान् दद्यात्तेषां मद्वचनात् स्मर ।
तत्परेऽहनि मत्पूजा विस्तार्या मकरध्वज ॥२७१॥
इत्युक्त्वा संविसर्ज्यामुं स वसन्तरतिं हरः ।
उमामुवाच पार्श्वस्थां विहसन् मानवैश्च ताम् ॥२७२॥
देवि त्वद्वाक्यमात्रेण मया सञ्जीवितः स्मरः ।
तवाऽपि नाम भुवने ख्यापयिष्यामि सुन्दरि ॥२७३॥
कामदेवशरीराख्यैर्दमनैरधिवासितैः ।
पङ्कारोपितमूलैश्च त्वामर्चयिष्यन्ति ये नराः ॥२७४॥
तेषां त्वयि कृता पूजा वार्षिकी सफला भवेत् ।

दमनारोपणं कर्म न कृतं यैः प्रमादतः ॥२७५॥
शुभानि नाशयित्वैषामशुभानि प्रदास्यति ।
त्वदीयाश्च गणाः सर्वे हरिण्यन्त्याद्विकार्चनम् ॥२७६॥
यथा ते शारदीयार्चा नित्या क्षेमप्रदायिनी ।
दमनारोपणं चाथ तथा भवतु भूतले ॥२७७॥
दमनारोपणं कर्म ततः प्रभृति सुन्दरि ।
स्थितमावश्यकतया कर्तव्यत्वेन च प्रिये ॥२७८॥
दमनारोपणं वक्ष्ये साधकानां हिताय वै ।
सम्वत्सरकृता पूजा पूर्णा येन भवेत् प्रिये ॥२७९॥
चैत्रादयस्त्रयो मासाः पक्षौ सितासितेतरौ ।
सिते लक्षगुणं प्रोक्तमसिते च सहस्रकम् ॥२८०॥
एतेषां पूर्वपूर्वस्तु कालः सर्वोत्तमोत्तमः ।
कालस्तदीयो मुख्यस्तु शुक्लः पक्षो मधोर्मतः ॥२८१॥
मध्यमो माधवो ज्येष्ठः शुचिस्त्वधम उच्यते ।
चातुर्मास्ये प्रतिष्ठे तु यः कुर्याद् दामनं विधिम् ॥२८२॥
न तस्य दुर्मतेः सिद्धिर्विपरीतञ्च जायते ।
भूताः प्रेताः प्रनृत्यन्ति क्षुधासम्पीडितोदराः ॥२८३॥
अस्माकं भाग्ययोगेन न चेत् काश्चित् साधकाधमः ।
सुप्ते जनार्दने कुर्याद्दमनारोपणं विधिम् ॥२८४॥
तदा वयं विलुम्पामो भक्षयामोऽर्चनं विधिम् ।
ऋतौ वसन्ते शिशिरे ग्रीष्मे कुर्यादमुं विधिम् ॥२८५॥
न वै वर्षासु शरदि हेमन्ततौं न च प्रिये ।
तस्मादृतुत्रये पूर्वोदिते दमनकार्चनम् ॥२८६॥
न परत्र तु वै कार्यं देवीप्रीतिविधीच्छया ।
अष्टमी नवमी पूर्णमास्यमा च चतुर्दशी ॥२८७॥
एतन्मध्ये तु कस्याश्चित् प्राग्दिने सुप्रदोषके ।
दमनाधिवासनं चैव श्रविका वालुपूरणम् ॥२८८॥
एतत्क्रमविधिं ज्ञात्वा दमनारोपमाचरेत् ।
कृतनित्यक्रियः शुद्धो युक्तः सामायिकैर्जनैः ॥२८९॥
दमनस्य समीपं तु गत्वाऽऽसनमुपाविशेत् ।
अधिवासनकर्माङ्गभूतं सङ्कल्पमाचरेत् ॥२९०॥

राशितिथ्यादिकं प्रोच्य वर्तमानतया स्थितम् ।
वार्षिकार्चासमाप्त्यर्थं स्वकर्तव्यस्य कर्मणः ॥२९१॥
दमनारोपणस्यास्याङ्गभूतमधिवासनम् ।
करिष्य इति संकल्प्य पाञ्चायतनमर्चयेत् ॥२९२॥
प्राणायामत्रयं कृत्वा ऋष्यादीन्विन्यसेत्ततः ।
कामभस्मसमुद्भूतरतिवाष्पजलोद्भव ॥२९३॥
ऋषिगन्धर्वदेवादिमोहनाय नमोऽस्तु ते ।
संवत्सरिकपूजायाः परिपूर्णत्वसिद्धये ॥२९४॥
दमनाख्यं समाख्याहि क्षमस्व च नमोऽस्तु ते ।
शिवप्रसादसम्भूत अत्र सन्निहितो भव ॥२९५॥
शिवकार्ये समुच्छेद्य नेतव्योऽसि शिवाज्ञया ।
एवं दमनमामन्त्र्य कामदेवं तथा रतिम् ॥२९६॥
प्रीतिञ्च पूजयेत्तत्र तत्तन्मन्त्रेण साधकः ।
तारः क्लीं कामदेवाय नमश्चेति नवाक्षरः ॥२९७॥
श्रीं श्रीं श्रीं क्रोमिति प्रोक्ता रत्यै हृच्चाष्टवर्णकः ।
रतिस्थाने प्रीतिप्रदादिकमप्यष्टवर्णकः ॥२९८॥
ततः स्वगृहमागच्छेद् द्वितीयदिवसे पुनः ।
कृतनित्यक्रियः स्वेष्टैर्युक्तो दमनमाव्रजेत् ॥२९९॥
स्वयमुत्पाद्य दमनं समूलं पल्लवैर्युतम् ।
आनीतो ह्यथवान्येन मूल्यादानीतमीश्वरि ॥३००॥
उत्पाटयेच्छेदयेद्वा स्वमूलस्यास्त्रमन्त्रतः ।
गृहमानीय तोयेन मन्त्रेणानेन सेचयेत् ॥३०१॥
ॐ अघोर ऐँ च ॐश्च घोरे ह्रीमिति कीर्तयेत् ।
घोरघोरतरे श्रींश्च सर्वेभ्यः सर्वसर्वेभ्यः ॥३०२॥
नमस्ते रुद्ररूपेभ्यो ह्रीं श्रीमिति मनुः स्मृतः ।
चतुस्त्रिंशदक्षरात्मा दमनन्तं निधापयेत् ॥३०३॥
पूजास्थाने च पीठादौ नवभागान् दमनानाम् ।
कृत्वा चाष्टदलं पद्मं तत्र भागान् प्रविन्यसेत् ॥३०४॥
ततस्तत्पद्म पूर्वादिपत्रेषु प्रतिपूजयेत् ।
अष्टास्वष्टकामाँश्च अष्टद्रथयुतैः क्रमात् ॥३०५॥
कर्पूरं रोचनायुग्मं कस्तूरींश्च ततः प्रिये ।

अगुरुं कुङ्कुमं धात्रीफलं चन्दनमेव च ॥३०६॥
सुगन्धिकुसुमैः कुर्यादष्टद्रव्याणि पार्वति ।
कामो भष्मशरीरश्च अनङ्गो मन्मथस्तथा ॥३०७॥
वसन्तशङ्खनामा च स्मर इक्षुधनुर्धरः ।
पुष्पबाणश्च ताराद्यास्ते हृदन्ताः प्रकीर्तिताः ॥३०८॥
चन्दनागुरुकर्पूरकुङ्कुमैर्लेपयेच्च ताम् ।
आनन्देशी बीजवर्णैर्बिन्दुमद्भिर्नमोन्तकैः ॥३०९॥
पृथक्पूज्यास्तु तद्बीजसहक्षमलवरयीम् ।
ॐ नम इति मध्येऽर्च्य ह्यस्त्रमन्त्रेण रक्षयेत् ॥३१०॥
त्रिशूलमुद्रां बध्वाथ भ्रामयेद्दमनोपरि ।
सम्पूज्य मदनं सम्यग्गन्धपुष्पाक्षतादिभिः ॥३११॥
जपेदनङ्गगायत्रीं यथाशक्ति प्रसन्नधीः ।
कामदेवाय इत्युक्त्वा विद्महे च वदेत्ततः ॥३१२॥
पुष्पबाणाय सम्प्रोच्य धीमहि तदनन्तरम् ।
भवेदनङ्गगायत्री तन्नोऽनङ्गः प्रचोदयात् ॥३१३॥
नमोऽस्तु पुष्पबाणाय जगदानन्दकारिणे ।
मन्मथाय जगन्नेत्ररतिप्रीतिप्रियाय च ॥३१४॥
अनेन मनुना देवि नमस्कुर्यात्ततः परम् ।
अथ विलापनं कुर्याद्देव्यै मदनपाणियुक् ॥३१५॥
अस्त्रमन्त्रेणाथ नववस्त्रेणाऽऽच्छादयेच्च तम् ।
रहसि स्थापयेदेतत् सम्प्रोक्तमधिवासनम् ॥३१६॥
आमन्त्रितासि देवेशि सद्यः काले मया शिवे ।
कर्तव्यस्तु यथालाभः पूर्णं पर्व तवाज्ञया ॥३१७॥
विज्ञापनाक्षमन्त्रेण त्रिशक्तिं परितोषयेत् ।
ततः सम्पूज्य देवेशीं गन्धपुष्पाक्षतादिभिः ॥३१८॥
षोडशार्णे जगन्मातर्वाञ्छितार्थफलप्रदे ।
हृद्या पूरय मे देवि कामान् कामेश्वरेश्वरि ॥३१९॥
अनेन प्रार्थयेद्देवीं पश्चाद्दमनमीश्वरि ।
वर्मोवगुष्ठनं कुर्यादस्त्रेणापि च रक्षितम् ॥३२०॥
ततो जागरणं कुर्यात् सद्यश्चेद् जागरो न हि ।
प्रथमे दिवसे कुर्यादपि वासनमुत्तमम् ॥३२१॥

सद्योऽधिवासनं वाऽपि वर्षपूजाफलाप्तये ।
ततः प्रभाते उत्थाय कृत्वा नित्यक्रियां स्वकाम् ॥३२२॥
कृतार्चा सम्भृतिः पूजामण्डपं समुपाविशेत् ।
मूर्तियन्त्रालयादीनि कुर्यादुज्ज्वलितानि हि ॥३२३॥
सङ्कल्पं पुरतः कुर्यात्तदनन्तरमीश्वरि ।
दमनारोपकर्माहं करिष्य इति चोच्चरेत् ॥३२४॥
पुण्याहवाचनं कृत्वा दमनं तं समानयेत् ।
पूजास्थाने प्रकुर्वीत सर्वतोभद्रमण्डलम् ॥३२५॥
तस्याष्टदिक्षु संस्थाप्या घटाः स्वर्णादिनिर्मिताः ।
मध्येऽथवा कुम्भमेकमशक्ताः स्थापयेत्तथा ॥३२६॥
तत्रस्थाऽऽसनपूजादियोगपीठान्तमर्चयेत् ।
तस्य दक्षिणदिग्भागे सिन्दूरेणाष्टपत्रकम् ॥३२७॥
पद्मं कुर्याद् वृत्तयुग्मवेष्टितं भूपुरेण च ।
पञ्चवर्णरजोभिश्च कर्णिकायामशोककम् ॥३२८॥
लिखित्वा प्रार्थयित्वा तं पूजयेच्चन्दनादिभिः ।
अशोकाय नमस्तुभ्यं कामस्त्रीशोकनाशक ॥३२९॥
शोकार्तिं हर मे नित्यमानन्दं जनयस्व मे ।
तस्य दक्षिणतस्तादृङ् मण्डले पूजयेत् पुनः ॥३३०॥
वरखड्गधरं कालं पञ्चरागैर्विचित्रितम् ।
सृष्ट्यादिप्रलयान्तो यः कालरूपो महाबलः ॥३३१॥
कलयत्यपि विश्वं यस्तस्मै कालात्मने नमः ।
अशोकस्य ततोऽधस्तात् त्रिकोणे मण्डले शुभे ॥३३२॥
मण्डूकादि ज्ञानात्मानं पीठपूजां समाचरेत् ।
तद्बाहेऽष्टदले प्रोक्तं शक्त्यष्टकं समर्चनम् ॥३३३॥
सौभाग्यञ्च ततो हृद्यां वृषां चाऽपि धृतिं रतिम् ।
प्रीतिञ्च सङ्गमां निर्वाणाख्यां मध्ये तु कामुकाम् ॥३३४॥
आवाह्य कामदेवञ्च तद्गायत्र्या तदुत्तरम् ।
कृत्वा प्राणप्रतिष्ठान्तं ततो मुद्राः प्रदर्शयेत् ॥३३५॥
पाशाङ्कुशधनुर्बाणाभिधां ध्यायेत्ततः परम् ।
रक्ताम्बरं रक्तवर्णं रक्तगन्धानुलेपनम् ॥३३६॥
रक्तमाल्यं च तरुणं वामदक्षिणयोर्युतम् ।

रत्या प्रीत्येक्षुकोदण्डपुष्पबाणमधः करे ॥३३७॥
ऊर्ध्वे पाशाङ्कुशौ पूज्यः पूर्वोक्तमनुना त्वयम् ।
रक्तवस्त्रपरिधानां सर्वाभरणभूषिताम् ॥३३८॥
पद्मद्वयकरां गौरवर्णां ध्यायेद्रतिं शुभाम् ।
श्यामवर्णां रक्तवस्त्रां सर्वाभरणभूषिताम् ॥३३९॥
ताम्बूलास्यां भजे प्रीतिं घटपुष्पलसत्कराम् ।
अग्रे तु कामदेवस्य वसन्तं परिपूजयेत् ॥३४०॥
सुधाकुम्भं वामहस्ते दक्षिणे कुसुमाकरम् ।
कदम्बवनमध्यस्थं रक्तमाल्यांशुकावृतम् ॥३४१॥
ध्यायेद्वसन्तं गौराङ्गं सुरूपं लोकमोहनम् ।
वँ वसन्ताय हृदयं तस्य सप्ताक्षरो मनुः ॥३४२॥
पूजाद्यर्थं ततोऽग्नीशरक्षो वायव्य मध्यतः ।
चतुर्दिक्षु च षड्दीर्घयुगलं सस्य बीजकम् ॥३४३॥
पठित्वा हृदयादीनि षडङ्गानि प्रपूजयेत् ।
तदग्राष्टदले देवमुखं तत्तु प्रदक्षिणम् ॥३४४॥
कामं भष्मशरीरं चानङ्गं मन्मथमेव च ।
वसन्तस्य सखायञ्च स्मरमिक्षु धनुर्धरम् ॥३४५॥
पुष्पबाणं तदग्रे तु लोकेशानायुधानि च ।
ततस्तु कामगायत्र्या यथाशक्ति जपं चरेत् ॥३४६॥
वसन्तं कामदेवञ्च श्लोकाभ्यां प्रार्थयेदिति ।
वसन्ताय नमस्तुभ्यं वृक्षगुल्मलताप्रियः ॥३४७॥
सहस्रमुखसंवाह कामरूप नमोऽस्तु ते ।
नमोऽस्तु पुष्पबाणाय जगदानन्दकारिणे ॥३४८॥
मन्मथाय जगन्नेत्ररतिप्रीतिप्रियाय च ।

### अथवा पाशमुद्रामाह

वाममुष्टिस्थतर्जन्या तथा दक्षिणतर्जनीम् ॥३४९॥
संयोज्याङ्गुष्ठकाग्रे तु तर्जन्यग्रे स्वकं क्षिपेत् ।
एषा पाशाह्वया मुद्रा विद्वद्भिः परिकीर्तिता ॥३५०॥
कामदेवं प्रणम्याथ मूलन्यासं समाचरेत् ।
आवाहयेन्मध्यकुम्भे देवं साङ्गं च पूजयेत् ॥३५१॥

आवाहितोऽसि देवेश सद्यः काले मया विभो।
कर्तव्यं तु यथालाभं पूर्णं पर्व त्वदाज्ञया ॥३५२॥
इति सावरणं देवं दमनैः पूजयेत्ततः।
धूपदीपादिकं दत्त्वा नित्यहोमं समाचरेत् ॥३५३॥
द्रव्यैस्तद्देवकल्पोक्तैर्होमस्तु त्रिगुणं जपात्।
पूजाशेषं समाप्याथ प्रार्थयेद् देवतामिति ॥३५४॥
सर्वरूपजगन्नाथ वाञ्छितार्थफलप्रद।
हृत्स्थान् पूरय मे देव कामान् कामेश्वरेश्वरः ॥३५५॥
एवं सम्प्रार्थ्य देवेशं विसृज्य च गुरुं ततः।
द्रव्याद्यैस्तोषयेद्विप्रान्योजयेदिति तद्विधिः ॥३५६॥
शक्तिपूजा च कर्तव्या दमनारोपणोत्तरम्।
कृते पुरस्तात् सकलं विफलं जायते प्रिये ॥३५७॥
अतः कार्या शक्तिपूजा दमनारोपणोत्तरम्।
सपुष्पदमनं चैत्रे तेन चाभ्यर्च्य कालिकाम् ॥३५८॥
सप्तजन्मकृतैः पापैर्मुच्यते नात्र संशयः।
चैत्रशुक्लत्रयोदश्यामधिवासनपूर्वकम् ॥३५९॥
आरोप्य दमनं दुर्गां विधिनानेन पूजयेत्।
मयोक्तेन वरारोहे तस्य पुण्यफलं शृणु ॥३६०॥
अश्वमेधसहस्रस्य राजसूयशतस्य च।
तत्फलं समवाप्यासौ देववद्दिवि मोदते ॥३६१॥
एवं यः कुरुते पूजां दमनारोपणाभिधाम्।
भवन्ति नापदस्तस्य कदाचिदपि सुन्दरि ॥३६२॥
सिध्यन्ति तस्य मन्त्राश्च नारीणां वल्लभो भवेत्।
सर्वसंपद्युतः श्रीमान् मोदते दिवि देववत् ॥३६३॥
यास्यन्ति परमं स्थानं यत्र देवी महेश्वरी।
पालयं निलयं सर्वं दामनं नाम मानवः ॥३६४॥
तेषां न्यूनाधिकं कर्म मासान्ते चैव मासिकम्।
गृहस्थो ब्रह्मचारी वा न करोति विमोहितः ॥३६५॥
क्रियास्तस्य विनश्यन्ति साधकः सिद्धिवर्जितः ॥३६६॥

## अथ पवित्रारोहणम्

**श्रीदेव्युवाच**

कुलजानां महेशानि पवित्रारोहणं कथम्।
कस्मिन् काले कथं कार्यं किमर्थं वद मे प्रभो ॥३६७॥

**श्रीभैरव उवाच**

पुरा देवासुरैर्देवि क्षीरोदधिस्तु मन्थितः।
तत्र नेत्रे महाभागे कश्यपस्य सुतो बली ॥३६८॥
मन्थाने योजितो भद्रे विषनिद्राविमूर्च्छितः।
न शक्नोति तलस्यान्ते वर्षासु वसितुं तदा ॥३६९॥
आराधितस्तु तेनाहं पवित्रेण महात्मना।
दिव्यं वर्षसहस्रं तु वायुभक्षो महाबलः ॥३७०॥
तुष्टोऽहं तेन देवेशि किं कर्तव्यं पुरोदितम्।
ततोऽसौ दण्डवद् भूमौ पपात मत्पदाग्रतः ॥३७१॥
प्रावृट्काले न शक्नोमि तलान्ते वसितुं हर।
ततः सोऽपि मया देवि कराभ्यां गृह्य भूतले ॥३७२॥
शिरसा धारितो देवि जटाजूटे वरानने।
ततः सर्वैस्तु देवैश्च शिरसा धारितः शुचिः ॥३७३॥
पुनः पवित्रनागाय वरो दत्तो मया शिवे।
पवित्रारोपणं यैस्तु क्रियते न फलं तव ॥३७४॥
दशकोट्यास्तु पूजायास्तेषामेव पवित्रकः।
तस्मात्सर्वेषु देवेषु पवित्रारोपणं क्रमात् ॥३७५॥
प्रतिपत्पौर्णमास्यां तु यस्य या तिथिरुच्यते।
द्वादश्यां वैष्णवैः कार्यं शुक्ले कृष्णेऽथवा हरः ॥३७६॥
व्यतीपातेऽयने चैव चन्द्रसूर्यग्रहे शिव।
विषुवे वृद्धिकाले च गुरोरागमने तथा ॥३७७॥
नित्यं पवित्रमुद्दिष्टं प्रावृट्काले त्ववश्यकम्।
कुर्यान्मिथुनसङ्क्रान्तौ तुलासङ्क्रमणावधि ॥३७८॥
आषाढ उत्तमो मासः श्रावणो मध्यमो भवेत्।
हीनो भाद्रपदः पक्षः श्वेतः सन्मध्यमो सितः ॥३७९॥
पञ्चमी चाष्टमी चैव नवमी दशमी तिथौ।

द्वादश्यां च चतुर्दश्यां पौर्णमास्यामथापि वा ॥३८०॥
कालो ग्रीष्मः शरद्वर्षा एषो मुख्यतमः प्रिये ।
केचिद्वसन्तमिच्छन्ति कालं माध्यमिकं बुधाः ॥३८१॥
नैव हेमन्तशिशिरौ प्रशस्तौ तौ कदाचन ।
एवं विज्ञाय देवेशि कृतादिषु यथाक्रमम् ॥३८२॥
सौवर्णं राजतं ताम्रं कलौ कार्पासजं शुभम् ।
कौशेयपट्टकं राज्ञां वनस्थानां तु वल्कलम् ॥३८३॥
पद्मजातं सौगतानां शूद्राणां क्षौममिष्यते ।
वटूनां दर्भसञ्जातं वैश्यानां तु शरोद्भवम् ॥३८४॥
मुञ्जजातं व्रतस्थानामाविकं समरैषिणाम् ।
कार्पासिकं पद्मजं च सर्वेषां शस्तमिश्वरि ॥३८५॥
आम्नायभेदाद् भिद्यन्ते सूत्रवर्णाः सुरेश्वरि ।
पूर्वार्धयोः सितं सूत्रं रक्तसूत्रं तथोत्तरे ॥३८६॥
पश्चिमेऽप्यथ पीतं हि अधो दक्षिणयोर्मतम् ।
नीलेनाक्तं भवेत् सूत्रं षडाम्नायेषु कर्हिचित् ॥३८७॥
आम्नायेष्वथ सर्वेषु प्रशस्तं सितमेव च ।
कुमारीकर्तितं सूत्रमतिप्राशस्त्यकारकम् ॥३८८॥
पतिमत्या कृतं मध्यमधमं विधवाकृतम् ।
विप्रक्षत्रार्यजातीनां पत्नीभिः रचितं शुचिः ॥३८९॥
आवर्जितं यच्छूद्राभिस्तदशुच्येव कथ्यते ।
विशेषो ह्यस्ति चामीषां विहितं पतिहीनया ॥३९०॥
वेश्यया कर्तितं सूत्रं मध्यमित्यपरे जगुः ।
रजक्या वाऽथ मान्त्रिक्या काषाय परयाऽथ वा ॥३९१॥
गोप्या वाप्यथ मुण्डिन्या पवित्रं यद्विनिर्मितम् ।
तत्सूत्रेण पवित्रेण सान्वयो नरकं व्रजेत् ॥३९२॥
तस्मात् सूत्रविनिर्माणे यत्नः कार्यो विशेषतः ॥३९३॥
मध्यमस्त्रीग्रहीयस्तु पुम्वारः श्रेष्ठ उच्यते ।
षण्डाहोऽधमकल्पः स्यात्तिथी रिक्ता विवर्जिता ॥३९४॥
साऽपि भूततिथौ ग्राह्या चतुर्थी भौम एव च ।
रवौ तु सप्तमी वर्ज्या रिक्ता वर्ज्या गुरावपि ॥३९५॥
तिथिस्त्याज्या न कापीह भौमेन सहिता यदि ।

पुण्यक्षेत्रस्य योगेन फलाधिक्यं हि जन्यते ॥३९६॥
तानीन्दुजीवदिनकृद्विष्णर्वानिर्ऋतिस्तथा ।
केष्वप्येतेषु पूर्वेद्युः परेद्युरपि वा पुनः ॥३९७॥
पट्टसूत्रं विशिष्टन्तु कार्पासजनितं तथा ।
त्रिगुणं त्रिगुणीकृत्य प्रक्षाल्यामलवारिणा ॥३९८॥
पश्चिमास्योद्गतैर्मन्त्रैर्दाक्षिण्यैः शोषयेत्ततः ।
मन्त्रैरथ पवित्राणि मनोरम्यानि कारयेत् ॥३९९॥
वरस्तु नवसूत्राणामष्टोत्तरशतै शरैः ।
पवित्रं परमं प्रोक्तं तदर्धं मध्यमं स्मृतम् ॥४००॥
कनिष्ठं सप्तविंशत्या तावदङ्गुलदीर्घकम् ।
पूजावरणदेवानां तुल्यानि रचयेद् बुधः ॥४०१॥
षट्त्रिंशद् ग्रन्थयः श्रेष्ठे चतुर्विंशच्च मध्यमे ।
द्वादशैश्च कनिष्ठे स्युरथान्यच्च पवित्रकम् ॥४०२॥
पूजास्थानस्य विस्तारदैर्घ्यमानं पवित्रकम् ।
अष्टोत्तरशतैर्युक्तं तां च तुल्यैश्च ग्रन्थिभिः ॥४०३॥
विताने वनिबध्नीयात् पूजास्थानोर्ध्वतस्तु तत् ।
स्कन्धाच्च नाभिपर्यन्तं दशग्रन्थिसमन्वितम् ॥४०४॥
क्रमज्ञानां च शिष्याणां पवित्रं तदुदाहृतम् ।
अन्येषां स्वेच्छया कुर्यात्तन्तुग्रन्थियुतानि च ॥४०५॥
ग्रन्थीनां वेष्ठनं श्रेष्ठं षट्त्रिंशद्भिश्च तन्तुभिः ।
चतुर्विंशतिभिर्मध्यमधमं भानुभिः स्मृतम् ॥४०६॥
उत्तमं मध्यमं चैव कनिष्ठं कथितं क्रमात् ।
उत्तमेऽङ्गुष्ठमानेन मध्यमे मध्यमेन तु ॥४०७॥
कनीयसि कनिष्ठेन अङ्गुल्यग्रन्तु यत् स्मृतम् ।
ग्रन्थयोवर्ममन्त्रेण कर्तव्याः प्राग्दिने ततः ॥४०८॥

**अथ विशेषमाह**

गुणानां वेष्ठनं यत्तु साऽऽवृत्तिरिति कीर्तिता ।
यदन्तरान्तरान्तस्य सूत्रेणावेष्ठनं भवेत् ॥४०९॥
स ग्रन्थिरिति निर्दिष्टस्तदाऽऽवृत्तिर्हि भङ्गिमा ।
यद्यद्वितत्तदेवानां तदिदानीं ब्रुवे तव ॥४१०॥

पूजागृहद्वार आदौ विज्ञयं भाषिताङ्गुलम् ।
शतत्रयं तथाऽऽवृत्तिर्ग्रन्थयः पञ्च कीर्तिताः ॥४११॥
भङ्गिमानस्तथा सप्त एवं सर्वत्र बुध्यताम् ।
द्वारपालस्याङ्गुलानि चतुर्विंशतिकानि हि ॥४१२॥
आवृत्तिरत्र सूत्राणां द्विशताधिकसप्ततिः ।
ग्रन्थिनेव समुद्दिष्टा भङ्गयः पञ्च च प्रिये ॥४१३॥
अङ्गुलानि दशो ज्ञेयाऽऽवृत्तिस्तु कला समा ।
ग्रन्थयस्तत्र ये ज्ञेयास्तथा भङ्गीशरोन्मिता ॥४१४॥
एतस्य द्विगुणं ज्ञेयमर्घ्यस्य वरवर्णिनि ।
पूर्वोद्दिष्टन्तु शङ्खस्य पीठे तत्त्रिगुणीकृतम् ॥४१५॥
अङ्गुलानि निजाङ्गानि तत्सार्धावृत्तिरिष्यते ।
ग्रन्थयोऽष्टौ च भङ्ग्यस्य सप्तसंख्या हि पार्वति ॥४१६॥
यज्ञसूत्रमिदं प्रोक्तं महागणपतेर्मया ।
रवेष्टादशाङ्गुल्य आवृत्तिस्तु शताधिका ॥४१७॥
चतुश्चत्वारिंशसंख्या ग्रन्थयो द्वादशैव तु ।
पञ्चैव भङ्गी चाप्यत्र विष्णोस्तु द्वादशाङ्गुलम् ॥४१८॥
चतुर्विंशतिरावृत्तिर्ग्रन्थयोऽष्टौ समन्विता ।
भङ्गी च सप्तसंख्याका महादेवस्य वै पुनः ॥४१९॥
एकादशाङ्गुलानि स्युस्त्रयस्त्रिंशस्तथाऽऽवृत्तिः ।
ग्रन्थिर्भङ्गी पञ्च पञ्च गुरोस्तद्द्व्यङ्गुलं मतम् ॥४२०॥
सप्तविंशतिरावृत्तिर्ग्रन्थिर्भङ्गी च सप्त वै ।
विंशत्यङ्गुलसंख्याकं वटुकस्य विधीयते ॥४२१॥
सूत्रावृत्तिश्च षट्त्रिंशद् ग्रन्थिर्दशत्रिवक्रता ।
पञ्चविंशाङ्गुलं क्षेत्रपालस्य त्रिदशावृत्तिः ॥४२२॥
ग्रन्थयोऽष्टौ पञ्चभङ्ग्यस्त्रिंशद्वै भैरवाङ्गुलम् ।
देवस्य च चतुःषष्टिरङ्गुलानां निगद्यते ॥४२३॥
आवृत्तिरेतद्द्विगुणा षोडशांशोऽस्य पर्व हि ।
भङ्गी च पर्वतुर्यंश आशापानां द्विसप्ततिः ॥४२४॥
आवृत्तिरर्धमेतस्य षोडश ग्रन्थयो मताः ।
वक्रता पञ्च चोद्दिष्टा प्रेतानां षष्टिरङ्गुलम् ॥४२५॥
आवृत्तिस्त्रिंशदत्र स्युः पर्वाष्टौ पञ्चवक्रता ।

यज्ञाख्यषोडशदलपद्मस्य त्रिंशदङ्गुलम् ॥४२६॥
आवृत्तिरत्र पञ्चाशत् परूंषि दश षोडश ।
अवालतात्रयी चापि तथाऽष्टाब्जस्य सुन्दरि ॥४२७॥
षोडशाङ्गुलयः प्रोक्ता आवृत्तिर्द्व्यधिका दश ।
ग्रन्थयो नव तत्र्यंशवक्रता परिकीर्तिता ॥४२८॥
षण्णो हि मूलपात्राणां पवित्रं विवृणोमि ते ।
षड्त्रिंशदङ्गुलीकन्तु विंशत्यभ्यधिकं शतम् ॥४२९॥
आवृत्तिस्तत्र सूत्राणां षट्त्रिंशद् ग्रन्थयोऽपि च ।
अवालता च षट्संख्या श्रीपात्रस्येदृशी स्थितिः ॥४३०॥
अङ्गुल्यः षोडशमिताः कुलकुम्भस्य पार्वति ।
तथा द्वात्रिंशदावृत्तिर्ग्रन्थयो द्वादशेरिताः ॥४३१॥
वक्रतास्तत्र पञ्चैव सुधादिव्या निशामये ।
चतुर्विंशतिरङ्गुल्य एतस्य द्विगुणावृतिः ॥४३२॥
पर्वाण्यष्टौ कीर्तितानि भङ्ग्यश्च पञ्च चेरिताः ।
पवित्रं शक्तिपात्रस्य द्वादशाङ्गुलसम्मितम् ॥४३३॥
ग्रन्थयः पञ्च भङ्ग्यश्च त्रिंशदावृत्तिरेव च ।
गुरोस्तु षोडशाङ्गुल्यः आवृत्तिस्तत्र विंशतिः ॥४३४॥
पर्वाण्यष्टौ वक्रता च नवैव स्युः सुरेश्वरि ।
भोगस्य द्वादशाङ्गुल्यः षोडशावृत्तिरेव च ॥४३५॥
परूंषि द्वादश तथा चतुस्रो वक्रता अपि ।
विंशाङ्गुलं वीरपात्रे द्वाविंशश्च गुणास्तथा ॥४३६॥
पर्वाणि पञ्च भङ्ग्यस्तु सप्त वा पञ्च वा तथा ।
चतुर्दशाङ्गुलं ज्ञेयं कुलपात्रपवित्रकम् ॥४३७॥
एकविंशतिरावृत्तिर्नव ग्रन्थिस्त्रिवक्रता ।
एकपञ्चाशदावृत्तिः पर्वाण्यष्टौ त्रिवक्रता ॥४३८॥
कालसङ्कर्षणीसूत्रं चतुर्विंशाङ्गुलं मतम् ।
अङ्गुलान्युग्रतारायाश्चतुर्दशमितानि हि ॥४३९॥
आवृत्तिरेतद्द्विगुणा ग्रन्थिर्दश त्रिजिह्मता ।
नवाङ्गुलं तिथिगुणं षट्पर्वाणि त्रिभङ्गता ॥४४०॥
पवित्रं छिन्नमस्तायाः सुन्दर्याः शृणु भैरवि ।
सूत्रं त्रिपुरसुन्दर्याः षोडशाङ्गुलसम्मितम् ॥४४१॥

आवृत्तिरुदिताशीतिः षोडश ग्रन्थयोऽपि च ।
षोडशाङ्गुलयोर्द्वात्रिंशदावृत्तिः पुरः स्वराः ॥४४२॥
त्रिभङ्गी च महालक्ष्या मातङ्ग्या अङ्गुलं द्विषट् ।
आवृत्तिर्विंशतिरपि ग्रन्थिर्भङ्ग्यो दश त्रयः ॥४४३॥
अष्टादशाङ्गुलं सूत्रं गुणाश्चाप्यष्टविंशतिः ।
पवित्रं भुवनेश्वर्याः पर्वभङ्ग्यो नवाश्रयाः ॥४४४॥
रात्रौ सामयिकैः सार्धं पवित्राणि समानयेत् ।
पूजास्थानेऽथ सिन्दूरकुङ्कुमारक्तचन्दनैः ॥४४५॥
कस्तूरीविधुलाक्षाभिर्गैरिकाद्यैर्विचिन्तयेत् ।
पवित्राऽऽदानदिवसात् पूर्वेद्युरधिवासनम्[८] ॥४४६॥
सद्योऽधिवासनं वाऽपि कुर्यात्तु परमेश्वरि ।
रात्रौ सामयिकैः सार्धं नित्यपूजाद्यनन्तरम् ॥४४७॥
देवस्य पुरतः स्थाप्य प्रतिमामण्डलस्य वा ।
पश्चिमे दक्षिणे चैव ह्युत्तरे पूर्ववत् क्रमात् ॥४४८॥
ब्राéणादींश्च संस्थाप्य कलशं चाथ पूजयेत् ।
[९]पूर्वसिंहासनैर्मन्त्रैः सूत्रपात्रं तु वामतः ॥४४९॥
स्थापयित्वात्र वर्माभ्यां कृत्वा रक्षावगुण्ठने ।
दन्तकाष्ठं तथा गन्धं भष्मचन्दनमृत्तिकाः ॥४५०॥
सिद्धार्थश्च तथा धात्री फलं वकुलसम्भवम् ।
पूर्वादिदिक्षु क्रमतः पवित्रं सूत्रभाजनात् ॥४५१॥
अश्वत्थपत्रपात्रेषु प्रक्षिपेत् सिद्धिहेतवे ।
ग्रन्थिस्थानेषु संस्थाप्य पीठे तन्नवतन्तुषु ॥४५२॥
देवता नवकं पूज्यमोकारश्चन्द्रमा तथा ।
वह्निर्ब्रह्मानागगुहौ रविश्चापि सदाशिवः ॥४५३॥
सर्वे देवाश्चापि पूज्याः शिरोमन्त्रेण मन्त्रयेत् ।
अभ्युक्षयेच्च हृन्मन्त्रेणास्त्रमन्त्रेण रोपयेत् ॥४५४॥
सूत्रेषु पूजयेद् ब्रह्म विष्ण्वीशाँश्च त्रिसूत्रके ।
क्रिया च पौरुषी वीरा गायत्री चापराजिता ॥४५५॥
विजया च जया देवि मुक्तिदा च सदाशिवा ।

---

८ पूजास्थाने इत्यतः पूर्वेद्युरधिवासनमित्यन्तः पाठो मा. क न प्राप्यते ।

९ ऊर्ध्व पाठो मा. क ।

मनोन्मनी च नवमी दशमी सर्वतोमुखी ॥४५६॥
ग्रन्थिस्थदेवताः पूज्या उपचारैः समर्चयेत् ।
मूलमन्त्रेण चामन्त्र्य पवित्रेषु कला यजेत् ॥४५७॥
नित्याः षोडश देवेशि श्रीविद्यां च स्मरेत् प्रिये ।
अष्टौ तारास्त्वष्टवाणी कलास्थाने प्रपूजयेत् ॥४५८॥
काल्यां काल्यादिनित्याश्च पूजयेत् परमेश्वरि ।
यावत्यो देवताः सन्ति नित्ये नैमित्तिकेऽपि च ॥४५९॥
याश्चावृत्तिपरिवाराः पञ्चायतनसंयुताः ।
अपेक्षितं हि सर्वेषां पवित्रमत्र कर्मणि ॥४६०॥
पवित्रेषु ततः पूज्यं मूलमन्त्रं षडङ्गकम् ।
घटेषु निःक्षिपेत्तानि गन्धपुष्पयुतानि च ॥४६१॥
सर्वौषधिपञ्चरत्नयुतानि छादयेत् पुनः ।
वस्त्रयुग्मेन नीलञ्च वज्रं मुक्ताफलं तथा ॥४६२॥
पद्मरागं मरकतं सर्वौषधिगणस्त्वयम् ।
रजनीद्वयसिद्धार्थौ कुष्टं मुस्ताप्रियं गवः ॥४६३॥
लामज्जशैलफलिनी मुरा मांसी च लोध्रकम् ।
बन्धयेच्च वितानाद्यं पवित्रं च महत्तथा ॥४६४॥
अधिवास्यपवित्रं तु त्रिसूत्र नवमेव वा ।
वेदिका वेष्टयित्वा तु आत्मानं कलशं धृतम् ॥४६५॥
अग्निकुण्डं विमानं च मण्डपं गृहमेव च ।
सूत्रमेकं तु संगृe दद्याद्देवस्य मूर्धनि ॥४६६॥
दत्त्वा पीठे त्विदं मन्त्रं पूजयित्वा सुरेश्वरि ।
कृताञ्जलिः पद्यमेनं मन्त्रमेनमुदीरयेत् ॥४६७॥
त्वं सूचाद्वेदमखक्रियाणां
प्राप्नोसि कार्पासजसूत्रसंज्ञाम् ।
त्वया विनिर्माय बहूपवीतं
दास्येऽमरेभ्यो भवसूत्रपूतम् ॥४६८॥
अधिवास इति प्रोक्तः पश्चादाराधनं भवेत् ॥४६९॥
नित्यार्चनानन्तरं तु नैमित्तिकमिदं भवेत् ।
दिवा नित्यार्चनं कुर्याद्रात्रौ नैमित्तिकं भवेत् ॥४७०॥
नैवेद्यधूपदीपानां कर्तव्या भूयसी स्थितिः ।

आकारणीया यत्नेन स्वस्ववन्द्यास्तु देशिकैः ॥४७१॥
कुसुमैस्तोरणं कार्यं बहिरन्तर्गृहस्य च ।
कृत्वा नासादिकं तत्र प्राग्वत् पूजां प्रकल्पयेत् ॥४७२॥
कुम्भे देवं समावाह्य यजेदावरणैः सह ।
आरोपयेत् क्रमेणैव ज्येष्ठ-मध्य-कनीयसम् ॥४७३॥
धूपयित्वा पवित्रन्तु मन्त्रेणैवाभिमन्त्रयेत् ।
प्रजप्तग्रन्थिकं चैव पूजयेत् कुसुमादिभिः ॥४७४॥
गायत्र्या पूजयेदादावेवं सम्पूज्य दापयेत् ।
आदौ दत्त्वार्घ्यमादित्ये तत्र चैकपवित्रकम् ॥४७५॥
देवाय मूलमन्त्रेण पवित्रस्य समर्पणम् ।
यस्य यस्य तु देवस्य यो योऽर्चाऽवसरो भवेत् ॥४७६॥
तस्य तस्य तु देवस्य तस्मिँस्तस्मिन् वरानने ।
पवित्रं तस्य दातव्यं तन्मन्त्रोच्चारपूर्वकम् ॥४७७॥
दैवतेभ्यः पवित्राणि दत्त्वा होमं समाचरेत् ।
मूलेन वा1ये दद्यात् पवित्रं पूजयेच्च तम् ॥४७८॥
छागाश्चावश्यकत्वेन दातव्या बलिकर्मणि ।
स्वगुरुं पूजयेत् पश्चाद् वस्त्रालङ्कारगोधनैः ॥४७९॥
सन्तोष्य च गुरुं पश्चाद्दक्षिणाद्यैः पवित्रकम् ।
यथाशक्ति नमस्कृत्य देवीरूपेण चिन्तयेत् ॥४८०॥
आरोपयेत् पवित्रं च वित्तशाठ्यविवर्जितः ।
गुरुः संपूज्यते यत्र तत्तत्कर्मफलावहम् ॥४८१॥
स चेन्न पूज्यते यत्र क्रिया सा निःष्फला सदा ।
गुरोरभावे तत्पुत्रं पुत्राभावे तदङ्गनाम् ॥४८२॥
तदभावे च तत्पौत्रं दौहित्रं तदसम्भवे ।
सर्वाभावेऽर्चयेदन्यं गुरुगोत्रसमुद्भवम् ॥४८३॥
पूजयेद्दीक्षितं यत्र तत्रैताः सफलाः क्रियाः ।
न पूज्यते निष्फलास्ताः भवन्ति परमेश्वरि ॥४८४॥
गुरोरनुज्ञया कुर्यात् स्वयं पवित्रधारणम् ।
समं पुत्रकलत्राद्यैः सूत्रपुच्छं तु धारयेत् ॥४८५॥
विष्णुतेजोद्भवं रम्यं महापातकनाशनम् ।
धर्मकामार्थवृद्ध्यर्थं स्वकण्ठे धारयाम्यहम् ॥४८६॥

सर्वपापक्षयं देव तवाग्रे धारयाम्यहम् ।
दत्त्वा सामयिकेभ्यश्च ब्राह्मणान् भोजयेत्ततः ॥४८७॥
तेभ्यो दत्त्वा पवित्राणि कन्यकाभ्यः सभोजनम् ।
कृत्वा पूर्णाहुतिं पश्चादग्नौ दद्यात् पवित्रकम् ॥४८८॥
अष्टोत्तरशतेनैक द्वादशाङ्गुलमानतः ।
श्रीचक्रमध्यसिद्धायै पूजयेत्तन्निवेदयेत् ॥४८९॥
दत्त्वा च भूयसीं पश्चात् स्वयं भुञ्जीत वाग्यतः ।
अतिस्पष्टश्च सम्प्रोक्तः पवित्रारोपणो विधिः ॥४९०॥
चातुर्मासे न कर्तव्यं वर्षे वर्षे पवित्रकम् ।
पवित्रारोपणं पुण्यमभीष्टफलसाधनम् ॥४९१॥
सप्तजन्मार्जितं पापं सञ्चरन्ति महापहाः ।
लक्ष्मीं सन्ततिवृद्धिं च सपुष्पं च पवित्रकम् ॥४९२॥
बहुयज्ञफलं देवि बहुतीर्थफलं तथा ।
दानं धर्मस्तु देवेशि कलां नार्हति षोडशीम् ॥४९३॥
पवित्रं परमं पुष्पं सर्वदोषविनाशनम् ।
तेन आर्यमिदं देवि कुलजैस्तु वरानने ॥४९४॥
लङ्घनं समयानाञ्च तत्क्रमे विधिना कृते ।
तद्दोषा नाशमायान्ति पवित्रेण वरानने ॥४९५॥
वर्षे वर्षे प्रकर्तव्यं यथाविभवविस्तरात् ।
वित्तशाठ्यं न कर्तव्यमिहैव च कुलागमे ॥४९६॥
शाठ्यं च यत्कृतं कर्म न सिद्धिर्न फलं भवेत् ।
तदा ज्ञात्वा वरारोहे वित्तशाठ्यं न कारयेत् ॥४९७॥
पवित्रं परमं पुण्यं सर्वपापं व्यपोहतु ॥४९८॥

*इति श्रीतन्त्रचिन्तामणौ नैमित्तिकार्चायां*
*तिथिनिर्णयादिपूर्वकग्रहणभेददमनारोपणपवित्रारोपणान्तनिर्णयनाम*
*त्रयस्त्रिंशत्तमः प्रकाशः ।*



# चतुस्त्रिंशत्तमः प्रकाशः

अधुना कथयिष्यामि सरहस्यं विशेषतः।
शारदीयां च वासन्तीमर्चां नानाफलप्रदाम् ॥ १ ॥
मनीषिणो विदधति विचारानत्र भूयसः।
स्मृत्यध्वचारिणः सर्वे कौलिकाः सर्व एव हि ॥ २ ॥
त्रैविध्यमध्ये किं रूपा भवतीयं समर्हणा।
यस्या अकरणतः पापं जायते नित्यमेव तत् ॥ ३ ॥
विधानाद्यस्य च फलं जायते काम्यमेव तत्।
अननुष्ठानतो यस्य पापमुत्पद्यते परम् ॥ ४ ॥
विधानार्थं फलञ्चापि तन्नैमित्तिकमुच्यते।
इयं या शारदीपूजा कथ्यते सा किमात्मिका ॥ ५ ॥
नित्या साऽस्याः परा मुक्तिरन्यापि च निगद्यते।
त्रिपुरघ्नाय यद्वाक्यं पुरोवाच सुरेश्वरी ॥ ६ ॥
शारदीयामीमां पूजां न करिष्यन्ति ये नराः।
ते पतिष्यन्ति निरये पापाः पूजापहारकाः ॥ ७ ॥
इत्यादिवाक्यान्नित्यत्वमविधानादथ श्रुतेः।
घटते काम्यता चास्यास्तत्र हेतुं वदामि ते ॥ ८ ॥
अत्रापि चण्डिकावक्त्राम्बुजोद्भूतं सुधासमम्।
वचः कलय कल्याणि काम्यता प्रतिपादकम् ॥ ९ ॥
शरत्कालीनपूजां ये कर्त्तारो भक्तिभाविताः।
तेषां दाराः सुतान् भोगं वित्तमारोग्यमुन्नतिम् ॥ १० ॥
तुष्टा दास्याम्यहं शम्भोर्लोके च वसति सदा।
इत्थं नानाफलोल्लेखश्रवणात्काम्यताऽपि च ॥ ११ ॥
शरदागमनं हेतुमुपन्यस्यास्य ये बुधाः।
नैमित्तिकत्वं ब्रुवते न ते पण्डितबुद्धयः ॥ १२ ॥
कालो च स्यादुपादाने कारणं कस्य वस्तुनः।
तदागमनहेतुत्वे नित्यस्यापि हि काम्यता ॥ १३ ॥

अकृते जायते नैव कृते च न फलं भवेत् ।
नैमित्तिकस्येदृशं हि ब्रुवते लक्षणं प्रिये ॥ १४ ॥
फलाद्याधायके किन्नो दृश्यते वचने इमे ।
तस्मादत्र हि विज्ञेयं नित्यकाम्यत्वमीश्वरि ॥ १५ ॥
यथा च शारदीयार्चा वासन्त्यर्चा तथैव हि ।
नानयोर्विद्यते भेदः स्वल्पोऽपि निगमादिषु ॥ १६ ॥
आसीत्पूर्वं महापूजा वासत्येव जगत्त्रये ।
रामरावणयोर्युद्धे जाते त्रेतायुगान्तरे ॥ १७ ॥
कालिकाङ्गीकृतत्वेन हन्तुं रामोऽशकन्न तम् ।
ततो वै चिन्तितो भूत्वा ब्रह्मासुरगणैर्वृतः ॥ १८ ॥
कालिकां बोधयामास हिमालयकृताऽऽलयाम् ।
त्वदुपासकयोर्देवि युद्धतो घोरमाहवे ॥ १९ ॥
अस्त्रशिक्षां राघवस्य समागत्यावलोकय ।
एवमभ्यर्थिता देवी अकाले बोधिता तथा ॥ २० ॥
जगाम ब्रह्मणा सार्धं लङ्कां द्रष्टुं रणन्तयोः ।
शुक्लप्रतिपदि यस्य प्राप्ता तं देशमीश्वरी ॥ २१ ॥
सप्तरात्रं निराहारं महद्युद्धमहर्निशम् ।
तयोर्दिव्यास्त्रप्रयोगे संहारः परमोऽभवत् ॥ २२ ॥
रामः शशाक नो हन्तुं राक्षसं काल्युपासकम् ।
स चापि नाशकद्रामं स्वयं विष्णुमुपागतम् ॥ २३ ॥
समीक्ष्य राक्षसो बाहुबलं देवी तुतोष ह ।
स्व भक्त इति कृत्वाऽस्मिन् पक्षपातं चकार च ॥ २४ ॥
रक्षस्यनुग्रहं दृष्ट्वा ब्रह्मा सर्वैः सुरैः सह ।
सन्तुष्टाव स्तवैर्दिव्यैर्भक्त्या प्रणतकन्धरः ॥ २५ ॥
काकूक्त्या प्रतिपातैश्च नमस्कारैः स्तवैरपि ।
तुष्टा ब्रह्माणमूचे सा हृत्स्थं वत्सवरं वृणु ॥ २६ ॥
वरं वव्रे तया सार्धं त्रिदशैः स चतुर्मुखः ।
त्वत्पादयोर्भक्तमपि त्यजैनं दुष्टराक्षसम् ॥ २७ ॥
ममानुग्रहलेशेन विष्णोर्मान्यतयाऽपि च ।
कृपादृष्ट्या च देवानां धर्मसंस्थापनाय च ॥ २८ ॥
त्रिलोको जायतां सुस्था देवाः सन्तु मखाः शिवाः ।

तपस्तपन्तु मुनयश्चातुवर्ण्यं प्रवर्तताम् ॥ २९ ॥
एष वीरजितो लोकाः शस्त्रपूतश्च गच्छतु ।
पूजां प्रवर्तयिष्यामि तव देव्यमरैः सह ॥ ३० ॥
तिथिमाद्यां समारभ्य यावद्रक्षोवधो भवेत् ।
दिनानि नव ते पूजा भविष्यति जगत्त्रये ॥ ३१ ॥
नवम्यां निहते वीरे रावणे विश्वकण्टके ।
प्रीतिमुत्पादयिष्यामः प्रभूतबलिभिस्तव ॥ ३२ ॥
अपरेऽह्नि दशम्यन्ते नीराजनमहोत्सवम् ।
गीतैर्नृत्यैस्तथा वाद्यैर्जलकर्द्दमकेलिभिः ॥ ३३ ॥
अश्लीलवेशवचनैः शस्त्रास्त्ररचनैरपि ।
रथद्विरदवाहानां सज्जनाविधिभिस्तथा ॥ ३४ ॥
सुराः प्रवर्त्तयिष्यन्ति मनुष्याश्च महीतले ।
भक्तोऽयं रावणो यद्वत्पादयोस्तव कालिके ॥ ३५ ॥
रामो भविष्यति तथा सदैव तव पूजकः ।
मन्त्रः कोऽपि च ते देवि रामोपासितसंज्ञया ॥ ३६ ॥
सद्यस्तव प्रीतिकरः ख्यातिं जगति यास्यति ।
इत्युक्ता ब्रह्मणा काली बभूवास्य पराङ्मुखी ॥ ३७ ॥
ततो जघान दिव्यास्त्रैर्राघवो रावणं रणे ।
तत आरभ्य देवेशि शारद्यर्चा प्रवर्त्तिता ॥ ३८ ॥
अत एव द्वे हि कार्ये वासन्ती शारदी तथा ।
केषाञ्चिदपि वासन्त्यां मतभेदो न विद्यते ॥ ३९ ॥
शारद्यास्तु त्रयो भेदाः कथ्यन्ते च मयाऽधुना ।
अश्विनसितपक्षस्य नवमी या शिवर्क्षयुक् ॥ ४० ॥
बोधयित्वेश्वरीन्तस्यां शरदर्चनमारभेत् ।
यावत्स्यान्नवमी शुक्ला तावत्पूजा प्रवर्तते ॥ ४१ ॥
इत्येकः पक्ष उदितो द्वितीयमवधारय ।
प्रतिपद्येव शुक्लायां बोधयित्वा सुरेश्वरीम् ॥ ४२ ॥
अभ्यर्चयेन्नवाहानि तन्त्रपौराणिकैः क्रमैः ।
उदीरितो द्वितीयोऽयं तृतीयं कथयाम्यथ ॥ ४३ ॥
सायाह्नि विल्वशाखायां षष्ठ्यां देवीं प्रबोधयेत् ।
प्रातः प्रवर्त्तते पूजा सप्तम्यादिदिनत्रये ॥ ४४ ॥

त्रैविध्य ईदृग्यर्चाया विवदन्ते मिथो बुधाः।
ब्रवीमि तत्र सिद्धान्तं छिन्नं येन तमो भवेत्॥ ४५॥
रम्भकल्पे पुरा देवी रम्भासुरतनूद्भवम्।
अष्टादशभुजा भूत्वा महाघोरतराकृतिः॥ ४६॥
उग्रचण्डास्वरूपेण जघान महिषासुरम्।
शितेन करवालेन मृतमेनं जहौ तथा॥ ४७॥
पतितं त क्षितावस्य व्यशीर्यत कलेवरम्।
नीललोहितकल्पे तु पुनरेव व्यजायत॥ ४८॥
उद्वेगकृद्देवतानां तथा यज्ञविघातकृत्।
इति कृत्वा महामाया भद्रकालीवपुर्धरा॥ ४९॥
सम्भूय षोडशभुजा विशेषेण शिवेन हि।
अवधीस्तं पुनश्चापि तत्याज गलितं भुवि॥ ५०॥
श्वेतवाराहकल्पादावजायत पुनः स हि।
जैगीषव्यप्रसादेन पूर्वजातिस्मरोऽभवत्॥ ५१॥
वारद्वयं हतं ज्ञात्वा देव्याऽऽत्मानं पुराऽसुरः।
स्त्रीवध्यतां च विज्ञाय स्वस्यामुष्यां जनावपि॥ ५२॥
कात्यायनमुनेः शापात्स्वप्नदर्शनतोऽपि च।
एकान्तभक्तिमास्थाय त्रिविधां महिषासुरः॥ ५३॥
आराधायामास कालीं स्वोदर्कपरिशुद्धये।
दिव्यद्वादशसाहस्रवर्षानन्तरमीश्वरी॥ ५४॥
प्रत्यक्षमागता तस्य वरं वृण्विति चाब्रवीत्।
ततोऽसुरः स ऊचे तां निरीक्ष्य पुरतः स्थिताम्॥ ५५॥
वरं पश्चाद्ग्रहीष्यामि देवि त्वत्तो मनोगतम्।
आदौ मे संशयं छिन्धि जागरुकं हृदि स्थितम्॥ ५६॥
वारद्वयं मामवधीः सुराररिणमूर्धनि।
धृत्वा कां कामाकृतिं त्वमघोरामथ भीषणाम्॥ ५७॥
जन्मन्यस्मिन्नपि पुनः केनाकारेण कालिके।
मां हनिष्यति दुर्वृत्तं निखिलामरकण्टकम्॥ ५८॥
निशम्येदृग्वचस्तस्य विहस्य जगदम्बिका।
चालयन्ती शिरः किञ्चिदुवाच मधुराक्षरम्॥ ५९॥
मदीयतादृशाकार दर्शनेन फलं तव।

किं भविष्यति दैत्येन्द्र किन्तु त्रासमवाप्स्यसि ॥ ६० ॥
दिदृक्षसे चेदथ तां करालामाकृतिं मम ।
पश्येत्युक्त्वा जगद्धात्री विहाय ललितं वपुः ॥ ६१ ॥
उग्रचण्डातनूरूपं दर्शयामास दानवम् ।
ज्वालाकरालवदनमष्टादशभुजान्वितम् ॥ ६२ ॥
दिव्यशस्त्रास्त्रकलितं मुण्डमालाभयङ्करम् ।
विदीर्णसृक्कयुगलं घोरदंष्ट्रातिभीषणम् ॥ ६३ ॥
चलत्सौदामिनीतुल्यरसनं नाददारुणम् ।
तद्रूपं दितिजो वीक्ष्य न्यमीलयत लोचने ॥ ६४ ॥
कृताञ्जलिपुटो भूत्वा प्रत्युवाच च कालिकाम् ।
घोरमीदृशमाकारं न शक्नोमि तवेक्षितुम् ॥ ६५ ॥
त्रैलोक्यत्रासनं रूपं देवि संहर संहर ।
इत्युक्त्वा सुरराजेन पुनः सा प्रकृतं वपुः ॥ ६६ ॥
धृत्वा तं दर्शयामास ततः सुस्थो बभूव सः ।
भद्रकालीवपुर्भूत्वा पुनः सा परमेश्वरी ॥ ६७ ॥
निरीक्षयामास रूपं द्वितीयं जीवनापहम् ।
तद्रूपदर्शनेऽप्येष पुनस्त्रासमुपेयिवान् ॥ ६८ ॥
तस्यापि परिवृत्तौ स प्रकृतः सम्बभूव ह ।
गतभीरथ तां देवीमुवाच दितिजाधिपः ॥ ६९ ॥
ईदृशाकारधारिण्या कथं देवि त्वया सह ।
समरे योद्धुमशकमहं वरमदोद्धतः ॥ ७० ॥
गरुत्मता सह यथा डुण्डुभस्य रणस्पृहा ।
दावाग्निना पतङ्गानां तिमिरस्य च भास्वता ॥ ७१ ॥
मृगाणां हरिणा चैव द्रुमाणां वायुना तथा ।
भेकानामहिना चापि प्राणिनां शयनेन च ॥ ७२ ॥
तद्वद्भवत्या समं मे कथमासीन्महान् रणः ।
यदतीतमतीतं तदिदानीं ते वरत्रयम् ॥ ७३ ॥
वृणेऽहं मम तद्देहि मनोरथपदातिगम् ।
एवं सौम्याकारधरा भूत्वाऽस्मिन् जन्मनीश्वरि ॥ ७४ ॥
त्वं मां वधिष्यसि त्राणहेतोरध्वरभोजिनाम् ।
द्वितीयन्ते मच्छिरसि वामपादाम्बुजं सदा ॥ ७५ ॥

स्थास्यसि प्राणयुक्तस्य पश्यतस्त्वन्मुखच्छविम्।
तृतीयं देववद्यज्ञभागं प्राप्नोमि कञ्चन॥ ७६॥
इत्येवमुक्ते वचने महिषेण सुरारिणा।
उवाच सस्मितं देवीभक्तिप्रणतकन्धरम्॥ ७७॥
दैत्येन्द्र श्रृणु मद्वाक्यं यथार्थं मधुराक्षरम्।
रम्भासुरस्ते जनकस्तपस्तप्त्वा सुदारुणम्॥ ७८॥
शङ्करं तोषयामास रम्भकल्पे हिमालये।
शिवत्ववरदानेन रम्भस्य सुततां गतः॥ ७९॥
मन्वन्तरत्रयं साग्रं भुक्तवाँश्च जगत्त्रयम्।
अतः परं न वस्तव्यं त्वया दितिजदेहिना॥ ८०॥
स्वपुरं प्रतिगन्तव्यं मम लोकादधः स्थितम्।
कात्यायनस्य शापाच्च शिरश्छेदनहेतुकात्॥ ८१॥
युद्धकाले स्थास्यति नो भक्तिरेतादृशी तव।
कपोतशापादीदृक्षादियुक्ताः पञ्च हेतवः॥ ८२॥
महिषायेदृशं दत्त्वा वरमुक्त्वा पुरा कथाम्।
सपद्यन्तर्दधे काली वर्षासु चपला यथा॥ ८३॥
देव्यामन्तर्हितायां स सर्वं विस्मृतवान् क्षणात्।
बभूव पूर्ववद्दुष्टो यज्ञदेवद्विजन्मनाम्॥ ८४॥
प्रणष्टा भक्तिरस्यापि देव्यामव्यभिचारिणी।
पूर्वदत्त मतिर्भ्रष्टा ज्ञानमन्तर्हितं चरेत्॥ ८५॥
इति ते कथितो देवि वृत्तान्तः पूर्वसम्भवः।
सिद्धान्तमनयोर्बोद्धुं रीत्या शक्त्या विचक्षणः॥ ८६॥
सिद्धान्तनिर्णयकृते कथिताऽऽख्यायिकाऽप्यसौ।
इयं च शारदीपूजा मूर्त्तिभेदास्त्रिधा मताः॥ ८७॥
तत्तद्द्रव्यमधिष्ठाय नृणां गृह्णाति सार्चनम्।
येऽष्टादशभुजां देवीमुग्रचण्डाभिधां प्रिये॥ ८८॥
पिपूजयिषवो मर्त्त्यास्तदुपासकतामिताः।
ते आश्विननवम्यां वै कृष्णायां सुसमाहिताः॥ ८९॥
करवाले बोधयेयुर्मध्याह्ने शङ्खनिस्वनैः।
ते खगानजान्वा महिषानेणान्वाऽन्यूबलीनपि॥ ९०॥
रीतिं संकलितां कृत्वा दद्युः षोडशवासरात्।

एषाद्या महिषालम्भकर्त्तृ पूजा विधिर्मतः ॥ ९१ ॥
अथ माध्यमिकः पक्ष इषस्याद्यतिथौ सिते ।
प्रातः परहनिःस्वनै सढक्कानकगोमुखैः ॥ ९२ ॥
ईश्वरीं षोडशभुजां भद्रकालीतिनामिकाम् ।
संबोध्य ये पूजयेयुर्दिनानि नव वै प्रिये ॥ ९३ ॥
अपूपमोदकप्रायबलिसंकलितक्रमैः ।
तृतीयः पक्ष ईदृक्ष उदितस्त्रिपुरारिणा ॥ ९४ ॥
अश्वयुक्सितषष्ठ्यां वै शाखायां विल्वशाखिनः ।
सायं काले बोधयित्वा वाद्यैरुच्चावचोद्धतैः ॥ ९५ ॥
दुर्गादेवीमर्चयीत सप्तम्यादिदिनत्रये ।
दशवाहुधरां देवीं महासौन्दर्यशालिनीम् ॥ ९६ ॥
पूजायाः कथितं चात्र द्वैविध्यं मुनिपुङ्गवैः ।
पौराणिकं तान्त्रिकञ्च कालिकाप्रीतिसिद्धये ॥ ९७ ॥
श्रुतध्वजाय प्राङ्नन्दिकेश्वरेण यदीरितम् ।
तद्वै बहुलविस्तारं शारदीयार्चनं मतम् ॥ ९८ ॥
यद्देव्या स्वयमाख्यातं कपिलाय महर्षये ।
तन्नाति बहुलं नाति स्वल्पं मध्यममुच्यते ॥ ९९ ॥
यदौर्वेण समाख्यातं सगराय महीभृते ।
तद्विज्ञेयं सुरेशानि कनीयः शरदर्चनम् ॥ १०० ॥
तान्त्रिकं बहुतन्त्रोक्तं सर्वैः स्वस्वमतागतम् ।
यो येनैव क्रमेणैतां शरदर्चां वरानने ॥ १०१ ॥
विधत्ते स समाप्नोति फलं तत्तत्क्रमेण हि ।
तान्त्रिके कौलिकी रीतिः पुराणे वैदिकी मता ॥ १०२ ॥
यद्येभ्यो रोचते देवि प्रतिनन्दन्ति ते हि तत् ।
अथ पूजा प्रकर्तव्या केषु केषु स्थलेषु हि ॥ १०३ ॥
तत्रोत्तरं ते वदामि श्रृणुष्वावहिता सती ।
तेजसे प्रतिमायन्त्रेऽथ वा माहेय दारवे ॥ १०४ ॥
शैलेय अथवा देवि धातवे गिरिसम्भवे ।
विल्ववृक्षः पत्रिका च घटः पूर्ववदीरितः ॥ १०५ ॥
गोमयेनोपलिप्तं वा स्थण्डिलं जगदीश्वरि ।
सिन्दूराङ्के मण्डलं वा शूलखड्गशरास्तथा ॥ १०६ ॥

पुस्तकं वा चित्रपटं सर्वतोभद्र एव वा ।
अनादिपीठं च तथा शिवलिङ्गं तथैव च ॥ १०७ ॥
जलमग्निस्तथा खातनृकरोटिस्थलं शुभम् ।
एवमादीनि चान्यानि स्थानान्यर्चनहेतवे ॥ १०८ ॥
पत्रिका तु परिज्ञेया कदलीविल्वदाडिमाः ।
हरिद्राऽशोककच्यौ च जयन्ती धान्यमालिनी ॥ १०९ ॥
एकाशीतिपदं चक्रं सर्वतोभद्रमण्डलम् ।
भित्तौ चित्रकृता देवी पूजिता फलदायिनी ॥ ११० ॥
पत्रिकादिषु पौराणं तान्त्रिकं पीठ एव हि ।
इयं हि पूजा द्विविधा पौराणी तान्त्रिकी तथा ॥ १११ ॥
आद्ये पौराणिका मन्त्रास्तान्त्रिके तन्त्रसम्भवाः ।
तेषु तेष्वाऽनुसन्धेयास्तान्त्रिकं श्रृणु मे प्रिये ॥ ११२ ॥
तत्राप्ययं त्वया ज्ञेयः सिद्धान्तक्रम ईदृशः ।
अष्टादशभुजामुग्रचण्डाम्बां भद्रकालिकाम् ॥ ११३ ॥
करैः षोडशभिर्युक्तामधो दशभुजामपि ।
मूर्त्तिपीठौ तथा स्वेष्टदेवभूतौ प्रपूजयेत् ॥ ११४ ॥
तन्त्रोदितविधानेन शारदर्चनसिद्धये ।
क्रमः स एव पौराणोऽदशीयः कोऽपि चाधिकः ॥ ११५ ॥
संक्षेपबाहुल्ययुतमुभयं परिगृह्ते ।
शरदर्चाविधौ पीठमूर्त्त्योः प्रागुत्कुलक्षणः ॥ ११६ ॥
एषः क्रमो नवम्यादि रूपयोगाय नार्हति ।
एवं स्वस्वमतायातसिद्धान्तागमभाषिणः ॥ ११७ ॥
वदन्ति नाना युक् युक्तीस्तत्तन्मन्त्रानुसारिणी ।
तेषु वादं विहायाशु शुद्धां बुद्धामुदीरिते ॥ ११८ ॥
कुर्वीरन् शारदीपूजां देवीभक्तिपरायणाः ।
नवरात्राणि कथ्यन्ते ज्ञातव्यं साधवो यदि ॥ ११९ ॥
तिथौ शुक्लप्रतिपदि कृत्वोपक्रममीश्वरि ।
सङ्कल्पं पुरतः कृत्वा स्वस्तिवाचनपूर्वकम् ॥ १२० ॥
सराशिमासपक्षाणां तिथेरुल्लेखनक्रमैः ।
सगोत्रनामोच्चरणं यजमानो विधाय हि ॥ १२१ ॥
विलिख्य सर्वतोभद्रमण्डलं च शुचौ भुवि ।

तन्मध्ये पूजयेद्दुर्गां नवार्णमनुना ततः ॥ १२२ ॥
मासभक्तबलिं दत्त्वा प्रार्थयेज्जगदम्बिकाम् ।
एह्येहि चण्डिके देवि सर्वमङ्गलदायिके ॥ १२३ ॥
सुस्थिरा भव देवेशि मण्डलेऽस्मिन् मनोहरे ।
बालुकां गृह्य यत्नेन नदीतटसमुद्भवाम् ॥ १२४ ॥
वेदीं कृत्वा प्रयत्नेन चतुरस्रां शुभावहाम् ।
द्विहस्ता चोत्तमा वेदी मध्यमा सार्धहस्तगा ॥ १२५ ॥
अधमा हस्तमात्रा च न्यूनाधिक्यं न कारयेत् ।
भूरसीति पठेन्मन्त्रं वेदीं संस्पृष्ट मानवः ॥ १२६ ॥
अपामग्निं समुच्चार्य प्रोक्षयेच्चन्दनाम्भसा ।
तन्मध्ये विलिखेन्मन्त्रं जयदुर्गाख्यमुत्तमम् ॥ १२७ ॥
तत्रावाह्य यजेद्देवीमष्टादशभुजां पराम् ।
पञ्चोपचारैः सम्पूज्य दिक्पालाँश्च प्रपूजयेत् ॥ १२८ ॥
पश्चान्नवार्णमनुना पूजयेदष्टमातृकाः ।
संशोध्य यवराशिं च यवाक्षीति मनुं पठन् ॥ १२९ ॥
प्रक्षिपेद्वेदिकामध्ये वक्ष्यमाणमनुं जपन् ।
ॐ यवत्वं यवरूपोऽसि यज्ञार्थे निर्मितो विधिः ॥ १३० ॥
देवीनां तृप्तिकृद् यस्मात्तस्मात्त्वं वरदा भव ।
जयन्ती मङ्गला काली भद्रकाली कपालिनी ॥ १३१ ॥
दुर्गा क्षमा शिवा धात्री स्वहा स्वधा नमोऽस्तु ते ॥ १३२ ॥
प्रागुत्तरेण तस्माच्च दध्यक्षतसमन्वितम् ।
चूतपल्लवसम्पन्नं फलवस्त्रयुगान्वितम् ॥ १३३ ॥
पञ्चरत्नसमायुक्तं पञ्चभङ्गदलान्वितम् ।
स्थापयेदव्रणं कुम्भं वरुणं तत्र विन्यसेत् ॥ १३४ ॥
गङ्गाद्याः सरितः सर्वाः समुद्राश्च सरांसि च ।
गजाश्वरया वल्मीकसंगमादथगोकुलात् ॥ १३५ ॥
मृदमानीय विप्रेन्द्र सर्वौषधिजलान्वितम् ।
स्नानार्थं विन्यसेत्तत्र यजमानस्य धर्मवित् ॥ १३६ ॥
सर्वे समुद्राः सरितः सरांसि च नदा ह्रदाः ।
आयान्तु यजमानस्य दुरितक्षयकारकाः ॥ १३७ ॥
श्रीकामस्तु न्यसेत्सम्यग् दशवृद्धिकरं शुभम् ।

काञ्चनं घृतगोधूमान् दुर्वालोचनया सह ॥ १३८ ॥
अग्निर्ब्रह्मभवानी च गजवक्त्रो महोरगः ।
स्कन्दो भानुर्मातृगणो दिक्पालाँश्च नवग्रहाः ॥ १३९ ॥
एवं घटेषु प्रत्येकं पूजयित्वा यथाविधि ।
मूर्त्तिं परिक्रमेदेकं दद्यादेतान् समाहितः ॥ १४० ॥
ततः परं सुरेशानि पाठयेदथ वा पठेत् ।
मार्कण्डेय पुराणान्तर्गतां भागवतीं स्तुतिम् ॥ १४१ ॥
समग्रां वा पठेदाहो वधं शुम्भनिशुम्भयोः ।
महिषासुरस्याप्यथ वा मधुकैटभयोरपि ॥ १४२ ॥
कुर्यादुभयमेवात्र विधिसङ्कल्पपूर्वकम् ।
ब्राह्मणान् वरयित्वैव वस्त्रालङ्करणासनैः ॥ १४३ ॥
विदध्यात्कामनोल्लेखं पूजां शक्त्या च पुस्तके ।
शनैः पठेत्पाठकोऽपि वर्णोच्चारणपूर्वकम् ॥ १४४ ॥
सुव्यक्तं नातिविश्लिष्टं न शिरश्चालगीतवत् ।
तनुमान्दोलयन्नापि न हसन्न रुदन्व्रजन् ॥ १४५ ॥
नाश्नन्नान्यैरालपँश्च न मध्यह्निवत्तथा ।
आचान्तः कृतशौचश्च पादोरुद्गमनीयवान् ॥ १४६ ॥
एतेन विधिनाधीते तुष्यते जगदम्बिका ।
यथोक्तफलदात्री च भवति प्राणवल्लभे ॥ १४७ ॥
यथैतत्पाठतो देवि प्रीता स्याद्द्रुतमीश्वरी ।
न तथा धूपदीपस्नाबलिनैवेद्यविस्तरैः ॥ १४८ ॥
पठनं पाठनं वाऽपि तस्मादेतस्य यत्नतः ।
कार्यं शारदपूजायां कालिकातुष्टिमिच्छता ॥ १४९ ॥
देवि शारदपूजायां यथैतस्या हि नित्यता ।
होमस्यापि तथा ज्ञेया मुख्ये अङ्गे इमे मते ॥ १५० ॥
हस्तमात्रं विधायादौ स्थण्डिलं शुद्धया मृदा ।
तत्राग्निस्थापनं कृत्वा वैदिकैर्मनुभिः प्रिये ॥ १५१ ॥
घृताहुतिं वा जुहुयात्तिलमिश्रामथापि वा ।
विल्लपत्रं च वा पद्म पायसं वा मधूक्षितम् ॥ १५२ ॥
मन्त्रस्तत्र तु विज्ञेयो भारती षोडशाक्षरी ।
अथवा जयदुर्गाया मन्त्रो यः परिनिष्ठितः ॥ १५३ ॥

सप्तशत्यास्तथा देवि एकैकः श्लोक एव वा ।
मन्त्रसहस्रसंख्या स्याच्छक्तावयुतमेव वा ॥ १५४ ॥
उभयत्रापि दातव्या कर्मान्ते दक्षिणा शुभा ।
इदं कर्मद्वयं देवि मूर्त्तेः पुरत आचरेत् ॥ १५५ ॥
नाप्यदो द्वितयं कार्यं क्षपायां वासरादृते ।
तस्यां कृते तु विफलं जायते वेदशासनात् ॥ १५६ ॥
देवी सप्तशतीपाठं गृह्णाति विधिना कृतम् ।
विधिना वाऽप्यविधिना पुनर्होमं प्रतीच्छति ॥ १५७ ॥
तस्माद्यत्नेन कर्तव्यो होमः शारदपूजने ।
होमः सप्तशतीपाठो बलिर्वादित्रवादनम् ॥ १५८ ॥
चतुष्टयमिदं शस्तमाशीषे कालिकार्चने ।
भेरीमृदङ्गमुरुजघण्टापटहनिःस्वनैः ॥ १५९ ॥
महोत्सवं प्रकुर्वीत यवरोपणकर्मणि ।
प्रसृते च दशम्यां वै भद्राभद्रं विचारयेत् ॥ १६० ॥
विविधापद्रवं यत्र श्वानमूषकदंशकैः ।
अदृश्यं यत्र वस्तूनां यदा भञ्जति नित्यशः ॥ १६१ ॥
चाल्पं वा यदि भुञ्जीत क्षयायुः परिकीर्त्तितम् ।
नापि जन्म यदोद्याने पूर्वायां दिशि विग्रहम् ॥ १६२ ॥
आग्नेयामपवादश्च याम्यां च मरणं ध्रुवम् ।
नैऋत्यां बन्धनं चैव व्याधिपीडा च वारुणा ॥ १६३ ॥
वायव्यां हानिकञ्चैव उत्तरे परकृन्भयम् ।
ईशाने राजपीडा स्यादलोभ्ये असुखप्रदः ॥ १६४ ॥
समस्तेनापि यन्मोयं भुवश्चत्वं वियोगजः ।
जनिते किञ्चिदूह्यं च अङ्कुरो यदि नित्यशः ॥ १६५ ॥
सभार्यः शोकमाप्नोति ह्रस्व-शुष्क-हत-कृशः ।
हानिर्वित्तकरत्रासो भवेद्विपदभाजनः ॥ १६६ ॥
यदाऽसितो भवेद्यत्र विमुखस्य तु ते यवाः ।
तदा भयं विजानीयाच्छोकेनापि विरुन्धता ॥ १६७ ॥
कीटादिभिर्यदा क्लेशो व्याधिशोकान्वितो भवेत् ।
कुञ्चितं घुसृतं यत्र अङ्कुरो ह्यवसीदति ॥ १६८ ॥
तदापि बहुरक्ताशो जने दुःखप्रदायकः ।

पूर्व-उत्तर-आग्नेय्यां यदि कलशोदकं सरेत् ॥ १६९ ॥
तदा ह्यग्निभयं विन्द्यात्कलहो नात्र संशयः ।
पश्चिमो वायुरीशानमुदकं स्स्रवते यदि ॥ १७० ॥
तदा रोगभयं नीयात्सतापाङ्गे मनस्यपि ।
याम्यां नैऋत्ये स्रवते सश्रियं हरते महत् ॥ १७१ ॥
भञ्जते कलशात्तोयं खाते सति यदा भवेत् ।
मरणं विहितं प्राप्य शोषितं जलनोविहि ॥ १७२ ॥
अकस्मादग्निदाहे तु वस्त्रे वा पुस्तकेऽपि वा ।
तत्र यमानयन्त्याशु नावसीदति शान्तिकम् ॥ १७३ ॥
अर्चाग्रे ह्यपि दृश्यते षण्मासात्फलमादिशेत् ।
अर्चामनन्तरं दृश्ये त्रिमासात्फलमश्नुते ॥ १७४ ॥
पाठान्ते हि निवृत्तेऽपि पक्षान्ते च फलप्रदा ।
तत्तच्चोपद्रवा ज्ञेया देवीं कोपयते पुनः ॥ १७५ ॥
शोकश्चैव विजानीयात्पुनरर्चयते शुभम् ॥ १७६ ॥
अथ कौलादयः कुर्युरस्मिन्नवसरे प्रिये ।
नैमित्तिकेन विधिना प्रातः स्थापनमुत्तमम् ॥ १७७ ॥
न्यासौघान् पुरतः कृत्वा नैमित्तिकविधीरितान् ।
शक्तौ तु पञ्चकान् सर्वान् षोढात्रितयमेव च ॥ १७८ ॥
माहेयपत्रान्नैतान् वै प्रकुर्वीत कदाचन ।
पात्राणां स्थापनं चापि कुर्यात्स्वेन मतेन हि ॥ १७९ ॥
विचाररीति तेषां वै नैमित्तिक उदीरिते ।
मा कल्पना च ते मन्त्राः स क्रमः संस्थितिश्च सा ॥ १८० ॥
तन्न्यासाः शोधनं तच्च वस्तूनां तर्पणं च तत् ।
आवाह्य देवीमिष्ट्वा च मूलमन्त्रोपचारकैः ॥ १८१ ॥
शक्त्योपचारैः संपूज्य प्रतीमापीठमूर्त्तिषु ।
शरदर्चा विधौ देव्याः स्थापनं च विसर्जनम् ॥ १८२ ॥
आर्द्रायां बोधयेद्देवीं मूलेन स्थापयेत्ततः ।
पूर्वोत्तराभ्यां संपूज्य श्रवणेन विसर्जयेत् ॥ १८३ ॥
तत्तन्नक्षत्रलाभस्तु फलाधिक्याय कल्प्यते ।
मातामलाभेन तु पुनः प्रशसता केवला तिथिः ॥ १८४ ॥
जयायां स्थापयेद्देवीं रिक्तायां भोगमाचरेत् ।

पूर्णायां चालनं देव्याः सिद्धिदा विजयङ्करी ॥ १८५ ॥
क्रूरे च स्थापयेद्देवीं शुभलग्ने तु चालयेत् ।
आदित्यकुजसंयुक्ते मूले पंगुयुतेऽथवा ॥ १८६ ॥
कुजलग्नेऽथ होलायां स्थापयेत्परमेश्वरीम् ।
चरलग्ने चरांशे वा कुर्यात्सर्वसमृद्धये ॥ १८७ ॥
अन्यलग्नेऽन्यांशके वा विपरीतफलप्रदम् ।
देव्याः प्रवेशः सप्तम्यामष्टम्यां महदर्चनम् ॥ १८८ ॥
अष्टम्यां तु विशेषेण पूजा कार्याऽत्र पार्वति ।
प्रभूतबलिदानं तु नवम्यां होम एव च ॥ १८९ ॥
अष्टमी-नवमीसन्धौ विशेषात्पूजनं चरेत् ।
नवम्यां बलिदानात्तु कूमारीपूजनं तथा ॥ १९० ॥
न दशम्यां बलिं दद्याच्चामुण्डा भोगमन्तरा ।
दत्ते नात्र बलौ देवि देव्यैः संकलितक्रमैः ॥ १९१ ॥
सद्यो नाशमवाप्नोति नरकोपद्रवादिभिः ।
दिनत्रयेऽपि च महास्नानं देव्याः प्रकल्पयेत् ॥ १९२ ॥
विसर्जनं दशम्यां च क्रीडाकौतुकमङ्गलैः ।
धूलिकर्दमविक्षेपोऽश्लिलोक्तिः पामरादिवत् ॥ १९३ ॥
नीराजनं बलादीनां मन्दादीनां नियोधनम् ।
पश्चादीनां कैलकिलं चर्या च नगराद् बहिः ॥ १९४ ॥
प्रोक्तानि कार्याण्येतानि देव्याः शारदपूजने ।
एवं विधं विधत्ते यो भक्तिभावेन मानवः ॥ १९५ ॥
तस्य पुण्यफलं वक्तुं ब्रह्मणापि न शक्यते ।
गण्यते पांशवो भूमेर्गण्यन्ते वृष्टिबिन्दवः ॥ १९६ ॥
न गण्यन्ते विधात्राऽपि शरदर्चाफलानि हि ।
राजसूयसहस्रस्य वाजिमेधशतस्य च ॥ १९७ ॥
अन्येषां यागपूजानामयुतस्य वरानने ।
फलमाप्नोति मनुजः सत्यं सत्यं न संशयः ॥ १९८ ॥
देववत्क्रीडति देवि यावदिन्द्राश्चतुर्दश ।
देवीलोके वसेत्कल्पं प्रमथादिगणैर्युतः ॥ १९९ ॥
विच्छिद्यते न वामुष्य सन्ततिर्जगतीतले ।
तेनास्यां शरदर्चायामानन्दमधिकं चरेत् ॥ २०० ॥

ममानन्दे सदानन्दः सदानन्दो भविष्यति ।
ममानन्दे निरानन्दो निरानन्दो भविष्यति ॥ २०१ ॥
यथाहमस्यां संतुष्टा तथैवायं मदर्चकः ।
सुखी वत्सरपर्यन्तं भवताद्वचनान्मम ॥ २०२ ॥
ममोत्सवे योऽश्रूणि मूढो मुञ्चति मानवः ।
स संवत्सरपर्यन्तमश्रूण्येव विमुञ्चतु ॥ २०३ ॥
अनुलेपनवासः स्रगलङ्कारादिभूषितः ।
विहरेद् यो ममानन्दे नृत्यन्गायन्हसन्बहु ॥ २०४ ॥
एवं रूपः सोऽब्दमेकं विहरत्वकुतोभयः ।
यो यादृशोऽस्यां भवति तादृगेव भवत्वसौ ॥ २०५ ॥
अतोऽत्र संहृष्टमनो विशेषेण भवेत् प्रिये ।
असंहृष्टः शिवक्रोधात्सद्यो नश्यति सान्वयः ॥ २०६ ॥

*इति श्रीतन्त्रचिन्तामणौ शारदीयपूजानिर्णयनाम चतुस्त्रिंशत्तमः प्रकाशः ।*[1]



१ अयं शारदीयपूजानिर्णयनाम प्रकाशो मा. ख न प्राप्यते ।

# पञ्चत्रिंशत्तमः प्रकाशः

**अथ बलिदानम्**

अथातो बलिदानस्य विधिरत्र निगद्यते
बलिस्तु त्रिविधो ज्ञेयस्तान्त्रिकः स्मार्त्त एव च ॥ १ ॥
वैदिकश्चेति तत्रादौ तान्त्रिकोऽष्टविधः स्मृतः ।
नित्योऽनित्यः पशुबलिर्नित्यो नैमित्तिकार्चने ॥ २ ॥
आवश्यकः पशुबलिस्तस्मान्नैमित्तिके विधौ ।
पशूनां जातिभेदेन भिन्ना च प्रोक्षणक्रिया ॥ ३ ॥
पूजान्ते वक्ष्यते साऽपि बलिदानक्षणे प्रिये ।
बलित्वेन विनिर्दिष्टा महिषच्छागलादयः ॥ ४ ॥
जलजाः स्थलजाश्चापि ग्रामजारण्यजास्तथा ।
पशवः पक्षिणः कीटास्तिर्यग्योनय एव च ॥ ५ ॥
इमे विधात्रा विहिता बलित्वेन दिवौकसाम् ।
नान्यैर्नैवेद्यसम्भारैस्तथा तुष्यन्ति देवताः ॥ ६ ॥
यथा पशूनां बलिभिर्विहगानां तथैव च ।
अत एव हि देवेशि यज्ञादौ विहितस्त्वसौ ॥ ७ ॥
देवानां प्रियशब्दस्तु पशुपर्याय उच्यते ।
एवं विज्ञाय सिद्धान्तं देव्याः सन्तोषहेतवे ॥ ८ ॥
पशुं दद्याद्बलित्वेन मेध्यानपि विहङ्गमान् ।
कृमि कीटादयः सर्वे ये तिर्यञ्चः प्रकीर्त्तिताः ॥ ९ ॥
न ते देवीबलित्वेन विधात्रा विहिताः प्रिये ।
आलभेत वृषं श्वेतं यज्ञं गोमेधनामभिः[1] ॥ १० ॥
नरमेधे नरञ्चापि गजक्रान्ते गजन्तथा ।
अश्वमेधे तथैवाश्वं शङ्खचूडे च हस्तिनम् ॥ ११ ॥
ब्रवीति यत्र वेदोऽपि तत्र कैव विचारणा ।
तस्मान्नैमित्तिकार्चायां बलिरावश्यकः प्रिये ॥ १२ ॥

---

१ यज्ञे गोमेधनामपि पाठः उचितः ।

विशेषेण प्रदातव्यो देवीसन्तोषहेतवे ।
बलिं विना नैव देवी पूजामङ्गीकरोति हि ॥ १३ ॥
तत्राप्युभौ प्रशस्येते महिषश्छाग एव च ।
अन्यदेवोचितबलिविचारैः किं प्रयोजनम् ॥ १४ ॥
येन सन्तुष्यते काली तद्विचारं ब्रुवेऽधुना ।
आरण्या अथवा ग्राम्या जलजानां च जातयः ॥ १५ ॥
खगानां जातयश्चापि ता एवादौ ब्रवीमि ते ।
मत्स्या मृगा बराहाश्च कच्छपा महिषास्तथा ॥ १६ ॥
गण्डका गोधिका ग्राहाः शार्दूला हरयोऽपि च ।
नकुला शलभाश्चापि गवयाश्छागलास्तथा ॥ १७ ॥
मनुष्याः पक्षिणश्चापि तेषां कोशा अपि प्रिये ।
भगवत्या बलित्वेन  विधात्रा कल्पिताः पुरा ॥ १८ ॥
एतेषां बलिदानेन सर्वकार्याणि साधयेत् ।

## अथ बलिदानफलम्

बलिभिर्वर्धते ह्यायुर्बलिभिः शाम्यते रूजा ॥ १९ ॥
जयत्यरातीन् बलिभिर्बलिभिः प्राप्यते धनम् ।
बलिभिः सिद्धिमाप्नोति बलिभिस्त्रिदिवं व्रजेत् ॥ २० ॥
निष्कामानां बलौ दत्ते प्राप्यो मोक्षेऽपि यज्ञवत् ।

## अथ जातिभेदाः

जातिभेदानथो वक्ष्ये समासादुपधारय ॥ २१ ॥
अष्टादशविधा मत्स्याश्चतुर्विंशतिधा मृगाः ।
वराहाः पञ्चधाः प्रोक्ता स्त्रिभेदाः कच्छपा अपि ॥ २२ ॥
द्विभेदा महिषास्तद्वद् गण्डकाश्च चतुर्विधाः ।
गोधिकाश्च त्रिभेदाः स्युर्द्विविधो ग्राह एव च ॥ २३ ॥
त्रिविधौ व्याघ्रसिंहौ च नकुलो द्विविधोऽपि च ।
शरभश्चैक जातिः स्यान्नास्य भेदो वरानने ॥ २४ ॥
गवयस्त्रिविधः प्रोक्तश्छागश्च षड्विधो मतः ।
चतुर्विधा मनुष्याश्च षट्त्रिंशजातयः खगाः ॥ २५ ॥

क्रमेण नामान्येषां च व्याहरामि तव प्रिये।
शङ्कुलो रोहितः शाह्लः पाठीनो राधनोऽपि च॥ २६॥
प्रोष्ठी नाल-शिशु-ह्यङ्गमेरेराङगुष्लिचाम्बराः।
म्रितिमाकुरराजीवगण्डकाः शस्तजातयः॥ २७॥
गोकर्णकृष्णसारैव रुरुन्यङ्कुचभूरवः।
प्रियवात प्रमीचीन समूहष्टमरकूषाः॥ २८॥
रङ्कुशम्बरकन्दल्यः सुस्वरो[२] रोहिषो वडः
कदल्येण विशालाक्षपटं गोल्काटरोहिताः॥ २९॥
वराहास्तवकान्क्रोऽकुशाला क्षणलस्वनाः।
कूर्मश्छत्री[३] चिचकटो वामनश्चेति वै त्रिधा॥ ३०॥
अर्करक्षीरिलश्चापि महिषो द्विविधो मतः।
कौञ्जरो[४] वारिलश्चार्मी वैशः खड्गाश्चतुर्विधाः॥ ३१॥
हिरण्या किलिका मीना गोधिका त्रिविधा मता।
दीर्घ ग्रीवश्चर्मपूरो ग्राहो द्विविध ईरितः॥ ३२॥
तरक्षुस्तरुगश्चित्रो व्याघ्रास्त्रिविध उच्यते।
शरलः कृकयुर्मेर्दी सिंहोऽपि त्रिविधो मतः॥ ३३॥
स्थूलः कलिङ्गश्च तथा नकुलोऽपि द्विधोरितः।
एकजातिं विना नैव शरभोऽन्यः प्रजायते॥ ३४॥
लाटिको विट्चरः सास्नी गवयोऽपि त्रिधोच्यते।
त्रिपिवः पालितः सौरी वर्करो मारिषस्तथा॥ ३५॥
षड्भेदश्च[५] भवेच्छागोऽविरपि त्रिविधो मतः।
दुर्मिकः पाटिशो भेदो मनुष्यानपि मे श्रृणु॥ ३६॥
न मनुष्यत्वं सामान्ये चातुर्विध्यं हि वर्त्तते।
प्रकारभेदतस्तस्या भिन्नता परिकल्प्यते॥ ३७॥
चण्डिकानुगृहीतस्य वितृष्णस्य भवाम्बुधौ।
तत्तल्लोकावाप्तिफलश्रवणोत्कण्ठितस्य च॥ ३८॥
स्वतः प्रवृत्तिर्देव्यास्तु बलिरूपो भवाम्यहम्।
आगत्य च स्वयं ब्रूते मां बलित्वेन योजय॥ ३९॥

२ मा. ख सुस्वराः पाठ।

३ श्चित्री पाठो=न्यत्र।

४ मा. ख 'कौञ्जरो' इत्यादितः 'त्रिविधो मतः' इत्यन्तो भागः (श्लोकः ३१-३३) नोपलभ्यते।

५ पञ्चभेदो पाठो=न्यत्र।

प्रत्यक्षमेव सर्वेषां नृपस्य च विशेषतः।
स एव उदितो देवि द्वितीयमवधारय॥ ४०॥
बहुवित्तस्य रत्नादेः स्तेनो लोकधृतस्तथा।
निर्णीय परिषन्मध्ये प्राग्विपाकेन कीर्त्तितः॥ ४१॥
शीर्षछेद्यतया देवि द्वितीयः स निगद्यते।
युद्धे जितो धृतः शत्रुः कूटर्योधि भटाकृतिः॥ ४२॥
स तृतीयो विनिर्दिष्टश्चतुर्थमवधारय॥
य आततायी पान्थानां कान्तारेऽप्यथ वा गृहे॥ ४३॥
विदितश्चापि निर्णीतः साक्षिभिः सत्यवादिभिः।
स हि तूर्यः समाख्यातः पञ्चमो नोपपद्यते॥ ४४॥
वक्ष्ये विहङ्गान् ये देव्यै बलित्वेन निरूपिताः।
पारावतास्ताम्रचूडा हंसा वाध्रीणसा स्तथा॥ ४५॥
उलूका लोहपृष्ठाश्च सर्वाद्याराश्च सारसाः।
फलविङ्काश्चकोराश्च चक्रवाकाः शुका अपि॥ ४६॥
शतपत्रा भरद्वाजा भूलिङ्गाश्चटकास्तथा।
कारण्डवाश्चक्रवाकाः पारुण्डाश्च कुलीयकाः॥ ४७॥
प्लवाः कुटरवश्चापि वर्तकाः कुक्कुटा अपि।
तित्तीर्युरुकक्रौञ्चाश्च नवचापशिखिण्डिनः॥ ४८॥
योक्त्रदात्यूहसाकल्य पैङ्गराजन्यवायकाः।
जिहीकाः सुखिलोकाश्च यद्गुहारीतवर्त्तकाः॥ ४९॥
जीवञ्जीवाश्च हारीता कोयष्टाश्मटटिट्टिभाः।
वककोकिलगृध्राश्च करेटुश्चीनखञ्जनाः॥ ५०॥
चिटीकाश्चैव जहिकाः सीचापुञ्जन्तभेकलाः।
कशाः सुपर्णाः भारुण्डा हामायाश्चापि पार्वति॥ ५१॥
इति ते कथिताः सर्वे षष्ठिर्भेदा विहायसाम्।
देव्यै योग्यबलित्वेन नान्य उक्ता विहङ्गमाः॥ ५२॥
एतेषां जातिभेदास्तु वर्तन्ते डामरादिषु।
बहुत्वान्ते न कथ्यन्ते ग्रन्थगौरवभीतितः॥ ५३॥
कपोतभ्रामकाऽवङ्कमनित्थतुरुकादयः।
पारावतास्तु दशधा हंसाः पञ्चविधास्तथा॥ ५४॥
राजहंसा मल्लिकाख्या धार्तराष्ट्राः परिस्फुटाः।

माहेया एव मन्येऽपि ज्ञेया विहगजातयः ॥ ५५ ॥
अधुना संप्रवक्ष्यामि बलिना येन येन हि ।
यं यं कालमभिव्याप्य तुष्टा भवति कालिका ॥ ५६ ॥
अष्टादशविधैर्मत्स्यैः कच्छपैरपि चण्डिका ।
तृप्यते मासमात्रं हि बलित्वेन नियोजितैः ॥ ५७ ॥
ताम्रचूडस्य बलिना हंससारसयोरपि ।
तृप्ता भवति मासौ द्वौ त्रीन् मासान् द्वीपिनक्रयोः ॥ ५८ ॥
करविङ्कैरूलूकैः स्यात् तृप्ता मासचतुष्टयम् ।
पञ्चमासान् भवेत्तृप्ता शुकैः पारावतैरपि ॥ ५९ ॥
दार्वाघातैश्चकोरैश्च षण्मासात् तृप्तिमाप्नुयात् ।
तृप्यते सप्तमासान् सा जिहीकैश्च कुलीयकैः ॥ ६० ॥
चतुर्विंशतिभेदैश्च कुरङ्गैर्गवयैरपि ।
मासानष्टौ भवेत्तृप्ता नवमासान् पिकैरपि ॥ ६१ ॥
हारीतबलिना देवी दशमासांश्च तृप्यते ।
तथा दात्यूहदानेन गजराजैर्वरानने ॥ ६२ ॥
मासानेकादश शिवा तृप्तिमाप्नोति सिद्धिदा ।
गोधिका बलिना काली तृप्ताब्दं व्याप्य जायते ॥ ६३ ॥
अविना नकुलेनापि त्र्यब्दं तृप्ता भवेदपि ।
अजेन बलिना चापि तुष्टा स्यात्पञ्चवासरम् ॥ ६४ ॥
जीवं जीवेन पाङ्क्तेन तुष्यतेऽटौ च हायनान् ।
पार्षतैयोनबलिना वराहबलिनाऽपि च ॥ ६५ ॥
द्वादशाब्दमभिव्याप्य तुष्टा भवति कालिका ।
हामायनामा यः पक्षी सिंहाकृतिधरोऽरुणः ॥ ६६ ॥
तद्दानात्तुष्यते देवी पञ्चविंशतिवत्सरम् ।
त्रिविधैरपि शार्दूलैर्महिषैर्द्विविधैरपि ॥ ६७ ॥
चतुर्विधैस्तथा खड्गैर्बलित्वेन समर्पितैः ।
शतसंवत्सरं यावच्चण्डिका तृप्तिमश्नुते ॥ ६८ ॥
एको वाध्रीणसोऽजसश्च विशेषः परिकीर्त्यते ।
अपरः पक्षिजातीयो हिमवच्चरणस्थितः ॥ ६९ ॥
बृद्धश्मश्रुधरः श्वेतः पादस्फोटिन्द्रियस्थितः[६] ।

६ पादस्फोटीन्द्रियोज्भितः पाठोऽन्यत्र ।

त्रिपिके रक्तरसनो निःश्रृङ्गोः स्वरभङ्ग्यजः ॥ ७० ॥
पीतचञ्चू रक्तशिरः सितपक्षोऽसिताङ्घ्रिकः[७] ।
नीलग्रीवः पाटलाभ गलो वाध्रीणसः खगः ॥ ७१ ॥
अजवार्ध्रीणसैस्तुष्टा भवेत् त्रिशतवत्सरम्[८] ।
निरङ्क सामान्यशशैर्बलित्वेन निरूपितैः ॥ ७२ ॥
जायते सा महाकाली[९] तुष्टा पञ्चशतं समाः ।
शरभैरथ सिंहैश्च शोणितैश्च स्वदेहजैः ॥ ७३ ॥
दत्ते सन्तुष्यते काली सहस्रं परिवत्सरान् ।
वाध्रीणसविहङ्गेन दत्तेन विधिना प्रिये ॥ ७४ ॥
अब्दद्वादशसाहस्रं तुष्यते जगदम्बिका ।
चौराततायिरूपेण नारेण बलिना तथा ॥ ७५ ॥
त्रीणि लक्षाणि वर्षाणां प्रीयते गुह्यकालिका ।
एतेन कथिता देवि बलयस्तृप्तिहेतवः ॥ ७६ ॥

## अथ पशुलक्षणम्

श्रेष्ठस्तत्र कलौ देवि महापीठे नरो बलिः ।
कर्तव्यः साधकेन्द्रेण स चारोगी च सुन्दरः ॥ ७७ ॥
धातुबद्धः कृष्णकूर्चोऽक्षतादिरनुलोमजः ।
मूल्याद्गृहीतः पापीष्ठो देवते स्वयमागतः ॥ ७८ ।
वर्षं षण्मासमथवा यथेच्छाचारपालितः ।
स भवेद् बलियोग्यस्तु नान्यश्चौरादिकाहृतः ॥ ७९ ॥
महिषः पञ्चमादूर्ध्वं दशाधस्ताद्वनोद्भवः ।
ग्रामजोऽपि महाक्रूरो नीरुक् साण्डैकवर्याकः ॥ ८० ॥
आरक्ताक्षश्चोर्ध्वश्रृङ्गो दीर्घपुच्छश्च मांसलः ।
आभारवाहको भीतो बलियोग्यः परो न सत् ॥ ८१ ॥
वनस्थः श्वेतवर्णो यो वन एव प्रपालितः ।
महाशूरो मांसलश्च शूकरो योग्य उच्यते ॥ ८२ ॥
ऊर्ध्वं त्रिवर्षात्सप्तार्वाक् मणिहीनश्च मांसलः ।

---

७ सिताङ्घ्रिकः पाठोऽन्यत्र ।

८ त्रिंशतिवतारम् पाठोऽन्यत्र ।

९ गुह्यकाली पा. महाकालसंहितायाम् ।

एकवर्णो देवताया वर्णरूपो गदोज्झितः ॥ ८३ ॥
साण्डः सश्रृङ्गो यूथेशो गन्धिमानौषधादिभिः ।
विगन्धीकृत्य बलये योज्यः सर्वोत्तमस्त्वयम् ॥ ८४ ॥
अजस्य लक्षणं देवि कथयामि विशेषतः ।
ऊध्वर्वश्रृङ्ग ऊध्वर्वलोमो लम्बकर्णश्च पीवरः ॥ ८५ ॥
साहङ्कारः पुष्टतनुर्बली पलितवर्जितः ।
लम्बकर्णः शुद्धकृष्णः प्रशस्तः पशुलक्षणः ॥ ८६ ॥
श्वेतः कृष्णो लोहितश्च कपिलश्चित्रपाण्डुरौ ।
षड्विधश्छागलः प्रोक्तो गृहस्थानां परो बलिः ॥ ८७ ॥
उत्तमौ सितकृष्णौ च मध्यमौ चित्रपाण्डुरौ ।
लोहितः कपिलश्चैव कनिष्ठः परिकीर्तितः ॥ ८८ ॥
त्रिमासात्परतश्चैव यावद्वर्षद्वयं भवेत् ।
उत्तमोऽसौ बलिः प्रोक्तस्तस्माद्धीनोऽधमः स्मृतः ॥ ८९ ॥
कृष्णवर्णो बलिर्यस्तु श्वेतपुच्छो यदा भवेत् ।
छागलं तादृशं विद्वान् दूरतः परिवर्जयेत् ॥ ९० ॥
एवं सिते कृष्णपुच्छे वर्जयेन्मतिमान् सदा ।
कृष्णवर्णश्छागलस्तु पृष्ठवंशे सितो यदि ॥ ९१ ॥
प्रशस्तं तं विजानीयाद्विपरीतं तु वर्जयेत् ।
पञ्चाब्दं महिषं श्वेतं प्रशस्तं परिकीर्तितम् ॥ ९२ ॥
स एव महिषः कृष्णः पाण्डरश्चाधमो बलिः ।
पक्षिणस्तु प्रशस्ताः स्युः सर्वे वर्णाः सुशोभनाः ॥ ९३ ॥
त्रिपक्षात्परतश्चैव दिने चापि विवर्जयेत् ।
सर्वेषामेव वर्णानां देवतानां तथैव च ॥ ९४ ॥
अधिकारः प्रीतिदश्च यज्ञेऽप्येषो विशिष्यते ।
मेषः सश्रृङ्गस्त्वजवच्छृङ्गहीनोऽपि कुत्रचित् ॥ ९५ ॥
वर्षद्वयार्धं च गृहे पालितो बलवत्तरः ।
मांसभारात्तथो दाने न क्षमः सालसो वरः ॥ ९६ ॥
नीलकण्ठच्छविः कण्ठे कपोतः पृष्ठकन्धरः ।
वर्षादूध्वर्वं गृहे पुष्टो बल्यर्थं योग्य उच्यते ॥ ९७ ॥
सर्वेषामग्रतो रौति यः प्रातर्बहुवर्णकः ।
मांसलस्त्वेकवर्णो वा ताम्रचूडो विशिष्यते ॥ ९८ ॥

## अथ निषिद्धानि

काँश्चिन्निषिद्धान् वक्ष्यामि विहितेषु बलिष्वपि ।
ग्राम्यानामथ वन्यानां पशूनां पक्षिणां तथा ॥ ९९ ॥
स्त्रियं नैव प्रयुञ्जीत बलिकर्मणि साधकः ।
ज्ञानपूर्वं बलिं दत्त्वा नरकं प्रतिपद्यते ॥ १०० ॥
अज्ञानेन विनिर्याति किञ्चित्पापं समश्नुते ।
अत्रिमाससमुत्पन्नं पशुं न विनियोजयेत् ॥ १०१ ॥
पुनस्तदर्धानुगतं जातु देव्यै समर्पयेत् ।
भग्नश्रृङ्गं भग्नदन्तमच्छिन्नानालमेव[१०] च ॥ १०२ ॥
काणं व्यङ्गं रोगिणं च श्रृङ्गाहतनरं तथा ।
दुष्टं गलितरोमाणं क्षीरपं च गलद्विशम् ॥ १०३ ॥
पशुं न दद्यादिदृशं तथा चैव विहायसम् ।
छिन्नत्रोटिं छिन्नपक्षं रुग्णमाहारवर्जितम् ॥ १०४ ॥
अनुङ्गीनं तथाकाशे मातुरङ्के परिस्थितम् ।
विहितावपि विज्ञातौ न दद्यात्पशुपक्षिणौ ॥ १०५ ॥
रुग्णाङ्गहीनः कृत्तोर्णो बालो बृद्धो न शष्यते ।
न दद्यात्स्त्रीपशोर्मांसं हव्यकव्ये विशेषतः ॥ १०६ ॥
अदेयानधुना वक्ष्ये पशूनपि विहङ्गमान् ।
भल्लुकान् मर्कटान् केरुन् सर्पानोतूञ्छूनस्तथा ॥ १०७ ॥
क्रमेलकाँश्च बालेयान् शल्यान् विट्चरशूकरान् ।
जलजेष्वपि मण्डूकान् रासभान् शिशुमारकान् ॥ १०८ ॥
कुलीरान् दीर्घपृष्टादीन् मीनानपि च भूरिशः ।
खगेषु वायसाँश्चिल्लान् दुर्विदान् कुलिकानपि ॥ १०९ ॥
एवमन्येऽपि विज्ञेया नाना शास्त्रागमादिषु ।
देव्यै देयाः पशुखगास्तथा कीटपतङ्गकाः ॥ ११० ॥
यस्य यस्य निषिद्धो यः स इदानीं निरूप्यते ।
नरं केशरिणं व्याघ्रं चाखुं खञ्जनमेव च ॥ १११ ॥
स्वकीयरुधिरं मद्यं न दद्याद् ब्राह्मणः क्वचित् ।
तौ द्वौ खगौ तथा सिंहं द्वीपिनं मानुषं तथा ॥ ११२ ॥
दत्त्वा रोगी च हीनायुर्भूत्वा नरकमश्नुते ।

१० छिन्नलाङ्गुलमेव च इति पाठोऽन्यत्र, एतदेव उचितम् ।

आत्महत्यामवाप्नोति दत्त्वा स्वरुधिरं द्विजः ॥ ११३ ॥
चाण्डालत्वमवाप्नोति सर्वकर्मविवर्जितः ।
न कृष्णसारं वितरेद् बर्हिणं च नराधिपः ॥ ११४ ॥
कृष्णसारं ददद् देव्यै द्वितीयो वर्ण ईश्वरि ।
ब्रह्मघ्नत्वमवाप्नोति हीनायुरपि जायते ॥ ११५ ॥
न चाऽऽर्याः[११] शूकरं दद्युर्न वर्त्तककुलीयकौ ।
ददतां तत्क्षणादेव महापातकिता भवेत् ॥ ११६ ॥
वर्णोऽपरो नो वितरेद् गोधिकाशुकखड्गिनः ।
मोहाद्धठाद्वा ददतां सद्यो ब्रह्मघ्नता भवेत् ॥ ११७ ॥

## अथानुकल्पः[१२]

देवेश चानुकल्पस्य विधिं मे ब्रूहि सत्त्वरम् ।
वानप्रस्थो ब्रह्मचारी गृहस्थो वा दयापरः ॥ ११८ ॥
सात्त्विको ब्रह्मनिष्ठश्च यश्च हिंसाविवर्जितः ।
ते न दद्युः पशुबलिमनुकल्पं चरन्त्यपि ॥ ११९ ॥
तत्तत्पशुप्रदानानां कलावाप्तौ वरानने ।
घृतगोधूमैक्षवाद्यैः फाणितै रत्नजैस्तथा ॥ १२० ॥
कृत्वा तं तं पशुं दद्युस्तत्तत्फलमवाप्नुयुः ।
कुष्माण्डपनसालावू कर्कटीविल्वदाडिमाः ॥ १२१ ॥
द्राक्षा खर्जूरलकुचरसालाऽमलजम्बुकम् ।
नारिकेलेक्षुदण्डाश्च मोचाम्रातमतीर्करा: ॥ १२२ ॥
बीजपूरा नागरङ्गा स्तालाञ्चलफलान्यपि ।
बलितुल्यानि चैतानि छागतुल्यानि तृप्तिसु ॥ १२३ ॥
महिषत्वेन कुष्माण्डं छागत्वेन च कर्कटीम् ।
वृत्ताकं कुक्कुटत्वेन मेषत्वेन च तुम्बिकाम् ॥ १२४ ॥
रम्भापुष्पं बीजपुरं पिण्डं जीवं कलौ भवेत् ।
मानुषत्वेन पनसं मत्स्यत्वेनेक्षुदण्डकम् ॥ १२५ ॥

---

११ वैश्याः पाठोऽन्यत्र ।

१२ मूषं मार्जारकं चाषं शूद्रो दत्त्वा पतत्यधः । वानप्रस्थो ब्रह्मचारी गृहस्थो वा दयापरः । सात्त्विको ब्रह्मनिष्ठश्च यश्च हिंसाविवर्जितः । तेन दद्युः पशुबलिमनुकल्पं चरन्त्यपि । इति पाठो महाकालसंहितायाम् उद्धृतः ।

शूरणं शम्बरत्वेन तथा कोशातकं मृगे।
पायसं तु गजत्वेन मार्जरत्वे कुलित्थकम्॥ १२६॥
पटोलं शूकरत्वेन शर्करा वालुकं तथा।
खड्गत्वेन महेशानि मत्स्यत्वे कदलीफलम्॥ १२७॥
मूषत्वे मूलकं चैव सारङ्कत्वे कलिञ्जकम्।
करित्वे नारिकेलं च कल्पयेत्परमेश्वरि॥ १२८॥
माषाः सर्वबलित्वेन सर्वेषां कृशरान्ततः।
पायसाऽपूपसंपाताल्लड्डूकैः कृशरान्तकैः॥ १२९॥
शाकोदनैस्तथा सूपैः दिव्याकार्द्रकपोलिका।
बटकालसुनैर्गृञ्जं कलिञ्जं बीजसहोदरम्॥ १३०॥
नानोपायैः षड्रसैश्च बलिरेवः प्रकीर्तितः।
क्रूरविद्याविधौ देवि पशुं पिष्ठमयं चरेत्॥ १३१॥
यवक्षोदमयं वापि यद्वा धान्यसमुद्भवम्।
माषपिष्ठमयं देवि सर्वकर्माणि कारयेत्॥ १३५॥
गुडार्धकं दधिगुडो लवणं गुडमेव च।
कुष्माण्डं नारिकेलं वा श्रीफलं चेक्षुमेव च॥ १३३॥
वस्त्रसंवेष्टितं कृत्वा च्छेदयेच्छूरिकादिभिः।
एषः स्मार्तो बलिः प्रोक्तो धर्मशास्त्रानुगामिनाम्॥ १३४॥
पूर्वपूर्वोऽत्रापि चोक्तो विशिष्टो देवतोषकः।
यस्य यत्राधिका भक्तिस्तेन तुष्यति देवता॥ १३५॥
वैदिकं तु बलिं दद्यादोदनं स्विन्नमायमान्।
सरोचनमतिक्रूरदेवते वटकान्वितम्॥ १३६॥
यथानुकल्पयोगेन योजनीयं महेश्वरि।
यथोक्तविधिमासाद्य यथोक्तं फलमाप्नुयात्॥ १३७॥

## अथ प्रोक्षणम्

**श्रीपार्वत्युवाच**

पशूनां प्रोक्षणं देव प्रकाराणि कथं विभो।

**श्रीभैरव उवाच**

देयादेय विचारस्तु एतावानुपवर्णितः॥ १३८॥
स्थानपात्रधिकारीष्टदानकालक्रमोऽपि च।

इदानीमेकरूपेण सर्वेषां प्रोक्षणं श्रृणु ॥ १३९ ॥
वाराही यमुना गङ्गा करतोया सरस्वती ।
कावेरी चन्द्रभागा च सिन्धुभैरवसागराः ॥ १४० ॥
अजस्नाने महेशानि सान्निध्यमिह कल्पयेत् ।
अर्घ्यपात्रोदकैः शुद्धैर्मूलेन प्रोक्षयेत्त्रिशः ॥ १४१ ॥
पशुपाशविनाशाय हेमकूटस्थिताय च ।
पराय परमेष्ठिने हूँ काराय च मूर्त्तये ॥ १४२ ॥
विल्वपत्रोदकैरेभिः प्रोक्षणं कारयेदथ ।
पशूनां यत्र बाहुल्यं भवेद्वित्तानुसारतः ॥ १४३ ॥
तत्रैव प्रथमं देवि सर्वलक्षणलक्षितम् ।
उर्जस्विन्नं सुन्दरं च बलिनं पशुमुत्सृजेत् ॥ १४४ ॥
अनन्तरं क्रमेणैव न च तत्र विचारणा ।
अस्त्रमन्त्रेण संरक्ष्य कवचेनावगुण्ठ्य च ॥ १४५ ॥
मूलमन्त्रं समुच्चार्य धेनुमुद्रामृतीकृतम् ।
गन्धपुष्पाक्षतैः सम्यक् परिपूज्योपचारकैः ॥ १४६ ॥
बलिं संपूज्य विधिवद् गन्धपुष्पाक्षतादिभिः ।
चैतन्यं कामडाकिन्योर्बीजत्रयमिदं स्थितम् ॥ १४७ ॥
वाक्पादात्तत्परं पायुरूपस्थचक्षुषी ततः ।
कर्णो सर्वाङ्गानि ततो मनः शेषे निगद्यते ॥ १४८ ॥
सरस्वती च पृथिवी मित्रश्चजलमेव च ।
तेजो नभो दिशः काली लीयताञ्च क्रियापदम् ॥ १४९ ॥
हृदस्त्रशीर्षाण्यन्तेव मम वाऽष्टौ स्फुटा मताः ।
पाद्यार्घ्याचमनीयाद्यैर्गन्धपुष्पैर्बलिं ततः ॥ १५० ॥
पूजयेद्देवता बुद्ध्या प्रणमेन्मनसा तथा ।

## अथ पशुगायत्री यथा

पशोः कर्णे चापि पशुगायत्री तदनूच्चरेत् ॥ १५१ ॥
तत्परं तन्मनुञ्चापि समुद्धारं श्रृणु द्वयोः ।
योगिनीबीजतो ङेन्तं बलिरूपं तु विद्महे ॥ १५२ ॥
देवीप्रियं पूर्ववच्च धीमहीति ततः परम् ।
तन्नः पशुरिति प्रोच्य वदेच्चाथ प्रचोदयात् ॥ १५३ ॥

## अथ महिषप्रोक्षणम्

विशेषः कश्चिदधिको महिषे तं ब्रुवेऽधुना ।
तदङ्गे देवताः सर्वाः पूजयेत्कुसुमाक्षतैः ॥ १५४ ॥
प्रणवादि नमोन्तैश्च मध्ये ङेन्तैः पदैस्तथा ।
स्थानानि देवताश्चापि क्रमेण कथयामि ते ॥ १५५ ॥
ब्रह्मरन्ध्रे च नासायां कर्णयो रसने तथा ।
नेत्रयोर्वदने चैव ललाटे तदनन्तरम् ॥ १५६ ॥
दक्षगण्डे वामगण्डे ग्रीवायां केश एव च ।
दक्षभ्रुवि तथा वामभ्रुवि चैव वरानने ॥ १५७ ॥
ओष्ठेऽधरे च स्कन्धे च हृदये पृष्ठ एव च ।
जठरे चरणे पुच्छे सर्वस्मिन्देह एव च ॥ १५८ ॥
ब्रह्मेन्द्रादीन्यथाकाशे सर्वतोमुख एव च ।
ज्योतींषि विष्णुश्चन्द्रश्च शक्रो वह्निर्महेश्वरः ॥ १५९ ॥
निर्ऋतिर्मित्रवरुणौ तथा लक्ष्मीः सरस्वती ।
धनेश्वरः सर्वराज आदित्यः साध्य एव च ॥ १६० ॥
गन्धश्चन्द्रस्तथा सिद्धाश्चामुण्डाः सर्वशेषगाः ।
अनेनैव प्रकारेण नरस्यापि प्रपूजयेत् ॥ १६१ ॥
क्रमसिद्धं पूर्वगतं मदोधिकमहार्हणम् ।
अथोभयोः शेषगतान् मन्त्रानाकलय प्रिये ॥ १६२ ॥
यमस्य वाहनत्वेन ख्यातस्त्वमसि कासरे ।
वसतः श्रृङ्गयोरग्रे मृत्युकालौ सदा तव ॥ १६३ ॥
भवानेव परिद्वेष्टि जवनान्तुरगानपि ।
तव रूपं समास्थाय रम्भासुरसुतः पुरा ॥ १६४ ॥
भगवत्या समं युद्धं कृतवान् दर्पमोहितः ।
देव्या त्वं निहसश्चासि तथा क्रान्तं शिरस्तव ॥ १६५ ॥
वहस्यतश्चण्डिकात्वं शिरसा भङ्गुरेण च ।
त्वत्तो नान्यो बलिः कश्चिद्देव्याः प्रीतिप्रदायकः ॥ १६६ ॥
अतो वदामि काल्यै त्वां भक्तियुक्तन चेतसा ।
त्रयि कल्याणमाधाय गच्छ कासर सङ्गतिम् ॥ १६७ ॥

## अथ नरबलि प्रोक्षणम्

मनुष्यबलिदाने तु विशेषं किञ्चिदीरयेत् ।
पूर्वेद्युरकृताहारं सम्परित्यक्तमैथुनम् ॥ १६८ ॥
स्नातं रक्ताम्बरधरं नरं मुण्डितमस्तकम् ।
रक्तचन्दनदिग्धाङ्गं कृतश्मश्रुनखं तथा ॥ १६९ ॥
अजाताश्रुकमुद्रिक्तं न दीनं नाप्यधोमुखम् ।
न बाडवं न चाण्डालं न क्लीवं पतितं न च ॥ १७० ॥
चतुर्विधेभ्योऽपि शिवे स्वयमागतमुत्तमम् ।
प्रोक्षयेत् पशुसामान्यरूपेण प्रथमं ततः ॥ १७१ ॥
महिषोक्तप्रकारेण पश्चादेतान्मनून् जपेत् ।
सर्वेषु प्राणिषु श्रेष्ठस्त्वं मनुष्य इति स्थितः ॥ १७२ ॥
बलिश्रेष्ठ महाभाग देवगर्भश्रियावृतः ।
रक्ष मां सर्वभीतिभ्यः सिद्धिं देहि तथोत्तमाम् ॥ १७३ ॥
राज्यं देहि यशो देहि देहि चानुत्तमां गतिम् ।
आरोग्यं दीर्घमायुश्च प्रजावृद्धिं रणे जयम् ॥ १७४ ॥
कल्याणं विपुलान् भोगान् दारानपि हृदीप्सितान् ।
कात्यायन्यां दृढां भक्तिं लक्ष्मीमप्यधिकां स्थिराम् ॥ १७५ ॥
दत्त्वा राज्यं परित्यज्य शरीरं पाञ्चभौतिकम् ।
देवीलोकं व्रज क्षिप्रं सज्ञातिसुतबान्धवम् ॥ १७६ ॥
महादानैर्महायज्ञैस्तपोभिरतिदुष्करम् ।
यत्स्थानं नाप्यते गच्छ तत्र नरपुङ्गव ॥ १७७ ॥
अङ्गीकृतो महाकाल्या मांसशोणितलिप्सया ।
देवीलोकं सुदुष्प्राप्यं प्राप्नुहि त्वं द्रुतं गतः ॥ १७८ ॥
तत्र गत्वा शिवं ध्याहि मामकीनं जगत्पते ।
देवीलोकगतिः काम्यो मत्प्रसादात्तवेदृशः ॥ १७९ ॥
त्वत्प्रसादादहं शत्रून् जयेयं रणमूर्धनि ।
श्लोकानष्टाविमान् देवि पठेन्नरबलिक्षणे ॥ १८० ॥
तत्तत्पशुबलिं छेदे ताँस्तान्मन्त्रानुदीरयेत् ।
नान्यजातिपशुव्यां तु मनूनन्यत्र योजयेत् ॥ १८१ ॥
उक्ताः पशुशिरः पुष्प समर्पणकराः क्रमात् ।
कलयातः परं देवि सङ्कल्पकरणे विधिम् ॥ १८२ ॥

तदशुद्धतया देवि अशुद्धं सर्वमुच्यते ।
प्रणवात्तत्समुच्चार्य मासपक्षतिथीन् स्मरेत् ॥ १८३ ॥
सम्भवे सति राश्यन्तं ङेन्तं भास्करमीरयेत् ।
सगोत्रं तत्तन्नामापि सत् ङे तन्तदनन्तरम् ॥ १८४ ॥
यस्य यस्य पशोर्यो यः कालस्तस्य स चेरितः ।
तत्तद्वर्षाद्यवच्छिन्नस्तत्तद्देवाख्यया सह ॥ १८५ ॥
पशूनां न विहङ्गानामन्येषामपि वस्तुनाम् ।
ब्रवीमि देवताः सर्वाः क्रमेणोत्सर्गकर्मणि ॥ १८६ ॥
प्राजापत्यो गजः प्रोक्तस्तुरगो[१३] यमदैवतः ।
तथा चैकशफाः सर्वे कथिता यमदैवताः ॥ १८७ ॥
महिषश्च तथा याम्य ऊष्ट्रो वै नैर्ऋतो मतः ।
गोवृषौ रुद्रदैवत्यौ छाग आग्नेय उच्यते ॥ १८८ ॥
मेषस्तु वारुणो ज्ञेयो वराहो वैष्णवो मतः ।
गौरीदेव्यौ व्याघ्रसिंहौ गण्डको ब्रह्मदैवतः ॥ १८९ ॥
यावन्तो मृगभेदाः स्युः कथिता वायुदैवताः ।
यावन्तः पक्षिणः सर्वे वायव्याः परिकीर्तिताः ॥ १९० ॥
प्राजापत्यास्तथा मत्स्याः कच्छपाः साध्यदैवताः ।
गोधा वरुणदैवत्या ग्राहा अपि च तादृशाः ॥ १९१ ॥
तथा च वभ्रुशरभावादित्येशानदैवतौ ।
कन्या [१४]दासस्तथा दासी प्राजापत्या नरास्तथा ॥ १९२ ॥
उभयं शिवदैवत्यं धरित्री विष्णु-दैवता ।
तथा समुद्रदैवत्यं रत्नमुक्ताफलादिकम् ॥ १९३ ॥
जलाशयास्तथा सर्वे वारिधानि कमण्डलुः ।
प्रपा कुम्भश्च कटकं ज्ञेयं वरुणदैवतम् ॥ १९४ ॥
सुवर्णमग्निदैवत्यं खर्पटं पितृदैवतम् ।
गुडं कुवेरदैवत्यं शर्करा मित्रदेवता ॥ १९५ ॥
जाङ्गलं वह्निदैवत्यं मधु स्याद्यक्षदैवतम् ॥
ताम्बुले देवता ज्ञेया शक्रो विद्याधरोऽथ वा ॥ १९६ ॥
तथा मृत्युञ्जयो देवो घृतेषु परिनिष्ठितः ।

१३ तुरगो इत्यादितः ऊष्ट्रो वै इत्यन्तो भाग मा. ख न प्राप्यते ।

१४ कन्या दास ....... इत्यादितो विद्याधरो=थवा (१९६) इत्यन्तो भागः मा. ख न प्राप्यते ।

तैलं तु राहुदैवत्यं कार्पासं केतुदैवतम् ॥ १९७ ॥
क्षीरं च तारादैवत्यं दधि चौषधिदैवतम् ।
देवः स्मरश्च गन्धर्वो मधुपर्के च चन्दने ॥ १९८ ॥
पुष्पञ्च लक्ष्मीदैवत्यं धूपे देवो वनस्पतिः ।
अप्सरो दैवतं ज्ञेयं सर्वं मृगमदादिकम् ॥ १९९ ॥
दीपोऽपि वह्निदैवत्यं नैवेद्यं विष्णुदैवतम् ।
पादुका सोमदैवत्यं छत्रं स्यादिन्द्रदैवतम् ॥ २०० ॥
देवता कामधेनुः स्याच्चामरे त्रिदशेश्वरी ।
व्यजनं वायुदैवत्यमिन्द्रः सिंहासनस्य च ॥ २०१ ॥
माला च रतिदैवत्यं डाकिनी देवता सुरा ।
मांसं निर्ऋतिदैवत्यं चिता चैव खदैवतम् ॥ २०२ ॥
प्राजापत्यानि शस्यानि पक्वान्नानि च सर्वशः ।
वाचस्पत्यानि वासांसि पाण्डुराण्यसितानि च ॥ २०३ ॥
मधुदैवानि रक्तानि दुर्गादैवं च पट्टकम् ।
विद्याब्राह्मी विनिर्दिष्टा विद्योपकरणानि च ॥ २०४ ॥
सारस्वतानि ज्ञेयानि पुस्तकादीनि पार्वति ।
पात्राणामपि सर्वेषां विश्वकर्माधिदैवतम् ॥ २०५ ॥
द्रुमाणां च लतानां च शाकानां हरितैः सह ।
फलानामपि सर्वेषां देवो ज्ञेयो वनस्पतिः ॥ २०६ ॥
अजिनानि तथा शैय्या रथमासनमेव च ।
उपानहौ तथा दोला यच्चान्यत्प्राणिवर्जितम् ॥ २०७ ॥[१५]
उत्तानां[१६] गिरदैवत्यं प्रवदन्ति मनीषिणः ।
ध्वजो वै धर्मदैवत्यः सीरं पर्जन्यदैवतम् ॥ २०८ ॥
पाषाणादि तथा रत्नं कथितं शक्रदैवतम् ।
गृहं तु सर्वदैवत्यम् अनुक्तं यन्मया प्रिये ॥ २०९ ॥
तत्सर्वं रुद्रदैवत्यम् ज्ञेयमुत्सर्गकर्मणि ।
प्रीतिकामनया प्रोच्य मूलमन्त्रं प्रकीर्त्य च ॥ २१० ॥
देवीरूपं पशुं ध्यात्वा तोयं तस्मिन् विनिःक्षिपेत् ।
मन्त्रितं मूलमन्त्रेण सपुष्पाक्षतचन्दनम् ॥ २११ ॥

---

१५ अस्मिन्पृष्ठे समागतो भागः श्लो. १९७ - २०७ मा. ख न प्राप्यते ।

१६ उत्तानामित्यतो उत्सर्गकर्मणि इत्यन्तो भागः श्लो. २०८ - २१० (क) मा. ख न प्राप्यते ।

यदा स चालयेद्गात्रं पशुस्तावन्न हन्यते[१७]।
बहूनां पशुसङ्घानामथवाऽपि विहायसाम्॥ २१२॥
क्रमेण ते नैव पुनश्छेदयेत्पशुपक्षिणैः।
व्यत्यये तु कृते देवि महान् दोषः प्रजायते॥ २१३॥
सहस्रायुतलक्षाणां बलीनां सम्भवे सति।
द्वौ त्रीन् पञ्च तथाऽष्टौ वा दश वा द्वादशापि वा॥ २१४॥
एभ्योऽधिकान् नैव कुर्यादेवीभावनया स्थितान्।
प्राच्याशाभिमुखान् कृत्वा युगपन्मन्त्रमुच्चरन्॥ २१५॥
तन्त्रेणैव बलीन् सर्वान् प्रोक्षयेद्देशिकोत्तमः।
छेदका अपि भूयांसः कर्तव्याः कमलानने॥ २१६॥
हरिद्वीप्यजकोरभ्रलुलामाकाशगामिनः।
दद्यादेतान् वामभागे दातव्यानि च यानि हि॥ २१७॥
मत्स्यान् ग्राहाच्छशान् खड्गान् कमठान् गोलगोधिके।
यावतो मृगभेदाँश्च दद्यात् सम्मुख एव हि॥ २१८॥

## अथ खड्गलक्षणम्

अथ वक्ष्यामि खड्गानां लक्षणं तन्त्रवर्त्मना।
येन सञ्छेदनेनापि साधकः सिद्धिमालभेत्[१८]॥ २१९॥
सर्वेषामुत्तमः खड्गश्चन्द्रहासः सुखावहः।
पञ्चाशदङ्गुलैः कायः किं वा तालत्रयेण तु॥ २२०॥
करवीरदलाकारः किं वा पद्मदलाकृतिः।
अथवा कुत्र खड्गेन दण्डखड्गेन भेदयेत्॥ २२१॥
महाबलीनां सर्वेषां दत्त्रमत्र प्रकीर्तितम्।
कर्तृकया क्षुरेणापि छिन्द्याच्छुरिकया न च॥ २२२॥
कुठारपरशुखड्गागैश्छेदयेन्न कदाचन।
खड्गाग्रमध्ये मुष्ठौ तु मिथुनानां त्रयं यजेत्॥ २२३॥
वागेशी सहितो ब्रह्मा लक्ष्मीनारायणौ तथा।
उमामहेश्वरौ चैव तत आवाह्येदशौ॥ २२४॥
कालीं कृतान्तसदृशीं येन छेद्यो बलिप्रिये।

१७ "यदा स चालयेद्गात्रं गृहीतस्तु तदेशया। यावन्नचालयेद्गात्रं पशुस्तावन्न हन्यते" इति पाठः मा. क।
१८ भाग्भवेत् पाठ उचितः।

माया कूर्चः शाकिनी च एह्येहि भगवत्यपि ॥ २२५ ॥
चामुण्डे चाथ सान्निध्यं कुरु युग्मेत्यधिष्ठिता ।
भवद्वयं सन्धिहीनं फट्युगं हृदयं शिरः ॥ २२६ ॥
खड्गस्य मूलमन्त्रेण खड्गं समभिपूजयेत् ।
तारपाशत्रयाकूर्चं शाकिनीभिः स उच्यते ॥ २२७ ॥
ध्यायेत्कुसुममादाय खड्गमादौ वरानने ।
कृष्णं पिनाकपाणिं च कालरात्रीस्वरूपिणम् ॥ २२८ ॥
उग्रं रक्ताभनयनं रक्तमाल्यानुलेपनम् ।
रक्ताम्बरधरं चैव पाशहस्तं कुटुम्बितम् ॥ २२९ ॥
पिचमानं च रुधिरं भुञ्जानं क्रव्यसंहितम् ।
क्षोभयेत्तज्जगत्सर्वं कम्पनादिप्रचारणैः ॥ २३० ॥
वेष्ठितं मृत्युकालाभ्यां वामदक्षिणभागतः ।
पूर्वोदितेन मन्त्रेण प्रत्येकं कीर्तितेन हि ॥ २३१ ॥
गन्धपुष्पाक्षतैर्धूपैर्दीपैः पाद्यादिभिर्यजेत् ।
ततो बद्धाञ्जलिर्मन्त्रं पठेत्खड्गं निरीक्ष्य वै ॥ २३२ ॥
रसना त्वं चण्डिकायाः सुरलोक प्रसाधिका ।
भुङ.क्ष्व तस्य पशो रक्तं ऋथसंहतिमेव च ॥ २३३ ॥
छिन्धीमन्निव मे शत्रुं मङ्गलानि प्रयच्छ च ।
दैत्यदानवरसोसृक् मदोन्मत्त नमोऽस्तुते ॥ २३४ ॥
एतेन खड्गमामन्त्र्य तन्नामाष्टकमुच्चरन् ।
गृह्णीयान्निशितं खड्गं येन सद्यो भवेद्वधः ॥ २३५ ॥
असिर्विशासनः खड्गस्तीक्ष्णधारो दुरासदः ।
श्रीगर्भो विजयश्चैव धर्मपालो नमोऽस्तुते ॥ २३६ ॥
तारं कालीयुगं यज्ञेश्वरि लोहपदं वरेत् ।
दण्डाये नम इत्येतन्मन्त्रः षोडशवर्णकः ॥ २३७ ॥
अष्टोत्तरशतं जप्त्वा तत उत्थाय साधकः ।
प्रहाराणां चाधिकारी तेषामेव विधीयते ॥ २३८ ॥
स्वयं वा भ्रातृपुत्रो वा भ्राता वा सुहृदेव वा ।
सपिण्डं छेदयेद्वापि शुद्धान्तः करणां यदि ॥ २३९ ॥
नीर पूर्णाङ्गहीनं वा न काणं नापि कुब्जकम् ।
न योजयेच्छत्रुपक्षं बलिछेदनकर्मणि ॥ २४० ॥

उत्तराभिमुखो भूत्वा बलिं पूर्वमुखं तथा ।
निरीक्ष्य साधकः पश्चादिमं मन्त्रमुदीरयेत् ॥ २४१ ॥
पशुस्त्वं बलिरूपेण मम भाग्यादुपस्थितः ।
प्रणमामि ततः सर्वरूपिणं बलिरूपिणम् ॥ २४२ ॥
चण्डिकाप्रीतिदानेन दातुरापद्विनाशनम् ।
चण्डिका बलिरूपाय बले तुभ्यं नमोऽस्तुते ॥ २४३ ॥
यज्ञार्थे बलयः सृष्टाः स्वयमेव स्वयंभुवा ।
अतस्त्वां घातयाम्यद्य तस्माद्यज्ञे वधोऽवधः ॥ २४४ ॥
शिवात्कृतमिदं पिण्डमतस्त्वं शिवतां गतः ।
उद्बोध्य स्वपशोस्त्वं हि न शिवस्त्वं शिवा ह्यसि ॥ २४५ ॥
ऐँ ह्रीँ श्रीमिति मन्त्रेण त्वं बलिर्मत्स्वरूपिणम् ।
चिन्तयित्वा न्यसेत्पुष्पं कुम्भकेनास्य मस्तके ॥ २४६ ॥
छित्त्वानेन पशुं सद्यस्तदीयं रुधिरं प्रिये ।
ततः स्वर्णादिपात्रेषु गृह्णीयादुष्णफेनिलम् ॥ २४७ ॥

**पात्राणि यथा**

अथ पात्रादि वक्ष्येऽहं स्थाप्यते यत्र शोणितम् ।
हैमे वा राजते ताम्रे ग्राह्यं रक्तं महीभृता ॥ २४८ ॥
सामन्तैर्माण्डलीकैश्च ताम्रे वा कांस्यरैत्ययोः ।
दरिद्रगृहिभिश्चापि मार्त्तिके वाऽथ दारवे ॥ २४९ ॥
अथवा पत्रपुटके नैव लोहे कदाचन ।
न रङ्गे सीसके चापि नारिकेलफले त्वचि ।
कौलानां सर्वपात्रेभ्यः कपालं नान्यमीष्यते ।
येषां पशूनां पललैर्यावती तृप्तिरीरिता ॥ २५१ ॥
भगवत्या प्रिये तृप्ति रुधिरैरपि तावती ।
नित्ये नैमित्तके वाऽपि कात्यायन्याः प्रपूजने ॥ २५२ ॥
विना बलिं दद्यादामे पललशोणिते ।..
पशोर्वा पक्षिणो वाऽपि नरस्यापि विशेषतः ॥ २५३ ॥

## अथ मस्तकपतितफलम्

एवं दत्त्वा बलिं देव्यै बलिदानविधिर्यथा ।
शुभाशुभं विजानीयाद्राज्यस्य च नृपस्य च ॥ २५४ ॥
यदि वायव्यदिग्भागे नैऋत्ये दक्षिणेऽपि वा ।
मस्तके पतिते चैव हानिरत्र विनिर्दिशेत् ॥ २५५ ॥
शेषेषु दिक्षु सर्वासु विदिक्षु च फलं श्रृणु ।
पूर्वे चोत्तरदिग्भागे पतिते यदि मस्तके ॥ २५६ ॥
सर्वसम्पत्करं विद्याद्राजा राज्यं विनिर्दिशेत् ।
भ्रमित्वा दक्षिणे कर्णे यदा पतति वै शिरः ॥ २५७ ॥
तदा सिद्धिं च मासान्ते वामकर्णे विपद् भवेत् ।
राज्ञामग्रे भवेद्धानिर्गृहस्थानां शुभं भवेत् ॥ २५८ ॥
ऐशान्यमध्ययोश्चैव पतिते यदि मस्तके ।
तदा स्वल्पेन कालेन सर्वसिद्धिर्भवेद्ध्रुवम् ॥ २५९ ॥
छिन्नं शिरो निपतितं सहाख्यं यदि दृश्यते ।
विभूतिं तस्य जानीयाद्राजा राज्यं विनिर्दिशेत् ॥ २६० ॥
एकवारे भवेत्सिद्धिर्द्विवारे हानिरुच्यते ।
गृहस्थानां विजानीयाद्राज्ञां तु विपरीतकम् ॥ २६१ ॥
यदाश्रु दृश्यते नेत्रे तदा हानि विनिर्दिशेत् ।
यदा कटकटाशब्दो दन्तानां श्रूयते क्वचित् ॥ २६२ ॥
तदा तु मरणं विद्याध्दानिं सर्वत्र निर्दिशेत् ।
दद्याद्राक्षसदिग्भागे मन्त्री बलिशिरः स्वयम् ॥ २६३ ॥
तद्दक्षिणे रक्तपात्रं विपरीतं न सन्दिशेत् ।
देवस्य सम्मुखं कृत्वा छिन्नं भागं प्रकल्पयेत् ॥ २६४ ॥
तदेव शस्तं जानीयान्मध्यमं विपरीतकम् ।
बलीनामिति संज्ञानां शिरश्च पुरतो वदेत् ॥ २६५ ॥
कीलकान्ते न्यसेत्सर्वं यथा कम्पो न जायते ।
शीर्षोपरि ज्वलद्दीपं प्रदद्याच्चन्दनाक्षतम् ॥ २६६ ॥
घृतेन सार्वभौमः स्यात्तेन सिद्धिं च विन्दति ।
शिरश्च सम्मुखे स्थाप्यं सदीपं पात्रवर्जितम् ॥ २६७ ॥
स चापि हविरक्तः स्यादथवा तिलजोक्षितः ।
सार्षपं न प्रदातव्यं न चान्यत्फलसम्भवम् ॥ २६८ ॥

मूर्धाभिषिक्तो हविषा तैलेन बहु सिद्धिभाक्।
अन्यबीजोद्भवैर्रोगं शोकं मृत्युं च विन्दति ॥ २६९ ॥
यथा लोमानि दह्यन्ते यत्नात्कार्यं तथा नरैः।
सूत्रवर्त्तिं प्रदद्याच्च वस्त्रवर्त्त्या[१९] प्रशस्यते ॥ २७० ॥
अङ्गुष्ठस्य प्रमाणं च दीर्घं चैव षडङ्गुलम्।
कार्पाससूत्रैर्वा दद्यादेकविंशति सूत्रकैः ॥ २७१ ॥
सुगन्धिद्रव्यैस्तत्कुर्यात्कर्पूरागुरुचन्दनैः।
ग्राहाणां कच्छपानां च गोधायाश्च विशेषतः ॥ २७२ ॥
मत्स्यानामपि पक्षिणां न दीपं दापयेच्छिरे[२०]।
शीर्षोपरि ज्वलद्दीपो यावत्कालं प्रवर्तते ॥ २७३ ॥
तावत्कालं वसेत्स्वर्गे तस्माद्यत्नेन दापयेत्।
लोमदावाहोद्भवं गन्धं ध्वात्वा देवी प्रसीदति ॥ २७४ ॥
तस्मात्संवर्धयेद्दीपं तस्मात्पात्रं विवर्जयेत्।
निर्वाणे मृत्युमाप्नोति दीयमाने प्रदीपके ॥ २७५ ॥
ततः पात्रं पुरः कृत्वा देव्याः सपशुशोणितम्।
शर्करायुतदूर्वाणां प्रदद्यात्त्रिर्महाघृतम् ॥ २७६ ॥
सैन्धवं श्रृङ्गचैरं च कदलीफलमेव च।
पातयेन्मधुराणां च काममुद्दिश्य साधकः ॥ २७७ ॥
अष्टधा विभजेद्विद्वान्मध्ये चैकं कुशादिभिः।
दत्त्वा किञ्चिद्घृतं तत्र कुर्यात्तर्पणमुद्रया ॥ २७८ ॥
तर्पणं भागभाजां वै देवीनां द्विर्द्विरेव च।
आद्यन्तिमौ तारहार्दी मध्ये आदिमनोरपि ॥ २७९ ॥
तत्तन्नाम्ना मन्त्रमपि तर्पयामीतिसंयुतम्।
द्वितीयरूपं ङन्तं च तद्वितीयपदोदितम् ॥ २८० ॥
मध्ये नित्यादितस्त्र्याख्य पात्रवत् पीठगा क्रिया।
पूर्वस्यां दिशि चामुण्डा दक्षिणस्यां तु योगिनी ॥ २८१ ॥
डाकिन्युक्ता पश्चिमायामुत्तरस्यां तु भैरवी।
विदारिकाऽग्नेयकोणे नैर्ऋत्यां पापराक्षसी ॥ २८२ ॥
पूतना चापि वायव्ये ऐशाने कालिका तथा।

---

१९ वस्त्रवर्तिः पाठ उचितः।

२० शिरसि न्यसेत् ददेत् वा पाठ उचितः।

ततः स्तुतिं प्रकुर्वीत बद्धाञ्जलियुतोऽग्रतः ॥ २८३ ॥
जय देवि जगन्मातर्जय पापौघहारिणि ।
जय जन्मजराव्याधितृणदावानलाकृति ॥ २८४ ॥
जय सर्वविपत्तिघ्ने जय त्रिदशवन्दिते ।
जय नित्यानन्दरूपे जय कल्याणदायिनि ॥ २८५ ॥
जय शत्रुक्षयकरे जय रोगप्रणाशिनि ।
जय भीमे जयाघोरे जय सङ्कटतारिणि ॥ २८६ ॥
जयामृतरसास्वादतुन्दिलामन्दविग्रहे ।
त्रिनेत्रे विकरालास्ये मुण्डमालाविभूषिते ॥ २८७ ॥
सर्वासुरक्षयकरि खड्गखट्वाङ्गधारिणि ।
महाघोरे महारावे दैत्यदर्पनिषूदिनि ॥ २८८ ॥
इमं पशुबलिं देवि गृहीत्वा कालरात्रिके ।
प्रीता भव महाचण्डि रक्ष मां शरणागतम् ॥ २८९ ॥
आयुर्देहि धनं देहि भाग्यं कीर्तिं च देहि मे ।
स्त्रियं देहि सुतान् देहि सर्वान् कामाँश्च देहि मे ॥ २९० ॥
उग्रचण्डि प्रचण्डासि प्रचण्डकरवालिनि ।
महाचण्डोग्रदोर्दण्डे विश्वेश्वरि नमोऽस्तुते ॥ २९१ ॥
रक्ष मां शरणापन्नं त्वत्पादार्पितमानसम् ।
हर पापं हर क्षोभं हर दैन्यं हरप्रिये ।
स्तुतिमेतां पठित्वैवं दण्डवत्प्रणमेद् भुवि ॥ २९३ ॥
गुह्यकालि जगद्धात्रि सर्वान्तर्यामिनीश्वरि ।
गृहीत्वेमं पशुबलिं यथोक्तफलदा भव ॥ २९४ ॥
कायेन मनसा वाचा त्वत्तो नान्या गतिर्मम ।
अन्तश्चरति भूतानां द्रष्ट्री त्वं परमेश्वरि ॥ २९५ ॥
एतस्यानन्तरं यद्यत् कृत्यं तत्तद्ब्रुवेऽधुना ।
इत्यमुक्तविधानेन दत्त्वा पशुबलिं बुधः ॥ २९६ ॥
साधकान् साधिकाः शक्तिरन्यानपि च कौलिकान् ।
संस्थाप्य पुरतो देव्याः पात्रग्रहणमाचरेत् ॥ २९७ ॥
पूर्वोक्तमन्त्ररीत्यैव जुहूयादाहुतीर्दश ।
पाययेच्च स्वयं शक्तीः शक्तयः पाययन्ति तम् ॥ २९८ ॥
समवेताः कौलिकाश्च कुर्युरेव परम्पराम् ।

अपाने न परां प्रीतिं प्राप्नोति जगदम्बिका ॥ २९९ ॥
तस्मात्तद्रचयेद्धीमान् भक्ष्यैरपि चतुर्विधैः ।
लीलाकटाक्षहसिता वक्षे य किलकिं चितान् ॥ ३०० ॥
शक्तयः साधकैः सार्धं साधकाश्चापि शक्तिभिः ।
आपानावसरे कुर्युः प्रीता स्यात्तेन कालिका ॥ ३०१ ॥

*इति श्रीतन्त्रचिन्तामणौ नैमित्तिकार्चनायां बलिदाननिर्णयनाम पञ्चत्रिंशत्तमः प्रकाशः ।*



# षट्त्रिंशत्तमः प्रकाशः

## अथ कुमारीपूजनविधिर्लिख्यते।

**देव्युवाच**

देव देव महादेव ! पृच्छामि गुह्यमुत्तमम्।
कौमारीलक्षणं[1] भेदाः पूजायाश्च शुभाशुभम् ॥ १ ॥
एष मे संशयो जातो निः सन्दिग्धं वद प्रभो।

**श्री भैरव उवाच**

कथयामि वरारोहे तत्र भक्त्याऽधुना श्रुणु ॥ २ ॥
न तथा तुष्यति शिवा बलिहोमादितर्पणैः।
कुमारीपूजनेनात्र यथा सद्यः प्रसीदति ॥ ३ ॥
न केवलं भोजये तां[2] भोजयेत्ताश्च यत्नतः।
व्यङ्गता चाप्यकरणात् पूजायाः परिकीर्त्तितः ॥ ४ ॥
करणात्साङ्गताऽपि स्यादन्यस्मिन्नकृतेऽपि हि।
कौलानां निशिपूजोक्ता स्मार्त्तानामपराह्णिकी ॥ ५ ॥
नित्या तु शारदार्चायां काम्या नैमित्तिकीतरा।
सुस्नातां रक्तपीतादि नाना रागोज्वलांशुकाम् ॥ ६ ॥
सर्वालङ्कारचित्राङ्गीमज्ञातानङ्गचेष्टिताम्।
अजातपुंमनः सङ्गां सप्ताष्टनववार्षिकीम् ॥ ७ ॥
अनीचजातिं गौराङ्गीं पितृमातृमतीमपि।
अदन्तुरामवाग्दत्तामधिकाङ्गेन वर्जिताम् ॥ ८ ॥[3]
कुलाकुलाष्टकोद्भूता[4] कन्यका जात्यकोद्भवा।
अष्टाष्टकसमुद्भूता दशविद्या प्रभेदजा ॥ ९ ॥
षट्त्रिंशज्जातिमध्या च पञ्चाशत्पीठसम्भवा।

---

१ पूजा शुभाशुभपरीक्षणम् पाठो मा. ख।

२ तां भोजयेच्चापि पा. मा. ख।

३ श्लोकः ८ पाठः मा. क न प्राप्यते।

४ श्लोकः ९-१३ १/२ पाठो मा. ख न प्राप्यते।

इन्द्रोद्भवां च वृषलीं कुमारीं क्रमतोऽर्चयेत् ॥ १० ॥
प्रतिलोमान् च लोमाख्य जातिसङ्करभेदतः ।
वृषली स्वैरिणीभेदैः षट्त्रिंशज्जातियोगतः ॥ ११ ॥
पञ्चाशपञ्चभेदेन प्रत्येकं तत्र जातितः ।
षट्शतं विंशसाहस्रं कुमारीमण्डलं मतम् ॥ १२ ॥

## अथ कुमारीलक्षणमाह

अधिकाङ्गीं च हीनाङ्गीं रोगिणीं च व्रणाङ्कितां ।
अन्धां काणां केकटां च कुरूपां लोमशां त्यजेत् ॥ १३ ॥
अदन्तुरामवाग्दत्तां[५] पितृमातृविवर्जिताम् ।
अदीर्घकेशीमुद्दीप्ता मस्मितास्यामशोभनाम् ॥ १४ ॥
श्यामां दीर्घदतीमोतुनयनां पिङ्गमूर्धजाम् ।
तनुमूनगतिं क्रुद्धां कुब्जां खञ्जां च खर्विकाम् ॥ १५ ॥
भ्रुकेशाल्पत्वसहितां तथा चैव गलद्व्रणाम् ।
जातस्तनरजोऽनङ्गां प्रयत्नेन विवर्जयेत् ॥ १६ ॥
एतद्भिन्ना कुमारी तु वरणीयाऽर्चनक्रमे ॥ १७ ॥

## [६]अथ जातिभेदफलम्

विप्रां सर्वेष्टसंसिद्ध्यै यशसे क्षत्रियोद्भवाम् ।
वैश्यजां धनलाभाय पुत्राप्त्यै शूद्रजां यजेत् ॥ १८ ॥
अणिमाद्यष्टके[७] देवि भवेत्कन्याष्टकं शिवे ।
दासी मायापुरः प्रोक्ता ह्यष्टसिद्धिप्रदायिनी ॥ १९ ॥
वेश्याप्रयोगं देवेशि कोटिसिद्धिप्रदायकम् ।
स्वैरिणी वाञ्छिताद्यर्थ[८] ....................... ॥ २० ॥
.......................... कुमारी परिकीर्त्तिता ।
वृषली देवतासिद्ध्यै देहसिध्यै किरातिनी ॥ २१ ॥
पार्वतीया सर्वकार्ये मनोरथमयी कला ।

---

५ दन्तुरां चैव वाग्दत्तां पाठ उचितः, अदन्तुरामवाग्दत्ता इति लक्षणं तु पूज्यकुमारीणामेव ।

६ अथ ...... यजेत् पाठो मा. ख न प्राप्यते ।

७ श्लोक १९ - २३ मा. ख न प्राप्यते ।

८ पाठः त्रुटितः ।

चाण्डालिनी ह्यष्टसिद्धौ राज्यसिद्ध्यै कुविन्दजा ॥ २२ ॥
विद्यासिध्यै राजसुता क्रमेण परिकीर्त्तिता।
सर्ववाञ्छाप्रसिध्यर्थं प्रोक्ता श्रीबालसुन्दरी ॥ २३ ॥
यः कुमारी यजेन्मन्त्री सर्वपर्वषु सर्वदा।
तेनार्चिता महादेवी सत्यं सत्यं न संशयः ॥ २४ ॥
सन्ध्यैकवर्षा संप्रोक्ता द्विवर्षा च सरस्वती।
त्रिधा मूर्त्तिस्त्रिवर्षा च चतुरब्दा च कालिका ॥ २५ ॥
सुभगर्गा पञ्चवर्षीया उमा षड्वार्षिकी भवेत्।
मालिनी सप्तवर्षा च अष्टमी कुब्जिका मता ॥ २६ ॥
नवाब्दा कालसङ्कर्षा दशवर्षाऽपराजिता।
एकादशाब्दा रुद्राणी द्वादशाब्दा च भैरवी ॥ २७ ॥
तत्परा स्यान्महालक्ष्मीस्तत्परा कुलनायिका।
क्षेत्रज्ञा तत्परा प्रोक्ता षोडशाब्दा च चण्डिका ॥ २८ ॥
एवं क्रमेण विज्ञेया विना पुष्पं कुमारिका।
प्रथमाब्दं समारभ्य नववर्षान्तमीश्वरि ॥ २९ ॥[९]
तावत् कुमारी विख्याता ततो बाला प्रकीर्तिता।
नववर्षान्तरं देवि कामवर्षान्तमीश्वरि ॥ ३० ॥
तावद् बालेति गदिता सर्ववाञ्छाप्रसाधिनी।
त्रयो दशाब्दमारभ्य विंशत्यन्तं महेश्वरि ॥ ३१ ॥
तारुण्यं चैव संप्रोक्तास्ततस्तारुण्यचञ्चलाः।
पञ्चविंशान्तगाः प्रोक्तास्ततः प्रौढाः प्रकीर्तिताः ॥ ३२ ॥
चत्वारिंशदुत्तरं च वृद्धावस्था च कीर्तिता।
एवं क्रमेण देवेशि ज्ञात्वा यत्नेन साधयेत् ॥ ३३ ॥[१०]
गीतवादित्रनिर्घोषैरानन्दादरपूर्वकम्।
नीत्वा पूजागृहद्वारि कुमारीस्ता अयुग्मिकाः ॥ ३४ ॥
पञ्च वा सप्त वा चापि नवैकादश वा पुनः।
पञ्चैका[११] तासु कर्तव्या या स्यात् सर्वाङ्गसुन्दरी ॥ ३५ ॥
वह्नीनामप्यभावे हि भवेदेका कुमारिका।
कामये नैमित्तिके चैका वह्यः शारदपूजने ॥ ३६ ॥

९ प्रथमाब्दमिति पाठो मा. ख न प्राप्यते।

१० तावत् इत्यारभ्यः यत्नेन साधयेत् इत्यन्तो भागः (श्लोकः ३०-३३) मा. ख न प्राप्यते।

११ मुख्यैका पाठो मेरौ।

श्रेणीभूता उत्थिताश्च नम्रीभूताऽऽनना अपि।
स्थापयित्वा क्रमेणैता मुख्यामादौ नियोज्य च ॥ ३७ ॥
देवीबुद्धिं विधायास्यां साधको … त्वरः।
गृहीतमदिरामत्तः कल्पितार्चनसम्भृतिः ॥ ३८ ॥
प्राणायामं विधायादौ ततो भूतापसारणम्।
गुरुं गणपतिं नत्वा वामदक्षिणयोस्ततः ॥ ३९ ॥
मध्ये कुमारीं च तथा मूलदेवीस्वरूपिणीम्।
छोटिकाभिस्तथा तालत्रितयैर्बन्धनं दिशाम् ॥ ४० ॥
कुमार्या मूलभूतायाः पादौ प्रक्षालयेत्ततः।[१२]
तज्जलं मस्तके दद्याद्देवी पादोदप्रज्ञया ॥ ४१ ॥
सोत्तरीयांशुकेनैव पादाम्बूपनयेत्ततः।
पुनरक्षतमादाय विघ्नानुत्सारयेत्प्रिये ॥ ४२ ॥
उदीर्यमाणमन्त्रेण तालत्रयपुरस्सरम्।
तारपाशकलाकूर्चास्त्राणि प्रथमतो वदेत् ॥ ४३ ॥
भूतान्यपसारय विघ्नान्नाशय चेत्यपि।
हृच्छीर्षे चरमे दद्यादेकविंशाक्षरो मनुः ॥ ४४ ॥
कुमार्या सहिताः सर्वे तया देवीस्वरूपया।
दर्शनार्थं समायान्ति यावन्तो देवयोनयः ॥ ४५ ॥
प्रेता भूता पिशाचाश्च गन्धर्वा गुह्यका अपि।
राक्षसा दानवा यक्षा ये चान्ये क्रूरकर्मिणः ॥ ४६ ॥
सहप्रविश्य कौमार्या मण्डपं शारदार्चनम्।
लुम्पन्ति च कुमार्यार्चां पूजां विध्वंसयन्ति च ॥ ४७ ॥
अतो वारत्रयं कार्यं विघ्नस्योत्सारणं प्रिये।
ततः स्ववामहस्तेन कुमार्या दक्षिणं करम् ॥ ४८ ॥
गृहीत्वा दक्षचरणविनिक्षेपपुरः सरम्।
पङ्क्तिभूता कुमारीस्ता श्लोकरूपं मनुं पठन् ॥ ४९ ॥
पूजागृहान्तः शनकैर्मनन् मौलिः प्रवेशयेत् ॥ ५० ॥
त्वमम्ब जगतामाद्ये जगदाधाररूपिणि।
कुमारीरूपमास्थाय प्रविशेदं गृहं मम ॥ ५१ ॥
भवत्याः कीदृशं रूपं जाने मातरहं न हि।

१२ मध्ये इत्यतः प्रक्षालयेत्ततः इत्यन्तो भागः आवश्यको मा. क न प्राप्यते।

कुमारीरूपमेवेदं पश्यामि नरचक्षुषा ॥ ५२ ॥
भक्तिं मदीयां विज्ञाय त्वत्पादाम्बुजयोः शिवे ।
त्वया प्रकटितं रूपमीदृशं सर्वसिद्धये ॥ ५३ ॥
दृष्टिः कार्या न मे पापे सञ्चारेणासतः पथः ।
दृढायां केवलं भक्तौ दातव्या सुरवन्दिते ॥ ५४ ॥
शिवाद्यास्तव रूपं हि कीदृशं नेति जानते ।
ज्ञास्यामि को वराक्षोऽहं पाञ्चभौतिकविग्रहः ॥ ५५ ॥
इति पञ्च पठन् श्लोकान् स्वपृष्ठेनैव तारयेत् ।
अनीक्षमाण रावेशि गीतवाद्यपुरःसरन् ॥ ५६ ॥
स्नापिता गन्धतैलेन नानाभरणभूषिताः ।
आनीय देवतापार्श्वे स्थापनीया सुधीमता ॥ ५७ ॥
मुख्यं यत्पूजनं प्रोक्तं मुख्याया एव तन्मनुम् ।
तत्पूजयैव ताः सर्वाः पूजिताः स्युर्न संशयः ॥ ५८ ॥
बलिं दत्त्वा ततो देवयोनिभ्यः परमेश्वरि ।
आरभेत निरालस्यः कुमारीन्यासमुत्तमम् ॥ ५९ ॥
नामान्यादौ खलु महाचण्डयोगेश्वरी मता ।
ततः सिद्धिकराली च पुनः सिद्धिकरान्यपि ॥ ६० ॥
महान्तामार्यथ ज्ञेया वज्रकापालिनी ततः ।
मुण्डमालिन्यदृशसिन्येते द्वे परिकीर्तिते ॥ ६१ ॥
चण्डकापालिनी कालचक्रेश्वर्यप्यनन्तरम् ।
गुह्यकाली ततः कात्यायनी कामाख्यया सह ॥ ६२ ॥
चामुण्डा सिद्धिलक्ष्मीश्च कुब्जिका तदनन्तरम् ।
मातङ्गी तदनु ज्ञेया चण्डेश्वर्यथ कीर्त्यते ॥ ६३ ॥
सर्वशेषेऽथ कौमारी एता अष्टादशेरिताः ।
अङ्गान्यतो वच्मि शिरो मुखं तदनु चक्षुषी ॥ ६४ ॥
कर्णौ नासापुटे चापि कपोलौ तत्पुरौ पुनः ।
अधरोष्ठौ दन्तपङ्क्ती स्कन्धौ हृदयमेव च ॥ ६५ ॥
बाहू च जठरं पृष्ठमूरुजानु तथैव च ।
जङ्घे पादौ च सर्वाङ्गं तावन्त्येत स्थलानि च ॥ ६६ ॥
कलादि च कलान्तं ताः पूजयेद् विधिना बुधः ।
उपविश्यासने दिव्ये कुमारीं साधकोत्तमः ॥ ६७ ॥

वक्ष्यमाणेन विधिना देहेऽस्या न्यासमाचरेत् ।
कुमारिका स्यात् प्रथमा द्वितीया नायिका मता ॥ ६८ ॥
तृतीया भैरवी ख्याता तुर्या वागीश्वरी भवेत् ।
पालिका पञ्चमी प्रोक्ता सम्बुध्यन्ताः कुलादिकाः ॥ ६९ ॥
न्यस्याः पञ्चाङ्गयोगेन कुमारीणां कलेवरे ।
वामावर्त्तक्रमादास्य चतुष्कं पूजयेत् क्रमात् ॥ ७० ॥
ततः सिद्धा जया पूर्वा जयान्या कुब्जिका परा ।
कालिका पञ्चमी प्रोक्ता विज्ञेया बोधिता इमा ॥ ७१ ॥
पूर्वादिवक्त्र संयुक्ता चतुर्थ्यन्ता नमोऽन्तकाः ।
तत्तत्स्थानेषु विन्यस्याः स्वधिया क्रमपूर्वकम् ॥ ७२ ॥
पञ्चप्रणवयोगेन चैतन्यमनुना सह ।
न्यासजालं हि पूर्वोक्तं कुर्यात्साधकसत्तमः ॥ ७३ ॥
ततोऽर्घ्यस्थापनं कुर्यान्नित्यके यदुदाहृतिम् ।
पूजोपकरणस्यापि शुद्धिरुक्ता पुरोक्तवत् ॥ ७४ ॥
ततो ध्यानं प्रकुर्वीत कुमार्या वक्ष्यमाणकम् ।
उपचाराँस्ततः सर्वान् पाद्यादीन् स्तुतिपश्चिमान् ॥ ७५ ॥
यष्टव्या पूर्वमार्गेण वक्ष्यमाणेन वा पुनः ।
स्वनामभिश्चतुर्थ्यन्तैस्त्रिताराद्यैर्नमोन्तकैः ॥ ७६ ॥
देवता पश्चिमे मन्त्री यजेदेताः सलक्षणाः ।
आद्या शुद्धा कालिकान्या तृतीया ललिता स्मृता ॥ ७७ ॥
चतुर्थी मालिनी ख्याता पञ्चमी स्याद् वसुन्धरा ।
सरस्वती रमा गौरी दुर्गा तु नवमी भवेत् ॥ ७८ ॥
पञ्चाब्दं नववर्षं च यजेद्वलं विचक्षणः ।
पञ्चाब्दो वटुकः प्रोक्तो नववर्षो गणेश्वरः ॥ ७९ ॥
प्रदद्यादासनं वाचा ह्रिया पाद्यं समर्चयेत् ।
रमयार्घ्यं निवेद्याथ त्रिधा चन्दनमर्पयेत् ॥ ८० ॥
कुमारीशक्तिबीजेन प्रदद्यात् कुसुमोच्चयम् ।
चैतन्यमनुना मन्त्री धूपदीपादिकं न्यसेत् [१३] ॥ ८१ ॥
तारा एते समाख्याता भृगुर्भवसमन्वितः ।

१३ दिशेत् पाठो मा. क, ख ।

बिन्दुनाद[14]समाक्रान्तश्चैतन्यमनुरीरितः ॥ ८२ ॥
क्वचिद् भैरवबीजं तु पञ्चमः प्रणवो मतः।
त्रिताराद्येन[15] मन्त्रेण सर्वं तस्यै निवेदयेत् ॥ ८३ ॥
भूषणानि दुकूलानि सिन्दूरालक्तकानि च।
कज्जलादर्शविख्याततालवृन्तानि पेटिका ॥ ८४ ॥
परिकर्माधारचोलमञ्चिकापीठदोलिका।
पाञ्चालिका च मञ्जूषा पादुके कुथपट्टके ॥ ८५ ॥
चन्द्रातपोपसङ्ख्यानं तथोद्वर्तनभाजनम्।
शय्योपधानपर्यङ्काः समुद्गं च प्रसाधनी ॥ ८६ ॥
प्रतिग्राहश्च हिन्दोला तथा सीमन्तवर्त्तिका।
गोरोचनामृगमदौ कर्पूरं कुङ्कुमं तथा ॥ ८७ ॥
एवमादीनि चान्यानि यावच्छक्यानि सुन्दरि।
प्रदातव्यानि वस्तूनि कुमारी तुष्यते यथा ॥ ८८ ॥
ततो यत्स्थापितं पात्रं कुमार्यै प्रतिपादयेत्।
स्वीकुर्यात्सा च तत्रैव तथा यत्नं समाचरेत् ॥ ८९ ॥
अगृहीते तु तत्पात्रे महान् दोषोऽभिजायते।
अतो यत्नस्तथा कार्यः स्वीक्रियेत यथा तया ॥ ९० ॥
ततो गृहीत्वा कुसुमाक्षते तस्याः कलेवरे।
पञ्चाशत्सङ्ख्यकाः शक्तीः क्रमतः परिपूजयेत् ॥ ९१ ॥
ता इदानीं प्रवक्ष्यामि सावधाना निशामय।
आद्या जया च विजया ऋद्धिदा माययान्विता ॥ ९२ ॥
कला च सिद्धिदा सूक्ष्मा प्रभा स्यात् सुप्रभा ततः।
विद्युता च विशुद्धिश्च नन्दिनी च विशुद्धियुक्[16] ॥ ९३ ॥
अपराजिता च ललिता लक्ष्मीर्गौरी तथैव च।
अथ मेधा च गायत्री सावित्री च स्वधा[17] पुनः ॥ ९४ ॥
स्वाहेच्छे च क्रिया विद्या प्रज्ञा दीप्ता च चेतना।
भद्रा ज्येष्ठा तथोमा च शिवा च मुदिता क्षमा ॥ ९५ ॥
श्रद्धाऽथ विमला कौमुद्यपि वे विश्वदा ततः।

---

१४ तार पाठो मा. ख।

१५ त्रिताराद्येन इति पाठो अधिकोऽन्यत्र।

१६ विभुतियुक् पाठो मा. क, ख।

१७ सुधा पुन पाठो मा. क ख।

अशोका ज्ञानदा चैव बलदा राज्यदाऽपि च ॥ ९६ ॥
मैत्री तदनु रुद्राणी भवानी च मृडान्यपि।
सर्वज्ञा चण्डिका चापि कुमारी सर्वशेषगा ॥ ९७ ॥
पञ्चाशत् सङ्ख्यका एताः कुमार्याः शक्तयः स्मृताः।
भैरवानष्टौ तदनु पूजयेदक्षतादिभिः ॥ ९८ ॥
भैरवीभ्यस्ततो विघ्नविनायकेभ्य एव च।
वटुकक्षेत्रपालाभ्यां योगिनीभ्यस्तथैव च ॥ ९९ ॥
भूतेभ्यः प्रेतयक्षेभ्यो डाकिनीभ्यस्तथैव च।
कुर्वीत पूजनं देवि कुसुमाक्षतचन्दनैः[१८] ॥ १०० ॥
पुनरष्टौ सर्वशेषे ङेन्ता देवीर्यजेत् प्रिये।
महामाया कालरात्री ततो वै सर्वमङ्गला ॥ १०१ ॥
पूज्या डमरुका पश्चाद्राजराजेश्वरी तथा।
सम्पत्प्रदा भगवती कुमारी तदनन्तरम् ॥ १०२ ॥
कुलान्तः पूजयेदेनां कुलकोणेष्विमा यजेत्।
कामेश्वरी च वज्रेशी तृतीया भगमालिनी ॥ १०३ ॥
उपविष्टा[१९] कुलद्वन्द्वकोणेष्वेताः समर्चयेत्।
अनङ्गकुसुमानङ्गमन्मथानङ्गपूर्विका ॥ १०४ ॥
मदनानन्दशब्दाद्या चतुर्थी कुसुमोत्तरा।
पञ्चम्यनङ्गमदनातुरानङ्गपदादिका ॥ १०५ ॥
शिशिरा कथिता ह्येताः शक्तयो रससङ्ख्यकाः।
अनेन विधिना पूज्या कुमारी साधकोत्तमैः ॥ १०६ ॥
समाप्येत्थं कुमार्यर्चां तत्पुरो भुवि वारिणा।
वर्त्तुलं मण्डलं कृत्वा तन्मध्ये कुलकामिनीम् ॥ १०७ ॥
विलिख्य जलकुसुमाक्षतचन्दनभागजैः।
पूजयेन्मण्डलं तच्च शुभदायै नमो वदेत् ॥ १०८ ॥
स्थालीगतं च तत्सर्वमन्नं तत्र निवेश्य हि।
नानाविधां च सामग्रीं लेह्यचोष्यादिघट्टिताम् ॥ १०९ ॥
मांसमीनसुरापूर्णां भक्ष्यचर्व्यादिपूरिताम्।
कुमारीदक्षहस्तं च स्थापयित्वान्तमूर्धनि ॥ ११० ॥

---

१८ सदुर्वाक्षतचन्दनैः पाठोऽन्यत्र।
१९ उपरिष्ठात् पाठोऽन्यत्र।

उत्तानं वक्ष्यमाणेन मनुनान्तं समुत्सृजेत्।
इतरासां कुमारीणां प्रत्येकं पूजनं चरेत् ॥ १११ ॥
गन्धपुष्पैर्धूपदीपैर्नैवेद्यैरन्नसङ्कुलैः[२०]।
अन्नानि यादृशान्यस्यै मुख्यायै कल्पितानि हि ॥ ११२ ॥
अन्याभ्यस्तादृशान्येव दातव्यान्येन निश्चियः।
फलाफलं तु मुख्याया ज्ञेयमत्र विपश्चिता ॥ ११३ ॥
भुञ्जानासु कुमारीषु न तूर्यध्वनिमाचरेत्।
नान्यत्र च मनो दद्यात्संवाद्यं नैव कल्पयेत् ॥ ११४ ॥
कोलाहलं निषेधेत अमङ्गल्यानि यानि च।
रुदितान् पामरान्[२१] मूढान् प्रयत्नेन विवर्जयेत् ॥ ११५ ॥
सावधानो भवेदत्र किमादौ भक्षयन्ति ताः।
मिथः किं वा प्रजल्पन्ति कुत्र वा वस्तुविग्रहः[२२] ॥ ११६ ॥
कुत्र दृष्टिं प्रक्षिपन्ति भीताः किं वा वदन्त्यमूः।
इत्यादि नाना जातीयाश्चेष्टा आसां प्रयत्नतः ॥ ११७ ॥
सावधानतया ज्ञेया भद्राभद्रस्य सूचकाः।
भक्षयन्तीषु तास्वेवं पठेत्तत्स्तोत्रसत्वरम् ॥ ११८ ॥
कृताञ्जलिर्नम्रशिरा आसामन्ते क्षिपन् दृशौ ॥ ११९ ॥
जयकालि महाभीमे भीमरावे भयापहे।
संसारदावाग्निशिखे[२३] वृजिनार्णवतारिणि ॥ १२० ॥
ब्रह्मेन्द्रोपेन्द्रभूतेश प्रभृत्यमरवन्दिते।
सर्गपालनसंहार कारिण्यहितमारिणि ॥ १२१ ॥
गुह्यकालि परानन्दरसपूरितविग्रहे।
परब्रह्मरसास्वादकैवल्यानन्ददायिनि ॥ १२२ ॥
गुणातीतेऽपि सगुणे महाकल्पान्तनर्तकि।
कुमारीरूपमास्थाय विज्ञाप्रज्ञास्वरूपिणि ॥ १२३ ॥
आगतासि ममागारं शारद्यर्चासमाप्तये।
साम्बत्सरिककल्याणसूचनाय तथैव च ॥ १२४ ॥
धन्योऽस्मि कृतकृत्योऽस्मि सफलं जीवितं मम।

---

२० सम्भृतैः पाठोऽन्यत्र।
२१ रुदितापानषाशुं च पाठो मा. ख, अन्यत्र च।
२२ वस्तुनिस्पृहा पाठो मा. क ख।
२३ संसारदावशिखरे पाठ मा. क ख।

यस्मात्त्वमीदृशं कृत्वा कौमारं रूपमुत्तमम् ॥ १२५ ॥
गुह्यकालि समायाताऽऽब्दिक पूजाजिघृक्षया ।
त्वमेवैतेन रूपेण देवेभ्य प्रार्थिता पुरा ॥ १२६ ॥
दत्तवत्यसि साम्राज्यं वरानपि समीहितान् ।
मह्यमप्यद्य देवेशि वरं देहि सुपूजिता ॥ १२७ ॥
ब्रह्मणे सृष्टिसामर्थ्यं त्वा पुरा दत्तवत्यसि ।
विष्णवे च त्वमेवादास्तथा पालनशक्तिताम् ॥ १२८ ॥
महारुद्रायसंहारकर्तृत्वमददः शिवे ।
देवेभ्यश्चापि दैत्यानां नाशने दक्षतामपि ॥ १२९ ॥
अन्तर्यामिन्यक्षीशानि त्रिलोकी वासिनामपि ।
निवेदयामि किं तेऽहं सर्वकर्मैक साक्षिणि ॥ १३० ॥
शत्रुनाशं राज्यलाभं शरीरारोग्यमेव च ।
त्वत्पादाम्बुजयोर्भक्तिं याचेऽहं चतुरो वरान् ॥ १३१ ॥
नमस्ते भगवत्यम्ब नमस्ते भक्तवत्सले ।
नमस्ते जगदाधाररूपिणि त्राहि मां सदा ॥ १३२ ॥
मातर्न वेद्मि रूपान्ते न शरीरं न वा गुणम् ।
भक्त्या हृत्स्थितया पूजां तव जानाम्यनन्यधीः ॥ १३३ ॥
त्व माता त्वं पिता बन्धुस्त्वमेव जगदीश्वरी ।
त्वं गतिः शरणं त्वं च स्वर्गस्त्वं मोक्ष एव च ॥ १३४ ॥
विहाय त्वां जगन्मातर्नान्यां जानामि देवताम् ।
नमस्तेऽस्तु नमस्तेऽस्तु नमस्तेऽस्तु नमो नमः ॥ १३५ ॥
एभिः श्लोकैः स्तुतिं कुर्यात्कुमारीणां वरानने ।
दद्यादाचमनीयं हि भोजनान्ते गतत्वरः ॥ १३६ ॥
ततः प्रदद्यात्ताम्बूलं गृगचन्द्राधिवासितम् ।
सह वाद्यादिभिस्तावदनुव्रज्य विसर्जयेत् ॥ १३७ ॥
तदुच्छिष्टं ततो दद्याज्जम्बुकेभ्योऽथ भूतले ।
निखनेदथवा[२४] देवि समालोड्य विसर्जयेत् ॥ १३८ ॥
शुभाशुभफलं वच्मि साम्प्रतं तव पार्वति ।
तत्राप्यादौ शुभं वक्ष्ये विपरीतं ततोऽस्य च ॥ १३९ ॥
आदौ भक्ते करे दत्ते सुभिक्षं विषये भवेत् ।

---

२४ निखनेदप्सु वा ...... पाठोऽन्यत्र ।

पायसे यजमानस्य पशुवृद्धिः प्रजायते ॥ १४० ॥
घृते स्यादायुराधिक्यं पूजामैश्वर्यवृद्धये ।
तथा मोदकशष्कुल्योः सन्ततिर्भूयसी भवेत् ॥ १४१ ॥
मत्स्यजातिष्वर्थलाभः कृशरे यानसम्पदः ।
मांसे तु पुत्रलाभः स्यात्तेमने कामिनी भवेत् ॥ १४२ ॥
फलं मांसविशेषस्य भिन्ने मिश्रं ब्रुवे हि तत् ।
अर्थलाभस्तु वाराहे खाड्गे तु विजयो रणे ॥ १४३ ॥
माहिषेण तु मांसेन राज्यप्राप्तिर्भवेद् ध्रुवम् ।
आरोग्यं हारिणेनाशु कार्ष्णसारेण वाग्मिता ॥ १४४ ॥
शाशे मेधावितां गच्छेदाजेष्वजरतामपि ।
आवेये[२५] पलले देवि सर्वकल्याणमाप्नुयात् ॥ १४५ ॥
कामठे मेदिनीलाभो बह्नन्नत्वं च राङ्कवे ।
वार्ध्रीणसे शत्रुनाशो हांसे मनुजवश्यता ॥ १४६ ॥
तैत्तिरेऽभीष्टसिद्धिश्च वार्त्तके पापसंक्षयः ।
मनस्तोषो बलाकायां फलेक्षोर्विश्ववश्यता ॥ १४७ ॥
कीर्तिस्तु महती दध्नि दुग्धे सम्पदनुत्तमा ।
पिष्टके तनयावाप्ति शाके च रिपुसंक्षयः ॥ १४८ ॥
हालायां पुण्यवृद्धिस्याच्चोष्ये संपत् सुवाग्मिता ।
धनागमः फाणिते तु कुर्चिकायां बलोन्नतिः ॥ १४९ ॥
तुम्बी-वृन्ताक-कूष्माण्ड-कारवेल्ल-पटोलकैः ।
घोष-शूरण-दीर्घाङ्घ्रिमूलकैस्तेमने कृते ॥ १५० ॥
विद्यालाभो भवेद्देवि तक्रे वाक्पटुताऽपि च ।
गोधूमचूर्णघटितवस्तुनि प्रतिभा वने[२६] ॥ १५१ ॥
देव्यां[२७] दृष्टो भवेन्मोक्षे मण्डपेऽप्युन्नतिर्भवेत् ।
चामर-छत्रयोस्ताल-वृन्त-पर्यङ्कयोरपि ॥ १५२ ॥
घण्टादर्पणयोश्चापि दृग्दाने भूतिरुत्तमा ।
आकल्पालङ्करणयोः स्पर्शचालनदृष्टिषु ॥ १५३ ॥
नानाविधानि द्रव्याणि[२८] भवन्ति महितुः प्रिये ।

२५ आजेये पाठो मा. ख ।
२६ रणे पाठोऽन्यत्र ।
२७ वेद्यां पाठोऽन्यत्र ।
२८ सौख्यानि पाठो मा. कख ।

निःशब्दसम्भ्रमाच्चैव सुरूपाहारमेव च ॥ १५४ ॥
जयमानश्रियार्थाय जयलक्ष्मीर्भविष्यति ।[२९]
एवं विधानि भूयांसि चेष्टितान्यशतानि च ॥ १५५ ॥
शुभादेशानि जायन्ते विपरीतान्यतः श्रृणु ।
मुख्यभूता कुमारी चेद्वमति र्द्विन्निवारकम् ॥ १५६ ॥
दुर्भिक्षं जायतेऽवश्यं प्रजाः स्युः पीडिता अपि ।
राजा विनाशमायाति कुमार्या रोदने कृते ॥ १५७ ॥
उच्चारे तु महामारी पुरीषे पुरदाहनम् ।
द्वौ हस्तौ मर्दितौ येन असन्तुष्टेन मानसा ॥ १५८ ॥
तेन रोगपुनर्वृद्धिर्भवति यजनेश्वपि ।
हस्तस्फोटनरावञ्च त्रासमुद्राप्रदर्शने ॥ १५९ ॥
संग्रामे तत्क्षणं यान्ति मरणं च महाभयम् ।
हसिता मुच्चिता रावा कुर्वन्ति यजने तथा ॥ १६० ॥
असाध्यन्तु भवेद्रोगं जीविते संशयो भवेत् ।
रोदने हि च पूजायां मर्दिते नयनद्वये ॥ १६१ ॥
क्षणेन मरणं चोक्तं ज्ञातव्यं सिद्धिकाङ्क्षिभिः ।
सम्मुखीकरणं कुर्वन् युग्म युग्म पृथक् पृथक् ॥ १६२ ॥
कलिर्भवति सर्वत्र कौमारीदृष्टलक्षणम् ।
पृष्ठे पृष्ठे नियोगेन महाहानिकरं स्मृतम् ॥ १६३ ॥
भक्षणं ये तु कुर्वन्ति अन्नं पानं च सर्वशः ।
अकस्माद्रोगस्योत्पत्तिः शास्त्रघातादितस्तथा ॥ १६४ ॥
गीतवाद्यकृतेनेह हसितेन मुहुर्मुहुः ।
राजदण्डभयं प्राहुः कौमारीलक्षणं प्रिये ॥ १६५ ॥
भक्ष्यं भोज्यं न कर्तव्यं उत्सङ्गं कारयेत्ततः ।
मरणं तत्क्षणं यान्ति यजमानगृहेऽपि वा ॥ १६६ ॥
भक्ष्यभोग्यानि सर्वाणि अक्षिप्तानि दिशि सदा ।
अनाचारकृतैर्दोषैराकृष्टानि भवन्ति हि ॥ १६७ ॥[३०]
अभोजने शत्रुभयमापदो बहुभोजने ।
मत्स्यं मांसं सुरापानं बहुलं भक्षयेद्यदि ॥ १६८ ॥

---

२९ निः शब्द इत्यतो भविष्यति इत्यन्तः पाठो मा. ख न प्राप्यते ।

३० असाध्यन्तु इत्यतः भवन्ति हि इत्यन्तो भागः (श्लो १६१–१६७) मा. ख न प्राप्यते ।

क्रियासिद्धिविहीनं च असन्तुष्टेन पूजनम् ।
दन्तेषु नखं निक्षिप्य यदिशब्दं करोति यः ॥ १६९ ॥
पुनर्भवन्ति कर्माणि न तृप्ता मांसभक्षणात् ।
उदरं ताडितात्मानं नैव तृप्तिर्वद प्रिये ॥ १७० ॥[31]
अभाषणे त्वापदः[32] स्युर्विपदो बहुभाषणे ।
उपसर्गा बहुविधाश्चेष्टया करपादयोः ॥ १७१ ॥
मध्यमा तर्जनीयुग्मं मुच्छ्रितं तस्य दर्शने ।
तत्क्षणान्मरणं यान्ति बान्धवा गोत्रिणोऽपि वा ॥ १७२ ॥[33]
अतिलज्जा विनाशाय तथा निर्लज्जता शुभा ।
नानोत्पातास्तु मौने स्युः स्वापे बाहोर्विनाशनम् ॥ १७३ ॥
सर्वनाशस्तु भीतायां क्रुद्धायां मृत्युरेव च ।
आवेशे तत्क्षणाद्राजा म्रियते नात्र संशयः ॥ १७४ ॥
शङ्कितायां शत्रुशङ्का शान्तायामीतितो भयम् ।
चिन्तितायां तु विज्ञेयं तद्राष्ट्रस्यैव पातनम् ॥ १७५ ॥
मोहे वित्तविनाशः स्याज्जाड्ये पूजा च निष्फला ।
चाञ्चल्ये चञ्चला लक्ष्मीः पूजकस्यैव जायते ॥ १७६ ॥
विषादवत्यथ यदि कुमारी तत्र जायते ।
सरुजं सप्रजं राष्ट्रं तदा सीदति पार्वति ॥ १७७ ॥
रोगेण म्रियते् राजा यदि रुग्णा प्रजायते ।
दुर्भिक्षमरकातङ्का यद्यश्रूणि विमुञ्चति ॥ १७८ ॥
सर्वनाशो भवेत्तर्हि धुनोति यदि मस्तकम् ।
त्रस्तायां रिपुजस्त्रासस्तस्य राज्ञः प्रदिश्यते ॥ १७९ ॥
कम्पे सति स्याद्विमुखी कालिका परमेश्वरी ।
नीचैः शिरश्चेत् कुरुते असन्तुष्टा तदेश्वरी ॥ १८० ॥
हीनायुः स्यात्तदा पृथ्वीपतिश्चेद् गद्गदस्वरा ।
पूजकस्य भवेद्दैन्यं व्याकुला यदि जायते ॥ १८१ ॥
मोहेन व्याकुलायान्तु सर्वन्नगरमाकुलम् ।
पीडितायां[34] भवेद्रोगः स्वेदे दारधनक्षयः ॥ १८२ ॥

---

३१ मत्स्यमित्यतः प्रिये इत्यन्तो (श्लो. १६८–१७०) भागश्च मा ख न प्राप्यते ।

३२ त्वामयः पाठोऽन्यत्र ।

३३ श्लोकः १७२ मा. ख न प्राप्यते ।

३४ व्रीडितायां पाठोऽन्यत्र ।

अधो वायुं त्यजति चेत्कुमारी[35] दैवयोगतः।
पीडितं परचक्रेण तदा भवति पात्तनम् ॥ १८३ ॥
गीतं गायति चेत्तत्र कुमारी रहितक्रिया।
सप्रजाराष्ट्रतनयदारस्य नृपतेर्मृतिः ॥ १८४ ॥
सहागताभिः कदाचिन्मुख्या विवदते यति।
तदा समायात्यकस्मात्परचक्रं सुदारुणम् ॥ १८५ ॥
अन्योन्यं तु कथावृत्ते ह्यन्योन्यं हसिते यदि।
क्रियाक्षिद्रमिति ज्ञेयं कौमार्या लक्षणं प्रिये ॥ १८६ ॥
यदा कयाचित्सार्धं वा येन केनचिदेव वा।
कुमारी भाषते वीतभयं मन्दाक्षसाध्वसा ॥ १८७ ॥
प्रजायन्ते तदा तस्य विषयेषु षडीतयः।
व्यत्यासं यदि भक्ष्यस्य कुर्वते करचालनैः ॥ १८८ ॥
त्यस्तं[36] समस्तं भवति मनसो वाञ्छितं प्रिये।
उपायनी कृतं यद्यत् द्रव्यं देव्यै तु मण्डपे ॥ १८९ ॥
तच्चेत्कराभ्यां स्पृशति कान्दिशीको भवेन्नृपः।
निर्वापयति चेद्दीपं कुमारी मुखमारुतैः ॥ १९० ॥
बुद्धिभ्रंशो भवेत्तर्हि ज्ञानदीपश्च नश्यति।
दैवयोगाद् विनृत्यन्ति कुमार्यश्चेत्स्वराकुलाः ॥ १९१ ॥
सराजकः सविषयः श्मशानमिव जायते।
वासांस्युत्सृज्य नग्नाः स्युर्यदि तत्र कुमारिकाः ॥ १९२ ॥
शत्रुभिर्ध्रियते तर्हि राजा समरमूर्धनि।
यदि फूत्कृत्य कूर्द्दन्ते करौ धृत्वा भ्रमन्ति च ॥ १९३ ॥
भूतावेशः क्षितीशस्य जायते नात्र संशयः।
उच्चरिष्यामि हास्ये वा वदन्तीत्थं कुमारिकाः ॥ १९४ ॥
भोजनावसरे तर्हि महामारी भयं भवेत्।
वामे वा दक्षिणे वापि चलन्तारकया दृशा ॥ १९५ ॥
रक्तोग्रया घूर्णयते शिरः स्वस्य कुमारिका।
कुरुते वाऽट्टहासं सा येन त्रस्यन्ति मानवाः ॥ १९६ ॥
भूतावेशो भवेत्तर्हि प्रेता नृत्यन्ति वा पुरे।

---

३५ पति चेत्कुमार्याः पाठोऽन्यत्र।

३६ ग्रस्तं पाठोऽन्यत्र।

दन्तैर्दन्तान् पीडयित्वा कुर्यात्कटकटारवम् ॥ १९७ ॥
प्रयाति सदनं मृत्योः सदारसुतबान्धवः।
दृशावनिमिषे कृत्वा सन्दस्यौष्ठं रदेन हि ॥ १९८ ॥
सन्तर्जयति शीर्षं चेत्कम्पयन्ती कुमारिका।
तदेव फलमुद्दिष्टं यत्स्यात्कटकटारवे ॥ १९९ ॥
आत्यन्तिकं भवेन्मौनं करेणान्नं स्पृशेन्न च।
शिरोऽत्यर्थं च नमयेदङ्गुष्ठेन लिखेद्भुवम् ॥ २०० ॥
विदध्याद्भूतले रेखां करजैर्निष्प्रयोजनम्।
संहताभ्यां कराभ्यां च कण्डूयेदथवा शिरः ॥ २०१ ॥
तृणान्यकारणाच्छिन्द्यादङ्गुलीस्फोटमाचरेत्।
पाणिभ्याम्मुद्रयेन्नेत्रे द्वौ कर्णौ पिदधाति वा ॥ २०२ ॥
कुर्वीत वा बाहुरिकां पार्ष्णिधृष्टिं करोति वा।
महान्तं ग्रासमाधत्ते मुखं व्यादाय तिष्ठति ॥ २०३ ॥
अन्नोपरि क्षुतं धत्ते जृम्भाणं वा मुहुर्मुहुः।
गृहीत्वा पाणिना वाऽन्नं चतुर्दिक्षु क्षिपत्यपि ॥ २०४ ॥
उत्थाय वा प्रचलति त्यक्त्वाऽन्नं पूजनं तथा।
आयाति वमनं वाऽस्याः स्यातां रोमाञ्चवेपथू ॥ २०५ ॥
निर्गच्छतो वा तद्गात्रात्पूयास्रे हेतुमन्तरा।
अकस्मादेव कुरुते काकुं चेत् कारणं विना ॥ २०६ ॥
अश्लीलं वल्गति तथा स्ववर्ग्यार्थे प्ररोदिति।
आमुक्तालङ्कृतीर्मुञ्चेद्[३७] गृहं यास्यामि वा वदेत् ॥ २०७ ॥
यस्य कस्यापि वा कुर्याद् भर्त्सनं तत्स्थले स्थिता।
उपालभेत वा कांचित् सहैवास्या उपेयुषी ॥ २०८ ॥
भिनत्ति वा निदानं सा[३८] स्वहस्तवलयानि वा।
कृते मृतस्य कस्यापि बन्धोः शोचति तत्र सा ॥ २०९ ॥
यत्किञ्चिद्वा प्रलपति निर्निमित्तं कुमारिका।
सर्वमेतदमङ्गल्यं विज्ञेयं त्रिदशार्चिते ॥ २१० ॥
दुर्भिक्षं धननाशं च रोगो मारीभयं तथा।
पदे पदे च विपदः शोको व्याधी रिपून्नतिः ॥ २११ ॥

---

३७ भञ्जेद् पाठोऽन्यत्र।

३८ वा पाठोऽन्यत्र।

परचक्रागमः कस्मादग्निदाहः पुरे गृहे ।
मृत्युत्रासश्च दारिद्यं विच्छेदो बन्धुभिः सह ॥ २१२ ॥
भूतप्रेतपिशाचाभिनिवेशोऽपि गृहे गृहे ।
अष्टाभिस्तु महारोगैः प्रजानां निधनं भवेत् ॥ २१३ ॥
इतस्ततः प्रधावन्ति लोका भयनिपीडिताः ।
किं बहूक्तेन देवेशि कल्प[३९] आकालिको भवेत् ॥ २१४ ॥
इतरेषामणीयस्तु भयं राज्ञां महद् भवेत् ।
कुमारी चेष्टितद्वारा ज्ञायते हि शुभाशुभम् ॥ २१५ ॥
वार्षिकं च फलं राज्ञो जयो वाऽथ पराजयः ।
मृत्युर्दुःखं धनं सौख्यं शत्रुभीतिर्बलोन्नतिः ॥ २१६ ॥
राज्यवृद्धिः प्रजापीडा व्यङ्ग्यतानीक संक्षयः ।
कुमारीपूजनात्सर्वं जायते भोजनादपि ॥ २१७ ॥
परीक्ष्यं यत्नतस्तस्माद् राज्ञा स्वस्य शुभाशुभम् ।
अर्चातोऽपि विशेषेण भोजनेन सुरेश्वरि ॥ २१८ ॥
जाते शुभे समीचीनं वृत्तेस्तदितरत्र हि ।
काम्यार्चा बहु सम्भारैर्दोषं तज्जं निवारयेत् ॥ २१९ ॥
निवृत्त्य स्वगृहं याता यदि रुग्णा कुमारिका ।
तस्मिन्नेवाहनि भवेत् तथापि न शुभं फलम् ॥ २२० ॥
इत्यादि फलबाहुल्यं शुभस्याप्यशुभस्य च ।
मया विविच्य कथितं ध्रियस्व हृदि यत्नतः ॥ २२१ ॥
एतत्ते कथितं देवि विकारस्य तु लक्षणम् ।
एतद्विकाररहितपूजया सिद्धिलक्षणम् ॥ २२२ ॥
तस्मात्पूजां प्रयत्नेन कुर्यादाचरणं च यत् ।
असंयतेन पूजायामर्धरूपाण्यनेकधा ॥[४०] २२३ ॥
ततो निशीथसमये विधिवत्पूजनं ततः ।
पीठमूर्त्योः प्रकुर्वीत धुपदीपानुलेपनैः ॥ २२४ ॥
नैवेद्यैरुपहारैश्च गीतवाद्यादिभिस्तथा ।
कुमारी पूजिता हन्ति कलुषं सर्वसञ्चितम् ॥ २२५ ॥
कुमारीं तु विजानीयात् साक्षात्प्रकृतिरूपिणीम् ।

---

३९ शिल्प पाठोऽन्यत्र

४० एतद् इत्यतोऽनेकधा इत्यन्तो भागो मा. ख न प्राप्यते ।

पत्रं पुष्पं फलं तोयं यत्किञ्चिद्वस्तु शोभनम् ॥ २२६ ॥
अनन्तफलदं प्रोक्तं कुमार्यै चेत् समर्पयेत् ।
पृथिवीदानजं पुण्यं सोऽश्नुते नात्र संशयः ॥ २२७ ॥
भोजिता चेत् कुमारी स्याद् भोजितं भुवनत्रयम् ।
ब्राह्मणीं च सुशीलां च कुमारीं यः समर्चयेत् ॥ २२८ ॥
पृथिवीदानजं पुण्यं सोऽश्नुते नात्र संशयः ।
न कुमारीसमं भाग्यं न कुमारीसमस्तपः ॥ २२९ ॥
न कुमारीसमा विद्या न कुमारीसमं धनम् ।
न कुमारीसमं भाग्यं न राज्यमपि पार्वति ॥ २३० ॥
न कुमारीसमं तीर्थं न कुमारीसमः क्रतुः ।
न कुमारीसमो योगो न भूतो न भविष्यति ॥ २३१ ॥
अहो धन्यवतां मध्ये कुमारीपूजकः कलौ ।
कुमारीदेवता प्रोक्ता कुमारी प्राणरूपिणी ॥ २३२ ॥
कुमारीभुषणे भूषा कुमारी स्पर्शरूपिणी ।
तद्हस्तसम्भवं पुष्पं तद्हस्तसम्भवं जलम् ॥ २३३ ॥
तद्हस्तरचितं भोज्यं देवताभ्यो निवेदयेत् ।
तासां प्रहारं द्वेष्यं च सर्वथा परिवर्जयेत् ॥ २३४ ॥
स शाक्तः शिवसंपूज्यो गाणपः स च सत्कृती ।
स योगी स च संन्यासी स मेधा स च संयुतः[४१] ॥ २३५ ॥
स वेदवित् सर्ववित्स्यात् कुमारी पूजकः स्मृतः ।
अहो धन्यवतां मध्ये कुमारीपूजकः कलौ ॥ २३६ ॥
सर्वसिद्धिमवाप्नोति यः कुमारीं समर्चयेत् ।
वसन्ति सततं गेहे कुमार्या योगिनीगणाः ॥ २३७ ॥
अतः पूज्या नमस्या स्याल्लालनीया तदिच्छया ।
अशक्त्या पूजयेदेकां कुमारीं साधकोत्तमः ॥ २३८ ॥
विना कुमारिकापूजां न पर्व परिहापयेत् ।
यो नित्यमर्चयेदेतां तस्य स्यात्सिद्धिरुत्तमा ॥ २३९ ॥
नवरात्रौ समाप्यन्ते नवम्यन्तं निशीथधीः ।
नानोपचारैरभ्यर्च्य कुमारीवृद्धिपूर्वकम् ॥ २४० ॥
वृद्धिक्रमेण पूजयेद् वाञ्छितां सिद्धिमाप्नुयात् ।

४१ संयत इति पाठः समुचितः ।

अहो कुमारी माहात्म्यं केन वक्तुं प्रशक्यते ॥ २४१ ॥
जात्या हीना न मन्तव्या वयसा वा महेश्वरि ।
अन्त्यजस्य तु या कन्या या कापि वै कुमारिका ॥ २४२ ॥
सर्वदा वै पूजयेद्देवि भावयुक्तेन चेतसा ।[४२]
अथवा पूजयेन्मन्त्री युवतीः नवसङ्खयकाः ॥ २४३ ॥
हृल्लेखा गणना रक्ता महोच्छुष्मा करालिका ।
इच्छा-ज्ञान-क्रिया दुर्गा नव नामभिरीरिताः ॥ २४४ ॥
पूर्ववत् पूजयेन्मन्त्री जपेत्साग्रं सहान्नकम् ।
यदि सा क्षोभमायाति स्वयमेव विलासिनी । ॥ २४५ ॥
तया सह नयेद् रात्रिं वासरं वा निशीथधीः ।
कुमारीं न स्पृशेदेव भावयुक्तेन चेतसा ॥ २४६ ॥
अन्यथा मृत्युमाप्नोति नोचेद् देवी पराङ्मुखी ॥ २४७ ॥[४३]

*इति श्रीतन्त्रचिन्तामणौ नैमित्तिकार्चनायां कुमारीयजननिर्णयनाम षड्त्रिंशत्तमः प्रकाशः ।*



४२ अहो इत्यरभ्य चेतसा इत्यन्तः पाठः मा. ख न प्राप्यते ।

४३ 'भुञ्जानासु कुमारीषु न तुर्यध्वनिमाचरेत्' (श्लोकः ११४) इत्यारभ्य 'अन्यथा मुत्युमाप्नोति नोचेद् देवी पराङ्मुखी' (श्लोकः २४७ ) इत्यन्तः श्लोकसङ्ख्याः संशोधिताः ।

# सप्तत्रिंशत्तमः प्रकाशः

## अथ साधारणकाम्यार्चनविधिर्लिख्यते

### श्रीदेव्युवाच

नित्यार्चनं श्रुतं त्वत्तस्तथा नैमित्तिकार्चनम्।
प्रभो तन्मे वदेदानीं कथं काम्यार्चनं भवेत्॥ १॥
नाथ किं तद्विधानं स्यात्काम्यार्चन विधेः शिव।
तद्विशेषण मे ब्रूहि शुश्रूषा वाधते हि माम्॥ २॥

### श्रीमहाकाल उवाच

काम्यं न नित्यवद्देवि नैमित्तिकवदुच्यते।
नित्यादप्यधिकं भिन्नं स्वल्पं नैमित्तिकादपि॥ ३॥
काम्यं न तत्रोपरागपर्वाब्दीयतिथिक्रमः।
नैमित्तिकोऽपेक्षणं यद्ववत् पूर्ववत्परिकीर्तितम्॥ ४॥
तथाऽत्र कामनापेक्षादिष्टस्यागन्तुकस्य न।
अथास्य भेदबाहुल्यं प्रकारोऽपि निगद्यते॥ ५॥
तिथिर्भवतु या काऽपि दिनं वा रात्रिरेव वा।
कामना द्रव्यसंपत्तिरुभयं कारणं मतम्॥ ६॥
एकेनापि भवेत्काम्यार्जनं त्रिदशवन्दिते।
क्वचिदेवोभयं विद्यान्नभवेदेवमन्तरा॥ ७॥
कामनाभेदतो द्रव्यभेदा भूयांस ईरिताः।
पूर्व पूर्वं बाधकः स्याद्बाध्यमेव परं परम्॥ ८॥
उभयोर्बाधकं ज्ञेयं सर्वाद्यं जगदीश्वरि।
तत्रापि प्रथमं वच्मि कामनाया भिदाः पराः॥ ९॥
तदनु द्रव्यसंपत्तेर्भेदान् वक्ष्यामि भूरिशः।
प्रागुत्तरं भवेत्सिद्धेस्तदिष्टमुभयं बुधैः॥ १०॥
कर्तुरेव मनस्तत्र प्रमाणं कालयोर्द्वयोः।
अशास्त्रमिति मौलेया एवमेव दिगम्बराः॥ ११॥

मन्मतं तु वरारोहे समाकलय तत्त्वतः।
कृतायामेव सेवायां यद्यत् स्वाभिमतं भवेत् ॥ १२ ॥
तत् प्रार्थ्यते महीपालान् प्रभोर्वाऽप्यनुयायिभिः ॥
एवमत्रापि विज्ञेयं भण्डिकेरा अदो जगुः ॥ १३ ॥
कामनायां कालभेदा द्रव्यलाभेन ते मताः।
कालो मासर्तुपक्षाहो नक्षत्रतिथिसङ्क्रमाः ॥ १४ ॥
क्रमेण वर्णयामीशिदपचित्ता निशामय।
गुप्तपापक्षयो राध्ये ज्येष्ठे पुण्यादयस्तथा ॥ १५ ॥
आषाढे सङ्कटत्राणं श्रावणेऽथ ग्रहक्षयः।
दारिद्र्यनाशो भाद्रेऽपि मारीनाश इषेऽपि च ॥ १६ ॥
बन्धूनां विप्रयुक्तानां मिलनं कार्त्तिके मतम्।
अश्वागमो मार्गशीर्षे पौषे राजभयक्षयः ॥ १७ ॥
स्वर्गावाप्तिस्तथा माघे फाल्गुने कलहे जयः।
उपसर्गक्षतिश्चैत्रे मासीयाः कामना इमाः ॥ १८ ॥
वसन्ते रणसामर्थ्यं ग्रीष्मे गोऽजादिकोन्नतिः।
प्रावृष्यरातिनिधनं शरद्यारोग्यमेव च ॥ १२ ॥
हेमन्ते ब्रीहिधान्यर्द्धि शिशिरे चेतिसंक्षयः।
शुक्ले धर्माऽमृतावाप्तिः कृष्णेकामार्थयोरपि ॥ २० ॥
रवौ ज्वरोपशमनं सोमे नेत्राऽमयक्षयः।
अनुरागे विवृद्धिः स्यात् कुजे स्त्रींपुंसयोर्मिथः ॥ २१ ॥
बुधे जाड्यापहरणं विद्यालाभो गुरौ तथा।
क्लीवतापसृतिः शुक्रे शनावुत्पातसंक्षयः ॥ २२ ॥
अन्नावाप्तिरथाश्विन्यामभिचारो यमोडुनि।
उच्चाटनं कृत्तिकायां रोहिण्यां वाग्मिता तथा ॥ २३ ॥
मृगशीर्षे त्वायुराप्तिर्मिथो द्वेषश्च रौद्रभे।
पुनर्वसौ धनलाभः पुष्ये च समरजयः ॥ २४ ॥
अश्लेषायां सर्पभयनिवारणमपीष्यते।
बलाधिक्यं मघायां स्याद्योनिभे वह्वपत्यता ॥ २५ ॥
भवेदुत्तरफाल्गुन्यां ग्रहदोषनिवारणम्।
तथैव हस्तनक्षत्रे परचक्रनिवारणम् ॥ २६ ॥
स्थिरा मैत्री च चित्रायां स्वात्यां मोहनमेव च।

विशाखायां सम्वदनं नानासिद्धिश्च मित्रभे ॥ २७ ॥
ज्येष्ठायां नष्टवित्ताऽप्तिर्गरदानं च नैऋते ।
पूर्वाषाढासुकन्याप्तिरुन्मादोपशमं भवेत् ॥ २८ ॥
उत्तराषाढनक्षत्रे श्रवणे मोक्ष एव च ।
धनिष्ठायां खेचरत्वं मेधा वारुणभे भवेत् ॥ २९ ॥
पूर्वाभाद्रपदे चैव जायते चिरजीविता ।
तथा चैवोत्तराभाद्रे संपत्तिरति भूयसी ॥ ३० ॥
संपत्त्यविच्छित्तिरपि रेवत्यां परिकीर्तिता ।
काम्यार्चनं प्रतिपदि बहुकल्याणकारकम् ॥ ३१ ॥
गुर्विण्याः पुनकत्रार्थं द्वितीयायां समर्हणम् ।
राजभीत्यपनोदाय तृतीयायामुदाहृतम् ॥ ३२ ॥
बालग्रहापनोदाय चतुर्थ्यां काम्यपूजनम् ।
पञ्चम्यां शत्रुनाशार्थं षष्ठ्यामुत्पातशान्तये ॥ ३३ ॥
स्त्रीपुंसयोस्तु सप्तम्यामनुरागविवृद्धिकृत् ।
देवीप्रीतिस्तथाष्टमयां नवम्यां विजयो रणे ॥ ३४ ॥
प्रवासितपरावृत्तौ दशम्यां काम्यमर्चनम् ।
एकादश्यां धनावाप्तिद्वादश्यां पुष्टिवर्धनम् ॥ ३५ ॥
सर्वसिद्धिस्त्रयोदश्यां चतुर्दश्यामथाऽमृतम् ।
योगक्षेमपरिप्राप्त्यै पञ्चदश्यां समर्चनम् ॥ ३६ ॥
पारलौकिकसिद्धिः स्यादुत्तरायणसङ्क्रमे ।
तथेहलौकिकक्षेमसिद्धिः स्याद्दक्षिणायने ॥ ३७ ॥
सङ्क्रमादिषु चान्येषु योगयोगादिभिस्तथा ।
विविधाः कामनास्तास्ता भवन्ति वरवर्णिनि ॥ ३८ ॥
यामलादिषु ते प्रोक्ता भैरवि संहितास्वपि ।
बाहुल्यभयतो नोक्ता मया देव्यत्र कामनाः ॥ ३९ ॥
इति कालसमुद्देशः कश्चिदुद्दिष्ट ईश्वरि ।
द्रव्यलाभमथो वक्ष्ये ज्ञेयं तद्विविधिं बुधैः ॥ ४० ॥
कालसंवलिताः केचित्तदसंवलिताः परे ।
नीमाऽशोकपलाशश्रीफलपत्रसरोरुहम् ॥ ४१ ॥
मल्लिका-केतकी-जाती-करवीर-जपाऽशनाः ।
बन्धूकानि च पुष्पेषु फलेषु च निशामयः ॥ ४२ ॥

लकुचाम्रातकक्षीरिकरमर्दाम्लकण्टकाः
नारङ्गाम्रपनसबीजपूरकपित्थकाः ॥ ४३ ॥
मृद्वीकादाडिमफले तालीमानि च पार्वति ।
वैशाखादिषु लब्धानि विशेषाद्देशकालयोः ॥ ४४ ॥
काम्यार्चन हेतुकानि स्युरन्यान्यपि च मे श्रृणु ।
कपिलाया सवत्सायाः क्षीरं मलयजद्रवः ॥ ४५ ॥
मृतखण्डविकाराश्च धूपश्चाम्बरनामकः ।
सार्षपं सितमाध्वीकं दिव्यशक्तेरुपागमः ॥ ४६ ॥
लक्षाङ्गबुकपुष्पाणि भृष्टेलि.. सचरायनौ ।
महामादककर्त्री च हाला द्वीपान्तरागता ॥ ४७ ॥
समागमः कौलिकानां सर्वावयवसम्भृतः ।
ताम्बूलोपगमश्चापि बह्वन्नव्यञ्जनोच्चयः ॥
एषामधिगमे देवि राधादिषु च पूर्ववत् ।
तैथवालेयाधिगमानधुना कलय प्रिये ॥ ४९ ॥
गोधाशश उरभ्रश्च कमठः कृष्णसारयुक् ।
गवयः शूकरश्छागो महिषो नकुलोऽपि च ॥ ५० ॥
गोकर्णो मकरश्चापि द्वीपी खड्गश्च केसरी ।
आद्यादिपञ्चदश्यन्त तिथिद्रव्यादयः क्रमात् ॥ ५१ ॥
भैरवीसंहितास्वेयं ज्ञातव्या वारतारयोः ।
मासानां सङ्क्रमाणां च यामलादिषु पार्वति ॥ ५२ ॥
कामनाद्रव्यलाभौ द्वावेवमुक्तौ मया तव ।
उभयोरप्यभावेऽपि स्वेच्छाहेतुत्वमृच्छति ॥ ५३ ॥
नान्वेति नित्यं केनापि ते पुनर्नित्यमन्विताः
परस्परं ते च पुनर्व्यवस्थेदृग्विधा स्थिता ॥ ५४ ॥
उत्तरोत्तरतश्चैषां बाध्यता च निरूपिता ।
काम्येऽपि नैमित्तिकतां भाण्डिकेराः प्रकुर्वते ॥ ५५ ॥
युक्त्या सा चाप्तिरूपेति तन्नाहमिति कीर्त्तये ।
तदा संजाघटीत्येतद्यदि पर्वसु जायते ॥ ५६ ॥
उदीरितादिभिन्नेषु योगजेष्वपि पर्वसु ।
दिनेष्वघटितेष्वेवं प्रकारैरपि भूरिभिः ॥ ५७ ॥
कामनाभिरवाप्ता वाऽथवा देवि निजेच्छया ।

काम्यार्चा घटितेऽवश्यं दुष्टोक्तिरत एव सा ॥ ५८ ॥
इदानीमत्र यत्प्रोक्तं कर्तव्यत्वेन भूरिशः ।
हेयत्वेनोदितं यच्च तत्सर्वं कलय प्रिये ॥ ५९ ॥
कौलिकानामशेषाणां मतमत्रेदृशं स्थितम् ।
शक्त्या सहोपविश्यैकासने वामाङ्कलग्नया ॥ ६० ॥
काम्यार्चनं प्रकर्त्तव्यं न च तत्पूजनं पृथक् ।
कुर्वन्ति चेत्प्रकुर्वन्तु स्मार्तानां नैतदिष्यते ॥ ६१ ॥
क्रियाभेदाद्गनधपुष्पधूपदीपभिदाः पृथक् ।
सात्त्विक्यां कामनायां तु सितो गन्धः प्रशश्यते ॥ ६२ ॥
उच्चाटनवशीकारे प्रीतये वैरिणां जयेत् ।
गन्धपुष्पे विशेषेण कर्तव्ये लोहिते सदा ॥ ६३ ॥
मोहने कामिनीलाभे पीतमेवोभयं मतम् ।
कृत्याभिचारे द्वेषे च मारणे चासितं द्वयम् ॥ ६४ ॥[1]
[2]दीपवर्त्तय ईदृश्यस्तत्तद्वर्णाढ्यतन्तुभिः ।
विधातव्याः प्रयत्नेन तत्तत्कार्यप्रसिद्धये ॥ ६५ ॥
गुग्गुल्वगुरुधूपस्तु सात्त्विकेषु प्रशस्यते ।
तथा सरलनिर्यासो राजसेषु प्रकीर्त्तितः ॥ ६६ ॥
गवलाले[3] तथा सिद्धार्थकं तामसकर्मणि ।
यज्ञादिधर्मकैवल्यतपत्तीर्थादिलब्धये ॥ ६७ ॥
नैवेद्यं फाणिताज्यक्ता द्रवफलाभानुभृष्टयः[4] ।
इतरस्या इराक्रव्याऽण्डजमाध्वीकशक्तयः ॥ ६८ ॥
पूर्ववत् फलकुष्माण्डेक्षुदण्डाबलयो मताः ।
अपरस्यै पतत्येशी पूररण्योत्थजान्मिनः ॥ ६९ ॥
इत्यादिवस्तूनां भेदो ज्ञतव्या स्वरूपाधिया ।
नैमित्तिकवदप्यत्र पात्राणां रचनाप्रिये ॥ ७० ॥
मतानुसारतः स्वस्वव्यवस्थाऽऽश्रयणादपि ।
विधिमन्त्रौ च तावेव वेदितव्यौ वरानने ॥ ७१ ॥
सामग्रीशोधनं चापि तथैवानुक्रमावली ।

१ सात्त्विक्यामित्यतः द्वयमित्यन्तोः पाठः (श्लोकः ६२-६४) मा. क न प्राप्यते ।

२ दीपवर्त्तय इत्यतो धिया इत्यन्तः पाठः (श्लो. ६५-७०) मा. क न प्राप्यते ।

३ वगलाले पाठ मा. ख ।

४ न्नकलान्न च भृष्टयः इति पाठो मा. ख

विशेषो योऽधिकोऽस्तीह तमाकलय तत्त्वतः ॥ ७२ ॥
सर्वेषामुपचाराणां प्रदानाय वरानने ।
सन्ति यद्यपि मन्त्रास्ते पृथक् पृथगुदीरिताः ॥ ७१ ॥
तथापि तेषां चरमे मूलमन्त्रं प्रकीर्त्त्य हि ।
भगवत्यै स्वेष्टदेव्यै[५] तद्वस्तु शिर उच्चरेत् ॥ ७४ ॥
एवं सर्वत्र बोधव्यं यावदेव प्रपूजने ।
न्यासस्य यस्य कस्यापि प्रागन्तेऽपि सुरेश्वरि ॥ ७५ ॥
तत्तन्मनूदितं कार्यं षडङ्गमृषिसंयुतम् ।
तत्तन्यासार्वणमपि विधाय विनिवेदयेत् ॥ ७६ ॥
उपयोगोल्लेखपूर्वं सङ्कल्पं पुरतश्चरेत् ।
आवश्यकतया देवि कर्तव्यत्वेन निश्चितान् ॥ ७७ ॥

## अथ प्रयोगादौ शुभाशुभविवेकगणेशप्रदीपमाह

श्रृणु देवि प्रवक्ष्यामि दीपस्य विधिमद्भुतम् ।
आदौ गणेश दीपस्तु कार्याकार्यविनिर्णये ॥ ७८ ॥
कर्तव्यं संप्रवक्ष्यामि कार्यमष्टविधं स्मृतम् ।
शान्तिकं पौष्टिकं चैव मारणं स्तम्भनं वशम् ॥ ७९ ॥
मोहाच्चाटौ द्वेषणं च तेषु दीपं चरेत् क्रमात् ।
गोधूम-यव-माषाणां मृत्तिका-स्वर्ग-मुण्डजम् ॥ ८० ॥
ताम्रायसं क्रमात्पात्रं वर्त्तयः श्वेतपीतकाः ॥
कृष्णनीलारूणारक्तहरित्कापोतसूत्रकैः ॥ ८१ ॥
पूर्वाशाद्यष्टकाष्ठानां क्रमात्संसुखमाचरेत् ।
उदक प्राग्दक्षतोयेन वह्निरक्षः समीशदिक् ॥ ८२ ॥
संमुखं तु मुखं कुर्यात्साधकः स्वल्पकर्मणि ।
गव्याज्यं तिलतैलं च राजिकोत्थं च सार्षपम् ॥ ८३ ॥
महिषाज्यंयुता तैलं वसो तैलं कुसुम्भजम् ।
लिखेत्सूर्यदलं पद्मं लिप्तेगोमयमण्डले ॥ ८४ ॥
दीपस्य दिशमारभ्य गणेशाँस्तत्र पूजयेत् ।
सुमुखश्चैकदन्तश्च कपिलो गजकर्णकः ॥ ८५ ॥
लम्बोदरश्च विकटो विघ्नराजो गणाधिपः ।

५ गुह्यकाल्यै पाठः मा. ख ।

धूम्रकेतुर्गणाध्यक्षो भालचन्द्रा गजाननः ॥ ८६ ॥
[६]द्वादशैतानि नामानि यः पठेच्छृणुयादपि ।
विदारम्भे विवाहे च प्रवेशे निर्गमे तथा ॥ ८७ ॥
सङ्ग्रामे सङ्कटे चैव विघ्नस्तस्य न जायते ।
एताँस्तत्र यजेद्विद्वान् पश्चाद्दीपाँश्च लापयेत् ॥ ८८ ॥
दीपिका संस्थिते पात्रे शुद्धया तु शलाकया ।
ऊर्ध्वाधः कप्पते दीपस्तदा कार्य प्रसिध्यति ॥ ८९ ॥
तीर्यक्कम्पेन कार्ये स्यात्सम्यग्ज्योतिषि सत्फलम् ।
तेजोमान्द्ये विलम्बेन चात्र कौतुकमुच्यते ॥ ९० ॥
जातां देवगणे कन्यां कुमारं वा समानयेत् ।
स्त्रियं वा शुद्धवेषां च सम्यगानीय पूजयेत् ॥ ९१ ॥
अधस्तात्स्थापयेत्पूतं विस्तीर्णं कांस्यभाजनम् ।
जलपूर्णं च तन्मध्ये सा पश्येत् स्थिरदृक्ततः ॥ ९२ ॥
चिन्तयित्वा स्वीयकार्यं तदुपर्यक्षताः क्षिपेत् ।
कार्यानुसारं सा पश्येत् पुत्तलीनां च कौतुकम् ॥ ९३ ॥
प्रयोगकाले देवेशि ब्राह्मणान् पूजयेद् व्रती ।
तावत्क्वापि न गन्तव्यं यावत्सिद्धिर्न जायते ॥ ९४ ॥
आरम्भान्तं समाप्याथ प्रायश्चित्तं ततश्चरेत् ।
अङ्गाङ्गिभावमासाद्य सर्वं संसाधयेत्व्रती ॥ ९५ ॥
कार्यमध्ये पुनः कार्यमङ्गाङ्गित्वाद् भवेच्छिवे ।
पूर्व पाटीं पूरा ज्ञात्वा विघ्नानुत्सार्य यत्नतः ॥ ९६ ॥
कार्याणि साधयेद्देवि चान्यथा नारकी भवेत् ।
कार्यान्तरे समारब्धे तत्र कार्यं न वै भवेत् ॥ ९७ ॥
न्यायाधिकरणं ज्ञात्वा पीठिकाज्ञानपूर्वकम् ।
अङ्गाङ्गिनं पुरा ज्ञात्वा सर्वकार्याणि साधयेत् ॥ ९८ ॥
न हि कर्मणि कर्मणामारम्भस्तु क्वचिद् भवेत् ।
कर्मणामपि वाऽऽरम्भस्त्वङ्गाङ्गित्वाद् भविष्यति ॥ ९९ ॥
कार्ये जातेऽपि देवेशि सन्ध्यामूर्त्तिं समाचरेत् ।
सङ्कल्प्य वाधकी भूयादन्यथा परमेश्वरि ॥ १०० ॥

६ द्वादशैतानि ..... इत्यतो विघ्नस्तस्य न जायते इत्यन्तः पाठः मा. क न प्राप्यते ।

## अथ विशेषकाम्यमाह

कामयकर्मणि वक्ष्यामि तत्रादौ शान्तिरुच्यते।
शान्तिर्नाम मनुष्याणां रोगकृत्यादिनाशनम्॥ १०१॥
षड्धा विभज्याहोरात्रं पञ्चम्यंशे तु शान्तिकम्।
हेमन्ते च प्रकर्त्तव्यं नासाधश्चलते यदा॥ १०२॥
वायुस्तदा तोयतत्त्वं तस्माच्छान्तिकमाचरेत्[७]।
श्वेतवर्णेन निर्माय चतुरस्रं तु मण्डलम्॥ १०३॥
पूजयेज्जलजं चादौ वँ-बीजेनात्र शान्तिके।
उत्तराभिमुखो भूत्वा शान्तिकं तु समाचरेत्॥ १०४॥
शान्तिकादौ रतिः पूज्या पद्ममुद्रां प्रदर्शयेत्।
बद्ध्वा पद्मासनस्थोऽयं नमोन्तः शान्तिकं मनुः॥ १०५॥
शान्तौ कुशासनं ग्राह्यं होमयेनमृगमुद्रया।
मुक्त्वा[८] कनिष्ठिकां यत्र हूयते सामृती भवेत्॥ १०६॥
त्रिषुत्तरासु पूर्वासु शान्तिकं स्यात्त्रिजन्मसु।
अथ वश्यं प्रवक्ष्यामि स्वायत्तीकरणं तु तत्॥ १०७॥
देवरक्षोराजलोकसर्पस्त्रीह्यहस्तिनाम्।
प्रथमांशे वश्यकर्म वसन्ते च प्रसिध्यति॥ १०८॥
नासोर्ध्वे वहते वायुरग्नितत्त्वं वहेत्तदा।
वश्यं कुर्यात्त्रिकोणे तु रँ-बीजेनाग्निपूजनम्॥ १०९॥
रक्तवर्णेन निर्माय वश्यं पूर्वमुखश्चरेत्।
वाणीं संपूजयेद् वश्ये पाशमुद्रां प्रदर्शयेत्॥ ११०॥
स्वस्तिकासनमारुह्य स्वाहान्तं मन्त्रमुच्चरेत्।
छागालं चर्म वश्ये स्याद् गोपयेन्मृगमुद्रया॥ १११॥
रक्तद्रव्यैरत्र[९] होमो ध्यानमारक्तभं मतम्।
मृगाभ्यचित्रामित्रर्क्षे विशाखाकृत्तिकात्र तु॥ ११२॥
अथ स्तम्भं प्रवक्ष्यामि तदुद्योगनिवारणम्।
गजराजोरगव्याघ्रादिककोपनिवारणम्॥ ११३॥
शिशिरे स्तम्भनं प्रोक्तं षष्ठांशे तु दिनस्य तत्।

---

७ तस्मिन् पाठः मा. ख

८ मुक्त्वा .........सामृती भवेत् इत्यन्तः पाठ मा. क न प्राप्यते।

९ रक्त पाठः मा. ख।

अग्नेरपां च सैन्यस्य क्रुद्धस्य विषदंष्ट्रिणाम् ॥ ११४ ॥
जानुभ्यामवनीं गत्वा स्तम्भनस्य क्रियां चरेत् ।
जार-चौर-रुजां स्तम्भो धर्म्यः प्रेतादिरक्षताम् ॥ ११५ ॥
नास्तदण्डेन संलग्नो वायुश्चेद् भूदयो भवेत् ।
स्तम्भकर्म तदा कुर्याल्लँ-बीजेन वसुन्धराम् ॥ ११६ ॥
अष्टवज्रयुते पीते मण्डले तां समर्चयेत् ।
प्राङ्मुखः स्तम्भनं कुर्याद्रमां तत्र प्रपूजयेत् ॥ ११७ ॥
विकटासनगो देव्यै गदामुद्रां प्रदर्शयेत् ।
स्तम्भने वषडन्तश्च होममन्त्रः प्रकीर्तितः ॥ ११८ ॥
गजचर्मासनं स्तम्भे मृगीमुद्रा हुतो तथा ।
पीतद्रव्यैश्चात्र होमः पीतवस्त्रादिधृक् स्वयम् ॥ ११९ ॥
स्तम्भने भरणी चित्रा रोहिणी चोत्तरात्रयम् ।
अथ विद्वेषणं वक्ष्ये प्रीतिनाशः स तु द्वयोः ॥ १२० ॥
ग्रीष्मविद्वेषणं घस्रषष्ठांशे तु द्वितीयके ।
नासायां मध्यगे वायौ चोदयो द्वेषणं मतम् ॥ १२१ ॥
वर्त्तुले धूम्रवर्णे तु मण्डले खं समर्चयेत् ।
हँ-बीजेनाथ विद्वेषं नैर्ऋत्याभिमुखं चरेत् ॥ १२२ ॥
पूज्या धूमावती द्वेषे मुद्रा तु मुसला भवेत् ।
होममन्त्रः फडन्तोऽत्र विशेदुत्कटुकासने ॥ १२३ ॥
विद्वेषे जाम्बुकश्चर्म लोहासनमथापि वा ।
धूम्रवर्णैश्च होतव्याः तादृग्वस्त्रादिसाधकः ॥ १२४ ॥
आर्द्राचतुष्टयं मूलं ज्येष्ठा विद्वेषणे मता ।
उच्चाटनमथो वक्ष्ये तदरीणां प्रवासनम् ॥ १२५ ॥
प्रावृडुच्चाटने शस्ता त्रिषष्ठांशे दिनस्य च ।
तिर्यग्याते समीरे तु वायुर्वहति तत्र तु ॥ १२६ ॥
शत्रोरुच्चाटनं कुर्याद् यँ-बीजेन तमर्चयेत् ।
षट्कोणमण्डलं वायोः कृष्ठां षड्बिन्दुलाञ्छितम् ॥ १२७ ॥
मृगचर्मासनं तत्र वायव्यास्यं च कर्मणि ।
दुर्गां संपूजयेन्मुद्रामशनिर्नाम दर्शयेत् ॥ १२८ ॥
वज्रासनसमारूढः फडन्तश्च हुतौ मनुः ।
तर्पणार्थं मेषरक्तामिश्रितं तोयमावहेत् ॥ १२९ ॥

धूम्रमुच्चाटने ध्यानं कृष्णद्रव्यैस्तथा हुनेत् ।
उच्चाटनं क्षिप्रमेषु चरमेषु प्रशस्यते ॥ १३० ॥
मारणं प्राणहरणं शत्रूणामीरितं तु तत् ।
मारणे वर्जयेद् विप्रानन्याँश्चापि सुधार्मिकान् ॥ १३१ ॥
स्त्रीवारव्यतिरिक्तेषु राजवैरिषु योजयेत् ।
स्वदोषतो बालकान्तं रक्षार्थं वा तदाचरेत् ॥ १३२ ।
न तु लाभाद्भयाद्वापि कुर्यान्मन्त्री तु मारणम् ।
प्रायश्चित्तं तु कर्तव्यं देवि तद्दोषशान्तये ॥ १३३ ॥
अयुतं प्रजपेन्मन्त्रं जुहुयात्तावदेव हि ।
सघृतैः पायसैः कृष्णतिलैर्वा घृतसंप्लुतैः ॥ १३४ ॥
आत्मरक्षा प्रकर्तव्या कर्मकाले सदा बुधैः ।
अह्नश्चतुर्थषष्ठांशः शरन्मारणकर्मणि ॥ १३५ ॥
वश्यवन्मारणे कार्यं पूजाद्यं वह्निमण्डले ।
दक्षिणाभिमुखः कुर्याद् भद्रकालीं समर्चयेत् ॥ १३६ ॥
दर्शयेत्खड्गमुद्रां च विशेद्भद्रासने हुनेत् ।
हूँ- कारान्तेन मन्त्रेण माहिषं वाऽथ लोहजम् ॥ १३७ ॥
आसनं सूकरी मुद्रा करसंकोचतो भवेत् ।
ध्यानं कुर्यात्कृष्णवर्णं कृष्ठाद्रव्यैश्च पूजनम् ॥ १३८ ॥
उग्रतीक्ष्णेषु धिष्णेषु स्वस्य चन्द्रबलादिके ।
शत्रोश्चैतद्बलाभावे चैकपादोपरि स्थितः ॥ १३९ ॥
ऊष्णोदकं समीरितं तर्पणार्थं तु मारणे ।
तिष्ठन्कुर्यान्मारणं वा भूमौ पादं निवेदयेत् ॥ १४० ॥
वामपादनिविष्टः सँश्चरेत्तत्र तु तर्पणम् ।
आकर्षणे वह्निकोणसम्मुखस्तु समाचरेत् ॥ १४१ ॥
वश्योक्तमखिलं ज्ञेयमाकर्षे कार्यसिद्धये ।
प्रकीर्णान्यथ वक्ष्यन्तेऽत्यभिचाराँश्च तत्र च ॥ १४२ ॥
दक्षिणाभिमुखःकुर्यान्मेषीचर्मणि संस्थितः ।
लोहासनगतो वाऽपि सूकरीमुद्रया हुनेत् ॥ १४३ ॥
धनसिद्धिकरं कर्म पश्चिमाभिमुखश्चरेत् ।
मृगांण्यचित्रामित्रेषु देवध्यानं तु राजसम् ॥ १४४ ॥
गोचर्मणासनं मोहे स्वाहान्तं मनुमुच्चरेत् ।

हरिद्रामिश्रितं तोयं तर्पणार्थं प्रयोजयेत् ॥ १४५ ॥
स्वाती च रोहिणी तत्र श्रेष्ठा चापि सुखासनम् ।
अथ सर्वाणि कर्माणि रौद्रभे तु प्रसाधयेत् ॥ १४६ ॥
नानाविधेषु कार्येषु व्याघ्रचर्म समीरितम् ।
सर्वरत्ननिभाकारं ध्यायन्निश्चलमानसः ॥ १४७ ॥
पीयूषवर्षसंयुक्तं पूर्णचन्द्रसमप्रभम् ।
ध्यायेद्देवं विधिं नापि सर्वकार्यप्रसाधने ॥ १४८ ॥
आयुः करं श्रवणेऽपि देवं ध्यायेच्च राजसम् ।
अपमृत्युजयं प्रोक्तं पूर्वाचैवोत्तरात्रयम् ॥ १४९ ॥
वषडन्तो होममन्त्रो ध्यायेद्राजसदैवतम् ।
सर्वज्ञानप्रसिध्यर्थमीशानाभिमुखो भवेत् ॥ १५० ॥
सर्वविज्ञानकार्येषु श्वेतकम्बलमासनम् ।
पुष्ट्यादिसाधने मन्त्रो वौषट्पल्लवसंयुतः ॥ १५१ ॥
हंसी स्यात्तर्जनी मुक्ता मुद्रा पौष्टिककर्मणि ।
यथोक्तं देवताध्यानं कुर्यात्पौष्टिककर्मणि ॥ १५२ ॥
सर्वत्र भयनाशाय वषडन्तो हुतो मनुः ।
महाशोकसमायुक्तं ध्यानं वैरिभये भवेत् ॥ १५३ ॥
मन्त्रभंजनकार्येषु वषडन्तो हुतो मनुः ।
खण्डने तु फडन्तः स्याद् होमो ध्यानं तु तामसम् ॥ १५४ ॥
सौख्यायोदङ्मुखः कुर्याज्जपं च रूरुचर्मणि ।
कल्पान्ताग्निसमं युद्धे ध्यायेद्देवं च तामसम् ॥ १५५ ॥
अथ वक्ष्यामि काम्यादौ संपूज्या याश्च देवताः ।
नित्यं समर्चयेद् विघ्न वारेशं च तिथीश्वरम् ॥ १५६ ॥
नक्षत्रेशं ततः पूज्यास्तत्तत्कर्माधिदेवताः ।
ततोऽर्चयेदिष्टदेवं ततो होमं समाचरेत् ॥ १५७ ॥
क्रमाद् द्वारेश्वरौ सूर्यशिवौ सोमाम्बिके तथा ।
गुहाँगारौ च विष्णुश्च चतुर्वक्त्रो वृहस्पतिः ॥ १५८ ॥
शुक्रेन्द्रौ शनिकालौ च सूर्यादौ पूज्यता मनुः ।
ब्रह्मा विधाता विष्णुश्च यमः शीतकरो गुहः ॥ १५९ ॥
इन्द्रश्च वसवो नागा धर्मः शिवदिवाकरौ ।
कन्दर्पश्च कलिर्विश्वेदेवाश्च पितरस्तथा ॥ १६० ॥

अश्विनौ च यमो वह्निर्ब्रह्मा चन्द्रः शिवादितिः ।
गुरुः सर्पाश्च पितरो भगो यमदिवाकरौ ॥ १६१ ॥
त्वष्टा वायुरथेन्द्राग्नी द्वौ मित्रश्च सुरेश्वरः ।
निर्ऋतिश्च जलं विश्वेदेवाश्चापि विधिर्हरिः ॥ १६२ ॥
वसवो वरुणोऽजैकपादोऽहिवुध्नमूषकौ ।
नक्षत्रेशा इमे साभिजित्का अष्टौ च विंशतिः ॥ १६३ ॥
प्रणवादि चतुर्थ्यन्ता नमसा च समन्विताः ।
एतेषां नाममन्त्रास्तु ग्राह्याः पूजादिसाधने ॥ १६४ ॥।
सिद्धं मन्त्रं प्रकुर्वीत काम्यकर्मविधानवित् ।
आत्मनश्च परस्यापि काम्यकर्माणि चाचरेत् ॥ १६६ ॥
षट्कर्माणि परार्थे चेत् कुर्यान्मन्त्रविदुत्तमः ।
एतेषामेव कुर्वीत नान्येषां तु कदाचन ॥ १६७ ॥
राज्ञो वा राजपुत्रस्य धनाढ्यस्येतरस्य वा ।
आस्तिकस्यातिभक्तस्य न्यायार्जितधनस्य च ॥ १६८ ॥
कृतज्ञस्य वदान्यस्य गुरुदेवार्चकस्य च ॥
सुशीलस्य सुभक्तस्य कार्यं कुर्याच्च देशिकः ॥ १६९ ॥
राजा कारयिताऽन्यो वा साधकं प्रणिपत्य च ।
वृणुयात्कर्मकर्तारं दीक्षोक्तविधिना ततः ॥ १७० ॥
साधकः प्रयतो भूयात्सम्यक् सन्तोषवान् शुचिः ।
जितेन्द्रियो जितक्रोधो मनःक्षोभविवर्जितः ॥ १७१ ॥
नित्यनैमित्तिकरतः कुर्यात्कामान्यनेकधा ।
क्रूरकर्म यथोक्तं तु कृत्वाऽभ्यङ्गं समाचरेत् ॥ १७२ ॥
स्नात्वा सावरणां साङ्गां पूजयेदिष्टदेवताम् ।
अष्टोत्तरसहस्रं च रक्षार्थं प्रजपेन्मनुः ॥ १७३ ॥
मां रक्षरक्षेत्युक्त्वा च नत्वा देवं समुत्सृजेत् ।
अन्यैः सुहृद्भिः साँस्निग्धैरात्मरक्षां तु कारयेत् ॥ १७४ ॥
मृत्युञ्जयादिभिर्मन्त्रैः सूर्यसेवार्घ्यदानकैः ।
जपहोमार्चनाद्यैश्च ब्राह्मणाऽऽराधनादिभिः ॥ १७५ ॥
प्रयोगकरणं सम्यग्गुरुतः शास्त्रतस्तथा ।
ज्ञात्वा प्रयोगान्कुर्वीतमन्यथा दुःखमाप्नुयात् ॥ १७६ ॥
सिद्धमन्त्रस्य सिध्यन्ति षट्कर्माणि च संशयः ।

नैव सिध्यन्ति सिद्धस्य देवताशापमाप्नुयात् ॥ १७७ ॥
देवता-काल-मुद्रादीन् सम्यग्ज्ञात्वा विचक्षणः ।
षट्कर्माणि प्रयुञ्जीत यथोक्तफलसिद्धये ॥ १७८ ॥
लग्नं तिथिसमायुक्तं नक्षत्रेण समन्वितम् ।
पञ्चभिस्तु हरेद्भागं तच्छेषं भूत उच्यते ॥ १७९ ॥
त्रिंशद्दिनावधिः पृथ्वी सलिलं पक्ष उच्यते ।
अनिलानिलयो सप्ताहमाकाशो दिवसत्रयात् ॥ १८० ॥
शान्तिकर्म भवेद् गेहे श्मशाने क्रूरकर्म च ।
अथवा सर्वकर्माणि भवेयुर्देवतागृहे ॥ १८१ ॥

## अथासनलक्षणानि

वामोरूपरि दक्षिणन्तु चरणं संस्थाप्य वामं तथा,
याम्योरूपरि पश्चिमेन विधिना धृत्वा कराभ्यां दृढम् ।
अङ्गुष्ठौ हृदये निधाय चिबुकं नासाग्रमालोकये-
देतद्व्याधिविघातकारि यमिनां पद्मासनं प्रोच्यते ॥ १८२ ॥
जानूर्वोरन्तरे सम्यक् कृत्वा पादतले उभे ।
ऋजुकायः समासीनः स्वस्तिकन्तदुदीरितम् ॥ १८३ ॥
एकपादमथैकस्मिन् विन्यस्योरूणि संस्थितः ।
इतरास्मिँस्तथा चोरूं विकरासनमीरितम् ॥ १८४ ॥
पद्मासनं तु संयोज्य जानूर्वोरन्तरे करौ ।
निवेश्य भूमौ संस्थाप्य व्योमस्थं कुक्कुरासनम् ॥ १८५ ॥
मेढ्रादुपरि विन्यस्य सव्यं गुल्फं ततोपरि ।
गुल्फान्तरं च निःक्षिप्य वज्रासनमिहेरितम् ॥ १८६ ॥
गुल्फे च वृषणस्याधः सीवन्याः पार्श्वयोः क्षिपेत् ।
पार्श्वपादौ च पाणिभ्यां दृढं बद्ध्वा सुनिश्चलः ॥ १८७ ॥
भद्रासनं भवेदेतत्सर्वव्याधिविनाशनम् ।
आसनाधारमधुना वक्ष्ये तन्त्रानुसारतः ॥ १८८ ॥
चतुरस्रार्धचन्द्रं च त्रिकोणाञ्च षडस्रकम् ।
वर्त्तुलञ्च पृथिव्यादिमण्डलाकृतयः क्रमात् ॥ १८९ ॥
सँल्लिखेत्स्तम्भनं कुम्भे हर्यक्षे वृश्चिकोदये ।
द्वेषोच्चारादिकं तत्र कुलीराजतुलोदये ॥ १९० ॥

यम ..........................................................।
मारणं चाष्टमे राशौ रिपोश्छेदादिनिग्रहम् ॥ १९१ ॥
तथा
वश्यादौ लेखनी पूर्वाऽकर्षणे शिखिपुञ्छजा।
विद्वेषोच्चाटनं काकपक्षेणाऽपि च मारणम् ॥ १९२ ॥
यन्त्राणां लेखने द्रव्यं चन्दनं रोचना निशा।
गृहधूमश्चिताङ्गारो मारणेष्ट विषाणि च ॥ १९३ ॥
श्येनाग्निलोणपिण्डानि धुस्तूरः कसरः पुनः।
गृहधूमस्त्रिकटुकं विषाष्टकमुदीरितम् ॥ १९४ ॥
पीतं श्वेतं तथा रक्तं कृष्णं धूम्रमिति क्रमात्।
नाभौ स्मरेन्मण्डलन्तु वायोस्तद्बीजसंयुतम् ॥ १९५ ॥
त्रिकोणं पिङ्गलं वह्निमण्डलं हृदि चिन्तयेत्।
चरसस्रं जले पीतं पृथिवीमण्डलं स्मरेत् ॥ १९६ ॥
अर्धचन्द्रं ललाटे तु श्वेतपद्मद्वयाङ्कितम्।
मस्तके धूम्रवर्णाभं वर्त्तुलं व्योममण्डलम् ॥ १९७ ॥
स्वस्वबीजयुतेस्वेषु चैतन्यं परिचिन्तयेत्।
धरादिपञ्चभूतानां निवृत्त्याद्याः कलाः स्मृताः ॥ १९८ ॥
निवृत्तिः स्वप्रतिष्ठा स्याद्विद्याशान्तिरनन्तरम्।
शान्त्यतीतेति ता ज्ञेयाः संपूज्यास्तत्र तत्र ताः ॥ ॥ १९९ ॥
षण्मुद्राः क्रमतो ज्ञेयाः पद्मपाशगदाह्वयाः।
मुशलाशनिखड्गाख्याः शान्तिकादिषु दर्शयेत् ॥ २०० ॥
हस्तौ तु संमुखौ कृत्वा सन्नतावुन्नताङ्गुली।
तलान्तर्मिलिताङ्गुष्ठौ मुद्रैषा पद्मसंज्ञिका ॥ २०१ ॥
वाममुष्ठिस्थतर्जन्या दक्षमुष्ठिस्थतर्ज्जनीम्
संयोज्याङ्गुष्ठकाग्राभ्यां तर्जन्यग्रे स्वके क्षिपेत् ॥ २०२ ॥
एषा पाशाह्णया मुद्रा विद्वद्भिः परिकीर्तिता।
अन्योन्याभिमुखौ हस्तौ कृत्वा तु ग्रथिताङ्गुली ॥ २०३ ॥
अङ्गुल्यौ मध्यमे भूयः संल्लग्ने सुप्रसारिते।
गदा मुद्रेयमाख्याता विष्णोः सन्तोषवर्द्धिनी ॥ २०४ ॥
मुष्ठी कृत्वा तु हस्ताभ्यां वामस्योपरि दक्षिणम्।
कुर्यान्मुशलमुद्रेयं सर्वविघ्नविनाशिनी ॥ २०५ ॥

कनिष्ठाङ्गुष्ठसंयोगात्त्रिकोणाशनिसंज्ञितः।
कनिष्ठानामिके बद्ध्वा स्वाङ्गुष्ठेनैव दक्षतः॥ २०६॥
शिष्टाङ्गुली च प्रसृते संसृष्टे खड्गमुद्रिका।
ग्रथितादिप्रभेदश्च मन्त्राणां वक्ष्यतेऽधुना॥ २०७॥
ग्रथितं संपुटं ग्रस्तं समस्तं च विदर्भितम्।
तथा चोत्क्रान्तमाद्यन्त गर्भस्थं सर्वतो वृतम्॥ २०८॥
यथा युक्ति विदर्भं च विदर्भग्रथितं तथा।
इत्येकादशधा मन्त्राः प्रयुक्ताः कार्यसिद्धये॥ २०९॥
साध्यनामार्णमेकैकं मन्त्रार्णसंप्रयोजितम्।
ग्रथितं तत्समाख्यातं वश्याकृष्टिकरं परम्॥ २१०॥
मनुमादौ वदेत्सर्वं साध्यसंज्ञामनन्तरम्।
विपरीतं पुनश्चान्ते मन्त्रं तत्सम्पुटं स्मृतम्॥ २११॥
शान्तिपुष्टिकरं ज्ञेयं त्रैलोक्यैश्वर्यदायकम्॥
अर्द्धमर्द्धस्तथाद्यन्तं मन्त्रं कुर्याद्विचक्षणः॥ २१२॥
मध्यान्तस्य भवेत्साध्यं ग्रस्तमित्यभिधीयते।
अभिचारेषु सर्वेषु योजयेन्मारणेषु च॥ २१३॥
अभिधानं वदेत्पूर्वं पश्चान्मन्त्रं तथा भवेत्।
एतत्समस्तमित्युक्तं शत्रूच्चाटनकारकम्॥ २१४॥
द्वौ द्वौ मन्त्राक्षरौ यत्र एकैकं साध्यवर्णकम्।
विदर्भितं तु तत्प्रोक्तं दुष्टघ्नं वश्यलक्षणम्॥ २१५॥
मन्त्रेणान्तरितं साध्यं समस्तं तिष्ठति प्रिये।
आक्रान्तं तद्विजानीयात्सद्यः सर्वार्थसिद्धिदम्॥ २१६॥
गर्भस्थं तु समानं तद्वश्योच्चाटनकर्मसु।
सकृत्पूर्वं वदेन्मन्त्रे मन्त्रं चैव तथा पुनः॥ २१७॥
मध्ये चास्य भवेत्साध्यमाद्यन्तमिति तद्विदुः।
अन्यान्यप्रीतियुक्तानां विद्वेषणकरं परम्॥ २१८॥
आदौ चान्ते तथा मन्त्रं द्विवारं संप्रयोजयेत्।
साध्यं नाम सकृन्मध्ये गर्भस्थं तु तदुच्यते॥ २१९॥
मारणोच्चाटनं वश्यं प्रयुक्तं कारयेन्नृणाम्।
हस्तिनौ सैन्यधीगर्भस्तमभने च वातस्तथा॥ २२०॥
त्रिधा मन्त्रं वदेत्सर्वं तथैवान्ते पुनस्त्रिधा।

सकृत् साध्यं भवेन्मध्यं तद्विद्यात्सर्वतो  वृतम् ॥ २२१ ॥
सर्वोपसर्गशमनं महामृत्युनिवारणम् ।
सर्वसौभाग्यजननं मृतानाममृतं परम् ॥ २२२ ॥
आदौ मन्त्रं ततो नाम पुनर्मन्त्रं समालिखेत् ।
एवमेव त्रिधा कृत्वा भवेद्युक्तिविदर्भितम् ॥ २२३ ॥
सर्वव्याधिहरं प्रोक्तं भूतापस्मारमर्दनम् ।
एकैकं साध्यवर्णन्तु कृत्वा मन्त्रविदर्भितम् ॥ २२४ ॥
पूर्ववत्कथितं चान्यं तस्माद्यन्ते प्रकल्पयेत् ।
विदर्भग्रथितं नाम मन्त्रलक्षणमुत्तमम् ॥ २२५ ॥
सर्वकर्मकरं प्रोक्तं सर्वैश्वर्यफलप्रदम् ।
एवमेव प्रयोगाश्च सिद्धमन्त्रस्य सिद्धिदाः ॥ २२६ ॥
संप्रदायात्सुसिद्धश्च गुरुतः सिद्ध एव वा ।
स्वसिद्धश्चेति सर्वेऽपि मन्त्राः स्युस्त्रिविधा मताः ॥ २२७ ॥
मानसस्सिद्धिकामैस्तु पुष्टिकामैरुपांशुकः ।
वाचिको मारणे चैव प्रशस्तो जय ईरितः ॥ २२८ ॥
ऊर्ध्वदृष्टिर्जपेच्छान्तावधोदृष्टिस्तु मोहने ।
समदृष्टिः स्तम्भने च पार्श्वतो दर्शनक्रमात् ॥ २२९ ॥
विरोधे च समुच्चाटे मारणे सूर्यदर्शनः ।
विद्यार्थं जलमध्यस्थो भानुमण्डलदर्शनात् ॥ २३० ॥
भ्रूमध्यदर्शनाद्देवि मोक्षशान्तो शुभेऽखिले ।
नासाग्रदर्शनाद्देवि सर्वत्र शुभकर्मणि ॥ २३१ ॥
नित्यं जपं करे कुर्यान्न प्रयोगे कदाचन ।
प्रयोगे विहिता माला तत्तत्कर्मानुरूपतः ॥ २३२ ॥
वश्ये पद्माक्षमाला स्याच्छान्तौ शङ्खमयी भवेत् ।
निम्बारिष्टात्मिका स्तम्भे द्वेषणे प्रेतदन्तजा ॥ २३३ ॥
अश्वदन्तोद्भवोच्चाटे मारणे खरदन्तजा ।
उच्चाटने स्वदन्तानां माला प्रोक्ताश्च बालकैः ॥ २३४ ॥
खरदन्तैरधोदन्तैर्मनुष्यस्नायुतन्तुना ।
ग्रथिता निर्मिता माला शत्रूणां नाशिनी मताः ॥ २३५ ॥
प्रेतदन्तैरधोभूतैः कर्तव्या जपमालिका ।
साध्यदेहभवैः केशैः प्रोतव्या द्वेषकर्मणि ॥ २३६ ॥

शतंवाऽथ तदर्धं वा सर्वसाधारणे जपे।
पञ्चाशद्भिः काम्यकर्मसिद्धिः स्याच्चतुरुत्तमेः॥ २३७॥
अष्टोत्तरशतैः सर्वसिद्धिरुक्ता कृतस्रजा।
मोक्षार्थी पञ्चविंशत्यो पञ्चदश्याऽभिचारके॥ २३८॥
मध्यमाङ्गुष्ठकाम्यान्तु जपेदाकर्षणेऽन्वहम्।
अङ्गुष्ठतर्जनीभ्यान्तु विद्वेषोच्चाटयोर्जपेत्॥ २३९॥
जपेज्जेष्ठकनिष्ठाभ्यां शत्रुमारणकर्मणि।
अङ्गुष्ठानामिकाभ्यान्तु जपेदन्येषु कर्मषु॥ २४०॥
सूत्रं सम्पादयेद् विद्वान्मालाग्रथनहेतवे।
सितरक्तपीतमिश्रकृष्णधूम्राः प्रकीर्तिताः॥ २४१॥
वर्णतो मन्त्रतः प्रोक्ता देवताः षट्सु कर्मसु।
क्वचित्कल्पविशेषेण प्रयोगे ध्यानमीरितम्॥ २४२॥
तत्सर्वं सम्यगालोच्य प्रयोगे विधिमाचरेत्।
आकर्षणं वश्यवत्स्याच्छुभं शान्तिवदीरितम्॥ २४३॥
उग्रं मारणवज्ज्ञेयं कर्म सर्वत्र साधकैः।
होमप्रयोगे कुण्डानि तत्तत्कर्मानुरूपतः॥ २४४॥
दर्शितानि बुधैः सम्यग्गीर्यन्ते विधिमन्मया।
सर्वसिद्धिकरं कुण्डं चतुरस्रमुदाहृतम्॥ २४५॥
पुत्रप्रदं योनिकुण्डंमर्ध्देन्द्वाभं शुभप्रदम्।
शत्रुक्षयकरं त्र्यस्तं वर्त्तुलं शान्तिकर्मणि॥ २४६॥
छेदमारणयोः कुण्डं षडस्रं पद्मसन्निभम्।
वृष्टिदं रोगशमनं कुण्डमष्टस्रमीरितम्॥ २४७॥
कुण्डभेदफलं प्राहुरन्ये च मुनयोऽन्यथा।
ऐन्द्र्या स्तम्भे चतुष्कोणमग्नौ भोगे भगाकृति॥ २४८॥
चन्द्रार्ध्दं मारणे याम्ये त्र्यस्रं द्वेषे तु नैर्ऋते।
वारण्यां शान्तिके वृत्तं षडस्रोच्चाटने निले॥ २४९॥
उदीच्यां पौष्टिके पद्मं ऐन्द्र्यामष्टास्र मीरितम्।
पञ्चास्रकुण्डं वायव्यां भूतादिग्रहनिग्रहे॥ २५०॥
अभिचारेऽपि शान्त्यर्थमीशे सप्तास्रकं न्यसेत्।
कुण्डमध्ये त्रिकोणान्तष्कर्णिकायां लिखेद्बुधः॥ २५१॥
शक्तिबीजञ्च परितस्तत्तद्भूतार्णमालिखेत्।

मूलमन्त्रस्य वर्णेन ग्रथितं वा विदर्भितम् ॥ २५२ ॥
सम्पुटं वा तथा मन्त्री तत्तत्कर्मानुरूपतः ।
साध्यनामाक्षरं मन्त्री लिखेन्नियतमानसः ॥ २५३ ॥
अग्रे जिह्वास्तथा प्रोक्ता गुणभेदेन कर्मसु ।
अष्टाभिराज्याहुतिभिः प्रणवेन पृथक् पृथक् ॥ २५४ ॥
गर्भाधानं पुंसवनं सीमन्तोन्नयनं तथा ।
अनन्तरं जातकर्म स्यान्नामकरणन्तथा ॥ २५५ ॥
बहिर्निष्क्रमणं पश्चादन्नप्राशनमीरितम् ।
चूडोपनयने भूयो महानाम्ना महाव्रतम् ॥ २५६ ॥
ततोऽप्युपनिषत्पाठो गोदानाद्वाहकौ मृतिः ।
शुभेष्वपि विवाहान्तः क्रियास्ताः क्रूरकर्मसु ॥ २५७ ॥
मरणान्तास्समुद्दिष्टा वह्नेरागमवेदिभिः ।
प्रोक्षण्यादीनि पात्राणि स्वर्णरूप्यमयानि च ॥ २५८ ॥
ताम्राणि शान्तिकादौ च द्वेषाश्मोच्चाटनादिषु ।
श्रोतादिकल्पना वह्नेराख्याता तन्त्रवेदिभिः ॥ २५९ ॥
मुखं मध्ये शिरो दक्षे पादावुत्तरदिग्गतौ ।
इन्द्रेशयोर्मुखं शान्तौ दिश्यग्नेः काम्यकर्मणि ॥ २६० ॥
रक्षसां मारणे वायोराकर्षेऽन्यत्र मध्यतः ।
होमे मुद्रात्रयं प्रोक्तं मृगीहंसी च शूकरी ॥ २६१ ॥
शूकरी करसाङ्गाची मृगी मुक्तकनिष्ठिका ।
हंसी स्यात्तर्जनी मुक्ता त्रिधा मुद्रा प्रकीर्त्तिता ॥ २६२ ॥
शान्तिके च मृगी ज्ञेया हंसी पौष्टिककर्मणि ।
अभिचारे शूकरी स्याद्विद्वेषोच्चाटनादिषु ॥ २६३ ॥
न देवाः प्रतिगृह्णन्ति मुद्राहीनां तथाऽऽहुतिम् ।
मुद्राहीनं तु यो मोहाद्दातुमिच्छति मन्दधीः ॥ २६४ ॥
यजमानं तथाऽत्मानं पातयत्येव निश्चितम् ।
सौम्यग्रहमुखे यस्मिन् दिने विशति चाहुतिः ॥ २६५ ॥
आरम्भः सौम्यहोमस्य दिने तस्मिन् विधीयते ।
क्रूरहोमस्तथा देवि क्रूरग्रहमुखे भवेत् ॥ २६६ ॥
इति ज्ञात्वा महेशानि काम्यहोमं समाचरेत् ।
सौवर्णौ स्रुक्स्रुवौ स्यातां सौम्ये कर्मणि सर्वतः ॥ २६७ ॥

भवेतामाप्यसावेतौ स्तम्भनादिषु कर्मसु ॥ २६८ ॥
लौकिकाग्नौ शान्तिकं स्याद्वश्यं लौकिकपावके ।
स्तम्भनाख्यं भवेत्कर्म वटजे जातवेदसि ॥ २६९ ॥
विद्वेषोऽथशुचौ ज्ञेयः श्मशानोबवुधं स्मृते ।
उच्चाटमारणे प्रोक्ताः षट्कर्मज्वलना इमे ॥ २७० ॥
वश्ये दाडिमपुष्पाणि शान्तौ स्युर्दुर्वया सह ।
समिधो गोघृतस्नाताः स्तम्भने राजवृक्षजाः ॥ २७१ ॥
मेषीघृतेन संयुक्ता द्वेषे क्षतरुजा मताः ।
उच्चाटने रसालोच्छाः कटुतैलेनसंयुताः ॥ २७२ ॥
मारणे खादिराः प्रोक्ताः कटुतैलेनसंयुताः ।
होमद्रव्यमिदं प्रोक्तं षट्सु कर्मसु मन्त्रिभिः ॥ २७३ ॥

## अथ होमद्रव्यमाह

अथ द्रव्याणि वक्ष्यामि तत्तत्कर्मानुरूपतः ।
घृतहोमधनावाप्तिः सिद्धार्थे कीर्त्तिरुत्तमा ॥ २७४ ॥
किंशुकैः सर्वकामाप्तिः फलहोमे सुखं भवेत् ।
गुडेन प्रियता प्रोक्ता चम्पकैः पाटलैरमा ॥ २७५ ॥
पुत्रहोमे सुतावाप्तिः करवीरैः स्त्रियो वशाः ।
आयुष्करी भवेद्दूर्वा गुरुची रोगशान्तिदा ॥ २७६ ॥
तिला अपि तथा प्रोक्ताः सौभाग्यं गन्धहोमतः ।
श्रीफलैर्विल्वपत्रैश्च तथा जलरुहैरपि ॥ २७७ ॥
राज्यभ्रष्टस्य राज्याप्तिर्मल्लिका कीर्तिदा मता ।
कर्णिकारैः किंशुकैश्च भवेयुर्विबुधाः वशाः ॥ २७८ ॥
काशमर्दै नृपा वशयाः कृतमालैर्विशो वशाः ।
शूद्राः स्युः पाटलैर्वश्या नीलपद्मैर्भवेद्रता ॥ २७९ ॥
जातीपुष्पैर्भवेद्वाणी मधुरैरिष्टसंपदः ।
अश्वत्थौ दुम्बरप्लक्षसमिद्भिर्वाञ्छिताप्तयः ॥ २८० ॥
इष्टद्रव्यैर्भवेदिष्टं यवैश्च ब्रीहिभिस्तथा ।
माषै रिपूणां मूकत्वं कोद्रवैर्व्याधिसम्भवः ॥ २८१ ॥
कलाय होमतोऽरीणां भीतिः स्यान्महती ध्रुवम् ।
विभीतकसमिद्भिः स्यादुन्मत्तं द्विषतां कुलम् ॥ २८२ ॥

शाल्मलेः समिद्भिः शत्रोः पक्षान्नाशो भवेद्ध्रुवम् ।
शान्तिके तु पयः सर्पिस्तिलक्षीरद्रुमाधिकाः ॥ २८३ ॥
अमृताख्या लता चैव पायसं तत्र कीर्त्तितम् ।
पौष्टिके विल्वपत्रैश्च जातीपुष्पैर्नृपो भवेत् ॥ २८४ ॥
कन्यार्थी जुहुयाल्लादैः श्रीकामः कमलैस्तथा ।
दध्ना च श्रियमाप्नोति अन्नैरन्नं घृतप्लुतैः ॥ २८५ ॥
क्षीरेण सर्पिषा वापि कमलैर्मधुराप्लुतैः ।
समृद्ध्यै जुहुयान्मन्त्री महानैर्धन्यशान्तये ॥ २८६ ॥
लक्षहोमाल्लभेच्छान्तिं घृतैविल्वतिलैर्निधिम् ।
आकर्षणे तु लवणं प्रियङ्गु विल्वकं फलम् ॥ २८७ ॥
जातिपलाशकुसुमैः सर्वैरेकैकमेव वा ।
राजीलवणकैर्वश्यं वश्यं वा पौष्टिके दिने ॥ २८८ ॥
वश्यार्थी जातीकुसुमैराकृष्टौ करवीरजैः ।
कार्पासबीजैः शुक्राक्तैर्नरकेशैस्तथापि वा ॥ २८९ ॥
एकीकृत्य हुनेन्मन्त्री शत्रूमारणकाङ्क्षया ।
जुहुयात्सार्षपैस्तैलैरथ वा शत्रुमारणे ॥ २९० ॥
राहीबीजैस्तिलोपेतैरुच्छादैर्जुहुयान्नरः ।
तुषकण्टकसंयुक्तैर्बीजैः कार्पासिकैरपि ॥ २९१ ॥
सर्षपैस्तिलसम्मिश्रैर्हुनेत्सर्वाभिचारके ।
काकोलूकच्छदैः क्रूरैः काटस्करविभीतकैः ॥ २९२ ॥
मरीचैः सर्षपैः शुद्धैरक्तक्षीरैः कटुत्रयैः ।
कटुतैलैस्तुहीक्षीरैः कुर्यान्मारणकर्मणि ॥ २९३ ॥
वह्नेः शिरसि नासायां श्रोत्रेष्वक्षिषु वा तथा ।
जुहुयाच्च तदा क्षिप्रं तत्तदङ्गानि नाशयेत् ॥ २९४ ॥
आयुकामो घृततिलैर्दूर्वाभिश्चाम्रपल्लवैः ।
पयोक्तैराम्रपत्रैश्च ज्वरं सद्यो विनाशयेत् ॥ २९५ ॥
गुडूची मृत्युविजये तथा शान्तौ गजाश्वयोः ।
गौरैस्तु सर्षपैर्हुत्वा सद्यो रोगं हरेज्ज्वरी ॥ २९६ ॥
वृष्टिकामो वेतसीभिः समिदि्भः पत्रकैस्तथा ।
हुत्वा पुष्टिमवाप्नोति पुत्रं जीवैस्तु पुत्रकम् ॥ २९७ ॥
घृतगुग्गुलहोमेन वाक्पतित्वं प्रजायते ।

मल्लिका जातिकुसुमैर्नागपुन्नागसम्भवैः ॥ २९८ ॥
पुष्पैः सरस्वतीसिद्धिस्तथा सर्वार्थसाधनम् ।
पयसा लवणैर्वाऽपि हुनेद् वृष्टिनिवारणे ॥ २९९ ॥
रक्तपुष्पैरपामार्गैराङ्कोलैश्च सुभद्रकैः ।
एभिर्मधुरसंयुक्तैर्मन्त्री कुर्यात्तु वश्यकम् ॥ ३०० ॥
वातोद्धूतैः शुष्कपत्रैः काष्ठेरक्षनिपातितैः ।
ऊष्ट्रास्थिना वचाङ्गारैः शत्रोरुच्चाटनं भवेत् ॥ ३०१ ॥
दूर्वागुडुचीगव्यैश्च सर्पिषतिलतण्डुलैः ।
अन्यैः समिद्भिः पालाशैः शान्तिं कुर्याद्विचक्षणः ॥ ३०२ ॥
सौम्यकर्मणि संप्रोक्ता हरिद्राजलसंयुता ।
ऊष्णोदकं समारीचं मारणस्तम्भयोर्भवेत् ॥ ३०३ ॥
द्वेषोच्चाटनयोः प्रोक्तं जलं मेषसृजायुतम् ।
तर्पणं द्रव्यमाख्यातमिदमागमपारगैः ॥ ३०४ ॥
सौम्यकर्मणि मन्त्रज्ञः सुखासीनः प्रतर्पयेत् ।
जानुभ्यामवनीं गत्वा तर्पणस्तम्भनं भवेत् ॥ ३०५ ॥
द्वेषादावेकचरणस्तर्पयेत्साधकाग्रणीः ।
वश्यशान्त्योः स्वर्णपात्रं मृत्पात्रं स्तम्भने मतम् ॥ ३०६ ॥
विद्वेषे खादिरं पात्रमुच्चाटे लोहनिर्मितम् ।
मारणे कुक्कुटाण्डं स्यात्पात्राणीमानि तर्पणे ॥ ३०७ ॥

## अथ होमद्रव्यमाह[१०]

दिव्यवर्णो होमयेद्यत्सहस्रं वसुसम्मितम् ।
दिव्यरूपो नरो भूयाद्देवीरूपो न संशयः ॥ ३०८ ॥
वर्णोत्तमेन देवेशि सर्वदा होमयेच्छिवाम् ।
पक्षमात्रं महेशानि शिवतुल्यो नरो भवेत् ॥ ३०९ ॥
मांसहोमेन देवेशि किन्तद्यन्न करे स्थितम् ॥ ३१० ॥
रोचनाहोममात्रेण सर्वसिद्धिं स विन्दति ।
लोहबाणस्य होमेन दिव्यकायो नरो भवेत् ॥ ३११ ॥
सौगन्धिकक्रतुकं हुत्वा कामतुल्यो नरो भवेत् ।
एलाहोमेन राज्यं स्याल्लवङ्गैर्वरदानता ॥ ३१२ ॥

१० मा. क अयं पाठो न वर्तते ।

संविद्धोमेन देवेशि किन्तद्यन्न करे स्थितम् ।
घुसृणेन महेशानि वाञ्छासिद्धिमवाप्नुयात् ॥ ३१३ ॥
मार्जारमेदहोमेन किन्नरीमेलनं भवेत् ।
एकपुष्पे फले पत्रे फलं पञ्चककं भवेत् ॥ ३१४ ॥
सङ्कल्पोक्तफलं देवि उक्तमानन्दभैरवः ।
उक्तकार्यार्थसिद्ध्यर्थं दक्षिणामूर्त्तिसम्मतम् ॥ ३१५ ॥
देवताप्रीतये उक्ते कार्यमात्राणि साधयेत् ।
सर्वकार्यार्थसिध्यर्थे काश्मीरहोमकर्म च ॥ ३१६ ॥
मन्त्रमात्रे महेशानि  भूतमण्डलभेदतः ।
होमे पूजाविधौ देवि फलपुष्पाणि पार्वति ।, ३१७ ॥
न मण्डले ऋतूनां च नियमो नास्ति पार्वति ।
सिन्दूरैर्मोहनं देवि नखैर्नाकर्षयेत्स्त्रियम् ॥ ३१८ ॥
चन्दनेन भवेत्काव्यम् कर्पूरैर्राजसाधनम् ।
विषेण सर्वसंहारः स्त्वहिकेन निराकृतिः ॥ ३१९ ॥
शिलाजे तु प्रहोमेन सर्वसिद्धिं प्रविन्दति ।
हरितालैः स्तम्भनं च ब्रह्मादीनां महेश्वरि ॥ ३२० ॥
अभ्रकेन कीर्त्तिर्लक्ष्मीश्च  गन्धकेन धनागमः ।
पनसं कदलीं हुत्वा तारारूपो नरो भवेत् ॥ ३२१ ॥

## अथ होमद्रव्यसंख्यामाह

अथात्र होमद्रव्याणां प्रमाणमभिधीयते ।
कर्षमात्रं घृतं होमे शुक्तिमात्रं पयः स्मृतम् ॥ ३२२ ॥
उक्तानि पञ्च गव्यानि तत्समानि मनीषिभिः ।
तत्समं मधु दुग्धान्नमक्षमात्रं मुदाहृतम् ॥ ३२३ ॥
दधि प्रसृति मात्रं स्याल्लाजाः स्युर्मुष्ठिसम्मिताः ।
पृथुकास्तत्प्रमाणः स्युः सक्तवोऽपि तथोदिताः ॥ ३२४ ॥
गुडं पलार्धमात्रं स्याच्छर्कराऽपि तथा मता ।
ग्रासार्धं चरुमानं स्यादिक्षुः पर्वावधिः स्मृतः ॥ ३२५ ॥
एकैकपत्रपुष्पाणि तथाऽपूपानि कल्पयेत् ।
कदलीफलनारङ्गफलान्येकैकशो विदुः ॥ ३२६ ॥
मातुलुङ्गं चतुः खण्डं पनसं दशधा कृतम् ।

अष्टधा नारिकेलानि खण्डितानि विदुर्बुधाः ॥ ३२७ ॥
त्रिधा कृतं फलं वैल्वं कपित्थं खण्डितं द्विधा ।
ऊर्वारुकफलं होमे कथितं खण्डितं त्रिधा ॥ ३२८ ॥
फलान्यन्यानि खण्डानि समिधः स्युर्दशाङ्गुलाः ।
दूर्वात्रयं समुद्दिष्टं गुडुची चतुरङ्गुला ॥ ३२९ ॥
ब्रीह्यो मुष्ठिमात्राः स्युर्मुद्गा माषोऽथ वा अपि ।
तण्डुलाः स्युस्तदर्धांशाः कोद्रवा मुष्ठिसम्मिताः ॥ ३३० ॥
गोधूमरक्तकमला विहिता मुष्ठिमानता ।
तिलाश्चुलुकमात्राः स्युः सर्षपास्तत्प्रमाणकाः ॥ ३३१ ॥
शुक्तिप्रमाणं लवणं मरीचान्यपि विंशतिः ।
पुरं वदरमानं स्याद्रामठं तत्समं स्मृतम् ॥ ३३२ ॥
चन्दनागुरुकर्पूकस्तूरी कुङकुमानि च ।
तित्तिरीबीजमानानि समुद्दिष्टानि दैशिकैः ॥ ३३३ ॥

*इति श्रीतन्त्रचिन्तामणौ काम्यार्चनायां साधारणषट्कनिर्णयो नाम सप्तत्रिंशत्तमः प्रकाशः ।*



# अष्टत्रिंशत्तमः प्रकाशः

**अथ प्रत्येकविद्याया विशेषप्रयोगमाह ।**

**तत्रादौ श्यामायाः**

ततः प्रयोगान् कुर्वीत काम्यानिष्टफलाप्तये ।
नागयज्ञोपवीताञ्च चन्द्रार्धकृतशेखराम् ॥ १ ॥
जटाजूटाञ्च सञ्चिन्त्य महाकालसमीपगाम् ।
हूँ हूँ क्रीँ च तथा क्रीँ क्रीँ पञ्च बीजानि योजयेत् ॥ २ ॥
अन्ते तु मूलमन्त्रस्य जपपूजादिकं चरेत् ।
वश्यकामः साधकश्चेद्रक्तपुष्पैः प्रपूजयेत् ॥ ३ ॥
कामबाणसमा विद्या निर्लज्जा विह्वला : स्त्रियः ।
स्वं स्वं सन्त्यज्य भर्त्तारमालिङ्गति सदैवतम् ॥ ४ ॥
एवमाकर्षणे योज्यमादौ हूँ क्रीँ तथान्ततः ।
जपपूजाविधानेन द्रुतमाकर्षणं भवेत् ॥ ५ ॥
कपिलां द्विभुजां कर्त्री सव्ये दक्षे कपालकम् ।
ध्यात्वैवं सर्वमन्त्रान्ते ठ-द्वयं परिकीर्त्तयेत् ॥ ६ ॥
लोहितां शूलहस्तां च महाकालाग्रतः स्थिताम् ।
ध्यात्वा संपूजयेन्पुष्पैः पीतैराकर्षणं भवेत् ॥ ७ ॥
एवं प्रजप्य पुष्पेण कृष्णेनैव प्रपूजयेत् ।
मारणं तु भवेत्तस्य यमुद्दिश्य कृता क्रिया ॥ ८ ॥
उच्चाटयति पिङ्गाक्षी सन्त्रासयति केकरा ।
विद्रावयति मुक्ताश्च प्रोन्मत्तयति घूर्णिता ॥ ९ ॥
विक्षोभयति संक्षुब्धा सम्पादयति सम्मता ।
सङ्कोचयति संरुद्धा विरुद्धा च विरोधयेत् ॥ १० ॥
यो यो भावो यजे नेय तद्भावस्थां स्मरेदिति ।
अत्र सर्वत्र कर्तव्यं भावमात्रस्य चिन्तनम् ॥ ११ ॥
उच्चाटनं विनान्यत्र सर्वत्र सुरतन्मतम् ।
स्नातः शुक्लाम्बरधरः कृतनित्यक्रियादि वा ॥ १२ ॥

रात्रौ नग्नः शयानश्च मैथुने च व्यवस्थितः।
अवाक्यो मुक्तकेशश्च तेन स्युः सर्वसिद्धयः॥ १३॥
नग्नां परस्त्रियं पश्यन् प्रजपेदयुतं नरः।
स भवेत्सर्वसिद्धीनां पारगः सर्वदैव हि ॥ १४॥
तस्य दर्शनमात्रेण वादिनो निष्प्रभा मताः।
गद्यपद्यमयी वाणी तस्य सर्वविधा भवेत् ॥ १५॥
अवाक्यो मुक्तकेशश्च हविष्यं भक्षयन्तरः।
प्रजपेदयुतं तावदेवं प्रतिनिधिः स्मृतः ॥ १६॥
ऋतुमत्या भगं पश्यन्नयुतं प्रजपेन्नरः।
अनर्घ्या कविता तस्य गद्यपद्यमयी भवेत् ॥ १७॥
अष्टोत्तरशतं जप्त्वा भगमालोचनात्ततः।
प्रयाति मैथुनं योऽसौ धनधान्यसुतान्वितः ॥ १८॥
सुरतेषु च जप्तव्यं सदा पापविशुद्धये।
यदि योषित्प्रसङ्गेन रेतः पतति यत्नतः ॥ १९॥
समुत्पात्य ततो जप्यं सर्वकामार्थसिद्धये।
श्मशानागारमासाद्य मुक्तकेशो दिगम्बरः ॥ २०॥
जपेदयुतसंख्यं तु सर्वकामार्थसिद्धये।
प्रेतमारुह्य तत्रैव योजयेन्मन्त्रवित्तमः ॥ २१॥
अयुतं वाक्यतो भूत्वा विभीः सत्यपरायणः।
स याति परमां सिद्धिं देवैरपि सुदुर्लभाम् ॥ २२॥
स्वदेहरुधिराक्तैश्च विल्वपत्रैः सहस्रशः।
श्मशानेऽभ्यर्चयेद्देवीं सर्वसिद्धिं स विन्दति ॥ २४॥
धनवान् वलवान् वाग्मी सर्वयोषित्प्रियो भवेत्।
सुखी स्यान्नात्र सन्देहो महाकालवचो यथा ॥ २५॥
श्मशाने योषितं नीत्वा मन्त्रैरर्च्य सहास्रकम्।
रक्तचन्दनदिग्धाङ्गीं रक्तपुष्पैरलङ्कृताम् ॥ २६॥
तावत्पुष्पैर्मनुं प्राच्र्य ततो ध्यायेच्च चण्डिकाम्।
ततो गत्वा लभेद्राज्यं यद्यसौ न भयायते ॥ २७॥
श्मशानशयने चैवं शवासनगतः पुनः।
असकृत्तु जपेन्मन्त्रं सर्वसिद्धिप्रदं भवेत् ॥ २८॥
तर्पयेच्च शवास्यन्तु रक्तमांसादिभिस्त्रिधा।

त्रिस्त्रिर्मन्त्रमुदीर्यैवं सर्वसिद्धिभवेद् ध्रुवम् ॥ २९ ॥
तर्पयेच्च पयोभिश्च रक्तधारायुतैस्तथा।
रेतोभिश्च तथा तद्वत्स्वकीयेन कचेन च ॥ ३० ॥
मैथुनायितयोषाया भगप्रक्षालनेन च।
मेषमाहिषरक्तेन नररक्तेन चैव हि ॥ ३१ ॥
मूषमार्जाररक्तेन वाग्मित्वं तस्य जायते।
धनित्वं जायते तस्य सर्वसिद्धिः प्रजायते ॥ ३२ ॥
वचसा च भवेज्जीवो धनेन च धनाधिपः।
आज्ञया देवराजोऽसौ रूपेण च मनोभवः ॥ ३३ ॥
बलेन पवनो ह्येषः सर्वतत्त्वार्थसाधकः।
साधितासाधितं मांसं सास्थि दद्यात्सदा बलिम् ॥ ३४ ॥
मूषमांसं मेषमांसं छागं माहिषमेव च।
सर्वं सास्थि प्रदातव्यं सदा रोमसमन्वितम् ॥ ३५ ॥
अजीवं स्वनखच्छिन्नं केशं संमार्जनी गतम्।
निवेदयेच्छ्मशाने तत्सर्वसिद्धिप्रदं भवेत् ॥ ३६ ॥
नारी रजोयुतं कृत्वा पाणीनां शतमुत्तमम्।
प्रत्येकं प्रजपेन्मन्त्रं ततस्तद्धोमयेद् बुधः ॥ ३७ ॥
युगानामयुतं तेन पूजिता दक्षिणा भवेत्।
सर्वसिद्धिर्भवेत्तस्य वाग्मी धीरश्च जायते ॥ ३८ ॥
न तस्य दुर्लभं किञ्चित् पृथिव्यां जातु जायते।
योनिरूपं तु कुण्डं हि कृत्वा वितस्तिरत्नितः ॥ ३९ ॥
हस्तविस्तारितो वाऽपि कृत्वा चैव यथाविधि।
तत्र कार्या हि मन्त्रेण वह्निस्थापनिकाः क्रियाः ॥ ४० ॥
महाकालाय देवाय दद्यात्प्रथममाहुतिम्।
स्रुवेणाज्येन मांसेन भक्तेन रुधिरेण च ॥ ४१ ॥
कृष्णपुष्पेण साज्येन सरक्तेन विशेषतः।
आमिषादिभिरप्येवं जुहुयाच्छ्मशानालये ॥ ४२ ॥
स्नातः शुक्लाम्बरधरः शुचिः प्रयतमानसः।
दिवा सर्वं प्रकर्तव्यं सर्वकामार्थसिद्धये ॥ ४३ ॥
रात्रौ नग्नो मुक्तकेशो मैथुनेनापि तत्त्वतः।
प्रकर्तव्यं प्रयत्नेन सर्वकामार्थसिद्धये ॥ ४४ ॥

त्रिधा विभज्य मन्त्राद्यैर्यत्नात्साधकसत्तमः।
मांसं रक्तं तिलं केशं नखं भक्तं च पायसम् ॥ ४५ ॥
आज्यं चेति प्रयत्नेन होतव्यं सर्वसिद्धये।
एवं कृत्वा विधानेन भजते सिद्धिमुत्तमाम् ॥ ४६ ॥
यद्यत्प्रार्थयते जन्तुस्तत्तत्प्राप्नोति नित्यशः।
देवत्वं दानवत्वं च सिद्धिचारणतां तथा ॥ ४७ ॥
सदा हुत्वा समाप्नोति नित्यमेवमतन्द्रितः।
एकचित्तो जपेन्मन्त्री चत्वारिंशत्सहस्रकम् ॥ ४८ ॥
होमं तु रक्तपुष्पेण कुण्डं कुर्याद्यथाविधि।
एतन्मन्त्रजपान्मन्त्री मुच्यते ब्रह्महत्यया ॥ ४९ ॥
पितृमातृवधाद्यैश्च किमन्यैः क्षुद्रपातकैः।
कपिलारक्तसम्पूर्णं पृथ्वीदानस्य यत्फलम् ॥ ५० ॥
कोटिहोमसहस्रैश्च देव्या ध्यानेन तत्फलम्।
स्पृष्ट्वा स्पृष्ट्वा जपेन्मन्त्रं यं यं तं तं वशं नयेत् ॥ ५१ ॥
शतमष्टोत्तरं जप्त्वा रक्तपुष्पेण होमतः।
कुर्यान्नृपवशं मन्त्री नासाध्यं भुवनत्रये ॥ ५२ ॥
शून्यागारे देवगृहे स्वयंभूस्थान एव च।
हविष्याशी ब्रह्मचारी भवेदिन्द्रसमो जपात् ॥ ५३ ॥
कुण्डे त्रिकोणसंज्ञे तु शान्तौ पुष्टौ तथैव च।
अयुतं जुहुयान्मन्त्री सहस्रस्यत्रयं पुनः ॥ ५४ ॥
काम्ये सहस्रमारक्तैः पुष्पैर्हुत्वा दशांशतः।
तर्पणं च पुनस्तद्वद्देवीं ध्यात्वा हुताशनः ॥ ५५ ॥
संपूज्य मूलमन्त्रेण विल्वपत्रैर्घृतान्वितैः।
सहस्रं प्रत्यहं हुत्वा प्राप्नोति परमां गतिम् ॥ ५६ ॥
घृताक्तमालतीपुष्पैर्होमाद् द्रुतकविर्भवेत्।
नासाध्यं विद्यते किञ्चिदेतन्मन्त्रविदः सदा ॥ ५७ ॥
देव्याराधनसक्तस्य गुरुभक्तस्य नान्यथा।
ध्यानप्रयोगं वक्ष्यामि श्रृणु यत्नेन साम्प्रतम् ॥ ५८ ॥
षट्कर्मसाधनं येन भवत्येव न संशयः।
अष्टम्यां च चतुर्दश्यां कृष्णपक्षे विशेषतः ॥ ५९ ॥
कालीकल्पोक्तविधिना यजेदादौ तु कालिकाम्।

पश्चाद्वश्यप्रयोगार्थं ध्यायेन्मार्त्तण्डमण्डले ॥ ६० ॥
रक्तवर्णां महादेवीं लोचनत्रयसंयुताम् ।
चतुर्भुजां महाभीमां मुण्डमालाविभूषिताम् ॥ ६१ ॥
खड्गचर्मधरां कालीं वराभयकरां पराम् ।
एवं ध्यात्वा महाकालीं यं यं पादागतं स्मरेत् ॥ ६२ ॥
सप्ताहाभ्यन्तरे तं तं वशेत्साधकसत्तम ।
करालवदनां घोरां द्विभुजां मुण्डभूषणाम् ॥ ६३ ॥
दक्षे दण्डं कपालं च वामे संविभ्रतीं स्मरेत् ।
दूष्यमानं रिपुं ध्यायेद्दुष्टोपरि भयार्दितम् ॥ ६४ ॥
पलायमानं तत्पश्चाद् धावमानां तु चण्डिकाम् ।
सप्ताहाभ्यन्तरे तस्य महदुच्चाटनं भवेत् ॥ ६५ ॥
अत्यन्तघोरवदनां दंष्ट्राकिटिकिटिं स्मरेत् ।
काम्यमानां महारौद्रीं कोपादरुणलोचनाम् ॥ ६६ ॥
विभ्रतीं दक्षिणे खड्गं शत्रुमुण्डं च वामके ।
सद्यश्छिन्नं ततः शत्रुकबन्धोपरिसंस्थिताम् ॥ ६७ ॥
गदद्रुधिरधाराभिरभिषिक्तां स्मरेत्तु यः ।
सप्ताहाभ्यन्तरे तस्य रिपूणां मारणं भवेत् ॥ ६८ ॥
कल्पोक्तां कालिकां ध्यायेत्साध्यं च दक्षिणे स्मरेत् ।
कृत्वा तु मानसीं पूजां शत्रुजिह्वां निवेदयेत् ॥ ६९ ॥
पश्चात्सूकं रिपुं ध्यायेद्देवं वाक्स्तम्भनं भवेत् ।
यद्यदङ्गं महादेव्यै निवेदयति साधकः ॥ ७० ॥
तत्तदङ्गस्तम्भनं च भवत्येव न चान्यथा ।
पूर्वोक्तां कालिकां ध्यात्वा वामदक्षिणभेदतः ॥ ७१ ॥
तावुभौ संस्मरेन्मन्त्री महाकलहकारकौ ।
ताधमानौ ततो ध्यायेद्देवं विद्वेषणं मतम् ॥ ७२ ॥
आत्मानं कालिकारूपं ध्यायेन्निश्चलमानसः ।
पश्चात्पश्यति यं साध्यं तस्य संमोहनं भवेत् ॥ ७३ ॥
मुहूर्त्तमात्रं देवेशि मुहूर्त्तद्वयमेव वा ।
मुहूर्त्तत्रययोगेन सिद्धिर्भवति सुन्दरि ॥ ७४ ॥

**अथ तारायाः**

आदौ सिद्धमनुर्मन्त्री प्रयोगान्कर्तुमर्हति ।
जातमात्रस्य बालस्य दिवसत्रितयादधः ॥ ७५ ॥
जिह्वायां विलिखेन्मन्त्रं मध्वाज्याभ्यां शलाकया ।
सुवर्णकृतया यद्वा मन्त्री धवलदूर्वया ॥ ७६ ॥
गतेष्टमेके बालोऽसौ जायते कविराड् ध्रुवम् ।
सूर्यग्रहे भवेत्काष्ठं पद्मयुक्तसरोवरे ॥ ७७ ॥
तरन्तं जलमध्ये तत्समानीय तरे पुनः ।
दत्तैर्धृत्वा ततः कुर्याल्लेखनीं द्वादशाङ्गुलम् ॥ ७८ ॥
मधुतैलसुराभिश्च विलिखेत्पद्मिनीदले ।
मूलमन्त्रं मातृकार्णैः सम्यक्तच्च प्रवेष्टयेत् ॥ ७९ ॥
विधाय तद्दलं कुण्डे चतुरस्रे समेखले ।
संस्थाप्य पावकं तत्र हुनेन्मूलाणुना ततः ॥ ८० ॥
गोदुग्धं मधुराक्तं तु रक्तपद्मसहस्रकम् ।
होमान्ते तेन मनुना पूर्वद्रव्यैर्बलिं हरेत् ॥ ८१ ॥
पद्मे पद्मे महापद्मे पद्मावती प इत्यपि ।
स्वाहान्तः प्रणवादिश्च मन्त्रोऽयं षोडशाक्षरः ॥ ८२ ॥
ततो निशीथेऽपि बलिं पूर्वोक्तमनुना हरेत् ।
एवं कृते पण्डितानामजेयः कोपराड् भवेत् ॥ ८३ ॥
निवासो भारतीलक्ष्म्यार्जनतारञ्जनक्षमः ।
गोरोचनामनेनैव मनुना तु शतं जपेत् ॥ ८४ ॥
ललाटे तिलकं कृत्वा यं पश्येत् स तु दासवत् ।
श्मशानाङ्गारमाहृत्य शर्वर्यां भौमवासरे ॥ ८५ ॥
कृष्णाम्बरेण संवेष्ट्य निबद्धं रक्ततन्तुभिः ।
शतभिजप्तं मूलेन निक्षिपेद् वैरिवेश्मनि ॥ ८६ ॥
उच्चाटयति सप्ताहात्सकुटुम्बं न संशयः ।
क्षाराढ्यया निशामन्त्रं लिखित्वा पौरुषेऽस्थिनि ॥ ८७ ॥
रविवारे निशीथिन्यां सहस्रमभिमन्त्रयेत् ।
तत् क्षिप्तं शत्रुभवने मण्डलाद् भ्रशकं भवेत् ॥ ८८ ॥
क्षेत्रे क्षिप्तं शस्यहान्यै नवहृत्तुरगालये ॥ ८९ ॥

## अथ छिन्नायाः

श्रीपुष्पैर्लभते लक्ष्मीं तत्फलैः स्वसमीहितम् ।
वाक्सिद्धिं मालतीपुष्पैश्चम्पकैर्हवनात्सुखम् ॥ ९० ॥
घृताक्तच्छागमांसं यो जुहुयात्प्रत्यहं शतम् ।
मासमेकं तु वशगास्तस्य स्युः सर्वपार्थिवाः ॥ ९१ ॥
हयारिकुसुमैः श्वेतैर्लक्ष्यसंख्यं जुहोति यः ।
रोगजालं परो भूय सुखी जीवेत्छतं समाः ॥ ९२ ॥
रक्तैस्तत्संख्यया हुत्वा वशयेन्मन्त्रिणोनृपान् ।
फलैर्हुत्वाऽऽस्नुयाल्लक्ष्मीमृदुम्बरपलाशजैः ॥ ९३ ॥
गोमायुमांसैस्तामेकविदां पायसांधसा ।
बन्धूककुसुमैर्भाग्यं कर्णिकारैः समीहितम् ॥ ९४ ॥
तिलतण्डुलहोमेन वशयेन्निखिलाञ्जनान् ।
नारीरजोनिराकृष्टिर्मृगमांसैः समीहितम् ॥ ९५ ॥
स्तम्भनं माहिषैर्मांसैः पङ्कजैः सघृतैरपि ।
चिताग्नौ परभृत्पक्षैर्जुहुयादरिमृत्यवे ॥ ९६ ॥
उन्मत्तकाष्ठदीप्तेऽग्नौ तत्फलं वायसच्छदैः ।
द्युते वने नृपद्वारे समरे वैरिसङ्कटे ॥ ९७ ॥
विजयं लभते मन्त्री ध्यायेद्देवीं जपन्मनुम् ।
भुक्ताभुक्तैसितां ध्यायेदुच्चाटे नीलरोचिषम् ॥ ९८ ॥
रक्तां वश्ये मृतौ धूम्रां स्तम्भने कनकप्रभाम् ।
निशिदद्याद्वलिं तस्यै सिद्धये मदिरादिना ॥ ९९ ॥
गोपनीयः प्रयोगोऽथ प्रोच्यते सर्वसिद्धिदः ।
भूताहे कृष्णपक्षस्य मध्यरात्रे नमोद्यते ॥ १०० ॥
स्नात्वा रक्ताम्बरधरो रक्तमाल्यानुलेपनः ।
आनीय पूजयेत्नारीं छिन्नमस्तास्वरूपिणीम् ॥ १०१ ॥
सुन्दरीं यौवनाक्रान्तां नरपञ्चकगामिनीम् ।
सास्मितां मुक्तकवरीं भूयादानप्रतोषिताम् ॥ १०२ ॥
विवस्त्रां पूजयित्वैनामयुतं प्रजपेन्मनुम् ।
बलिं दत्त्वा निशां नीत्वा संप्रेष्य धनतोषिताम् ॥ १०३ ॥
भोजयेद् विविधैरत्नैर्ब्राह्मणान् देवताधिया ।
अनेन विधिना लक्ष्मीं पुत्रान् पौत्रान् यशः सुखम् ॥ १०४ ॥

नारीमायुश्चिरं धर्ममिष्टमन्यदवाप्नुयात् ।
तस्यां रात्रौ व्रतं कार्यं विद्याकामेन मन्त्रिणा ॥ १०५ ॥
मनोरथेषु चान्येषु गच्छेन्तां प्रजपन्मनुम् ।
किं बहूक्तेन विद्याया अस्या विज्ञानमात्रतः ॥ १०६ ॥
शास्त्रज्ञानं पापनाशः सर्वसौख्यं लभेद् ध्रुवम् ।
उषस्युत्थाय शय्यायामुपविष्टा जपेच्छतम् ॥ १०७ ॥
षण्डमसाभ्यन्तरे मन्त्री कवित्वेन जयेत्कविम् ।
शिवेन कीलिता विद्या तदुत्कीलेनमुच्यते ॥ १०८ ॥
मायां तारयुतां मन्त्री जपेदष्टोत्तरं शतम् ।
मन्त्रस्यादौ तथैवान्ते भवेत्सिद्धिप्रदा तु सा ॥ १०९ ॥
एष नूनं विधिर्गोप्य सिद्धिकामेन मन्त्रिणा ।
उदिता छिन्नमस्तेयं वाममार्गेऽति सिद्धिदा ॥ ११० ॥

### अथ त्रिपुरसुन्दर्याः

जपापुष्पैर्महेशानि पूर्ववत्पूजयेच्छिवाम् ।
मासमात्रेण हन्यते पातकं शतजन्मनाम् ॥ १११ ॥
सौभाग्यवान् भवेन्मन्त्री त्रिपुरायाः प्रसादतः ।
श्वेतपुष्पैर्महेशानि सद्भक्त्या पूजयेन्नरः ॥ ११२ ॥
नाशयेत्पातकं सर्वं त्रिंशज्जन्मे भवं प्रिये ।
मासमात्रेण सकलं मोक्षं तस्य करे स्थितम् ॥ ११३ ॥
बन्धूककुसुमैर्देवीं मासमात्रं प्रपूजयेत् ।
त्रिलोकं वशगं तस्य सर्वपापं दहेद्बुधः ॥ ११४ ॥
विल्वपत्रैश्च जलजैः सत्यैश्च परिपूजयेत् ।
पूर्ववत्परमेशानि मासमात्रं प्रसन्नधीः ॥ ११५ ॥
समृद्धिमान् भवेन्मन्त्री सर्वं पापां हरेत् सदा ।
मल्लिका मालती जाती कुन्दैश्च शतपत्रकैः ॥ ११६ ॥
शतोत्पलसुशीतैश्च पूजयेन्मासमात्रकम् ।
कुलाचारक्रमेणैव पातकं शतपत्रजम् ॥ ११७ ॥
ब्रह्महत्यादिजनितं नाशयेन्नात्र संशयः ।
मुक्तिस्तस्य करे देवि वाचा जीवसमो भवेत् ॥ ११८ ॥
अगस्त्यप्राणबन्धूकजपारक्तोत्पलैः प्रिये ।

पूर्वक्रमेण संपूज्य मासमेकं प्रसन्नधीः ॥ ११९ ॥
पातकं नाशयेन्मन्त्री साक्षात्कामसमो भवेत् ।
चम्पकैर्पाटलैर्देवि बहुलैः सिन्धुवारकैः[1] ॥ १२० ॥
सौभाग्यमतुलं तस्य मासमात्रेण जायते ।
पापं विनाशयेद्देवि यदि जन्मसहस्रकम् ॥ १२१ ॥[2]
मन्दारं पारिजातं च वश्यसौभाग्यदायकम् ।
पीतजातीसर्वकामं विशेषस्तम्भने हितम् ॥ १२२ ॥
खर्जूरपुष्पं जाती च कुन्दश्रीवृद्धिदायकाः ।
बन्धूकं मोक्षसौभाग्यं जपा च त्रिपुराप्रिया ॥ १२३ ॥
उत्पलं धनवृद्धिं च पद्मं पौष्टिकमेव च ।
पुन्नागं सर्वसम्पत्तिं वभ्रूकं धनहानिकम् ॥ १२४ ॥
कल्हादोत्हासवृद्धिं च केतकीं च विवर्जयेत् ।
महुश्च निष्फलं ज्ञेयं मल्लिका दुःखदायिका ॥ १२५ ॥
चम्पको पुत्रकामस्तु निसन्ध्या दुःखमोचिका ।
द्रोणे मोक्षमवाप्नोति सेवन्ती सर्वसिद्धिदा ॥ १२६ ॥
सेफालिका जयकरी कर्णिका शुद्धिदायिका ।
कुमुदं प्रीतिदं चैव सुदर्शनं धनप्रदम् ॥ १२७ ॥
कुरुण्ठं सिद्धिसौभाग्यं नीलद्रव्यं तु हानिकम् ।
दमनं सर्वसम्पत्तिर्विल्वपत्रं पराप्रियम् ॥ १२८ ॥
निर्गन्धो ह्युत्कटो गन्धो वर्ज्यो हि चक्रपूजने ।
कृष्णाऽपराजिता मृत्युः पूतमाली तथैव च ॥ १२९ ॥
मल्लिकानाम संज्ञा या दुःखदा मृत्युदा सदा ।
पितृव्याधिप्रदाश्चैव केशयुक्तश्च हानिकः ॥
कृमियुक्तं महाभीति राजदण्डभयं महत् ।
इत्येतत्पुष्पमाहात्म्यं ज्ञात्वा श्रीत्रिपुरां यजेत् ॥ १३१ ॥
अथातः संप्रवक्ष्यामि चक्रराजस्य साधनम् ।
एवं संसिद्धविद्याया विनियोगविधिं श्रृणु ॥ १३२ ॥
कृत्वा सिन्दूरराजसा चक्रं तत्र विचिन्तयेत् ।
साध्यप्रतिकृतिं नाम लेखनाङ्कां शुभां ततः ॥ १३३ ॥

---

१ बहुलैः सिन्धुपारकैः पाठो मा. ख त्रुटितः ।
२ श्लोकः १२१ मा. ख त्रुटितः ।

ज्वलन्ती चु क्षणादेव मोहितां भयवर्जिताम्।
यतस्तूर्णं समायाति तथाऽन्यत्कथ्यते प्रिये ॥ १३४ ॥
तन्मध्ये संस्थितो मन्त्री चिन्तयेदरुणप्रभम्।
आत्मानं च तथा साध्यं तदा सौभाग्यसुन्दरः ॥ १३५
अरुणैरूपचारैस्तु पूजयेन्मुद्रया युतः।
यस्य चात्मा युतः सम्यक् स भवेद्दास एव हि ॥ १३६ ॥
अदृष्टस्त्रीनामवर्णांश्चक्रमध्ये विलिख्य तु।
योनिमुद्राधरो भूत्वा वेगादाकर्षणं भवेत् ॥ १३७ ॥
देवकन्यां राजकन्यां नागकन्यामथापि वा।
गोरोचनाकुङ्कुमाभ्यां समभागं च चन्दनम् ॥ १३८ ॥
अष्टोत्तरशतावृत्त्या तिलकं सर्वमोहनम्।
पुष्पं फलं च वा दत्तं गन्धं वस्त्रं च भूषणम् ॥ १३९ ॥
ताम्बूलं जपपूर्वं च यस्मै संयच्छ्यते स तु।
अङ्गनावीक्षणादेव दासी चास्य भवेत्प्रिये ॥ १४० ॥
करवीरैर्रक्तवर्णैस्त्रिमध्वक्तैश्च पूजयेत्।
चिन्तयेन्मासमात्रं तु साध्याख्यां ललनां ततः ॥ १४१ ॥
इति कृत्वा महेशानीं पूजयेदरुणप्रभाम्।
सिन्दूररचिते चक्रराजः सम्मोहयेत्क्षणात् ॥ १४२ ॥
त्रैलोक्यदुर्लभां वापि रम्भामाकर्षयेद्धठात्।
चिताङ्गारेण चक्रं तु लिखेद्रक्तद्रवेण हि ॥ १४३ ॥
बध्वा आवाहयेद्देवि देशे चक्रस्य संलिखेत्।
गोमूत्रे स्थापयेत्तच्च भवेद्विद्वेषणं क्षणात् ॥ १४४ ॥
धूपयेच्चन्दनं रात्रावेव तद्धारयेत्ततः।
अष्टोत्तरजपावृत्त्या होमयेद् भुवनत्रयम् ॥ १४५ ॥
लिप्त गोमयभूमौ तु लिखेद्रोचनया ततः।
सुरूपां प्रतिमां रम्यभूषाढ्यां परिचिन्तयेत् ॥ १४६ ॥
तद्भालगलहृन्नाभिजन्ममण्डलयोजिताम्।
जन्मनाममहाविद्यामङ्कुशान्तर्विदर्भिताम् ॥ १४७ ॥
सर्वाङ्गसन्धिसंलीनं कालकूटं समालिखेत्।
साध्याशाभिमुखो भूत्वा श्रीविद्यान्यासविग्रहः ॥ १४८ ॥
क्षोभिणीमुद्रया विद्यां सम्यगष्टशतं जपेत्।

योजयन्तां कामगेहे चन्द्रसूर्यकलात्मके ॥ १४९ ॥
सानुगा सा तु विकला कामसायकपीडिता ।
त्रैलोक्यसुन्दरी वाऽपि क्षणादायाति मोहिता ॥ १५० ॥
अथवा मातृकाचक्रं बाह्ये संवेष्ट्य मन्त्रवित् ।
तच्चक्रं पूजयेत्सम्यग्विद्यापूर्णां च धारयेत् ॥ १५१ ॥
अवध्यः सर्वभूतानां व्याघ्रादीनां न संशयः ।
श्रीखण्डागुरुकस्तूरी कर्पूरश्च सकुङ्कुमैः ॥ १५२ ॥
स्वनाम क्रमतो लेख्यं पूर्ववन्मातृकां लिखेत् ।
तेनाजरामरत्वं च साधकस्य न संशयः ॥ १५३ ॥
अनेनैव प्रकारेण रोचनागुरुकुङ्कुमैः ।
चक्रं विलिख्य साध्यार्णं साधकान्तर्विदर्भितम् ॥ १५४ ॥
त्रैलोक्यमोहनो मन्त्री भवत्येव न संशयः ।
कामकूटेन देवेहि संदर्भ्य पृथगक्षरम् ॥ १५५ ॥
साध्यनाम्ना त्रिकोणान्तर्मातृकां वेष्टयेद्बहिः ।
स्वर्णमध्यगतं धार्यं शिखायां यत्र कुत्रचित् ॥ १५६ ॥
लोकपालाश्च राजानो दुष्टास्त्रैलोक्यसंस्थिताः ।
ते सर्वे वशमायान्ति सन्निपातादयो ज्वराः ॥ १५७ ॥
अनेन विधिना नाम पुरा संभ्यर्च्य संक्षिपेत् ।
चतुष्पथे मध्यदेशे दिक्षु पूर्वादिषु क्रमात् ॥ १५८ ॥
तस्य सौभाग्यमायाति राजानः किङ्कराः सदा ।
स्फुरत्तेजोमयीं पृथ्वीं प्रज्ज्वलन्तीं चराचरम् ॥ १५९ ॥
चक्रान्तश्चिन्तयेन्नित्यं मासषट्कं ततो नरः ।
तेन कन्दर्पसुभगो लोके भवति निश्चयम् ॥ १६० ॥
दृष्ट्वा चाकर्षते लोकं विषं नाशयति ज्वरान् ।
तथा विषं च हरति दृष्ट्वा वश्यं करोति च ॥ १६१ ॥
रात्रौ सिन्दूरलिखितं पूजयेदेकचित्ततः ।
यदा तदैव लोकोऽयं वश्यो भवति नान्यथा ॥ १६२ ॥
करोत्याकर्षणं दूराद् योजनानां शतादपि ।
अखण्डं दिक्षु कोणेषु क्रमेण परिपूजयेत् ॥ १६३ ॥
यदा तदैव लोकोऽयं वश्यो भवति नान्यथा ।
भूर्जपत्रे लिखेच्चक्रं रोचनागुरुकुङ्कुमैः ॥ १६४ ॥

स्वनाम दर्भितं कुर्याद्देशं वा पुरभेदनम्।
मण्डलं विषमस्थानं भूमौ चक्रं निधापयेत् ॥ १६५ ॥
धारयेद् वा ततो मन्त्री पुरं क्षोभयति क्षणात्।
उन्मत्तरसलाक्षार्कक्षीरकुङ्कुमरोचनाः ॥ १६६ ॥
कस्तूर्यालक्तसहिता एकीकृत्य तु संलिखेत्।
यन्नाम्ना कुङ्कुमाभ्यां तु मध्यगां संलिखेद् बुधः ॥ १६७ ॥
त्रिकोणोभयगां चैव साध्यनामाङ्कितामधः।
तच्चक्रं धारयेतस्मात्सप्तहा किंङ्करो भवेत् ॥ १६८ ॥
पीतद्रव्येण चक्रान्ते लिखेद्विद्वानधस्ततः।
साध्यनामविलेखेन तत्पूर्वस्यां दिशि क्षिपेत् ॥ १६९ ॥
तस्माद्ब्रह्माऽपि यो वाऽपि सर्वज्ञो मूकतां व्रजेत्।
अनेन विधिना नीलां रसेन विलिखेच्च तत् ॥ १७० ॥
दक्षिणाभिमुखो मन्त्री वह्नौ दग्ध्वा रिपुं दहेत्।
महिषाश्वपुरीषेण गोमूत्रेण च संलिखेद् ॥ १७१ ॥
आरनालस्थितं कुर्याद्भवेद्विद्वेषणं क्षणात् ।
साध्यनाम लिखेन्मध्ये काकपक्षेण लम्बयेत् ॥ १७२ ॥
संलिख्य रोचनाद्रात्रावाकाशे दृष्टिकं तथा।
शत्रूनुच्चाटयेदाशु हठोच्चाटोऽयमीरितः ॥ १७३ ॥
महानीलीरसोद्भिन्नरोचनादुग्धमिश्रितैः।
लाक्षारसैर्लिखेच्चक्रं चतुर्वर्णान्वशं नयेत् ॥ १७४ ॥
अनेन विधिना नीरं स्थापयेत्तज्जलेन तु।
सौभाग्यं महदाप्नोति स्नानपानान्नसंशयः ॥ १७५ ॥
पीतचक्रं यजेत्पूर्वं स्तम्भयेत्सर्ववादिनः।
सिन्दूरलिखितं चक्रमुत्तरे लोकवश्यकृत् ॥ १७६ ॥
पश्चिमे पूजितं चक्रं गैरिकलिखितं ततः।
मन्त्रीशाः देवताः वश्याः किं पुनर्योषितः प्रिये ॥ १७७ ॥
तथैव दक्षिणास्यं तु कृष्णं चक्रं समर्चयेत्।
साध्यस्य मन्त्रहानिः स्यान्मरणं च विशेषतः ॥ १७८ ॥
क्रमाद्दिगन्तराद्यन्तु वह्निकोणादिषु क्रमात्।
स्तम्भं विद्वेषणं व्याधिमुच्चाटं कुरुते नरः ॥ १७९ ॥
दुग्धे वश्यकरं क्षिप्तं रोचनालिखितं हठात्।

दग्ध्वा तद्वह्निमध्यस्थं सर्वशत्रून् विनाशयेत् ॥ १८० ॥
गोमूत्रमध्यगं चैव भवेदुच्चाटनं रिपोः ।
विद्वेषणं भवेच्चक्रे तेनैव परमेश्वरि ॥ १८१ ॥
सिन्दूरेण लिखेच्चक्रं निर्जनं च चतुष्पथे ।
सर्वबाह्यान्तमारस्य मध्यान्तं मातृकां लिखेत् ॥ १८२ ॥
कुलाचारक्रमेणैव रात्रौ संपूजयेत् क्रमम् ।
साधकः खेचरो देवि जायते नात्र संशयः ॥ १८३ ॥
चतुर्दश्यां निशीथस्तो रुद्रभूमौ प्रपूजयेत् ।
षण्माससंख्यया तेन साक्षाद्रुद्र इवाऽपरः ॥ १८४ ॥
अञ्जनं विवरं सिद्धिधुटिकां पदुकां जपम् ।
खड्गवेतालसौभाग्यं पक्षिणी चेटिकादिकम् ॥ १८५ ॥
सकलं सिद्धिसमयं मन्त्री प्राप्नोति नान्यथा ।
चतुर्दश्यां चतुर्दश्यां प्रत्यष्टमीं समाहितः ॥ १८६ ॥
एकविंशतिरात्रं तु निशि प्रेतक्षमातले ।
श्रीचक्रपूजनात्तद्वत्सुरपूज्यस्तु साधकः ॥ १८७ ॥

## अथ त्रिपुरभैरवीप्रयोगः

एवं सिद्धमनुर्मन्त्री साधयेदिष्टमात्मनः ।
जुहुयादरुणाम्भोजैरदोषैर्मधुराप्लुतैः ॥ १८८ ॥
लक्षसङ्ख्यं तदर्धं वा प्रत्यहं भोजयेद्विजान् ।
वनितां युवतिं रम्यां पूजयेद्देवताधिया ॥ १८९ ॥
होमान्ते धनधान्याद्यैस्तोषयेद् गुरुमात्मनः ।
एवं कृते जगद्वश्यं रमाया भवनं भवेत् ॥ १९० ॥
रक्तोत्पलैस्त्रिमध्वाक्तैररुणैर्वा हयारिजैः ।
पुष्पैः पयोन्नैः सघृतैर्होमाद्विश्वं वशं नयेत् ॥ १९१ ॥
वाक्सिद्धिं लभते मन्त्री पलाशकुसुमैर्हुनात् ।
कर्पूरागुरुसंयुक्तं गुग्गुलं जुहुयात्सुधीः ॥ १९२ ॥
ज्ञानं दिव्यमवाप्नोति तेनैव स भवेत्कविः ।
क्षीराक्तैरमृताखण्डैर्होमः सर्वापमृत्युजित् ॥ १९३ ॥
दुर्वाभिरायुषे होमः क्षीराक्ताभिर्दिनत्रयम् ।
गिरिकर्णीभवैः पुष्पै ब्राह्मणान् वशयेद्ध्रुवम् ॥ १९४ ॥

कल्हारैः पार्थिवान् पुष्पैस्तद्वध्द्रष्कर्णिकारजैः।
मल्लिकाकुसुमैर्हुत्वा राजपुत्रान्वशं नयेत् ॥ १९५ ॥[3]
कारण्डकुसुमैर्वैश्यान् वृषभान्पाटलोद्भवैः।
अनुलोम-विलोमान्तः स्थितः साध्याह्वयान्वितम् ॥ १९६ ॥
मन्त्रमुच्चार्य जुहुयान्मन्त्री मधुरलालितैः।
सर्षपैर्लवणैर्मिश्रैर्वशयेत्पार्थिवान् क्षणात् ॥ १९७ ॥
अनेनैव विधानेन तत्पत्नीं तत्सुतानपि।
जातीविल्वोद्भवैः पुष्पैर्मधुरत्रयलालितैः ॥ १९८ ॥
नरनारीनरपतीन् होमयेद्वशयेद्ध्रुवम्।
मालतीवकुलोद्भूतैः पुष्पैश्चन्दनलोलितैः ॥ १९९ ॥
जुहुयात्कवितां मन्त्री लभते वत्सरान्तरे।
मधुरत्रयसंयुक्तैर्विल्वैर्विल्वसमुद्भवैः ॥ २०० ॥
जुहुयाद् वशयेल्लोकं श्रियमाप्नोति वाञ्छिताम्।
पाटलैः कुमुदैः कुन्दैरुत्पलैर्नागचम्पकैः ॥ २०१ ॥
नन्दावर्त्तैर्विकसितैः कृतमालैर्जुहोति यः।
जायते वत्सरादर्वाक् श्रिया विजितपार्थिवः ॥ २०२ ॥
साज्यमन्त्रं प्रजुहुयाद् भवेदन्नसमृद्धिमान्।
कस्तूरीकुङ्कुमोपेतं कर्पूरं जुहुयाद्वशी ॥ २०३ ॥
कन्दर्पादधिकं सद्यः सौन्दर्यमधिगच्छति।
लाजाः प्रजुहुयान्मन्त्री दधिक्षीरमधुप्लुताः ॥ २०४ ॥
विजित्य रोगानखिलान् स जीवेच्छरदां शतम्।
पादद्वयं मलयजं पादं कुङ्कुमकेशरम् ॥ २०५ ॥
पादं गोरोचनायाश्च तानि पिष्ट्वा हिमाम्बुना।
विदध्यात्तिलकं भाले यान् पश्येद्यैर्विलोक्यते ॥ २०६ ॥
यान् स्पृशेत्स्पृश्यते यैर्वा वश्याः स्युस्तस्य ते चिरात्।
कर्पूरकपिचोराणि समभागानि कल्पयेत् ॥ २०७ ॥
चतुर्भागा जटामांसी तावती रोचना मता।
कुङ्कुमं सप्तभागं स्याद्दिग्भागं चन्दनं मतम् ॥ २०८ ॥
अगुरुर्नवभागः स्यादिति भागक्रमेण तु।
हिमाद्धि कन्याया पिष्टमेतत्सर्वं सुशोधितम् ॥ २०९ ॥

---

३ राजपुत्रान् इत्यतः जुहुयान्मन्त्री इत्यन्तो भाग (१९५-१९७) न प्राप्यते।

आदाय तिलकं भाले कुर्याद् भूमिपतीन्नरान्।
वनितां मदगर्वाढ्यां मदोन्मत्तान्मत्तङ्गजान् ॥ २१० ॥
सिंहव्याघ्रान्महासर्पान् भूतवेतालराक्षसान्।
दर्शनादेव वशयेत्तिलकं धारयेन्नरः ॥ २११ ॥

## अथ महालक्ष्मीप्रयोगः

एवं सिद्धमनुर्मन्त्री गुरुभक्तो दृढव्रतः।
कुर्यात्काम्यानि कर्माणि स्वभीष्टानि च मन्त्रवित् ॥ २१२ ॥
आज्यप्लुताभिर्दूर्वाभिरायुःकामो हुनेत्ततः।
सहस्रं दशरात्रं च संसिद्धे हव्यवाहने ॥ २१३ ॥
घृताक्ताभिश्च दूर्वाभिरष्टोत्तरसहस्रकम्।
सप्ताहं जुहुयाज्जीवेद्वत्सराणां शतं सुधीः ॥ २१४ ॥
[४]दशाहं प्रत्यहं चापि सर्पिषाक्तान्समिद्वरान्।
कण्ठमात्रे जले स्थित्वा महालक्ष्मीमनुं स्मरेत् ॥ २१५ ॥
अष्टाधिकं सहस्रं च प्रोर्ध्ववाहुर्मनुं जपेत्।
संवाञ्छितार्थान् लभते तथाऽऽरोग्यं च साधकः ॥ २१६ ॥
अनलं जुहुयादष्टसहस्रांशालिभिर्ध्रुवम्।
स चिराल्लभते लक्ष्मीं महतीं साधकोत्तमः ॥ २१७ ॥
रमालताप्रसूनैर्वा नद्यावर्त्तसमुद्भवैः।
श्वेतसर्षपकैराज्याप्लुतैर्वा जुहुयाद् बुधः ॥ २१८ ॥
प्रथीयसी रमामाप्नोत्यचिरात्साधको ध्रुवम्॥
मान्यते च तथा सर्वैर्जन्तुभिर्नान्यथाऽत्र च ॥ २१९ ॥
नारिकेलरजोयुक्तैर्मरिचैर्वीरकान्वितैः
गुडयुक्तैर्घृतैः पक्वैरपुपैर्जुहुयात्सुधीः ॥ २२० ॥
संयतः प्रत्यहं चाष्टशतं पायसयुग्द्विजः।
मण्डलाच्च ध्रूवं साक्षाद्भवेद्वैश्रवणस्तथा ॥ २२१ ॥
गुडमिश्रहविष्यस्य होमादन्नसमृद्धिमान्।
अष्टोत्तरसहस्रं च जपासुनानि संहुनेत् ॥ २२२ ॥
संगृह्य मन्त्री तद्भस्म नागवल्लीरसेन च।

---

४ दुर्वायुक्ताघृताभ्यक्तैस्तिलैः प्रजुहुयाद्बुधः। आरोग्यकामो जुहुयादारभ्यार्कदिनं सुधीः ॥ श्लोको=यं मा. क त्रुटितः।

सहितं तिलकं कुर्यात्सर्ववश्यं भवेद्ध्रुवम् ॥ २२३ ॥
पलाशोत्थसमिद्भिश्च कुसुमैर्जुहुयात्तथा ।
वश्या भवेयुर्मुखरा वशिनस्तस्य मन्त्रिणः ॥ २२४ ॥
जातिकाकुसुमैर्मन्त्री राजानं वशमानयेत् ।
जुहुयादरुणाम्भोजैर्वश्याः स्युस्तस्य वश्यगाः ॥ २२५ ॥
नीलोत्पलानां होमेन वश्याश्चरणसम्मताः ।
वशयेत्प्रमदा विद्वान्मधूककुसुमैर्हुतैः ॥ २२६ ॥
नवकोष्ठात्मकं सम्यग्मण्डलं रचयेत् सुधीः ।
मध्ये यन्त्रं वक्ष्यमाणं कल्पयेच्च यथाविधि ॥ २२७ ॥
तेषु कोष्ठेषु नवसु विन्यसेत्कलशान्नव ।
शुभाञ्चन्दनकाश्मीरलिप्तसर्वाङ्गकान्नवान् ॥ २२८ ॥
कुर्वन्तण्डुलसंयुक्तान्सर्वदृष्टिमनोहरान् ।
पूरयेच्च यथावत्तात्वासितै स्तीर्थपुष्पकैः ॥ २२९ ॥
कर्षं स्वर्णेन रचितं नवरत्नसमन्वितम् ।
कर्णिका मध्यविलसद्यन्त्रपद्मं तु कारयेत् ॥ २३० ॥
मध्यस्थकलशे रम्ये यथावत्तद्विनिक्षिपेत् ।
वादीरोशीरकश्मीरचन्द्रागुरुतमालकम् ॥ २३१ ॥
जातीकं कोलसंयुक्तं संपीष्यैतानि भागशः ।
कलशेषु च सर्वेषु यथाविधि विलोडयेत् ॥ २३२ ॥
सदाभद्रा च दूर्वा च देवी शश्च मधुव्रता
अपामार्गस्य पत्राणि मुशली वज्रवल्लरी ॥ २३३ ॥
चक्रप्रियङ्गुव्रीहिश्च मुद्गगोधूमतण्डुलान् ।
शालिमाषाँश्च सतिलान् यवान् प्रक्षाल्य निःक्षिपेत् ॥ २३४ ॥
कदलीनारिकेलाँश्च श्रीधात्रीकुचभूरुहान् ।
फलानि पद्मवकुलजातीसौगन्धिकानि च ॥ २३५ ॥
मल्लिकाचम्पकाशोकपुन्नागोत्थानि निक्षिपेत् ।
पुष्पाणि कनकं तत्तत्तुलसीपल्लवाँस्तथा ॥ २३६ ॥
न्यग्रोधोदुम्बरप्लक्षचैत्यानां ब्रह्मकूर्चकम् ।
प्रक्षिप्य घटवक्षेषु छादयेज्जपकैः शुभैः ॥ २३७ ॥
साक्षतैः सकलैस्ताँश्च वेष्ठयेत्क्षौमवाससा ।
तेषु मध्यस्थकलशे समावाह्य महेश्वरीम् ॥ २३८ ॥

महालक्ष्मीं चन्दनाद्यैरूपचारैश्च संयजेत्।
शिष्टेष्वेषु सुकुम्भेषु ह्यमाद्यः क्रमतो यजेत् ॥ २३९ ॥
सुगन्धैश्चन्दनैः पुष्पैर्मनोज्ञैर्धूपदीपकैः।
भक्ष्यभौज्यैश्च नैवेद्यैर्यथाविधि यजेत्सुधीः ॥ २४० ॥
संस्पृश्य तान् घटान् मन्त्री त्रिसहस्रं मनुं जपेत्।
साध्यं समानीय ततः संयुक्तं स्थण्डिले शुभे ॥ २४१ ॥
सुपीठे तं विवेश्य स्वं तस्मिन् साध्ये तु योजयेत्।
मनोहरैरलंकारैर्विविधैर्वसनैरपि ॥ २४२ ॥
आदरात्तमलंकृत्य सुक्लृप्तं सुमनोवृतम्।
सुवासिनीभिर्योषाभिरर्चितानां द्विजन्मनाम् ॥ २४३ ॥
समश्रीवचनैः सर्ववाद्यानां निनदैः सह।
वेदघोषेण च सह लग्ने चैव सुशोभने ॥ २४४ ॥
तेषु मध्यस्थितं कुम्भं समुद्धृत्य गुरुः स्वयम्।
मूलमन्त्रजपेत् सिञ्चेत्साध्यशीर्षं ततोऽपरै ॥ २४५ ॥
कलशैः पूर्ववत् सिक्ता हस्तेनास्य शिशोः शिरः।
संस्पृशन्वेदगदितामाशिषं संप्रयच्छति ॥ २४६ ॥
कल्याणमस्तु च सदा संपदश्च निराकुलाः।
प्रसीदतु महालक्ष्मीः सकला देवता अपि ॥ २४७ ॥
ईक्षन्तु त्वां सर्वदैव विजयोऽस्तु सुखी भव।
इत्थं दत्त्वाऽऽशिषं पश्चाद्वाससी परिधाय च ॥ २४८ ॥
आचान्तः प्रणमेत्सम्यग्यथाविधि गुरुं शिशुः।
नानाविधैश्च वसनैर्नानाऽलङ्करणैरपि ॥ २४९ ॥
नवैर्धान्यैर्रत्नगोभिर्महिषीभिश्च दासकैः।
दासीभिर्देवताबुद्ध्या गुरं सन्तोषयेत्सुधीः ॥ २५० ॥
नानाविधैर्भक्ष्यभोज्यैर्लेह्यैश्चोष्यैस्तथोत्तरैः।
दीनान्धकृपणैः सार्धं भोजयेच्च द्विजन्मनः ॥ २५१ ॥
ततः स्वमन्दिरे कुर्यादुत्सवं बन्धुभिः सह।
महात्रिलोकरम्यं च ततः स नृवरः स्वयम् ॥ २५२ ॥
कृतार्थं मन्यते सम्यगात्मानं नान्यथात्र हि।
राजा शत्रून्विजयतेऽभिषिक्तश्च यथाविधि ॥ २५३ ॥
राजपुत्रश्च राज्यैप्सुरचिरादाप्नुयात्पदम्।

वन्ध्याऽभिषिक्ता रमणी ह्यचिराद् वाञ्छितं सुतम् ॥ २५४ ॥
महामतिं च लभते नात्र कार्या विचरणा।
महाभयेषु भूतादिनिमित्तात्कभयेषु च ॥ २५५ ॥
कृत्याद्रोहादिदोषे च प्रकुर्यादभिषेचनम्।
अभिषेकेनामुना च नृणां भवति निश्चितम् ॥ २५६ ॥
सर्वसम्पच्च सौभाग्यं सर्वामयशमस्तथा।
सर्वापद्वारणं चैव सर्वसौख्यानि निश्चितम् ॥ २५७ ॥

**अथ मातङ्गीप्रयोगः**

मन्त्रेऽस्मिन्साधिते मन्त्री साधयेदिष्टमानसः।
मल्लिकाजातिपुंन्नागैर्होमाद् भोगालयो भवेत् ॥ २५८ ॥
फलैर्विल्वसमुद्भूतैस्तत्पत्रैर्वा हुताद् भवेत्।
राजपुत्रस्य राज्याप्तिः पङ्कजैः श्रियमाप्नुयात् ॥ २५९ ॥
उत्पलैर्वशयेद् विश्वं लक्ष्मीपुष्पैस्तथा पुनः।
बन्धूकपुष्पैर्वकुलै जयोत्थैः किंशुकोद्भवैः ॥ २६० ॥
वश्याय जुहुयान्मन्त्री मनुना सर्वसिद्धये।
लवणैर्मधुरोपेतैर्हुत्वा कर्षति सुन्दरीम् ॥ २६१ ॥
वेञ्जुलस्य समिद्धोमो वृष्टिं[५] वितनुते चिरात्।
क्षीराक्तैरमृताखण्डैर्होमान्नाशयति ज्वरम् ॥ २६२ ॥
दूर्वाभिरायुराप्नोति कदम्बैर्वश्यमाप्नुयात्।
अन्नवाननन्तहोमात्तण्डुलैर्धनवान् भवेत् ॥ २६३ ॥
सर्वं त्रिमधुरोपेतं होमद्रव्यमुदाहृतम्।
नद्यावर्त्तभवैः पुष्पैर्होमो वाक्सिद्धिदायकः ॥ २६४ ॥
निम्बप्रसूनैर्जुहुयादीप्सितां श्रियमश्नुते।
पलाशकुसुमैर्होमात्तेजस्वी जायते नरः ॥ २६५ ॥
चन्दनागुरुकर्पूररोचनाकुङ्कुमादिभिः।
वश्याय जुहुयान्मन्त्री वशयेदखिलं जगत् ॥ २६६ ॥
एतानि जप्त्वा तिलकं कुर्याल्लोकप्रियो भवेत्।
निर्गुण्डीमूलहोमेन निगडान्मुच्यते नरः ॥ २६७ ॥
निम्बतैलान्वितैर्लोधैर्होमः शत्रुविनाशनः।

५ दृष्टिं पाठ मा. ख।

हरिद्राचूर्णसम्मिश्रैर्लवणैस्तम्भयेत्परान्  ॥ २६८ ॥
रसवद्भिः फलैः पक्वैः पुष्पैः परिमलान्वितैः ।
हुत्वा सम्यगवाप्नोति साधकः सर्वमीप्सितम्  ॥ २६९ ॥

## अथ भुवनेश्वरी प्रयोगः

मन्त्री त्रिमधुरोपेतैर्हुत्वाऽश्वत्थसमिद्वरैः ।
ब्राह्मणन्वशयेच्छीघ्रं पार्थिवान् पद्महोमतः  ॥ २७० ॥
पलाशपुष्पैस्तत्पत्नीर्मन्त्रिणः कुमुदैरपि ।
पञ्चविंशति सञ्जप्तैर्जलैः स्नानं दिने दिने  ॥ २७१ ॥
आत्मानमभिषिञ्चेद्यः सर्वसौभाग्यवान् भवेत् ।
पञ्चविंशति संजातं जलं प्रातः पिवेन्नरः  ॥ २७२ ॥
अवाप्य महतीं प्रज्ञां कवीनामग्रणी भवेत् ।
हुत्वा पलाशकुसुमैर्वाक्श्रियं लभते ध्रुवम्  ॥  २७३ ॥
व्रह्मीघृतं पिवेद्यस्तु मूलमन्त्राभिमन्त्रितम् ।
कवित्वं लभते मन्त्री वत्सरान्नात्र संशयः  ॥ २७४ ॥
सिद्धार्थान् लवणोपेतान् हुत्वा मन्त्री वशं नयेत् ।
नरनारीनरपतीन्नात्र कार्या विचारणा  ॥ २७५ ॥

## अथ धूमावतीविद्यायाः

पूर्वोक्ते पूजयेत्पीठे ज्येष्ठां शत्रुनिवृत्तये ।
केसरेषु षडङ्गानि पत्रस्था अष्टशक्तयः  ॥ २७६ ॥
क्षुधा तृष्णा रति निद्रा निऋतिर्दुर्गतीरुषा ।
अक्षमेति ततो देवा इन्द्राद्या आयुधान्विताः  ॥ २७७ ॥
एवं ज्येष्ठां समाराध्य सिद्धो मन्त्रः प्रजायते ।
उपोह्य कृष्णभूताहं नग्नो मुक्तशिरोरुहः  ॥ २७८ ॥
शून्यागारे श्मशाने वा कान्तारे भूधरेऽथ वा ।
प्रत्यहं प्रजपेन्मन्त्रीध्यायेद्देवीं शवासने  ॥ २७९ ॥
एवं लक्षं जपेन्मन्त्री नाशयेदचिरानरीन् ।
जुहुयाल्लवणोपेतां राजिकां निशि तत्फलम्  ॥ २८० ॥
आख्यापर्यन्तमालिख्य तस्मिंस्थाप्य शिवां जपेत् ।

अवष्टभ्य शिवं शत्रुनाम्नाथ प्रजपेन्मनुम् ॥ २८१ ॥
सहस्रादूर्ध्वतः शत्रूर्ज्वरेण परिगृह्यते ।
पञ्चगव्येन शान्तिः स्याज्ज्वरस्य पयसाऽपि वा ॥ २८२ ॥
मन्त्राद्यक्षरमालिख्य शत्रुनाम ततः परम् ।
द्वितीयान्ते मनौ शत्रुर्नावैमं मनुना लिखेत् ॥ २८३ ॥
रणेऽयुतजपाच्छत्रोर्निश्चितं मरणं भवेत् ।
कृत्वा यन्त्रे रिपोराख्यामरण्ये यामिनीदले ॥ २८४ ॥
उन्मादो जायते शत्रोर्मनोरयुतजापतः ।
दग्धाङ्कं श्मशानाग्नौ तद् भस्मादाय मन्त्रितम् ॥ २८५ ॥
विरोधिनाम्नाऽष्टाशासु सद्य उच्चाटनं रिपोः ।
श्मशानभस्मना कृत्वा शिवं तस्योपरि न्यसेत् ॥ २८६ ॥
विरोधिनामसंरुद्धं कृष्णपक्षे समर्चयेत् ।
महिषीक्षीरधूपं च दद्याच्छत्रुविपत्करम् ॥ २८७ ॥
महिषीरूपेणागत्य स्वप्ने शत्रुं निपातयेत् ।
मन्त्रेणानेन निखनेत्तद्भस्म रिपुमन्दिरे ॥ २८८ ॥
शत्रुमुच्चाटयेत्तूर्णं नात्र कार्या विचारणा ।
न्यस्य पाणितले शत्रोराख्यानं चिति भस्मना ॥ २८९ ॥
वन्हावद्योमुखं क्रुद्धः स्थापयेदयुतं जपन् ।
धूमावतीमनुं मन्त्री शत्रुं यमपुरं नयेत् ॥ २९० ॥
प्राग्वत्करतले नामाधद्वयं तु रिपोर्न्यसेत् ।
जलस्थः प्रजपेन्मन्त्री हूँकारान्नाशयेदरीन् ॥ २९१ ॥
श्मशानभस्मनालिङ्गं कृत्वा पुष्पादिनाऽऽर्चयेत् ।
भवन्ति च संभाष्य मनसा कर्म चिन्तयेत् ॥ २९२ ॥
निम्बकाकच्छदानेकी कृत्वा चाष्टशतं जपेत् ।
दद्याद्रूपं साध्यनाम्ना सद्यो विद्वेषयेदरीन् ॥ २९३ ॥
चिताकाष्ठानले क्षीरहोमाच्छान्तिः प्रजायते ।
रजोधूपप्रदानेन गृध्ररूपेण ....का ॥ २९४ ॥
मारयेत्पारमागत्य शान्तिर्निर्माल्य धूपतः ।
वाराहबालधूपेन हन्याच्छूकररूपिणी ॥ २९५ ॥
अश्वत्थपत्रधूपेन शन्तिर्भवति नान्यथा ।
शान्तिः सर्वाभिचारस्य पञ्चगव्येन जायते ॥ २९६ ॥

क्षीरेण शान्तिर्भवति मधुरत्रितयेन वा।
कीलेक्षेत्रतरोश्चापि शत्रोर्नाम समालिखेत् ॥ २९७ ॥
विदर्भ्य मूलमन्त्रेण साध्यनामाक्षराणि वै।
जप्त्वा पदद्वये मन्त्री खनेदुच्चाटनं रिपोः ॥ २९८ ॥
शत्रूपादद्वयाद्धूलिं घृताक्तां भक्तमिश्रिताम्।
वायसेभ्यो बलिं दत्त्वा शत्रोरुच्चाटनं भवेत् ॥ २९९ ॥
शत्रुपादद्वयाद् धूलिं चिताभस्मयुतां क्षिपेत्।
शत्रुगेहे तु संजप्तां शत्रोरुच्चाटनं भवेत् ॥ ३०० ॥
ज्येष्ठावासे श्मशाने वा निर्माल्ये पादगोचरा।
गर्दभावासभूमौ वा प्रेतस्थाने चतुष्पथे ॥ ३०१ ॥
उखरे भेदनक्षयां पुष्पितायां भमेध्वकौ।
आनीय शर्करां मन्त्री दिग्वासा दक्षिणामुखः ॥ ३०२ ॥
श्मशानलोष्ठे निः क्षिप्य चिताग्नौ भर्जयेत्तथा।
मन्त्रं तं तु जपेल्लक्षं निः क्षिपेच्छत्रुवेश्मनि ॥ ३०३ ॥
सेनमध्येऽपि सर्वेषं क्षणदुच्चाटनं भवेत्।
गर्ते पिपीलिकानां तु पादधूलियुतान् कणान् ॥ ३०४ ॥
सघृतात्सप्तवारं तु जुहुयान्मन्त्रवित् निशि।
भ्रमते काकवत्सर्वां महीमावरणादिषु ॥ ३०५ ॥
कृतिं प्रतिकृतिं शत्रोर्जन्मवृक्षेण मन्त्रवित्।
कृत्वा प्रतिष्ठां प्राणस्य विद्ध्वा मर्मसु कण्टकैः ॥ ३०६ ॥
आयसैर्मन्त्रमावर्त्त्य वक्ष्यमाणैः प्रवेष्टयेत्।
पूर्वोक्तशर्कराभिस्तु जप्त्वा नित्यं प्रतापयेत् ॥ ३०६ ॥
सप्तरात्रेण तस्यापि भवेदुच्चाटनं ध्रुवम्।
मुखे शल्योद्वये लेख्यौ सारमेयवराहयोः ॥ ३०७ ॥
मन्त्रेण दमितौ साध्यौ भौमवारोदयोदये।
धत्तूररससंयुक्तं चिताङ्गारेण मन्त्रिणा ॥ ३०८ ॥
व्यत्यस्य पृष्ठतो बद्ध्वा केशपाशेन तं जपेत्।
श्मशाने शत्रुमार्गे वा तद्गृहे निखनेन्निशि ॥ ३०९ ॥
विद्वेषणं भवेत्सद्यो गौरीशङ्करयोरपि।
अश्वत्थत्वविमन्त्रार्णै दार्भितं साध्यमालिखेत् ॥ ३१० ॥
अन्यद्विषतरोस्तद्वज्जप्त्वा ह्युदृधृत्य विन्यसेत्।

पूर्वोक्तं कण्टकैर्विद्ध्वा जपेत्स्पृष्ट्वा शतं शतम् ॥ ३११ ॥
विद्विष्टौ भवतस्तौ च नाम्नामपि च तत्क्षणात् ।
एते प्रयोगाः कथिता धूमावत्या मयाधुना ॥ ३१२ ॥

**अथ बगलाप्रयोगः**

बिन्दुस्त्रिकोणं वृत्तं च ह्यष्टकोणं ततोपरि ।
तस्योपरि लिखेत्पत्रं षट्कोणपत्रमादरात् ॥ ३१३ ॥
तस्योपरि लिखेत्पत्रभूपुरद्वयमादरात् ।
बिन्दुमध्ये लिखेद्बीजं बगलायाश्च पुत्रकः ॥ ३१४ ॥
साध्यं तद्बीजगर्भस्थं कुर्यात्सम्यक्सुबुद्धिमान् ।
तद्बीजं विलिखेत्कोणत्रितयं त्रितयं त्रिधा ॥ ३१५ ॥
अष्टकोणेषु विलिखेद् गायत्रीं बगलाह्वयाम् ।
षट्कोणेषु च संल्लिख्य विद्यां षट्त्रिंशदक्षरीम् ॥ ३१६ ॥
वृत्तेषु विलिखेत् पुत्र पञ्चाशद्वर्णमादरात् ।
भूपुरेषु च संल्लिख्य प्राणस्थापनगं मनुम् ॥ ३१७
रजते स्वर्णपट्टे वा प्रादेशं चतुरस्रकम् ।
लेखन्या स्वर्णया चात्र लिखेद् भार्गववासरे ॥ ३१८ ॥
पूजायन्त्रमिदं पुत्र पूजनात्सर्वसिद्धिदम् ।
पूजाविधिं प्रवक्ष्यामि स्नानं गुह्यं सुपावनम् ॥ ३१९ ॥
मूलमन्त्रेण संपूज्य उपचारैश्च षोडशैः ।
शुद्धप्रदेशजां दूर्वां निर्मलां च सुकोमलाम् ॥ ३२० ॥
संग्रहेत् क्षालयेत्सम्यङ् मन्त्रराजेन पुत्रकः ।
मन्त्रान्तरे नमः पूर्वं निःक्षिपेत्पूर्वमादरात् ॥ ३२१ ॥
एवं भूतसहस्रं तु पूजयेच्च दिने दिने ।
मण्डलाद् व्याधयः सर्वा मुच्यन्ते कीर्तिमादरात् ॥ ३२२ ॥
भूतप्रेतपिशाचाद्याः क्रूराः खेचरभूचराः ।
पूजनान्मुक्तिमाप्नोति शिवस्य वचनं यथा ॥ ३२३ ॥
अर्चयेत्पूर्ववन्मन्त्रमुपचारैश्च षोडशैः ।
संग्रहेद् रक्तकुसुमं हयारिं च सुनिर्मलम् ॥ ३२४ ॥
तेन पूजा प्रकर्तव्या पूर्ववन्मण्डलं सुधीः ।

संमोहनं च वशगं द्रव्यं नाममरे ध्रुवम्  ॥ ३२५ ॥
विभीतभ्युद्भवं पुष्पं महद् वै भौमवासरे ।
पूजयेत्पूर्ववत्पुत्र नाना स्तम्भनकर्मणि  ॥ ३२६ ॥
निम्बार्ककुसुमं देव यन्त्रे वाऽथ कुमारकः ।
पूर्ववत्पूजयेन्मन्त्री सद्यश्च स्तम्भनं भवेत्  ॥ ३२७ ॥
धुस्तूरकुसुमैश्चैव पूर्ववत्पूजयेत् सुत ।
उच्चाटनं भवेत्सत्यं नान्यथा शिवभाषितम्  ॥ ३२८ ॥
विंशति वरपुष्पेण पूर्ववत्सम्यगाचरेत् ।
सद्यो विनाशमाप्नोति मृद्दण्डसदृशं रिपुः  ॥ ३२९ ॥
समस्त कुसुमेनैव पूर्ववत्पूजयेन्मनुम् ।
पुत्रश्च जायते लोके वेदशास्त्रार्थकोविदः  ॥ ३३० ॥
पलाशकुसुमेनैव पूर्ववत्पूजयेन्नरः ।
सद्यो मन्दो भवेदग्री लभेत् स च सतां श्रुतः  ॥ ३३१ ॥
पूर्ववत्पूजयेत्पुत्र ह्यशोककुसुमेन च ।
ईप्सितां लभते कन्यां सा तु पुत्रवती भवेत्  ॥ ३३२ ॥
तुलसीमञ्जरीभिश्च पूर्ववत्पूजयेन्नरः ।
ज्ञानं भक्तिश्च वैराग्यं लभते तरलैरपि  ॥ ३३३ ॥
नद्यावर्त्तेन संपूज्य बालरोगं व्यपोहति ।
मल्लिकाकुसुमेनैव पूजयेद् वज्रशान्तये  ॥ ३३४ ॥
कुसुमैश्चम्पकैरर्च्या शीतज्वरनिवारिणी ।
अर्चयेज्जातिकुसुमैर्महारोगो विनश्यति  ॥ ३३५ ॥
वन्यैश्च मल्लिकापुष्पैर्निषेयं लभते ध्रुवम् ।
केतकीकुसुमेनार्चा तद्द्रव्यं जायते ध्रुवम्  ॥ ३३६ ॥
एवं च पूजयेन्मन्त्री न जपेन्न च होमयेत् ।
प्रयोगसिद्धिर्भवति बगलायाः प्रसादतः  ॥ ३३७ ॥
अथातः संप्रवक्ष्यामि बगलायन्त्रमद्भुतम् ।
भूर्जपत्रे समालिख्य तारोन्मत्तानिशारसा  ॥ ३३८ ॥
षट्कोणं तस्य मध्ये तु वलयाकारतो लिखेत् ।
षट्त्रिंशदक्षरं मन्त्रं बगलायास्तदुच्यते  ॥ ३३९ ॥
तारं लज्जां च बगलां मुखि सर्वपदं वदेत्  ।

दुष्टानामपि चोच्चार्य वाचं मुखं पदं तथा ॥ ३४० ॥
स्तम्भय जिह्वां कीलय बुद्धिं विनाशय ॐ ह्रीं ।
स्वाहान्तोऽयं मनुः प्रोक्तः साध्यनाम्न्यस्तु वेष्टकः ॥ ३४१ ॥
वेष्टयेत्पीतसूत्रेण कुलालस्य गृहं व्रजेत् ।
चक्रे मृदं समारोप्य भ्रामयेद् व्यस्तमेव च ॥ ३४२ ॥
वृषभं कारयेत्तत्र हरितालेन लेपयेत् ।
तन्मध्ये निः क्षिपेद्यन्त्रमारूढं वृषभोपरि ॥ ३४३ ॥
नासायां निःक्षिपेद्रज्जुं पीतवस्त्रेण वेष्ठयेत् ।
बाह्योपचारपूजाभिः स्वगृहे तं प्रपूजयेत् ॥ ३४४ ॥
अर्चयन्तं चतुःकालं साध्यनाम्नात्र साधकः ।
दुष्टानां स्तम्भयेद्वक्त्रं साक्षाद्वाचस्पतेरपि ॥ ३४५ ॥

**अथ प्रयोगहोमजपयोः संख्यामाह**

अयुतं होमसंख्या स्याज्जपस्तावत्प्रकीर्त्तितः ।
तर्पणादिस्तथैवोक्तं संख्यानुक्ते मनीषिभिः ॥ ३४६ ॥
प्रयोगो नैव कर्तव्यः साधकैः सिद्धिकाङ्क्षिभिः ।
प्रयोगान्नरकप्राप्तिः परलोको न वर्त्तते ॥ ३४७ ॥
प्रयोगाच्छापमाप्नोति प्रायश्चित्ती तु साधकः ।
प्रयोगदोषशान्त्यर्थं लक्षमात्रं जपेन्मनुम् ॥ ३४८ ॥
मारणोच्चाटनद्वेषं लक्षमात्राच्छुचिर्भवेत् ।
वश्याकरणस्तम्भादौ लक्षं वाऽप्ययुतं जपेत् ॥ ३४९ ॥

**अथ प्रसक्ताद् विविधप्रायश्चित्तमाह –**

श्रृणु देवि प्रवक्ष्यामि प्रायश्चित्तविधिं तव ।
गुरुत्यागकरः शिष्यः प्रायश्चित्ती भवेद् ध्रुवम् ॥ ३५० ॥
लक्षं श्रीपादुकां जप्त्वा तस्मात्पापाद् विशुध्यति ।
मन्त्रत्यागकरो यस्तु तत्सङ्गं वर्जयेत्सुधीः ॥ ३५१ ॥
लक्षमेकं जपेन्मन्त्रं होमतर्पणतः शुचिः ।
सर्वेषामेव पापानां सङ्कटे समुपस्थिते ॥ ३५२ ॥

प्रायश्चित्तं विजानीयादयुतं मन्त्रजापतः।
नित्यादिक्रमदोषाणां शान्त्यै विद्याशतं जपेत् ॥ ३५३ ॥
नैमित्तिकातिक्रमणे सहस्रं प्रजपेन्मनुम्।
यदि दैवात्पशोर्विद्या लभ्येत कुलजैर्नरैः ॥ ३५४ ॥
द्विजस्तु कौलिकं प्राप्य पुनर्विद्यामुपालभेत्।
शकलो बीजहीनस्तु सन्दिग्धो निन्दितस्तथा ॥ ३५५ ॥
मनवस्तु न सिध्यन्ति गुरुः स्याद् ब्रह्मवादकः।
तदा तु सहसा ज्ञात्वा मन्त्रं देवं गुरुं त्यजेत् ॥ ३५६ ॥
लक्षत्रयं जपेल्लोपां लक्षं वाऽप्यजपां जपेत्।
होमयेद्धविषान्नेन निष्पापः स्यात् तथा ध्रुवम् ॥ ३५७ ॥
एकपात्रे पिवेद्द्रव्यं वीरो माहेश्वरो यदि।
श्वानोच्छिष्टं भवेत्पानं प्रायश्चित्ती स कौलिकः ॥ ३५८ ॥
गायत्र्यास्तु सहस्रेण उपवासत्रयेण च।
सम्यक्शोधितचित्तस्तु सुवर्णं गुरवे ददेत् ॥ ३५९ ॥
बलात्स्वरसतो वाऽपि यो रमेन्मन्त्रमातरम्।
दशलक्षं मनुं जप्त्वा तुषानलं समाचरेत् ॥ ३६० ॥
मन्त्रपुत्र्याः स्वपुत्र्याश्च भगिन्याश्च कुलस्त्रियः।
रमणाल्लक्षजापेन पूतो भवति कौलिकः ॥ ३६१ ॥
कृत्वा वीरवधं मन्त्री वृथापानं गुरोः स्नुषाम्।
मन्त्रपुत्रीं वीरपत्नीं रमित्वा लक्षमाजपेत् ॥ ३६२ ॥
अनस्थिप्राणिसंघाते हत्वा च नरकं व्रजेत्।
हत्वा च पक्षिणः सर्वान् स्त्रियं चैकादशं जपेत्॥ ३६३ ॥
सर्पमार्जारनकुलमूषमुष्ट्रखरान् हयम्।
गजांञ्चाथ मृगान् सर्वान् हत्वा चाष्टशतं जपेत्॥ ३६४ ॥
जपेदष्टासहस्रं तु क्षुद्रजन्तुवधे कृते।
बलिदानं विना मन्त्री पातयेन्न पशून् क्वचित् ॥ ३६५ ॥
अन्यथा स्मार्तमुदितं प्रायश्चित्तं मनीषिभिः।
गोवधे दशभिर्लक्षैर्मुच्यते नरकार्णवात् ॥ ३६६ ॥
लक्षैर्द्वादशभिर्मन्त्री वृषं हत्वा विमुच्यते।
गुरुं हत्वा प्रमादेन पञ्चलक्षैर्भवेच्छुचिः ॥ ३६७ ॥

दशभिः कोटिभिर्मन्त्री स्त्रीवधात्प्रविमुच्यते ।
प्रमादात्पतिते विप्रे लक्षैर्विंशतिभिः शुचिः ॥ ३६८ ॥
क्षत्रादयो यथोक्तेन मुच्यते किल्विषादितः ।
ब्राह्मणस्य वधे लक्षं क्षत्रिये द्विगुणं स्मृतम् ॥ ३६९ ॥
वैश्ये त्रिगुणमुद्दिष्टं पादजे च चतुर्गुणम् ।
अर्हद्बौद्धवधे मन्त्री साब्धिलक्ष्यं मनुं जपेत् ॥ ३७० ॥
वभ्रोश्च शूकराणां च वधे पञ्चसहस्रकम् ।
पक्षिणां हनने मन्त्री द्विसहस्रेण शुध्यति ॥ ३७१ ॥
सर्पमार्जारमत्स्यानां वधे वेदसहस्रकम् ।
देवद्रोहाद् गुरुद्रोहात्त्रिंशत्कोटिमनुं जपेत् ॥ ३७२ ॥
देवद्रव्यं गुरुद्रव्यं भुक्त्वा तावन्मनुं जपेत् ।
निन्दने समयानाच्च योगिनीवीरयोः शिवे ॥ ३७३ ॥
शास्त्राणां मन्त्रिणां स्त्रीणां सहस्रं जपमाचरेत् ।
वामदक्षिणसिद्धान्ते शैवव्रतधरे हते ॥ ३७४ ॥
चतुः कोटिमितं मन्त्री जपे शुध्यति किल्विषात् ।
अर्घ्यादि-निन्दने मन्त्री दशावर्त्तेन शुध्यति ॥ ३७५ ॥
अर्घ्यामृतं पिवेत्पूर्वं देवीमुत्थापयेत्ततः ।
पशुपानं भवेत्तस्य तत्क्षयो लक्षतो भवेत् ॥ ३७६ ॥
अनिवेद्य तु यो भुङ्क्ते प्रजपेत्सतताष्टकम् ।
वीरपत्नीं वृथापानं वीरपुत्रीं स्नुषां तथा ॥ ३७७ ॥
प्रायश्चित्तं चरेन्मन्त्री दिव्यवीरार्चनादिकम् ।
दीपनाशे पात्रनाशे पात्रप्रस्खलने तथा ॥ ३७८ ॥
पूजयित्वा महादेवीं जपेदष्टोत्तरं शतम् ।
अज्ञानादेतदुच्छिष्टं जानतो द्विगुणं भवेत् ॥ ३७९ ॥
दग्धं च स्फुटितं यन्त्रं ह्रूतश्चौरेण वा प्रिये ।
विदीर्णं घृष्टरेखं चेदुपायं च श्रृणु प्रिये ॥ ३८० ॥
लक्षमात्रं जपेद्विद्यां होमतर्पणपूर्विकाम् ।
सद्भक्त्या च गुरुन्तोष्य ब्राह्मणानपि भोजयेत् ॥ ३८१ ॥
शक्तिपूजां ततः कुर्यात्कुर्यादष्टाष्टकं बुधः ।
पञ्च पञ्चककं वाऽपि कालीतारानुसारतः ॥ ३८२ ॥

कदाचिल्लुप्तचिन्हं वा स्फुटितादिविभूषणम्।
भग्न नष्टकरो मर्त्यो मृत्युस्तस्य भवेद्ध्रुवम् ॥ ३८३ ॥
तस्मात् सत्तीर्थराजे वा गङ्गादिसरितां वरे।
समुद्रे वा क्षिपेद्देवि अन्यथा दुःखमाप्नुयात् ॥ ३८४ ॥
विद्यामात्रे त्विदं कार्यं विशेषं श्रृणु सादरम्।
लिङ्गे बाणे नर्मदोत्थे पञ्च युग्म न दूष्यति ॥ ३८५ ॥
शलाका यदि नो भग्ना तदा लिङ्गं न दूष्यति।
शालग्रामशिलामात्रभङ्गेन मृत्युकरो भवेत् ॥ ३८६ ॥
भूमौ पादकराघाते नेत्रादि मस्तके शिवे।
हृदयान्यतमे यत्र सर्वं नश्यति पार्वति ॥ ३८७ ॥
तां मूर्त्तिं विसृजेद्देवि पुनर्मूर्त्तिं समाचरेत्।
महाविद्याविधौ देवि विशेषं श्रृणु सादरम् ॥ ३८८ ॥
यतो देवा गता देवि तद्देशं तत्स्थलं त्यजेत्।
प्रायश्चित्तं ततः कृत्वा सुखमाप्नोति साधकः ॥ ३८९ ॥
बालामानीय कौमारीं चार्वङ्गीं चारुचर्चिताम् ।
प्रसूनमञ्चे संस्थाप्य साङ्गां सावरणां यजेत् ॥ ३९० ॥
देव्याः स्वरूपं देवेशि तद्वत्तस्याः स्वरूपकम्।
विभाव्य प्रजपेद्देवि संप्रदायानुसारतः ॥ ३९१ ॥
उपवासं प्रकुर्वीत दिनमेकमतन्द्रितः।
लक्षमात्रं जपेन्मन्त्रं जपतर्पणभेदतः ॥ ३९२ ॥
कुमार्यामेव संपूज्य तत्तद्दीपान् समाचरेत्।
त्रिशक्तिपरविद्यादौ दीपराजं समाचरेत् ॥ ३९३ ॥
दीपाग्रे दीपिनीं जप्त्वा दोषहीनस्तदा भवेत्।
सिन्दूरेण कृतं यन्त्रं मूलेनावेष्ठितं ततः ॥ ३९४ ॥
तत्कोणे कुल्लुकां लिख्य तत्र दीपं समाचरेत्।
अष्टगन्धेन केनापि गन्धेन धुसृणेन च ॥ ३९५ ॥
दिव्यवर्णेन देवेशि तेन सिद्धीश्वरो भवेत्।
पश्चिमाभिमुखं दीपपात्रं त्रिपलमात्रकम् ॥ ३९६ ॥
सौवर्णं राजतं ताम्रं मार्त्तिक्यं धातुजं भवेत्।
दीपं कृत्वा प्रयत्नेन एकविंशतितन्तुभिः ॥ ३९७ ॥

त्रिपञ्चनवरुद्रैश्च वितस्तिवर्त्तिकां चरेत्।
गोघृतेन पलाष्टेन आज्यपात्रं समाचरेत् ॥ ३९८ ॥
चतुरङ्गुलमुच्छ्रायां सार्धाङ्गुलसमन्वितम्।
वधूं गुणाङ्गुलप्रोक्तं कवचं सप्तधा चरेत् ॥ ३९९ ॥
दीपे स्वदेवीं संपूज्य साङ्गां सावरणां शिवे।
एवं क्रमेण देवेशि सिद्धिमाप्नोति साधकः ॥ ४०० ॥
बलिदानं ततः कुर्यात्सात्त्विकादिप्रभेदतः।
आपदुद्धारकं जप्त्वा दोषहीनो नरो भवेत् ॥ ४०१ ॥
अयं च नित्यदीपो हि त्रिशक्तिविषये मतः।
प्रायश्चित्तप्रसङ्गेन कीर्तितः परमेश्वरि ॥ ४०२ ॥
एवं दोषविनिर्मुक्तः पुनर्यन्त्रं समाचरेत्।
उक्तसंस्कारमासाद्य स्वगुरूक्तेन वर्त्मना ॥ ४०३ ॥
महाविद्याविधौ प्रोक्तं शैववैष्णवयोः शृणु।
उपोष्य रजनीमेकामघोरं लक्षमात्रकम् ॥ ४०४ ॥
तद्दशांशं होमकर्म दोषहीनस्ततो भवेत्।
सुदर्शनं वैष्णवे तु सौरं हंसं जपेच्छिवे ॥ ४०५ ॥
गाणपे श्रीहरिद्राख्यं जप्त्वा सिद्धीश्वरो भवेत्।
अन्यथा कुरुते यस्तु तस्य पातो भविष्यति ॥ ४०६ ॥
अयुतत्रयमिच्छन्ति दिव्यौघाश्चात्र पार्वति।
कौलिकः पशुगामी च परशक्तिं रमेद्बलात् ॥ ४०७ ॥
गोष्ठीमध्ये च यत्नेन स्पर्शं तस्या न कारयेत्।
अभिषेके विनाभूते आचार्यत्वं करोति यः ॥ ४०८ ॥
योनिकोटिशतां याति रौरवं नरकं व्रजेत्।
मातृरूप्रं परित्यज्य स्त्रीरूपं शक्तिमादरात् ॥ ४०९ ॥
स याति नरकं घोरं जन्मकोटिशतानि च।
परं लक्षत्रयं जप्त्वा अजपां लक्षमेन च ॥ ४१० ॥
तूर्याबीजं पञ्चलक्षां ततः शुद्धिं समाचरेत् ॥ ४११ ॥[६]

---

६ मातृका क. अधिकः पाठः-

**शिव उवाच -**

यन्त्रं नष्टं च स्फुटितं तज्ज्ञो यः कथ्यते शृणु।
कुमारीं च समानीय चार्वङ्गीं चारुहासिनीम्॥

++

++

++

[7]मा. ख विशेषः –

## अथ मालापतनादौ प्राययिश्चत्तमाह –

प्रमादान्मालिकाभङ्गे प्रायश्चित्तं समाचरेत्।
रहस्यमालाभङ्गे तु दद्याच्छागवलिं नरः ॥ ४१२ ॥
अग्निदग्धेऽपि लक्षं च नष्टे भग्ने द्विलक्षकम्।
चौरनीते षट्सहस्रं पतिते त्रिशतं जपेत् ॥ ४१३ ॥
कराद्भ्रष्टे शब्दकृते प्रजपेद्विशतं शतम्।
जीर्णसूत्रे पुनः सूत्रं ग्रथयित्वा शतं जपेत् ॥ ४१३ ॥
पुरश्चर्याजपे होमे माला हस्तच्युता यदि।
प्रायश्चित्तं शतं जप्त्वा तद्दशाांशं प्रवर्धनम् ॥ ४१४ ॥
त्यजेद्दशाशं तज्जापं प्रायश्चित्तक्रमेण च।
केचिदत्र च इन्छन्ति पुरश्चर्या पुनर्भवेत् ॥ ४१५ ॥
प्रायश्चित्ते शतं जप्त्वा पुरश्चर्यां पुनश्चरेत्।

---

प्रसूनपीठे संस्थाप्य न्यासजालं प्रविन्यसेत्।
पात्रासादनमासाद्य तां बालां पूजयेत्ततः॥
नवीनकं समारभ्य कामवर्षान्तके शिवे।
तावद्बाला निगदिता ताराकालीसमा कलौ॥
तां संपूज्य महेशानि दोषमुक्तो नरो भवेत्।
मूलाधारान्मस्तकान्तं समालोक्य विभाव्य च।
ध्यानोक्तदेवतां ध्यात्वा साङ्गां सावरणां शिवे ॥
संपूजयेन्महेशानि देवताभावतत्परः॥
तया यदुक्तं देवेशि तदेव वरदानकम्।
सा तत्र वरदा चेत्स्याद्देवता वरदा ध्रुवम्॥
तस्या देहे वसेद्देवी नात्र कार्या विचारणा।
अविकारेण मनसा पूजयेन्निजदेववत्॥
सर्वाश्चैव महाविद्या स्रद्दाने शक्तिदेहगाः।
सा चेत्क्रुद्धा यदा भूयाद्देवता क्षोभमाप्नुयात्।
एवं क्रमेण देवेशि संपूज्य निजदेवताम्।
यन्त्रदोषविनिर्मुक्तः पुनर्यन्त्रं च संग्रहेत्॥

७ अयं पाठो मा. ख न वर्तते।

त्रुटिते मेरुमूले तु स्त्रीनाशं तस्य चादिशेत् ॥ ४१६ ॥
त्रुटिता चेत् स्वयं माला प्रायश्चित्तं समाचरेत् ।
गजान्तकसहस्रं तु जपहोमान् समाचरेत् ॥ ४१७ ॥
पुनः संग्रथनं कृत्वा प्राणस्थापनपूर्वकम् ।
तदा माला सिद्धिदा स्यात् नान्यथा शाङ्करं वचः ॥ ४१८ ॥[८]

*इति श्रीतन्त्रचिन्तामणौ काम्यार्चनायां श्यामादि प्रत्येकविद्याविशेषप्रयोगकथनपूर्वकः प्रायश्चित्तान्तनिर्णयनामाष्टत्रिंशत्तमः प्रकाशः ।*



८ श्लोकः ४१४-४१८ मा. ख न प्राप्यन्ते ।

# उनचत्वारिंशत्तमः प्रकाशः

अथ [1]श्यामायास्तारायाश्च सर्वफलप्रदसाम्राज्यमुद्रिकादिधारणात्मकयन्त्रमप्याह –

**श्रीदेव्युवाच**

सौभाग्याभरणं देव ममाग्रे कथय प्रभो ।

**श्रीशिव उवाच**

रहस्यं कथ्यते देवि गोप्याद् गोप्यतरं कुरु ॥ १ ॥
पुरुषस्य तथा स्त्रीणां बालकानां विशेषतः ।
धारणात्सिद्धिदं देवि यन्त्रं च भूषणं वरे ॥ २ ॥
कर्णयुग्मे च मुकुटे बाह्येश्च मणिबन्धके ।
कराङ्गुलिषु पादाभ्यां धारणात्फलदं शिवे ॥ ३ ॥
[1]वामवाहौ विशेषेण पुरुषस्य महेश्वरि ।
स्त्रीणां दक्षकरे धार्यं बालानां हृदये शिवे ॥ ४ ॥
कराङ्गुलिषु संधार्य सर्वं जयति मानवः ।
कूर्मपृष्ठं समासाद्य कोष्ठानां नवकं लिखेत् ॥ ५ ॥
मध्ये कोष्ठे भवेज्जीवो चैन्द्रे चैव मुखं भवेत् ।
बाहुद्वयं च परितः कुक्षियुग्ममधः शिवे ॥ ६ ॥
तदधः पादयुग्मं स्याद् गुह्यं तत्पादगोचरम् ।
विन्यासः कथ्यते देवि साम्राज्यमुद्रिकामनोः ॥ ७ ॥
साम्राज्यमुद्रिका नाम तारा-काली मया परा ।
वाजिगत्या हस्तिगत्या मृगगत्या महेश्वरि ॥ ८ ॥
सर्पगत्या भेकगत्या मंन्त्रिगत्याऽपि भृत्यता ।
एतद्रित्या महेशानि लिखेद् यन्त्रमनन्यधीः ॥ ९ ॥
गजगत्या जयार्थे च वाजिगत्या पराक्रमे ।
मृगगत्या शत्रुनाशे सर्पगत्या तु मारणे ॥ १० ॥

---

१ वामवाहौ इत्यतो मानव इत्यन्तः पाठो मा. ख न प्राप्यते ।

भेकगत्या तु विद्वेषं मन्त्रिगत्या तु मोहने।
भृत्यगत्या सर्वकार्ये गतिरेषा सनातनी ॥ ११ ॥
मध्यकोष्ठं समारभ्य विन्यासः कथ्यते श्रृणु।
आदौ परा तत्परा च तदतीता तृतीयका ॥ १२ ॥
चित्परा तु चतुर्थी च तत्परा पञ्चमी स्मृता।
तदतीता रसाख्या तु सर्वातीता तु सप्तमी ॥ १३ ॥
कला सप्तक संयुक्तः प्रणवः परिकीर्त्तितः।
ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः ॥ १४ ॥
शान्तिश्च तदतीता च अकारोकारमेव च।
मकारो नादबिन्दुश्च तदतीता तदुत्तरा ॥ १५ ॥
बिन्दुतीता सप्तमी स्यान्मध्यकोष्ठे समास्थिता।
चन्द्रो मुखे महेशानि टंकास्त्रं तच्च कीर्त्तितम् ॥ १६ ॥
दक्षवाहौ महेशानि रुद्रसंस्था प्रकीर्त्तिता।
हकारश्च रकारश्च ईकारश्चन्द्रबिन्दुमान् ॥ १७ ॥
बिन्द्वतीता तु षष्ठिः स्याच्छैवशाक्तक्रमेण च।
गुह्यभागे महेशानि स्त्रीबीजान्वितरूपिणी ॥ १८ ॥
उग्रोग्रचण्डा चामुण्डा चण्डोग्रा चण्डघण्टिका।
महोग्रतारा उग्रेशी त्रिजटैकजटा स्मृता ॥ १९ ॥
क्रूरचण्डा घोरचण्डा वीरोग्रा वीरतारिणी।
सर्वापत्तारिणी तीव्रा चीनतारा शवेश्वरी ॥ २० ॥
सिद्धितारा ऋषितारा घोरतारा परास्मृता।
उग्रोग्रतारा देवेशि रणोग्रा चांश गोचरा ॥ २१ ॥
त्रिकोणकोष्ठमालम्ब्य स्त्रीबीजं च व्यवस्थितम्।
वामपादं समारभ्य वामवाह्वन्तगं शिवे ॥ २२ ॥
बीजं द्विपञ्च संव्याप्य सदा तिष्ठति पार्वति।
चन्द्रघण्टा चण्डघण्टा वीरघण्टा सुघण्टिका ॥ २३ ॥
राजघण्टा मोहघण्टा घोरघण्टा रणाभिधा।
शवघण्टा चीनघण्टा सिद्धिघण्टा तथा परा ॥ २४ ॥
घण्टोग्रघण्टा मुण्डाख्यघण्टाविद्याभिधानतः।
सैन्यघण्टा जयाख्या च मोहवश्या तथैव च ॥ २५ ॥
आकर्षणाख्या घण्टा तु विंशसंख्याभिधानतः।

सार्धपञ्चाक्षरं व्याप्य यन्त्रमेतत् सदा स्थितम् ॥ २६ ॥
पञ्चावरणदेवाश्च सर्वे चात्र वसन्ति च।
एतद्यन्त्रं तु सन्धार्य त्रैलोक्यविजयी भवेत् ॥ २७ ॥
पङ्क्तिश्च क्रमयोगेन सर्वाख्यगतिभार्गवः।
मायायुग्मं कूर्चयुग्मं कालीबीजत्रयं ततः ॥ २८ ॥
दक्षिणे कालिके मायाबीजयुग्मं च कूर्चयुक्।
कालीश्यामा महाविद्या विंशद्रत्नाभिधा मता ॥ २९ ॥
कालामारभ्य देवेशि कुटिलालकदेवताः।
यावत्स्याद्देवदेवेशि तावद्व्याप्य प्रतिष्ठति ॥ ३० ॥
त्रितयं द्वितयं देवि त्रितयं तु क्रमेण तु।
व्याप्य श्रीकालिकाविद्या सर्वावरणसंगता ॥ ३१ ॥
साम्राज्यमुद्रिकां व्याप्य सदा तिष्ठति पार्वति।
अधिष्ठात्री भवेत्तारा काली प्रत्यधिदेवता ॥ ३२ ॥
आकर्षदेवताघण्टा त्रैलोक्यविजयाभिधा।
प्रयोगविद्या देवेशि गदिता परमेश्वरि ॥ ३३ ॥
एतस्या धारणाद्देवि किन्न यत्तत्करे स्थितम्।
एतस्य वर्त्तनाद्देवि पृथ्वीपति पदं लभेत् ॥ ३४ ॥
सृष्टिकर्ता भवेद्देवि पञ्चलक्षक्रमेण च।
कोट्यावर्त्तनमात्रेण कालीरूपो न संशयः ॥ ३५ ॥
अष्टबन्धयानाशनं च धारणान्नश्यति ध्रुवम्।
ब्रह्माण्डगोलके या च या काचिज्जगतीतले ॥ ३६ ॥
समस्ताः सिद्धयो देवि तस्य हस्ते व्यवस्थिताः।
अधोमुखस्तथा ह्यधोमध्ये यद्यपि तिष्ठति ॥ ३७ ॥
इदृग्विधोऽपि देवेशि गर्भे तिष्ठति निश्चितम्।
बालवो मरणासन्नस्तस्य यन्त्रे तु बन्धयेत् ॥ ३८ ॥
मृत्युवाधाविनिर्मुक्तश्चिरञ्जीवी भवेद्ध्रुवम्।
नेदं प्रकाशयेद् धीमान् यत्र कुत्रापि पार्वति ॥ ३९ ॥
घण्टाख्यं श्रृङ्खली कृत्वा मणिबन्धे करद्वये।
गते पादद्वये देवि बन्ध्ययन्त्रेण काम्यकृत् ॥ ४० ॥
प्रतिमां बन्धयेद्वापि श्रृङ्खलां केवलां च वा।
मुद्रिकां श्रृङ्खलां वाऽपि मुद्रिकां केवलां च वा ॥ ४१ ॥

वामपञ्चाङ्गुलौ धार्यं दक्षपञ्चाङ्गुलौ तथा ।
मस्तके च तथा बाहौ धारयेन्मुद्रिकामिमाम् ॥ ४२ ॥
त्रैलोक्ये विजयी भूयान्नात्र कार्या विचारणा ।
श्रृङखलाधारणाद्देवि किन्तद्यन्न करेस्थितम् ॥ ४३ ॥
श्रृङ्खला दुर्गसंयुक्ते पुरुषे यः कार्मणी चरेत् ।
तस्य स्वप्नगतं देवि कार्मणं भवति ध्रुवम् ॥ ४४ ॥
तद्भवेद् विपरीतं च नात्र कार्या विचारणा ।
कर्णाभरणमध्ये तु रत्नचक्राणि धारयेत् ॥ ४५ ॥
मुद्रिकां वा लिखेद्देवि देवीरूपा तु सा भवेत् ।
दुर्भगा सुभगा भूयात्सुभगा देवता भवेत् ॥ ४६ ॥
त्रिवेण्या हृदये देवि तत्तद्भूषणरूपतः ।
पूर्वसिद्धानि यन्त्राणि धारयेत्परमेश्वरि ॥ ४७ ॥
सिद्धरूपौ भवेत्सा हि नात्र कार्या विचारणा ।
यन्त्रसिद्धानि रत्नानि धारयेत्तानि पार्वति ॥ ४८ ॥
सर्वसौभाग्यसंयुक्ता लक्ष्मीरूपा भवेच्छिवे ।
हृदये सर्वदा धार्या यन्त्रप्रतिकृतिर्वरा ॥ ४९ ॥
तेन सिद्धा जगन्माता सर्वकार्यार्थसाधिनी ।
बाहुमूले यन्त्रमेतच्छृङ्खलासंयुतं यदा ॥ ५० ॥
यो धारयति देवेशि तस्य श्रीः सर्वतोमुखी ।
राज्यलक्ष्मीः कीर्त्तिलक्ष्मीर्वल्लभः साधको भवेत् ॥ ५१ ॥
स्त्रीणां दीक्षा प्रदेया स्याद्यथायोगेन पार्वति ।
दीक्षां दत्त्वा महेशानि तस्यै यन्त्रं भवेच्छिवे ॥ ५२ ॥
तदैव यन्त्रसिद्धिः स्यान्नात्र कार्या विचारणा ।
पञ्चवर्तनमात्रेण सर्वदुःखविनाशनम् ॥ ५३ ॥
रसावर्त्तेन मात्रेण सर्वं जगति वश्यकृत् ।
वसुमावर्त्तयेद्यन्त्रं क्षत्रपालसमो भवेत् ॥ ५४ ॥
नवावर्त्तनमात्रेण नवनाथसमो भवेत् ।
दशावर्त्तनमात्रेण पूर्वं दशमुखो यथा ॥ ५५ ॥
एकादशावर्त्तनात्तु सर्वभूतविनाशनम् ।
पक्षावर्त्तनमात्रेण व्याघ्रभीतिविनाशनम् ॥ ५६ ॥
अष्टादशावर्त्तनात्तु सर्वबाधाविनाशनम् ।

विंशद्वारं समावर्त्त्य सर्वं पश्यति चक्षुषा ॥ ५७ ॥
पञ्चविंशावर्त्तनात्तु ग्रहभीतिविनाशनम् ।
चत्वारिंशावर्त्तनाद्धि क्षयरोगविनाशनम् ॥ ५८ ॥
मण्डलावर्त्तनात्सत्यं मण्डलेशो नरो भवेत् ।
षष्ठिरावर्त्तयेद्यस्तु तस्य सिद्धिर्भवेद् ध्रुवम् ॥ ५९ ॥
सप्तत्यावर्त्तनाद्देवि सप्त सकाशरूपधृक् ।
असित्यावर्त्तनेनैव सर्वदुःखानि नाशयेत् ॥ ६० ॥
नवत्यावर्त्तनेनैव वाञ्छितकर्मसाधनम् ।
शतावर्त्तनमात्रेण ह्यासनं परिकीर्त्तितम् ॥ ६१ ॥
द्विशतावर्त्तनाद्देवि सुभगस्रो नरो भवेत् ।
दुःखं नयति देवेशि शतपञ्चकयोगतः ॥ ६२ ॥
सहस्रावर्त्तनाद्देवि सहस्रं लभते ध्रुवम् ।
त्रिसहस्रं लिखेद्यन्त्रं राजपत्नीवशं भवेत् ॥ ६३ ॥
सहस्रपञ्चकेनैव पृथिव्यां जयमाप्नुयात् ।
दिक्सहस्रावर्त्तनाद्धि शक्तिपातप्रयोगधृक् ॥ ६४ ॥
पठेद् विंशतिसाहस्रं यो मुद्रां भावयेन्नरः ।
नारायणसमोऽपि स्याद्दशरूपो न संशयः ॥ ६५ ॥
सहस्राणां तु पञ्चाशद्यन्त्रमावर्त्तनं यदि ।
अणिमाद्यष्टसिद्धीनामधीशो जायते नरः ॥ ६६ ॥
लक्षावर्त्तनमात्रेण त्रैलोक्यविजयी भवेत् ।
लक्षद्वयावर्त्तनात्तु चतुर्विंशतिसिद्धिभुक् ॥ ६७ ॥
पञ्चलक्षप्रयोगेण प्रेतप्रेतेश्वरो भवेत् ।
दशलक्षं लिखेद्यन्त्रं सम्राट् भोक्ता नरो भवेत् ॥ ६८ ॥
पञ्चलक्षं लिखेद्यन्त्रं सर्वं पश्यति चक्षुषा ।
पञ्चविंशतिलक्षैश्च वरदानमवाप्नुयात् ॥ ६९ ॥
अन्यस्य वरदानत्वं तस्य हस्ते व्यवस्थितम्
शिरो देयं गृहं देयं राज्यं देयं पदे पदे ॥ ७० ॥
न देयं यन्त्रवर्यं च कस्मैचिदपि पार्वति ।
एतस्य ज्ञानमात्रेण त्रैलोक्यं जयति प्रिये ॥ ७१ ॥
अहो यन्त्रस्य माहात्म्यं मया वक्तुं न शक्यते ।
अहो धन्यमहो धन्यं यत्र ज्ञानान्निरन्तरम् ॥ ७२ ॥

पुरश्चर्यायुतानां च फलमेतन्मयेरितम्।
दशसाहस्रकं देवि पुरश्चर्या प्रकीर्तिता ॥ ७३ ॥
उग्रापत्तारिणी यस्माद्दुर्गतारा प्रकीर्तिता।
तस्याः प्रत्यक्षरूपत्वात्तारा मुद्रा प्रकीर्तिता ॥ ७४ ॥
साम्राज्यमुद्रा नाम्ना तु काली तारामयी परा।
भूर्जे वा कागततले ताम्बूले कदलीदले ॥ ७५ ॥
प्रत्यहं विलिखेन्मस्या दशयन्त्राणि पार्वति।
सर्वशत्रुविनाशत्वं कुर्यादितदुपासकः ॥ ७६ ॥
शत्रुसैन्यविनाशश्च नानारूपेण जायते।
शिरः कम्पो ज्वरो दाहो कलहश्च परस्परम् ॥ ७७ ॥
अग्निवायुभवा पीडा तथा मारीभयं प्रिये।
चतुर्दशदिनैरेव कुर्यादितद्दुपासकः ॥ ७८ ॥
राज्यं जयति देवेशि प्रत्यहं शतमात्रकः।
सहस्रं प्रत्यहं लेख्यं राज्यदाता भवेन्नरः ॥ ७९ ॥
नवधा विलिखेद्देवि चतुर्द्वीपेश्वरो भवेत्।
भूमौ दशसहस्रं च यन्त्रं लिख्य प्रयत्नतः ॥ ८० ॥
प्रतिवारं भर्जयेद्धि दीक्षासिद्धिमवाप्नुयात्।
भूमौ विलिख्य देवेशि यन्नाम्ना मार्जयेत्कृती ॥ ८१ ॥
तमेवाकर्षयेद्देवि मार्गमार्गस्थितोऽपि यः।
विशेषेण लिखेद् भूमौ दाहयेद्देवि चास्य तत् ॥ ८२ ॥
अष्टोत्तरसहस्रं च कृत्वा रामां वशं नयेत्।
सिन्दूरेण लिखेद् भूमौ तर्जन्या मार्जयेत्कृती ॥ ८३ ॥
तर्जनीधारणाद्देवि यत्फलं पाठकीर्त्तितम्।
तत्फलं समवाप्नोति नात्र कार्या विचारणा ॥ ८४ ॥
तत्र स्थानेषु देवेशि धारणाल्लेखनादपि
मार्जनादपि देवेशि तदेव फलमाप्नुयात् ॥ ८५ ॥
फलपत्रादिपुष्पाणां होमयेत्फलमीरितम्।
तत्फलं पूजनेनापि फलं नैवेद्यतोऽपि च ॥ ८६ ॥
स्वस्या शक्तौ प्रतिनिधिद्वारा वा कारयेत्कृती।
भ्राता पुत्रः पिता माता स्नुषा वा रमणी तथा ॥ ८७ ॥
पौत्रो गुरुस्तत्सुतश्च प्रोक्तः प्रतिनिधिर्नव।

भ्रातादि पौत्रपर्यन्तं दीयादाभरणानि च ॥ ८८ ॥
सर्वस्वदानं गुर्वादौ अन्येषु च विशेषतः ।
उपासनायां देवेशि प्रतिनिधिनवं स्मृतम् ॥ ८९ ॥
साम्राज्यहोमे देवेशि तथा पोषणकर्मणि ।
प्रोक्ताः प्रतिनिधिर्देवि स्वस्य कृत्यं स्वयं चरेत् ॥ ९० ॥
यथाऽथर्वणविद्याद्यौ सूक्ते सूक्तं च होमयेत् ।
ऋग्वेदे ऋक्समाख्याता जपहोमविधौ यथा ॥ ९१ ॥
यथा प्रतिनिधिः प्रोक्तस्तथाऽत्र न प्रकीर्त्तितः ।
यन्त्रं संसाधयेद्देवि सर्वसिद्धिप्रदायकम् ॥ ९२ ॥
स्वर्णे रौप्ये शिरोवस्त्रे कटिवस्त्रे तथा वृगौ ।
गारुडे पद्मरागे च पुष्परागे विशेषतः ॥ ९३ ॥
गोमेदे हीरके नीलवैदूर्ये परिषेऽपि च ।
चतुर्विधे हीरके तु तथा स्पर्शे चतुर्विधे ॥ ९४ ॥
प्रबाले धारयेद्देवि यथोक्तफलमाप्नुयात् ।
स्वर्णे सर्वार्थसिद्धिः स्याद् रौप्ये सुतसमृद्धिमान् ॥ ९५ ॥
वस्त्रे संधारणाद्देवि दिव्यकायो नरो भवेत् ।
शिरोवस्त्रे तु संधार्य त्रैलोक्यरक्षणाय च ॥ ९६ ॥
त्रैलोक्यमोहनायापि वैरिनिर्दलनाय च ।
कटिवस्त्रे लिखेद्देवि वायुतुल्यो बली भवेत् ॥ ९७ ॥
तथावरणवस्त्रेषु कामतुल्यस्वरूपधृक् ।
त्रैलोक्यविजयत्वं च भवेद् भानुसमो शिवे ॥ ९८ ॥
पद्मरागे शत्रुहर्ता जयकर्ता महामतिः ।
महेन्द्रसदृशो भूयान्नात्र कार्या विचारणा ॥ ९९ ॥
पुष्परागे लिखेन्मुद्रां धारयेत्पूर्ववत्प्रिये ।
सूर्यकोटिप्रतीकाशः प्रतापी कीर्त्तिमान् भवेत् ॥ १०० ॥
गोमेदे विलिखेन्यन्त्रं धारयेद्दक्षिणे करे ।
सिद्धगन्धर्वतुल्यः स्यात्काव्ये वाचस्पतिर्यथा ॥ १०१ ॥
हीरके धारयेद्यस्तु मुद्रां परमदुर्लभाम् ।
त्रैलोक्यधारको भूयाद्विद्यामधुमती जयात् ॥ १०२ ॥
जङ्गमस्थावरादीँश्च समुद्राकर्षणं भवेत् ।
नदीं पुरीञ्च रत्नानि हेमस्त्रीशैलभूरुहान् ॥ १०३ ॥

अलभ्यानि च वस्तूनि दूराद् भूमिस्थलादपि ।
त्रैलोक्याकर्षणकरा वज्रमुद्राऽपि धारणात् ॥ १०४ ॥
इन्द्रनीले लिखेन्मुद्रां धारयेत्करपङ्कजे ।
महेन्द्रसदृशो भूयाच्छक्रकर्ता नरो भवेत् ॥ १०५ ॥
एभिः स राजराजेशी प्रतापो भास्करो यथा ।
बुद्ध्या नीलसमो लोके भवत्येव न संशयः ॥ १०६ ॥
बैदूर्यं धारयेद्यस्तु किन्तद्यन्त करे स्थितम् ।
परिबोधारणाद्देवि कालीतारामयो भवेत् ॥ १०७ ॥
कालीतारास्पर्शमणेर्जपात्स्पर्शमणिं लभेत् ।
इतोऽपि सिद्धिबाहुल्यं मया वक्तुं न शक्यते ॥ १०८ ॥
प्रबाले वश्यसिद्धिः स्यात्स्फाटिके कीर्त्तिरुत्तमा ।
धारणाद्यत्फलं प्रोक्तं दुर्गमुद्रा सबीजका ॥ १०९ ॥
चतुर्विधेऽपि यन्त्रेऽपि फलमेतत्प्रकीर्त्तितम् ।
बीजयन्त्रादावपि शिवे धारयेदेवमेव तु ॥ ११० ॥
तव प्रीत्या महेशानि रहस्यमपि कथ्यते ।
स्वर्णे वर्षार्धमात्रेण फलं भवति निश्चितम् ॥ १११ ॥
रौप्ये वर्षान्तिमे देवि शिरोवस्त्रे द्विपक्षतः ।
कटिवस्त्रे त्रिपक्षे च फलं यच्छति मुद्रिका ॥ ११२ ॥
तथा वरणवस्त्रे तु फलमत्र प्रकीर्त्तितम् ।
गारुन्मते पक्षमात्रे सिद्धिर्भवति निश्चितम् ॥ ११३ ॥
पद्मरागे सप्तदिनं व्याप्य सिद्धिः प्रवर्त्तते ।
पुष्परागे षड्दिनानां युग्मात्सिद्धिर्भवेद्ध्रुवम् ॥ ११४ ॥
पञ्चरात्रेण गोमेदे मनोवाञ्छितकामदा ।
हीरके त्रिदिनेनैव वैदूर्ये दिनसप्ततः ॥ ११५ ॥
परिषे तत्क्षणादेव सिद्धिर्भवति निश्चितम् ।
इन्द्रनीले वेददिनैः सिद्धिर्भवति निश्चितम् ॥ ११६ ॥
प्रबाले मासदशकैर्मौक्तिके वसुमासतः ।
सिद्धिर्भवति देवेशि नात्र कार्या विचारणा ॥ ११७ ॥
मुद्रालाभस्तथा दुर्गमाल्पस्य तपसः फलम् ।
द्रुतः सुयोगो देवेशि कर्तृहस्तात्प्रजायते ॥ ११८ ॥
अन्ययोगं प्रवक्ष्यामि कामतः द्रव्यभेदतः ।

हरितः वत्सनाभे च दशपत्राणि लेखयेत् ॥ ११९ ॥
त्रैलोक्य निग्रहशक्तिर्दशाहेन भवेद्ध्रुवम् ।
वत्सनाभं समानीय दीपाग्रे तु प्रदर्शयेत् ॥ १२० ॥
तैलं पतति यद्भूमौ तदन्यौ घ्राणहोमतः ।
वत्सनाभं कृष्णवर्णं तैलाक्तं परमेश्वरि ॥ १२१ ॥
तेन मुद्रात्रिकं लेख्य दीपं प्रज्वालयेन्नरः ।
त्रैलोक्याकर्षणं कुर्यान्मारणोच्चाटनं च तत् ॥ १२२ ॥
पुनर्लिख्य प्रतापाद्धि पुनराकर्षयेद् ध्रुवम् ।
पुनर्भाज्य महेशानि त्रैलोक्याकर्षणं चरेत् ॥ १२३ ॥
विषेण प्रलिखेन्मन्त्री संपुटीकृत्य दीपके ।
प्रत्यहं दाहयेद्देवि त्रैलोक्यनिग्रही भवेत् ॥ १२४ ॥
विषाष्टकेन संल्लिख्य दाहयेदभिचारयेत् ।
ऊर्ध्वरेखा च वा देवि तथा पाताललेखिका ॥ १२५ ॥
वीरके परिषे नीले यथैव विलिखेत्तथा ।
कारयेद्यन्नतो देवि तले यदपि पार्वति ॥ १२६ ॥
रत्नेऽपि विलिखेद्देवि यथा कामनया प्रिये ।
पुनर्लेख्य मनुर्भाज्ये तदैव फलमश्नुते ॥ १२७ ॥
अन्यपीठादपि शिवे फलमन्त्राधिकं भवेत् ।
परिषे हीरके देवि कनिष्ठादींश्च पर्वणः ॥ १२८ ॥
मानं प्रोक्तं महेशानि गोमेदे स्यादनामिका ।
गारुन्मते मध्यमाया मध्यपर्वार्धमुद्रिका ॥ १२९ ॥
कारयेत्परमेशानि त्रैलोक्यविजयाय च ।
तर्जनीं चैव पूर्वार्ध्दं पीठं वैदूर्यसम्भवम् ॥ १३० ॥
इन्द्रनीले मध्यमाया मध्यमार्ध्वं महेश्वरि ।
पद्मरागे तु तर्जन्या मध्यमो न्यूनमेव तु ॥ १३१ ॥
पुष्परागे ह्यनामाया मध्याहेशसमो भवेत् ।
वृद्धाया मध्यमानान्न्यूना मुद्रा सुवर्णजा ॥ १३२ ॥
तदन्याद्धि सुवर्णे स्याद्रत्नवत्स्यार्ध्दरूपके ।
वर्तुलं चतुरस्रं वा वस्वस्रं च षडस्रकम् ॥ १३३ ॥
नवास्रं ध्वजरूपं वा पीठं प्रोक्तं मया तव ।
न रत्नसदृशं पीठं न भूतं न भविष्यति ॥ १३४ ॥

अन्यत्र वर्षाद्यत्सिद्धिः सा रत्ने क्षणमात्रतः।
द्रुतसिद्धिकरं पीठं रत्नपीठं महेश्वरि ॥ १३५ ॥
विंशत्यङ्के शताङ्के तु सहस्रे दिक्सहस्रके।
समीकपत्रे देवेशि कोट्यङ्के नवकोष्ठके ॥ १३६ ॥
स ब्रह्मा स शिवः प्रोक्तः स स्वराड् ईशतां व्रजेत्।
अहो ज्ञानवतां ज्ञानी मुद्रादुर्गपरायणः ॥ १३७ ॥
शिव एव महेशानि नात्र कार्या विचारणा।
एतत्सिद्धिर्महेशानि क्षणादिन्द्रत्वकारिका ॥ १३८ ॥
नवीन विष्णुनिर्माणं विधीनां दश पञ्च च।
कर्तुं शक्नोति देवेशि नात्र कार्या विचारणा ॥ १३९ ॥
शिवताण्डवतन्त्रे तु यन्त्रसिध्यभिधे परे।
अङ्कार्णवेषु सर्वेषु चथा अङ्कमणावपि ॥ १४० ॥
अक्षोभ्यं कक्षपुट्यां तु खेचरीसिद्धिनामनि।
संक्षेपेण मया प्रोक्तं विस्तारोऽत्र प्रदर्शितः ॥ १४१ ॥
नवकोष्ठशमीकाख्य यन्त्राणि सिद्धिदानि च।
पूर्वं सिद्धानि यन्त्राणि ततश्च प्रत्ययं चरेत् ॥ १४२ ॥
कोष्ठाङ्कयन्त्रं देवेशि लिख्य घर्मे प्रतापयेत्।
यन्नाम्ना तापयेद्देवि तमेवाकर्षयेद् ध्रुवम् ॥ १४३ ॥
पद्मादिनी च संल्लिख्य स्थापनीयमधोमुखम्।
तत्र स्थित्वा जपेच्छक्तिं सर्वाकर्षणकृन्नरः ॥ १४४ ॥
पञ्चाशत्पद्मपर्णाके शमीके फलमेककम्।
सर्वं हस्तगतं भूयान्नात्र कार्या विचारणा ॥ १४५ ॥
जलं स्थलगतं नौका यत्किञ्चिज्जगति गतम्।
स्त्रीरत्नं हेमरत्नादि स्वर्गे पातालमप्यगम् ॥ १४६ ॥
सर्वमाकर्षयेत्तूर्णं कालीताराप्रसादतः।
कालीताराप्रसादेन महामधुमतीं भवेत् ॥ १४७ ॥
काली तारा मया प्रोक्ता तारा काली तथा परा।
कालीकालौ कालकाली ताराऽक्षभ्यस्तथैव च ॥ १४८ ॥
अक्षोभ्य तारा देवेशि प्रत्येकं यो जपेच्छिवे।
यस्योच्चाटं भवेदादौ तत्पीठमादिसम्मतम् ॥ १४९ ॥
कालीपीठे जपेत्तारां तारापीठे तु कालिकाम्।

कालीपीठे जपेत्कालं तथैवाक्षोभ्यतारिणीम् ॥ १५० ॥
मेधा वा  कमलालक्ष्म्या वामार्धं वश्यकर्मणि ।
इत्यादि प्रोक्तमाकर्षे भगादिशक्तिपूजने ॥ १५१ ॥
पीठमेतन्मया प्रोक्तं रहस्येषु रहस्यकम् ।
गोपनीयं गोपनीयं गोपनीयं महेश्वरि ॥ १५२ ॥
अवाच्यं कुरु देवेशि स्वयोनिः परमा यथा ॥ १५३ ॥

## अथ धारणयन्त्रम्[२]

**श्रीदेव्युवाच**

राज्ञां भगवतां देव यैश्च रक्षाऽभिजायते ।
दुर्ग्रहाश्च तथा दुःखं नेच्छन्ति न द्विषः ॥ १५४ ॥
कथं स्यात्स्थिर सम्पत्तिः सन्ततिश्च कथं क्रिया ।
साधकैस्तत्रकर्तव्याः सिद्धिः केषां प्रजायते ॥ १५५ ॥

**श्रीईश्वर उवाच**

अथ यन्त्रविधिं वक्ष्ये सर्वतन्त्रेषु गोपितम् ।
सिद्धस्य लिखनादेव यन्त्रसिद्धिः प्रजायते ॥ १५६ ॥
न भावि यन्त्रकार्यं तु सिद्धं चापि तथा भवेत् ।
दुःखप्रदर्शनं पूर्वं तदा यन्त्रं न कारयेत् ॥ १५७ ॥
साधकस्य शुभे घस्रे समाराध्येष्टदेवताम् ।
स्वप्ने त्रिदिवसं भूमौ हविन्याशी जपेत्ततः ॥ १५८ ॥
एतद्यन्त्रं करिष्यामि मम तत् कीदृशं प्रभो ।
स्वप्नवदेतद्देवेशि तदङ्गत्वेन पूजनम् ॥ १५९ ॥
प्रदोषसमये कृत्वा स्वप्ने त्रिदिवसं भुवि ।
तृतीये दिवसे रात्रौ यथा स्वप्नं प्रजायते ॥ १६० ॥
तथैवाज्ञां गृहीत्वा तु सत्स्वप्नो वा  लिखेद् बुधः ।
दुःस्वप्ने वाऽथ सुस्वप्ने नैव कुर्याल्लिखेद्बुधः ॥ १६१ ॥
विलिखेध्दर्मलेखन्या गन्धाष्टकसमन्वितम् ।
दूर्वाकाण्डेन वा लेख्यं कुशमूलेन वा पुनः ॥ १६२ ॥
सुवर्णपत्रे भूर्जे वा रौप्ये वाऽप्यथ सुव्रते ।

२ मेरौ २३ प्र.

स्थलावुक्तौ भूर्जपत्रे क्षौमे वा तालपत्रके ॥ १६३ ॥
जीवसंस्थापनं यन्त्रे कुर्याद्येन फलं लभेत्।
षष्ठ्यन्तं साधकपदं मध्ये बीर्जोध्वके[३] लिखेत् ॥ १६४ ॥
द्वितीयान्तं साध्यमधः कुर द्वन्द्वं च पार्श्वयोः।
ह्सौं[४] यन्त्रस्य जीवः स्यान्मध्यभागादधो लिखेत् ॥ १६५ ॥
हंसः सोहं मनोरस्य लिखेदेकैकमक्षरम्।
ईशानादिषु कोणेषु दक्ष पार्श्वे च ईं-द्वयम् ॥ १६६ ॥
ठ-द्वयं वामपार्श्वे च पूर्वाशादौ लिखेत्क्रमात्।
लँ नँ मँ क्षँ तथा वँ यँ सँ हँ पूर्वादिके लिखेत् ॥ १६७ ॥
ईशानपूर्वयोर्मध्ये आँ ह्रीं वायव्यसोमयोः।
एवं दिक्पालबीजानि दशदिक्षु न्यसेत्क्रमात् ॥ १६८ ॥
यन्त्रराजाय विद्महे वरप्रदाय धीमहि।
तन्नो यन्त्र प्रचोदयाद्यन्त्र गायत्रिकात्वियम् ॥ १६९ ॥
एतस्याः प्रतिकाष्ठायां लिखेद्वर्णत्रयं त्रयम्।
बहिः प्राणप्रतिष्ठायां मन्त्रं सर्वत्र वेष्ठयेत् ॥ १७० ॥
एवं तु लिखितं मन्त्रं भवेत्सिद्धिप्रदायकम्।
यन्त्रं विलिख्य गुटिकां वद्ध्वा सूत्रेण वेष्ठयेत् ॥ १७१ ॥
लाक्षयाऽऽच्छादितं स्वर्णैर्रौप्ये ताम्रेऽथवा क्षिपेत्।
यद्दैवतं तु यन्त्रं स्याद्वाग्बीजेन च पूजयेत् ॥ १७२ ॥
तदभावे मातृकार्णैर्यन्त्रपूजां समाचरेत्।
अष्टोत्तरसहस्रं तु मूलं जप्त्वा हुनेद् घृतम् ॥ १७३ ॥
तत्तं पात्रेन संसिक्तं कृत्वा मन्त्रं नियोजयेत्।
मूर्ध्नि वाहौ गले वाऽपि तच्चेदिष्टार्थ सिद्धये ॥ १७४ ॥
उपास्या वा भूतलिपिर्यन्त्रसिद्धिः प्रजायते।
अक्लेशेनैव सर्वेषां मन्त्राणां सिद्धिमाप्नुयात् ॥ १७५ ॥
मन्त्रोद्धारं प्रवक्ष्यामि यन्त्रोद्धारं सबिन्दुकम्।
अक्प्रत्याहारं समुच्चार्य ऍं ऍं ऑं ऑं[५] ततो वदेत् ॥ १७६ ॥
हँ यँ रँ वँ ततो लँ वँ कँ खँ गँ घँ इति क्रमात्।
वर्गान्त्यमाद्यं द्विचतुस्त्रिवर्णांश्च चतुष्टये ॥ १७७ ॥

३ बीजार्णयो पाठो मेरौ।

४ हंसो चक्रस्य बीजं पाठो मेरौ।

५ रौं रौं डौं डौं पाठः मेरौ।

वर्गेषु प्रोच्यरेच्छेषं समेवं ह्यब्धिवर्णकम्।
ऋषिः स्याद्दक्षिणामूर्त्तिर्गायन्त्रीच्छन्द ईरितम् ॥१७८॥
वर्णेश्वरी देवतास्य षडङ्गानि समाचरेत्।
स्वरहीनैर्हयाद्यैश्च मन्त्रार्णैः पञ्चपञ्चभिः ॥१७९॥
गुदे लिङ्गे हृदि नाभौ कण्ठे भ्रूमध्यकेशयोः।
शिरसि ब्रह्मरन्ध्रे च क्रमान्यस्या नव स्वराः ॥१८०॥
ऊर्ध्वं प्राक् दक्षिणेशान पश्चिमेषु मुखेषु च।
हँ यँ रँ वँ लमिति च बीजान्यस्य ततः परम् ॥१८१॥
तथा कराग्रे मूले च कूर्परङ्गुलिसन्धिषु।
दक्ष वामक्रमेणैव ङादि वर्णं च आदिमम् ॥१८२॥
वर्गं न्यसेत्तथा पादाग्रके मूले च जानुनोः।
तथा संधावङ्गुलीनां गुल्फे सर्गादिनादिकान् ॥१८३॥
ठद्वयं पार्श्वयुगले नाभौ पृष्ठे च मादिकान्।
गुह्ये हृत्ककुदीर्मध्ये शषसान् विन्न्यसेत्क्रमात् ॥१८४॥
ततो भूतलिपिं ध्यायेत्त्रिनेत्रां चन्द्रशेखराम्।
वराक्षमालापद्मानि कपालं च दधत्करैः ॥१८५॥
लक्षं प्रजप्यादयुतं तिलैर्हुत्वा च तर्पयेत्।
एवं भूतलिपिः सेव्या यन्त्रसिद्धिः प्रजायते ॥१८६॥

## अथ कालीताराछिन्नमस्तैकसर्वसिद्धिप्रदधारणयन्त्रमाह

काली तारा छिन्नमस्ता विद्यात्रितयके पुनः।
सर्वरक्षाकरं यन्त्रं धारणार्थे वदाम्यहम् ॥१८७॥
योनियुग्मे लिखेन्मूलमन्त्रं हेमशलाकया।
क्लीवहीनान् दीर्घवर्णान् षट्कोणे विलिखेत्ततः ॥१८८॥
अष्टपत्रेष्वष्टवर्गान् तद्बहिभूपुरद्वयम्।
अष्टवर्गान् भूपुरे च विलिखेत्साधकोत्तमः ॥१८९॥
सुवर्णपट्टे भूर्जे वा रौप्ये वाऽप्यथ सुव्रते।
वेष्ठितं पीतवस्त्रेण यत्तुना परिवेष्टयेत् ॥१९०॥
बध्नीयात्पीतवस्त्रेण शिशूनां कण्ठभूषणम्।
स्त्रीणां वामभुजे चैव पुंसां वै दक्षिणे भुजे ॥१९१॥
बन्ध्याऽपि लभते पुत्रं निर्धनो धनवान् भवेत्।

इयं रक्षा पुरा बद्धा ज्ञानार्थं गौतमादिभिः ॥ १९२ ॥
कीर्त्यर्थं पार्थिवैश्चान्यै सङ्ग्रामे जयकाङ्क्षिभिः ।
वाग्भवं कुलदेवीं च तारकं वाग्भवं पुनः ॥ १९३ ॥
हृल्लेखा चास्त्रमन्त्रान्ते वह्निजायावधिर्मनु ।
अष्टाक्षरोऽप्यष्टवर्गो यन्त्राणां सार ईरितः ॥ १९४ ॥
श्यामाया विंशतेर्यन्त्रं त्रिकोणं वच्मि सुन्दरि ।
यल्लब्ध्वा सर्वदुःखेभ्यो मुक्तो भवति सर्वथा ॥ १९५ ॥
कुर्यात्त्रिकोणं विधिवत् मध्ये रेखाद्वयं लिखेत् ।
पूर्वपश्चिमतः कान्ते कोणे रेखाद्वयं पुनः ॥ १९६ ॥
पुनर्रेखाद्वयं दद्याद्देवीकोष्ठं भवेन्नव ।
पङ्क्तिर्धा मध्यकोष्ठे तु लिखेदेकं च कोशतः ॥ १९७ ॥
तृतीये तु द्वयं तस्याधः स्थले वेद[६]संज्ञकम् ।
द्वितीयकोणे तृतीये बाणं तद्द्वयङ्गुलं[७] त्वधः ॥ १९८ ॥
कोणेऽष्टौ च तथा न्यस्य द्वितीये कोणके शिवे ।
रुप्ये सरसि संस्थाप्य तदधः सूर्यसङ्ख्यकम् ॥ १९९ ॥
तस्य यन्त्रफलं वक्ष्ये श्रृणु सुन्दरि यन्मुखात् ।
कस्याग्रेऽपि न वक्तव्यं परं सिद्धिप्रदायकम् ॥ २०० ॥
एकान्ते पर्वते रम्ये नदीतीरेऽथवा वने ।
स्थित्वा ह्येकमनो भूत्वा यवाशी विजितेन्द्रियः ॥ २०१ ॥
सत्यवाक् पुण्यचरितः सर्वसङ्गविवर्जितः ।
निर्भयः स्वीयतुङ्गनिद्रावर्जितः शोकमोहजित् ॥ २०२ ॥
सिता तु दाडिमी लिख्य भूचक्रे नियतो लिखेत् ।
यावल्लक्षद्वयं देवि हीनं विंशतिभिर्भृशम् ॥ २०३ ॥
जपेत्षडक्षरं मन्त्रं महाकाल्याः कुलेश्वरि ।
कुलमार्गेण संपूज्य कुलपीठे लिखेत्सदा ॥ २०४ ॥
दशवारं तु संन्यस्य लोकेशमोहनं चरेत् ।
वारविंशतिकं कृत्वा सर्वाकर्षणकृद् भवेत् ॥ २०५ ॥
वारत्रिंशतिकं कृत्वा पृथिव्यां जयमाप्नुयात् ॥
चत्वारिंशत्समारभ्य शतान्तं परमेश्वरि ॥ २०६ ॥

---

६ देव पाठ मा. ख ।

७ तद्वद्गुणं त्वधः पाठो मा. ख ।

अयुतं च पुरश्चर्या यन्त्रमात्रे महेश्वरि।
पुरश्चरणसंपन्नः प्रयोगानथ कारयेत् ॥ २०७ ॥
रजस्वलाभगं स्मृत्वा नत्वा स्तुत्वा महेश्वरि।
योनिक्षते रजोंशेन संल्लिखेद् यन्त्रमुत्तमम् ॥ २०८ ॥
शिखायां धारयेन्नित्यं गले बाहौ हृदि स्थले।
त्रैलोक्याकर्षणं यन्त्रं धारयेद् गुरुराज्ञया ॥ २०९ ॥
विंशत्यङ्कात्मकं त्रिकोणान्तर्गतं नवम्।
धारणात्सर्वसिद्धिः स्यात्कालिकादर्शनं भवेत् ॥ २१० ॥
खेचरीकालिकासिद्धिः निर्वाणेशो भवेत्क्षणात्।
ब्रह्मा सृष्टिं वितनुते विष्णुः स्थितिकरो मतः ॥ २११ ॥
रुद्रः प्रकुरुते ध्वंसं यन्त्रराजप्रभावतः।
किं पुनर्बहुनोक्तेन कालिका हृदिसंस्थितम् ॥ २१२ ॥
कालिकाहृदि सर्वस्वं यन्त्रं त्रैलोक्यमोहनम्।
त्रैलोक्यमोहनं लब्ध्वा त्रैलोक्यं क्षोभयेत्क्षणात् ॥ २१३ ॥
त्रैलोक्यविजयी भूत्वा यन्त्रपूजां समाचरेत्।
एतद्यन्त्रं विहायाथ यः कश्चित्सिद्धिमिच्छति ॥ २१४ ॥
स चक्षुषा विना रूपं दर्शने द्रष्टुमिच्छति।
तस्मात्सर्वप्रयत्नेन कालीयन्त्रं च धारयेत् ॥ २१५ ॥
अथातः संप्रवक्ष्यामि तारायन्त्रं सुसिद्धिदम्।
भूर्जपत्रे लिखेद्यन्त्रं स्पलक्तकरसेन तु ॥ २१६ ॥
षट्कोणमध्ये ॐ ह्रीं त्रीं हूँ फट् वर्णान् ससाध्यकान्।
तद्बहिश्चाष्टपत्रस्य केशरेषु द्विषः स्वरान् ॥ २१७ ॥
पत्रेषु काद्यष्टवर्णान् बहिर्भूपुरमालिखेत्।
पीताम्बरेण संवेष्ट्य बध्नीयात् पट्टसूत्रतः ॥ २१८ ॥
शिशूनां कण्ठतो बद्धं रक्षाकूट् भूतभीतितः।
वामबाहौ तु नारीणां पुत्रदं गतिदं भवेत् ॥ २१९ ॥
दक्षबाहौ नृणां बद्धं निर्धनानां धनप्रदम्।
ज्ञानदं ज्ञानभिक्षूणां राज्ञां तु विजयप्रदम् ॥ २२० ॥
अथातः उग्रतारायाः संग्रामे जयदं श्रृणु।
लज्जा श्री कवचं वास्त्रं तारपञ्चार्णकैः पुरम् ॥ २२१ ॥
साध्यनाम लिखेन्मध्ये षट्कोणस्य तु भूर्जके।

लाक्षारसेन तं ह्रस्वस्वरैरावेष्ठयेन्ततः ॥ २२२ ॥
बहिरष्टदलं कृत्वा कवर्गाद्यष्टकं दले।
वेष्ठितै पीतवस्त्रेण यत्तुना परिवेष्ठयेत् ॥ २२३ ॥
बध्नीयात्पीतसूत्रेण पशूनां कण्ठभूषणम्।
स्त्रीणां वामभुजे बद्धं नराणां दक्षिणे भुजे ॥ २३४ ॥[८]
बन्ध्याऽपि लभते पुत्रं निर्धनो धनवान् भवेत्।
इयं रक्षा पुरा बद्धा रक्षार्थं गौतमादिभिः ॥ २३५ ॥
कीर्त्त्यर्थं पार्थिवैर्चान्यैः संग्रामे जयकाङ्क्षिभिः।
इति नीलसरस्वत्या यन्त्रमेतदुदाहृतम् ॥ २३६ ॥

## अथ छिन्नाया धारणयन्त्रम्

अतः परं सुरेशानि यन्त्रं ते कथयामि च।
आदौ त्रिकोणं विन्यस्य द्वारद्वयसुशोभितम् ॥ २३७ ॥
षट्कोणं विलिखेत्पश्चात्ततो वृत्तत्रयं लिखेत्
वस्वर्कदलविन्यासं तद्बाह्ये षोडशाक्षरम् ॥ २३८ ॥
शूलाष्टकसमायुक्तं भूपुरत्रितयं पुनः।
योनिमध्ये लिखेन्मन्त्री लज्जागर्भन्तु कूर्चकम् ॥ २३९ ॥
द्वारेषु मायां विलिखेत् षट्कोणेषु च वाग्भवम्।
अनुलोमविलोमेन वृत्तमध्ये च मातृकाम् ॥ २४० ॥
कूर्चद्वन्द्वक्रमेणैव अष्टपत्रं प्रपूरयेत्।
लक्ष्मी कूर्चं ततो मायां वाग्भवं च तदुद्धरेत् ॥ २४१ ॥
वज्रवैरोचनीयेति हूमित्यन्तेन पार्वति।
लिखेत्प्राचीक्रमेणैव दलेषु द्वादशक्रमात् ॥ २४२ ॥
रमा कूर्चं तथा लज्जा वाग्भवं वज्र वै पदम्।
रोचनीयं त्रयाद्वनद्वमस्त्रमन्त्रेऽग्नि बल्लभा ॥ २४३ ॥
इयं या षोडशी प्रोक्ता सर्वतन्त्रेषु गोपिता।
तथैव पूरयेद्देवि क्रमेण षोडशाक्षरम् ॥ २४४ ॥
शक्तिस्त्रितत्त्वमस्त्रं च लिखेद् द्वारेषु मन्त्रवित्।
पश्चाद्यन्त्रं महेशानि निजबीजेन वेष्ठयेत् ॥ २४५ ॥
निश्छिद्रे भूर्जपत्रे च लिखेद्यन्त्रं मनोहरम्।

८ अत्र श्लोकशङ्ख्यायाः क्रमस्त्रुटित ः।

अष्टम्यां च चतुर्दश्यां शनिभौमदिनेऽथ वा ॥ २४६ ॥
संक्रान्त्यां वज्रयोगेन पुष्पार्के च विशेषतः।
पूजयित्वा महादेवीं पश्चाद्यन्त्रं प्रपूजयेत् ॥ २४७ ॥
काश्मीरागुरुरक्तेन स्वयम्भूकुसुमेन च।
लिखित्वा यन्त्रराजं च गोलमध्ये निधापयेत् ॥ २४८ ॥
स्वर्णे रौप्ये तथा ताम्रे पट्टवस्त्रे तथैव च।
स्थापयित्वा यन्त्रमेनं धारयेद्यस्तु मानवः ॥ २४९ ॥
किङ्करास्तस्य राजानः स तु साक्षान्महेश्वरः।
दावस्तम्भं जलस्तम्भं वन्हेः शैत्यं तथैव च ॥ २५० ॥
षट्कर्मसाधनं देवि हेलयैव प्रजायते।
कुष्माण्डभूतवेतालयक्षगन्धर्वराक्षसाः ॥ २५१ ॥
दूरादेव पलायन्ते तं दृष्ट्वा साधकोत्तमम्।
मृतवत्सा तथा बन्ध्या रोगशोकभयार्दिता ॥ २५२ ॥
धारणाद्यन्त्रराजस्य सर्वसौख्यवती भवेत्।
प्रचण्डचण्डिकायन्त्रं धारयेद्यस्तु भक्तितः ॥ २५३ ॥
तस्य सर्वार्थसिद्धिः स्यान्नान्यथा कुलसुन्दरि ॥ २५४ ॥

## अथ श्रीविद्याधारणयन्त्रम्

हिरण्ये राजते ताम्रे मणौ भूर्जे च पट्टके।
अङ्कयित्वा धारयेद्यः शिरसि कण्ठे भुजेऽपि वा ॥ २५५ ॥
यानि कानि च पापानि ब्रह्महत्यासमानि च।
मुच्यते सर्वपापेभ्यः श्रीचक्रस्य तु धारणात् ॥ २५६ ॥
पापानि विलयं यान्ति ज्ञानाज्ञानकृतानि च।
सर्वं सन्दह्यते शीघ्रं चक्रराजस्य धारणात् ॥ २५७ ॥
भूतप्रेतपिशाचैश्च श्वापदैर्ब्रह्मराक्षसैः।
डाकिनी साकिनीभिर्वा वीक्षितुं नैव शक्यते ॥ २५८ ॥
महाक्रूरग्रहैर्वाऽपि सर्वः शुभग्रहो भवेत्।
अकालमृत्युं हरति सदा सन्निहिता परा ॥ २५९ ॥
परा सन्निहिता यत्र किं कुर्वन्त्यन्य देवताः।
श्रीचक्रं धारयित्वा तु यस्तु प्राणान् परित्यजेत् ॥ २६० ॥
कीकटे चान्तरिक्षे वा निषिद्धे कश्मलेऽपि वा।

कृत्वा चेन्द्रियलौल्येन पापानि सुबहूनि च ॥ २६१ ॥
स कैवल्यं लभेन्नूनं न पुनर्जन्मभाग् भवेत्।
यमदूताः पलायन्ते दृष्ट्वा श्रीचक्रधारिणम् ॥ २६२ ॥
ब्रह्मज्ञानेन वा मोक्षः काश्यां वा यस्तनुं त्यजेत्।
श्रीचक्रधारणाद्वाऽपि त्रयं मोक्षस्य कारणम् ॥ २६३ ॥
सर्वदेवगणास्तत्र सर्वधर्माश्च तत्र वै।
गङ्गाद्याः सरितः सर्वाः पुष्कराद्या जलाश्रयाः ॥ २६४ ॥
पुरुषोत्तममुख्याश्च क्षेत्रा नन्दवनादयः।
वाजिमेधादियज्ञस्य फलं त्वविकलं भवेत् ॥ २६५ ॥
अथान्यत्त्रैपुरं वक्ष्ये भूर्जे षट्कोणमालिखेत्।
स साध्यं तस्य मध्ये तु कामबीजं समालिखेत् ॥ २६६ ॥
कोणेष्वपि लिखेत्कामं बहिः षोडशपत्रकम्।
कुर्यात् पत्रेषु विलिखेत्कामबीजानि तद् बहिः ॥ २६७ ॥
कृत्वा वृत्तद्वयं वीथ्यां हँ बीजेन प्रवेष्ठयेत्।
तद्बहिः चतुरस्रं तु कुर्याद्यन्त्रं विलिखयेत् ॥ २६८ ॥
गोरोचनाकुङ्कुमाभ्यां सर्वसौभाग्यकारकम्।
करोति कवितां कीर्त्तिं साधकस्य न संशयः ॥ २६९ ॥

## अथ भैरव्या धारणयन्त्रम्

मध्याद्वयं नव योनिषु प्रविलिखेद् बीजानि वर्णांस्त्रिषु,
गायत्र्या पुनरष्टपत्रविवरेष्वालिख्य लिप्यावृतम्।
भूविम्बद्वितयेन मन्मथयुजा कोणेषु सर्वेष्ठितम्
यन्त्रं भूपुरमीरितं त्रिभुवनप्रक्षोभणं श्रीप्रदम् ॥ २७० ॥

## गायत्री यथा

क्लीं त्रिपुरविद्महे कामेश्वरीधीमहि तन्नः क्लीं प्रचोदयात्॥
अथातः संप्रवक्ष्यामि लक्ष्मीयन्त्रं रमाप्रदम्।
भूर्जपत्रे लिखेत्पत्रं कर्णिकायां ध्रुवं न्यसेत् ॥ २७१ ॥
तस्योदरे लिखेत् क्रीँ ह्रीँ कामं साध्यस्य नामतः।
तत्केशरेषु संल्लेख्यं श्रीँ ह्रीँ क्लीँ च दिगष्टके ॥ २७२ ॥

लिखेद् द्वादशपत्रेषु क्रमादेकैकमक्षरम्।
वाचं मायां रमां कामं ह्स्रौं इति कूटकम् ॥ २७३ ॥
जगत्प्रसूत्यै हृदयं द्वादशार्णे मनुस्त्वियम्।
तद्बाह्ये षोडशदलं केशरेषु द्वयं द्वयम् ॥ २७४ ॥
ककारादि एकारान्त द्वात्रिंशद्वर्णकाँल्लिखेत्।
तारं ह्रीं कवचं खे च छे क्षे स्त्रीं हूँ ततः परम् ॥ २७५ ॥
क्षँ ह्रीं फडिति सूर्यर्णा स्वरितामन्त्र ईरितः।
यन्त्रमेतन्महालक्ष्म्याः प्रोक्तं संपत्करं परम् ॥ २७६ ॥
सर्वसौभाग्यदं चापि सर्वदुःखविमोचनम् ॥ २७७ ॥
अथातो राजमातङ्ग्या यन्त्रं वक्ष्ये सुसिद्धिदम्।
सुवर्णरचिते पट्टे लेखन्या स्वर्णरौप्ययोः ॥ २७८ ॥
राजते फलके वाऽपि भूर्जे वा सुमनोहरे।
काश्मीररोचनारक्तश्वेतचन्दनकस्तुरैः ॥ २७९ ॥
लिखेद्यन्त्रं तु तत्रादौ त्रिकोणं सम्यगालिखेत्।
साध्यनामान्वितं तत्र हीं क्लीं बीजद्वयं लिखेत् ॥ २८० ॥
लेख्यं त्रिकोणं कोणेषु क्ली ह्रीं श्रीं च क्रमेण च।
तस्य वाह्ये तु षट्कोणं तद्दलेषु लिखेत्क्रमात् ॥ २८१ ॥
स्वाग्रादिप्रादक्षिण्येन ऐँ क्लीं सौं एँ ततो लिखेत्।
ह्रीं श्रीं तस्य बहिः कुर्यात्पञ्चपत्र सरोरुहम् ॥ २८२ ॥
ॐ नमः प्रथमे पत्रे भगवतीति द्वितीयके।
मातङ्गेश्वरि तृतीये सर्वजनमनोहरी ॥ २८३ ॥
चतुर्थें स्यात् पञ्चमे च स्यात्सर्वसुखरञ्जिनी।
बहिश्चाष्टदलं कृत्वा क्लीं ह्रीं श्रीं प्रथमे लिखेत् ॥ २८४ ॥
एतानपि लिखेत्तत्र सर्वराजवशंकरी।
द्वितीये तु दले सर्वस्त्रीपुरुषवशंकरी ॥ २८५ ॥
तृतीये सर्वदुष्टेति लिखेन्मृगवशंकरी।
चतुर्थे सर्वसर्वेति लिखेच्चापि वशंकरी ॥ २८६ ॥
पञ्चमे सर्वलोकेति लिखेन्मन्त्र वशं करी।
लिखेत्षष्ठे तथा यन्त्रेऽमुकं मे वशमानय ॥ २८७ ॥
स्वाहा सप्तम पत्रेऽस्य श्रीं ह्रीं एँ सौं च क्लीं च एँ।

वृत्तद्वयं तु तद्बाह्ये वीथ्यां तत्र प्रवेष्टयेत् ॥ २८८ ॥
बीजं षट्कोणके प्रोक्तमष्टपत्रं द्वितीयके ।
उक्त्वा श्रीं च तृतीयादिपत्रसंस्थैश्च वर्णकैः ॥ २८९ ॥
ततोऽष्टपत्रजैर्वर्णैरिरिवंद्युनशताक्षरैः ।
वृत्तद्वयं तु तद्बाह्ये तत्र वीश्यां तु संल्लिखेत् ॥ २९० ॥
साध्यनामयुतानङ्कान् मातृकार्णान् क्रमात्क्रमात् ।
तद्बहिश्चतुरस्रं च तत्कोणेषु समालिखेत् ॥ २९१ ॥
साध्यनामयुतं कामबीजंमत्यन्तशुद्धिमत् ।
तेन लेख्यमिदं यन्त्रं साधु सर्वेषु जन्तुषु ॥ २९२ ॥
एतद्यन्त्रं लिखित्वैवं ततः संपातपूर्वकम् ।
हुत्वा प्रजप्य संपूज्य गुटिकां कृत्य साधकः ॥ २९३ ॥
साभिषेकः स्वयं बाहौ दक्षिणे तद्धि धारयेत् ।
पूज्यते त्रिदशाद्यैश्च किं पुनर्मानवोत्तमैः ॥ २९४ ॥
आयुरारोग्यमैश्वर्यमन्यद्यद्यत् स्ववाञ्छितम् ।
पुत्र पौत्रादिकं चापि लभते नात्र संशयः ॥ २९५ ॥
अथातो भुवनेश्वर्या यन्त्रं सर्वार्थसिद्धिदम् ।
इन्द्ररक्षो वायुदिककोषां अस्त्रं समालिखेत् ॥ २९६ ॥
ह्रींकारं तस्य मध्ये तु रेफं तारं समालिखेत् ।
साध्यनामाथ ह्रींकारस्थाने साधक नाम च ॥ २९७ ॥
तयोर्मध्ये कर्म लेख्यं ह्रींकारं वेष्टयेत्ततः ।
त्रिकोणस्य तु कोणेषु रँ बीजं त्रिषु संलिखेत् ॥ २९८ ॥
त्रिकोणाग्रे लिखेद् ह्रीं च ह्रींकारस्थितरेफकैः ।
अन्योन्यं वेष्ठयेद्बीजं ईकाराग्रं परस्परम् ॥ २९९ ॥
बध्नीयादथ कोणेऽस्य पार्श्वयोर्विलिखेदिति ।
हरिहरेति वेदार्णान्ततो वृत्तत्रयं बहिः ॥ ३०० ॥
आद्यवीथ्यां हरिहरवर्णयन्त्रं प्रवेष्ठयेत् ।
द्वितीयवीथ्यां मन्त्रार्णैः सबिन्द्वकारसंयुतैः ॥ ३०१ ॥
वेष्ठयेच्च ततो बाह्ये भूपुरं सिद्धिदं त्विदम् ।
यस्य कस्यापि मन्त्रस्य भाग्यकृत्परमं मतम् ॥ ३०२ ॥
अत्रापि संपदे देवीं पूजयेत्साधको यदि ।

तदाऽप्यन्यो वीर प्राज्ञो विदध्यादष्टपत्रकम् ॥ ३०३ ॥
तस्योपरि च दास्यादिविहितं चापि मण्डलम् ।
तत्र बाह्ये यजेद्देवीं यथाविधि समाहितम् ॥ ३०४ ॥
हृल्लेखाद्याः समभ्यर्च्य पूर्ववत्साधकस्तथा ।
अङ्गानि पूजयेत्पश्चादापत्राद्याः प्रपूजयेत् ॥ ३०५ ॥
प्रागग्रबीजे गायत्री सावित्री दक्षिणाश्रिते ।
सरस्वती मारुतस्थे ब्रह्माणी वह्निगे तथा ॥ ३०६ ॥
वारुणे विष्णुमीशं च यजेदीशानतो वहिः ।
ब्रह्माण्याद्या लोकपालास्तद्बाह्ये कुलिशास्त्रतः ॥ ३०७ ॥
एवं त्रिगुणितं यन्त्रं पूजयेत्साधकोत्तमः ।
देवि तस्याः प्रसादेन संपत्तिबहुला भवेत् ॥ ३०८ ॥
अथातः संप्रवक्ष्यामि महद्यन्त्रं घटार्ग्गलम् ।
चतुरस्त्रद्वये नादौ लिखेदष्टास्रमद्भुतम् ॥ ३०९ ॥
साधकह्यङ्गुलं मध्ये यथा स्यात्तच्च विस्सृतम् ।
प्रसारयेदङ्गुलानां चतुष्कप्रमितानि च ।
चतुरङ्गुलविस्तार कर्पटिन तु मध्यतः ॥ ३११ ॥
आरभ्य वृत्तं संलेख्यं पुनः सप्ताङ्गुलेन च ।
एवं वीथिद्वयं तत्र जायते समतो हरः ॥ ३१२ ॥
तत्राभ्यन्तरवीथ्यां तु केशराणि भवन्ति हि ।
त्रिकोणपञ्चकोणानि रेखासंपातयोगतः ॥ ३१३ ॥
भवन्ति षोडशैरेव ततो बाह्ये प्रजायते ।
दिक्ष्वष्टौ रसकोणानि शून्यगेहनिभानि च ॥ ३१४ ॥
एतेषां मध्यभागे तु स्वतो डमरकाष्टकम् ।
रेखाः संपातयेत्तस्या रेखाः षट्कोणकस्य तु ॥ ३१५ ॥
वृत्ताद्बहिर्वर्धनीयाः सम्यग् ह्यङ्गुलमानतः ।
तयोरुर्ध्वे तु बलभी तुल्यमेकाङ्गुलात्तरा ॥ ३१६ ॥
रेखाग्रे योजयेत्तस्या यदा पद्मदलाकृतिम् ।
दलानामूर्ध्वसंलग्नं सम्यग् वृत्तं समालिखेत् ॥ ३१७ ॥
एकाङ्गुलान्तरेणैव तद्बाह्ये वृत्तयुग्मकम् ।
कुर्यात्सम्यक्तस्य बाह्ये घटयेदङ्गुलान्तरम् ॥ ३१८ ॥

आस्यानीमुखसंयुक्तं सकर्णं सुमनोहरम् ।
ऊर्ध्वास्यं तदधो लेख्यं पङ्कजं नलसंयुतम्  ॥ ३१९ ॥
अधोमुखं तस्य मुखे नलाष्टाङ्गुलसंयुतम् ।
एवं यन्त्र शरीरं स्यादथ वर्णान् व्रवीम्यहम्  ॥ ३२० ॥
आँ ह्रीं क्रीं च  लिखेन्मध्येऽव्यवधानेनसंयुतम् ।
साध्यं साधकर्माणि शक्तिबीजस्य मध्यतः  ॥ ३२१ ॥
वायव्यकोणाग्निदले ह्रीं लिखेदीशपत्रके ।
ह्रींकारं राक्षसे ह्रूं च ह्रैं वायव्ये समालिखेत्  ॥ ३२२ ॥
अष्टास्रमध्ये ह्रीं काराधस्ताद् स्रौं इति संलिखेत् ।
ह्रः पूर्वादिकपत्रेषु चतुर्ष्वपि च संलिखेत्  ॥ ३२३ ॥
अष्टास्रस्यान्तराले तु पञ्चकोणाष्टकं चरेत् ।
तत्रैशानीं समारभ्य बीजान्येतानि संलिखेत्  ॥ ३२४ ॥
आँ श्रीं ह्रीं क्लीं श्रीं च ह्रीं श्रीं क्रौं मेतत् क्रमेण तु ।
पञ्चकोणान्तराले तु त्रिकोणानां यदष्टकम्  ॥ ३२५ ॥
हींकाराधास्त्रिकोणात्तु  लिखेद् वर्णान्प्रदक्षिणम् ।
कामिनि रञ्जिनि स्वाहा एककोणे तथैककम्  ॥ ३२६ ॥
ततो लेख्यं डमरुकाष्टकस्य प्रथमे दले ।
ईशानादि समारभ्य क्रमादेकैकमक्षरम्  ॥ ३२७ ॥
ह्रीं गौरि रुद्रदयिते डमरूर्ध्वदले लिखेत् ।
योगेश्वरि हूँ फट् स्वाहा ईशानादेकमक्षरम्  ॥ ३२८ ॥
ह्रींकारस्य तले शून्य गेहे पार्श्वद्वये क्रमात् ।
उदग्याम्ये च संलेख्यमन्तवृत्तात्परं परम्  ॥ ३२९ ॥
उदग्दक्षिणशाखायां प्रवेशमगमत्क्रमात् ।
ह्लँ ह्लाँ ह्लिँ ह्लीँ ह्लुँच ह्लूँ च ततः पश्चिमपत्रके  ॥ ३३० ॥
ह्लेँ ह्लैँ ह्लोँ ह्लौँ ह्लँ च ह्लँश्च ततो वह्निसमीरयोः ।
प्रवेशनिर्गमाभ्यां च ह्यँ ह्यां मित्यादिकं लिखेत्  ॥ ३३१ ॥
एवं लेख्यं दक्षिणोदक् ह्वँ ह्वाँ ह्वच्च मुखोन्विका ।
ईशाननैर्ऋते लेख्यं एवं ह्रँ ह्राँ मुखादिकम्  ॥ ३३२ ॥
ततो लेख्यं त्वष्टदले मूलकेशरके क्रमात् ॥
हँ ईं स इति वर्णानां ह्रस्वं दीर्घं तथा स्वरम्  ॥ ३३३ ॥

कृत्वा चाद्यन्तयोर्लेख्यमष्टदिक्षु क्रमेण च।
स्त्रिणामर्थे तु संलेख्य हँस ईंसश्च इत्यपि ॥ ३३४ ॥
ह्रस्वं च दीर्घञ्च बिन्द्वन्तं क्रमादाद्यन्तयोर्लिखेत्।
ततश्चाष्टदले लेख्यं आँ ह्रीं क्रौं च स्त्रीणां त्रिशः ॥ ३३५ ॥
तोरणाकाररूपेण ततस्तद्वाह्यवीथिकाम्।
आँ क्रौंमिति च बीजाभ्यां समस्तां वेष्ठयेत्पराम् ॥ ३३६ ॥
अकारादिक्षकारान्तैर्बिन्द्वाढ्यैर्मातृकाक्षरैः।
प्रदक्षिणां वेष्ठयित्वा तृतीयां वीथिकां पुनः ॥ ३३७ ॥
क्षकारादि अकारान्तैर्वेष्ठयेदिति लेखनम्।
इदं यन्त्रं भूर्जपत्रे लिखितं रोचनादिभिः ॥ ३३८ ॥
दक्षे भुजेऽन्तरे कण्ठे स्वशीर्षे वाऽपि धारयेत्।
तस्य भूपतयः सर्वे वशगा मनुजा अपि ॥ ३३९ ॥
रोजनेभमदः प्रोक्तः काश्मीरं मृगसन्मदे।
अलक्तकरसाक्तैश्च लिखेद्यन्त्राणि मन्त्रवित् ॥ ३४० ॥
हरित्पटे विधानेन यन्त्रमालिख्य तत्पुनः।
गोलकीकृत्य साध्यस्य प्रतिमां सिक्थसम्भवैः ॥ ३४१ ॥
कृत्वा वक्षसि विन्यस्य पात्रे संस्थापयेत्सुधीः।
त्रित्वादुपरि पूर्णे च पूजयेच्च विधानवित् ॥ ३४२ ॥
गन्धपुष्पादिकैः सम्यक् बलिं रात्रौ निवेदयेत्।
तत् स्पृष्ट्वा प्रत्यहं मन्त्री शतमष्टाधिकं जपेत् ॥ ३४३ ॥
ततो मन्त्री सप्तदिनात् पिष्ठायोषां तु कर्षयेत्।
पुनरेतल्लिखेद् भूर्जे गोलकीकृत्य मुक्तवत् ॥ ३४४ ॥
जतुना शुद्धनाम्ना च रजनेनापि मन्त्रयेत्।
वेष्ठयेत्तत्सुवर्णेन कलशे तु प्रविन्यसेत् ॥ ३४५ ॥
भुवनेशीं तत्र भजेच्चन्दनादिभिरुक्तवत्।
सहस्रद्वादशमितं तत्स्पृष्ट्वा प्रजपेन्मनुम् ॥ ३४६ ॥
तस्योदकेन शिष्यं वा प्रियं साध्यमथ सुतम्।
राजानं वाऽभिषिञ्चेत तद्वस्त्रे यन्त्रमुत्तमम् ॥ १४७ ॥
आबध्नीयात्स्वयं मन्त्री वेदाशीर्वचनैः सह।
गतः स परमारोग्यं धनं कान्तिं दशांसि च ॥ ३४८ ॥

पुष्टिं च लभते सद्यो नात्रकार्या विचारणा।
यन्त्रं कुम्भे समालिख्य पूजयेच्च पुरोक्तवत् ॥ ३४१ ॥
तं द्रष्टुं नैव शक्ताः स्युर्भूतप्रेतपिशाचकाः।
समालिख्य च तद्यन्त्रं सम्यक्पूजादिसाधितम् ॥ ३५० ॥
धृतं भटेन मुकुटे कुरुते रिपुसङ्कटे।
रिपून् महाभटान् हत्वा जयलक्ष्मीपतिर्भवेत् ॥ ३५१ ॥

*इति श्रीतन्त्रचिन्तामणौ काम्यार्चनायां साम्राज्यमुद्रिकापूर्वकधारणयन्त्रनिर्णय नामोनचत्वारिंशत्तमः प्रकाशः।*



# चत्वारिंशत्तमः प्रकाशः

अथ सर्वोपयुक्ततया मातृकावर्णानां प्रत्येकं ध्यानादिकमाह –

**श्रीभैरव उवाच**

श्रृणु देवि प्रवक्ष्यामि पञ्चाशद्वर्णनिर्णयम्।
यैर्व्याप्तमखिलं देवि त्रैलोक्यं सचराचरम्॥ १॥
एकैकस्य तु वर्णस्य ध्यानधारणरूपकम्।
आयुधान्यासनं मुद्राः कर्म तेषां पृथक् पृथक्॥ २॥
एतत्सर्वं समासेन श्रृणुष्व कथयामि ते।
बहुशो मन्त्रकाद्यास्तु संसारे सम्भवन्ति च॥ ३॥
सत्याद्याः पशवः प्रोक्ता ईशानान्ताः सुमध्यमे।
ब्रह्मा तेषां चरेदाज्ञां मोचनायाऽऽत्मकं प्रति॥ ४॥
पञ्चाशदक्षरा एते कलाः पञ्च तथैव च।
पृथिव्यां योनिभूतानि पञ्चैतानि पृथक् पृथक्॥ ५॥
द्विसप्तभुवनं सर्वं ब्रह्मव्याप्तिसमन्ततः।
एभ्यो मन्त्राः समुद्भूता नानाकर्मकराश्च ये॥ ६॥
मन्त्राणां चैव रूपञ्च प्रमाणं दैवतं तथा।
वक्त्राणि च भुजाँश्चैव वर्णान् वर्णायुधानि च॥ ७॥
साधका ये नजानन्ति न तेषां सिद्धिदाः क्वचित्।
यानि कर्माणि कुर्वन्ति यत्र यत्रापि योजिता॥ ८॥
तस्मात्सर्वप्रयत्नेन ज्ञातव्या मातृका बुधैः।
क- ककारं कनकाभासं सौवर्णकलशाासनम्॥ ९॥
सुवर्णकवचं हैमं महत्पुरुषविग्रहम्।
खड्गहस्तं चतुर्वक्त्रं महारौद्रं चतुर्भुजम्॥ १०॥
क्षोभयेत्पृथिवीं सर्वां सशैलवनकाननाम्।
पुरुषोऽनुस्मरेन्नित्यं विषनाशाय का कथा ?॥ ११॥
ख- खकारं धूम्रवर्णाभं चापपाणि खरासनम्।

त्रिशीर्षं त्रिभुजं रौद्रं त्रिपादं नवलोचनम् ॥ १२ ॥
सर्वग्रहहरं ह्यन्तमन्तरायहरन्तथा ।
सर्वज्वरहरञ्चैव ग्रहसैन्यविमर्दनम् ॥ १३ ॥
ग- गकारं गगनारूढमष्टबाहुं चतुर्मुखम् ।
त्रिशूलपाणिं रौद्रं च हिमकुन्देन्दुसन्निभम् ॥ १४ ॥
विषं नाशयते ह्येतन्मज्जास्रगस्थिगं तथा ।
गजवक्त्रं स्वयं ह्यन्तं सर्वविघ्नविनाशनम् ॥ १५ ॥
घ- घकारं वृषभारूढं दशबाहुं महाबलम् ।
पञ्चवक्त्रं त्रिनेत्रं च शूलपाणिं महाभुजम् ॥ १६ ॥
गजचर्मोत्तरासंगं घण्टारङ्कविभूषितम् ।
इन्दीवरदलश्यामं मेघगम्भीरनिः खनम् ॥ १७ ॥
ब्रह्मराक्षसवेतालान्नाशयेन्नात्र संशयः ।
ङ- ङकारं नागमारूढं द्विभुजं पिङ्गलोचनम् ॥ १८ ॥
हरहासासितं सौम्यं वीणाखड्गरतं तथा ।
स्मरतां चैव सर्वेषां बालग्रहविमर्दनम् ॥ १९ ॥
नाशयेच्छरणादेव विषं स्थावरजङ्गमम् ।
च- चकारं तुहिनाभासं शशाङ्काङ्कितशेखरम् ॥ २० ॥
चतुर्वक्त्रं चाष्टभुजं पात्रपट्टिशधारिणम् ।
पद्मासनरतं नित्यं सर्पमण्डितमेखलम् ॥ २१ ॥
ध्यानधारणसंयुक्तं येषार्चादि समन्वितम् ।
दुष्टरोगैश्च ये केचिद् व्याधिताः ज्वरकाधिभिः ॥ २२ ॥
सर्वे ते मुक्तरोगाश्च स्मरणादस्य जायते ।
गोनासाजगरैर्दिष्टा ढुण्ढुमारैश्च मारिताः ॥ २३ ॥
विषाणां नाशनं ह्येतत्करोत्येव न संशयः ।
तद्विषं नाशमायाति तमः सूर्योदये यथा ॥ २४ ॥
छ- छकारं श्वेतवर्णाभं छागलस्थं महाबलम् ।
भुजैः षोडशभिर्दिव्यैर्राहुमानं यथा रविः ॥ २५ ॥
पट्टिशं परशुं शूलं मुद्गरं कलशं तथा ।
अन्यानि धारयत्यन्तमायुधानि विशेषतः ॥ २६ ॥
यस्मिँस्थानं  विषं घोरं स्थितं स्थावरजङ्गमम् ।
नाशयेत्त्वरितं ह्येतत्स्मरितं नात्र संशयः ॥ २७ ॥

ज- जकारं हरिणाकारं द्विभुजं नवशीर्षकम्।
श्रृङ्खला चायुधं तस्य शशाङ्काङ्कितशेखरम्॥ २८॥
यस्यानुस्मरणाद्देविः विषं स्थावरजङ्गमम्।
नाशयेत्पठितं ह्येतत्पयोदामिव भास्करः॥ २९॥
झ- झकारं कृष्णवर्णाभं षड्भुजं नवलोचनम्।
त्रिशीर्षं च महाकायं दँष्ट्रालीढं वलीयसम्॥ ३०॥
यस्य ग्रहा महारौद्रा ज्वरं वा भूतदोषजम्।
विषं हालाहालं चैव रौद्रानां कृत्रिमं तथा॥ ३१॥
मुष्ठिना ग्राहयित्वा तु ह्यूत्थापयति तत्क्षणात्।
ञ- ञकारं घनवर्णाभं भिन्नाज्जननिभोपमम्॥ ३२॥
मकरस्थं चतुर्वक्त्रं भुजाष्टकविभूषितम्।
असि मुद्गरहस्तं च वज्रहस्तं महाबलम्॥ ३३॥
बालग्रहाणां सर्वेषां पठनादेव नाशनम्।
ट- टकारमग्निवर्णाभं दहतिमिव पावकम्॥ ३४॥
भुजैः षोडशभिर्दिव्यैर्दिव्यमाल्यकृतं वपुः।
मेषारूढं महाकायं सर्वमेखलमण्डितम्॥ ३५॥
त्रिशीर्षं च वृहद्रूपं सिन्दूराभं महाद्युतिम्।
ज्वलन्तं मुद्गरं शक्तिं ज्वालाजटिलभूषितम्॥ ३६॥
ग्रहाणां निग्रहं ह्येतत् भूतेषुः डाकिनीषु च।
निमज्जन्यो जपेदेतत्तं नयेद्विषदूषितः॥ ३७॥
ठ- ठकारं कुन्दपुष्पाभं वृषारूढं महाबलम्।
चतुर्भुजं महाकायमेकशीर्षं त्रिलोचनम्॥ ३८॥
गोक्षीरधबलं नित्यं विषसैन्यविमर्दनम्।
आत्मरक्षापरस्यैव पथि वा निर्जने वने॥ ३९॥
गजसिंहवराहेषु व्यालव्याघ्रभयेषु च।
विषबन्धे प्रयोक्तव्यं जीवरक्षासु चिन्तयेत्॥ ४०॥
सुवर्णममृतं ह्येनं कालदंष्ट्रो भवेद्यदि।
अहीनां स्तम्भने प्रोक्तं सर्वसत्त्वेषु शीतलम्॥ ४१॥
ड- डकारं हरितं ध्यायेद्दंष्ट्राभीषणविग्रहम्।
चतुर्वक्त्रं महाकायं चतुर्विंशार्द्धलोचनम्॥ ४२॥
धर्मासनसमारूढं दण्डपाणिं जटाधरम्॥

यक्षराक्षसभूतादि डाकिनी सिद्धयोगिनीः ॥ ४३ ॥
स्कन्दादीनि सरौघाँश्च पिशाचोरगकिन्नरान् ॥
कुभाण्डराक्षसाँश्चैव स्मरणादेव नाशयेत् ॥ ४४ ॥
ढ- ढकारं भुजगारूढं फणिरक्षणभूषितम् ।
ज्वलनार्क प्रतीकाशमारक्तायतलोचनम् ॥ ४५ ॥
दंष्ट्राकरालिनं घोरं मेघगम्भीरनिःश्वनम् ।
चतुः षष्टिभुर्जर्दिव्यैर्नाना प्रहरणायुधम् ॥ ४६ ॥
दंष्ट्राटङ्काक्षमालाश्च शूलपट्टिशधारिणम् ।
गदामुद्गरपाशैश्च खड्गं चक्रं च विभ्रतम् ॥ ४७ ॥
क्षोभयेत् पृथिवीं सर्वां सशैलवनकाननाम् ।
सुरकिन्नरसिद्धानां दैत्यदानवराक्षसाम् ॥ ४८ ॥
नागानां दमनं ह्येयतत्पातालतलवासिनाम् ।
द्रढिमाकर्षणे योऽयं मेघानां च निवारणे ॥ ४९ ॥
लूतागर्दभविस्फोटलोहलिङ्गादिचर्चिकाम् ।
डाकिनी भूतदोषाँश्च नाशयेन्नात्र संशयः ॥ ५० ॥
ण- णकारं गौरवर्णाभं तामसी कुसुमप्रभम् ।
चतुर्भुजं चतुर्वक्त्रं कृष्णं दंष्ट्राकरालिनम् ॥ ५१ ॥
राजवर्णनिभं श्यामं ज्वलद्भासुरलोचनम् ।
मेरुश्रृङ्गयुतं भीमं चापहस्तविभूषितम् ॥ ५२ ॥
त्रासयन्तं महानादं क्षोभयन्तं रसातलम् ।
विषांश्च विविधाकारान्नाशयेन्नात्र संशयः ॥ ५३ ॥
त- तकारं रक्तवर्णाभं पूर्णकुम्भोपरि स्थितम् ।
शशाङ्ककृतमूर्द्धानं द्विभुजं मीनवाहनम् ॥ ५४ ॥
एकशीर्षं ततः सूक्ष्मनेत्रत्रयविभूषितम् ।
निःशेषविषनागानामन्तरायं विशेषतः ॥ ५५ ॥
स्मरणान्नाशयेच्छूलं घनवाताहतो यथा ।
थ- थकारं हिमवर्णाभं शङ्खकुन्देन्दुनिर्मलम् ॥ ५६ ॥
मकारपृष्ठमारूढमारक्तायितलोचनम् ।
दीर्घस्कन्धं सुरूपं च शरचापं च विभ्रतम् ॥ ५७ ॥
मन्मथञ्च स्वयं देवि कन्दर्पग्रहनाशनम् ।
दीपैरगरपुष्पैश्च सुगन्धैश्चानुलेपनैः ॥ ५८ ॥

अकालमरणं ह्येतन्नाशयेदचिरात्स्वयम् ।
द- दकारं श्वेतवर्णाभं कम्बुवाहनसंस्थितम् ॥ ५९ ॥
क्षीरोदकलशावर्त्तमध्यगं चिन्तयेत्सदा ।
त्रि-त्रिशीर्षं महाकायं शोभमानं त्रिलोचनम् ॥ ६० ॥
त्रिनेत्राणि च सर्वाणि वक्त्राणि ह्युत्थितानि च ।
ज्वरं नाशयति घोरं तृतीयकचतुर्थकम् ॥ ६१ ॥
सान्ध्यं रात्रिज्वरं चैव शीतदाहज्वरं तथा ।
ध- धकारं पाटलाभासं धनुष्पाणिं चतुर्भुजम् ॥ ६२ ॥
एकशीर्षं महाकायं सिंहारूढं महाबलम् ।
रौद्राट्टहासनिनदं ग्रहसैन्यविमर्दनम् ॥ ६३ ॥
तुष्ट्वा तु हरते दोषं छायादोषञ्च नाशयेत् ।
परदोषकृतं चैव बलीनां घङ्घनं तथा ॥ ६४ ॥
रिपूनाञ्च प्रहारैश्च रक्षते नात्र संशयः ।
न- नकारं नीलवर्णाभं कृष्णसारकृतायनम् ॥ ६५ ॥
चतुर्वक्त्रं चाष्टवाहुं ज्वालावंशधरं शुभम् ।
तोमरास्त्रधरं नित्यं चक्रपाणिं सुभूषितम् ॥ ६६ ॥
विविधानि च यन्त्राणि धारयेत्तु विशेषतः ।
आकाशगमनं चैव गुलिकाञ्जनसन्निभम् ॥ ६७ ॥
वेतालोत्थापनं चैव स्वस्थाने सर्वकर्मणि ।
प- पकारं रक्तपद्माभं पद्मस्थं पद्मधारिणम् ॥ ६८ ॥
शङ्खचक्रगदापाणिं पीतकाषयवासनम् ।
चतुर्भुजं चतुर्वक्त्रं पद्मेशस्योपरि स्थितम् ॥ ६९ ॥
यक्षराक्षसभूतानि पिशाचान् ब्रह्मराक्षसान् ।
कुभाण्डडाकिनीश्चैव भूतवेतालराक्षसान् ॥ ७० ॥
अपस्मारग्रहाँश्चैव तथा बालग्रहानपि ।
स्मरणान्नाशयेदेतद्विषं स्थावरजङ्गमम् ॥ ७१ ॥
कायिकं वाचिकं चैव मानसं त्रिविधं तथा ।
जन्मान्तरकृतं पापं नाशयेत्स्मरणाददः ॥ ७२ ॥
फ- फकारं पठ्यते योगियोगिनीहृदये तथा ।
चतुर्भुजं चतुर्वक्त्रं हंसारूढं विचिन्तयेत् ॥ ७३ ॥
कपाली चाक्षमाली च स्रवि मेखलवानपि ।

सृष्टिकर्ता जगत्पाश्च त्रैलोक्यप्रभुरव्ययम् ॥ ७४ ॥
अमृताकर्षणादेतज्जीवदाने विशेषतः ।
भयनाशं सदा कुर्यात्सत्त्वानन्दं विशेषतः ॥ ७५ ॥
ब- बकारं कृष्णवर्णाभं साक्षाद्वरुणदैवतम् ।
नागासनसमारूढं फणिव्याकुललोचनम् ॥ ७६ ॥
हिमकुन्देन्दुसंकाशं शङ्खगोक्षीरसन्निभम् ।
षड्विंशार्धभुजं सौम्यं मणिरत्नविभूषितम् ॥ ७७ ॥
गदापाणिं च देवेशं राशिचक्रसमाकुलम् ।
खड्गपाशधरं सौख्यं दाहज्वरविनाशनम् ॥ ७८ ॥
वातिकं पैत्तिकं चैव श्लेष्मकं सन्निपातिकम् ।
वारिधारानिपातेन निर्विषं कुरुते क्षणात् ॥ ७९ ॥
भ- भकारं कृष्णवर्णाभं पीतकौशेयवाससम् ।
दण्डहस्तं महाकायं महिषासुरवाहनम् ॥ ८० ॥
कालपाशधरं रौद्रमारक्तायतलोचनम् ।
तस्मात्सर्वप्रयत्नेन कालदष्ट्रस्य योजयेत् ॥ ८१ ॥
म- मकारं वृषभारूढं भष्मोद्धूलितधूसरम् ।
नीलकण्ठञ्च जटिलं सर्वनीतिकरं शिवम् ॥ ८२ ॥
पञ्चवक्त्रं दशभुजं त्रिंशार्द्धं पिङ्गलोचनम् ।
कपालासिधरं तीक्ष्णं त्रिशूलाङ्कुशधारिणम् ॥ ८३ ॥
य- यकारं संप्रवक्ष्यामि स्वयं वायुं व्यवस्थितम् ।
षड्भुजं शववक्त्रं च महाबलपराक्रमम् ॥ ८४ ॥
कुरङ्गासनमारूढं शुभ्राम्बरधरं तथा ।
सर्वे दोषाः समं यान्ति सिंहं दृष्ट्वा यथा मृगाः ॥ ८५ ॥
र- रकारमग्निवर्णं तु रक्तकौशेयवाससम् ।
रक्ताक्षं रक्तदंष्ट्रं च रसनासक्ति व्याकुलम् ॥ ८६ ॥
चतुर्भुजं चतुर्वक्त्रं कालाग्निरुद्रतेजसम् ।
दुष्टानां प्रसमास्थाय विषसुप्तं प्रबोधयेत् ॥ ८७ ॥
ल- लकारं पीतवर्णाभं वज्रहस्तं महाबलम् ।
ऐरावतसमारूढं सहस्राक्षं सुरेश्वरम् ॥ ८८ ॥
चामरेण सुवर्णेन वीक्ष्यमाणं सुरासुरैः ।
मेरुपृष्ठे सुखासीनमप्सरोभिः सुसेवितम् ॥ ८९ ॥

व- वकारं तुहिनाभासं मूषिकोपरि संस्थितम्।
आयुधं तस्य पाशं तु चतुर्वक्त्रं चतुर्भुजम्॥ ९० ॥
शुक्लवस्त्रधरं नित्यं सौम्यं रूपं सुलोचनम्।
आप्यायनं च सर्वेषां विषाणां चैव नाशनम्॥ ९१ ॥
श- शकारं सितपद्मस्थं सितचन्दनशोभितम्।
षड्भुजं शक्तिहस्तं च शिखिवाहनसंस्थितम्॥ ९८ ॥
षड्वक्त्रं स्वयमेवेश तत्रिजं शिखिवल्लभम्।
दर्शनात्तस्य नश्यन्ति महापातकराशयः॥ ९३ ॥
ष- षकारं षड्भुजं रौद्रं त्रिशीर्षं नवलोचनम्।
त्रिपादं रक्तनेत्रं च ज्वलन्तमिव पावकम्॥ ९४ ॥
भूतपृष्ठे समारूढं पाशतोमरमुद्गरैः।
शोभितं भुजदण्डैश्च सौम्यरूपं महाप्रभुम्॥ ९५ ॥
स- सकारं सर्वभूतेषु सर्वभूतेष्ववस्थितम्।
कृमिकीटपतङ्गेषु चिन्तयेदमृतोपमम्॥ ९६ ॥
ह- हकारं संप्रवक्ष्यामि शब्दरूपं परात्परम्।
सूक्ष्मं नीरञ्जनं नित्यं शब्दातीतं परात्परम्॥ ९७ ॥
भिन्नेन्द्रनीलसंकाशं कालिन्दीजलसन्निभम्।
ध्यात्वा च नाशयेदेतद्विषं स्थावरजङ्गमम्॥ ९८ ॥
क्ष- क्षकारं पठ्यते यत्तु स्वयंभुवरुणायकम्।
पद्मासनसमारूढं शशाङ्काङ्कितशेखरम्॥ ९९ ॥
जटामुकुटसन्नद्धं पञ्चवक्त्रं त्रिलोचनम्।
अणिमाद्यष्टकं प्रोक्तं सर्वायुधविभूषितम्॥ १०० ॥
दण्डं कण्ठाख्यमालां च गदां चक्रं त्रिशूलिनम्।
अङ्कुशं रत्नपात्रं च सर्वमापरिवारितम्॥ १०१ ॥
सर्वसिद्धिकरं ह्येतत्क्षकारं परिपठ्यताम्।
ब्रह्मविष्णुमहेशाद्या नित्यं ध्यायन्ति योगिनः॥ १०२ ॥
एनं मन्त्रं वरं प्राप्य त्यजेदन्यत्पलालवत्।
नवतत्त्वसमायुक्तं क्षकारं प्रतिपद्यताम्॥ १०३ ॥
व्याधितस्करचौरेभ्यो बन्धने ग्रहसङ्कटे।
जपन्स्मरँश्च ध्यायेद्यो न भयं विन्दते क्वचित्॥ १०४ ॥
अधुना संप्रवक्ष्यामि कलानाञ्च यथार्थतः।

पूर्वस्थं चैव वर्णानां तथैवमनुपूर्वशः ॥ १०५ ॥

अ- अकारं विष्णुदैवत्यं वैष्णव्या चापराजितम् ।
शङ्खचक्रगदापाणि चतुर्वक्त्रं चतुर्भुजम् ॥ १०६ ॥
गरुडासनमारूढं सर्वदुष्टनिकृन्तनम् ।

आ- आकारं ब्रह्मदैवत्यं हंसारूढं चतुर्भुजम् ॥ १०७ ॥
चतुर्वक्त्रं सरूपं च सुरक्तायितलोचनम् ।
दण्डं कमण्डलुं चैव मुञ्जमेखलधारिणम् ॥ १०८ ॥
ब्रह्मसूत्रधरा देवी ब्रह्माणी प्रतिपठ्यताम् ।

इ- इकारः पार्वती देवी सौम्यरूपा त्रिलोचना ॥ १०९ ॥
सुभ्रूललाटविम्बोष्ठी वलित्रितयशालिनी ।
कुटिला कुञ्चिता केशी पीनोन्नतपयोधरा ॥ ११० ॥

ई- ईकारमीश्वरं विद्याञ्जटामुकुटधारिणम् ।
शशाङ्कशेखरं देवं पञ्चवक्त्रं त्रिलोचनम् ॥ १११ ॥
कपालमालिनं देवं जटामुकुटधारिणम् ।
शिवशक्त्या सहैकोऽयं त्रिदशेष्वपि दुर्लभम् ॥ ११२ ॥

उ- उकारो विनतापुत्रः स्वयं तार्क्ष्यपतिः शुभः ।
अन्याहतगतिर्नित्यो भुवनानि चतुर्दश ॥ ११३ ॥
हरिवहा तु तद्देवी यक्षभूतविनाशिनी ।
गारुडी सा तु विज्ञेया सर्वदुष्टविनाशिनी ॥ ११४ ॥
सर्वेषां च ग्रहादीनामुन्मादकारिणी शुभा ॥ ११५ ॥

ऊ- ऊकारं हंसमित्युक्तं शङ्खकुन्देन्दुसन्निभम् ।
स्मरणात्सर्वपापानि नाशयेन्नात्र संशयः ॥ ११६ ॥
ऋ ॠ ऌ ॡ- ऋ ॠ ऌ ॡ ऋग्वेदं च यजुः सामः प्रकीर्त्तितः ।
वेदमाथर्वणं चैव पूजाकाले तु चिन्तयेत् ॥ ११७ ॥

ए- एकारं षण्मुखं विद्याच्चतुर्विंशार्द्धलोचनम् ।
शिखिवाहनमारूढ शक्तिहस्तं महाबलम् ॥ ११८ ॥
स्मरणान्नाशयेद्देवकौमारग्रहपीडनम् ।

ऐ- ऐकारं सुरराजेन्द्रमैरावतरथास्थितम् ॥ ११९ ॥
तेजस्विनं सहस्राक्षं वज्रहस्तं महाबलम् ।
द्विभुजं सौम्यवदनं नेत्रत्रयविभूषितम् ॥ १२० ॥

ओ- ओकारं सिंहमारूढं त्रिनेत्रं च महाबलम् ।

द्विभुजं सौम्यवदनं शोभमानं महाभुजम् ॥ १२१ ॥
शिवदूती च सा देवी स्मशाननिलया प्रिया ।
औ- औकारो भैरवः साक्षात् ज्वालाकपिललोचनः ॥[1] १२२ ॥
दंष्ट्रा कराली भीमश्च लेलिहानः सुभीषणः ।
त्रिपादस्त्रिकरो ज्ञेयस्त्रिशीर्षः करशेखरः ॥ १२३ ॥
आधारश्चार्धमातृणां योगिनीनां सदालयः ।
शूलमुद्गरवीणासि वीणाङ्कुशधरस्तथा ॥ १२४ ॥
गजचर्मनिबद्धाङ्गः सर्पमेखलमण्डितः ।
सर्वाभरणसंयुक्तो मणिकुण्डलभूषितः ॥ १२५ ॥
नृत्यमानः स्मशानेषु क्रीडन् वेतालकैः सहः ।
अं- अंकारं बिन्दुसंयुक्तं शुष्कादेवी तु भीषणा ॥ १२६ ॥
अन्त्राण्डपिशिताहारा चास्थिभिः कृतमेखला ।
अस्थिशेषा च निर्मांसा प्रेतवाहनसंस्थिता ॥ ११७ ॥
दंष्ट्रा करालिनी चोग्रा मेघगम्भीरनिः स्वना ।
शुष्का शुष्कमुखी भीमा चोर्ध्वकेशी भयानका ॥ १२८ ॥
समांसरूधिराहारा श्मशाने नित्यवासिनी ।
गजचर्मोत्तरीया तु नागाभरणभूषिता ॥ १२९ ॥
चामुण्डा मुण्डवेगा च खेचरी हृदयङ्गमा ।
अः- अः-षोडशं चैव बीजं शीतं तुहिनशीतलम् ॥ १३० ॥
पूर्णेन्दुवदनं सौम्यं करषोडशवत् सदा ।
सिच्यमानं सदा ध्यायेदमृतं श्रवते सदा ॥ १३१ ॥
जीवस्याप्यायनकरं विषमज्वरनाशनम् ।
एकाह्निकं मुहूर्त्ते च द्वितीयकचतुर्थकम् [2]॥ १३२ ॥
शीतज्वरे महाघोरे पित्तोन्मादज्वरं तथा ।
मासे षाण्मासिके चैव तथा साम्वत्सरादिके ॥ १३३ ॥
नाशनं सर्वरोगाणामायुरारोग्यवर्द्धनम् ।
एतद्देवि मया ख्यातं धर्मसर्वस्वमात्मनः[3] ॥ १३४ ॥
न कस्यचिन्मयाख्यातं त्वां विना वरवर्णिनि ।
यो न जानाति मूढात्मा मातृकाज्ञानमुत्तमम् ॥ १३५ ॥

१ रक्तवर्णा द्विहस्ता च वराभयकराशुभां इति अधिकः पाठोऽन्यत्र ।

२ द्वितृतीयचतुर्थकम् पाठोऽन्यत्र

३ हस्तेऽमृतधरं पद्मासनं पुरुषरूपधृक् । पाठोऽन्यत्र ।

व्यर्थः परिश्रमस्तेषां सिद्धिमार्गस्तु दूरगः।
क्षेमशम्भुः स्वयं देवः पञ्चास्यश्चन्द्रशेखरः॥ १३६ ॥
खट्वाङ्गाङ्कुशशूलााक्षमालाटङ्कं मणिं गदाम्।
दण्डमुद्गरचक्राङ्कदशपाणिर्हलायुधः॥ १३७ ॥
धर्माधर्मवेदयुगो धर्मासनो नरोर्ध्वगः।
वर्णाक्षत्रेश्वरामन्त्रा अपृथक्त्वेन संस्थिताः॥ १३८ ॥
सिद्धिदा पूजिता नित्यं जपध्यानप्रतर्पणैः।
तस्मात्सर्वप्रयत्नेन वर्णध्यानभुजायुधाः॥ १३९ ॥
कार्यसिद्ध्यै चिन्तनीया नियोज्यास्तत्त्वदर्शनाः।
उमानिलकनित्येताः प्रेक्ष्य वाक्यागमान् बहून्॥ १४० ॥

**अथ क्रमेण दशविद्याया मन्त्र भेदानाह।**

**तत्रादौ श्यामायाः**

श्यामा- क्रीमित्येकाक्षरो मन्त्रः कालिकायाः प्रकीर्त्तितः।
जपपूजादिकं प्राग्वद्विशेषाद् भोगमोक्षदः॥ १४१ ॥
कालीहृदयविद्यां च सिद्धविद्यां महोदयाम्।
पुरा येषा तथा सिद्धिमवापुस्त्रिदिवौकसः॥ १४२ ॥
मन्त्रराजमिदं ख्यातं दुर्लभं पापचेतसाम्।
सुकृतां सुलभं भक्त्या साधकानां महात्मनाम्॥ १४३ ॥
अनया सदृशी विद्या न हि सारस्वतप्रदा।
ब्रह्मासरस्वतीयुक्तो देवतामुखसंस्थितः॥ १४४ ॥
विद्याशक्तिसमायुक्तः कालीमन्त्र उदाहृतः।
एकं वा द्विगुणं वाऽपि त्रिगुणं वाऽपि भैरव॥ १४५ ॥
जप्त्वा च कर्षयेत्सर्वं जगत्स्थावरजङ्गमम्।
एषा विद्या महाविद्या गुह्याद्गुह्यतरा स्मृता॥ १४६ ॥
पूर्वं बीजं परं शक्तिर्बीजेन मूर्त्तिकल्पना।
षड्दीर्घभाजा बीजेन कुर्यादङ्गादिकल्पनाम्॥ १४७ ॥
त्र्यक्षरी या महाविद्या तामद्य कथयामि ते।
मूलबीजं तथा माया लज्जाबीजं ततः परम्॥ १४८ ॥
एषां विज्ञानमात्रेण भवेद्गङ्गाधरः स्वयम्।
आदौ वाग्भवबीजं तु वन्ह्यारूढः प्रजापतिः॥ १४९ ॥

श्रिया युक्तो बिन्दुना च बीजमेतत् पठेत् त्रिधा।
कथितेयं महाविद्या कौलिकी कुलसुन्दरी॥ १५०॥
सार्वज्ञदायिनी श्यामा कवित्ववित्तवर्द्धिनी।[४]
सुप्तादिदोषरहिता स्मरणात्सर्वसिद्धिदा॥ १५१॥
नापेक्षा जपहोमस्य नाचारस्य विशेषतः।
ग्रहणात्सिद्धिदा विद्या नन्दिकेश्वरपूजिता॥ १५२॥
भैरवोऽस्या ऋषिः प्रोक्ताः उष्णिक् छन्द उदाहृतम्।
देवता दक्षिणा काली समस्तफलसिद्धिदा॥ १५३॥
कालीबीजं च हूँ माया हूँ फट् पञ्चाक्षरो मनुः।
न्यासध्यानादिकं प्राग्वद्विशेषाद् भूतनाशनः॥ १५४॥
क्रींमुक्त्वा कालिके स्वाहा षड्वर्णो मन्त्र ईरितः।
न्यासपूजादिकं प्राग्वद्विशेषाद् भोगदो मतः॥ १५५॥
कामबीजं समालिख्य कालिकायै पदं लिखेत्।
नमोऽन्तेन च देवेशि सप्तार्णो मनुरुत्तमः॥ १५६॥
सर्वाङ्गं कालिका देवी अन्यत्सर्वं तु पूर्ववत्।
अथातः संप्रवक्ष्यामि मन्त्रमष्टाक्षरं परम्॥ १५७॥
दक्षिणे कालिके स्वाहा मन्त्रेऽष्टाक्षर ईरितः।
न्यासः प्राग्वद् ध्यानमत्र शवरूपशिवस्थिताम्॥ १५८॥
महाकालरतासक्तां शिवाभिर्दिक्षुवेष्ठिताम्।
नवशक्तियुते पीठे सा जयाविजयाऽजिता॥ १५९॥
तथा पराजिता नित्या विलासिन्यपि कीर्त्तिता।
दोग्ध्रा घोरा मङ्गलेति पीठमन्त्रो कवर्णकः॥ १६०॥
ह्रीं कालिका योगपीठात्मने नम उदाहृतः।
अङ्गानि पूर्वमाराध्य षट्पत्रेषु समर्चयेत्॥ १६१॥
कालीं कपालिनीं कुल्लां कुरुकुल्लां विरोधिनीम्।
विप्रचित्तां च संपूज्य नवकोणेषु पूजयेत्॥ १६२॥
उग्रामुग्रप्रभां दीप्तां वीरां घनां बलाकिकाम्।
मात्रां मुद्रां तथामित्रां पूजयेन्नवमातरम्॥ १६३॥
पूर्वोक्ता भूपुरे पूज्या भैरवाष्टौ च भैरवी।
ततो महाभैरवी च तृतीया सिंहभैरवी॥ १६४॥

---

४ सर्वसौभाग्यनिलया सर्वसौख्यप्रदायिनी इत्यपि पाठः।

धूम्राख्या भैरवी तूर्या पञ्चमी भीमभैरवी ।
उन्मत्तभैरवी षष्ठी वशीकरणभैरवी ॥ १६५ ॥
सप्तमी स्यादष्टमी तु प्रोक्ता मोहनभैरवी ।
दिक्पतींश्च तदस्त्राणि पूजैवं परिकीर्त्तता ॥ १६६ ॥
पुरश्चर्यादिकं प्राग्वत्प्रयोगानाचरेत्तथा ।
स्त्रीणां प्रहारं निन्दां च कौटिल्यं चाप्रियं वचः ॥ १६७ ॥
आत्मनो हितमन्विच्छन्कालीभक्तो विवर्जयेत् ।
असृजा महिषादीनां कालिकां यस्तु तर्पयेत् ॥ १६८ ॥
तस्य स्युरचिरादेव करस्थाः सर्वसिद्धयः ।
अथाधारां प्रवक्ष्यामि विद्यां तां च नवाक्षरीम् ॥ १६९ ॥
मूलबीजं समुद्धृत्य संबुद्ध्यन्तपदद्वयम् ।
स्वाहान्ता कथिता विद्या सर्वशत्रुक्षयङ्करी ॥ १७० ॥
स्वबीजं पूर्वमुद्धृत्य दक्षिणे कालिके ततः ।
स्वबीजं चैव स्वाहां च कालिकाऽसौ दशाक्षरी ॥ १७१ ॥
एकादशाक्षरी विद्या कथ्यते श्रृणु पार्वति ।
वाग्भवं हृदयं ब्रूयाद् ब्रह्न्यारूढं प्रजापतिम् ॥ १७२ ॥
चतुर्थस्वरसंयुक्तं नादबिन्दुविभूषितम् ।
द्विगुणं च ततः कृत्वा ङेऽन्तं च कालिका पदम् ॥ १७३ ॥
स्वाहा च कथिता विद्या प्रिये एकादशाक्षरी ।
ऋषिः स्याद्दक्षिणामूर्त्तिश्छन्दः पङ्क्तिरुदाहृतम् ॥ १७४ ॥
परात्परतरा शक्तिः कालिका देवता स्मृता ।
एकादशाक्षरी विद्या कालिकायाः सुदुर्लभा ॥ १७५ ॥
भाग्येन लभ्यते चैषा चतुर्वर्गफलप्रदा ।
लक्षत्रयं जपेद् विद्यां पुरश्चरणकर्मणि ॥ १७६ ॥
अन्यासां वर्णलक्षं स्यात्कथितं पद्मयोनिना ।
आसां ध्यानमहं वक्ष्ये श्रृणुष्व कमलानने ॥ १७७ ॥
ऋषिणा यत्पुरा प्रोक्तं दक्षिणामूर्त्तिसंज्ञिता ।
चतुर्भुजां कृष्णवर्णां मुण्डमालाविभूषिताम् ॥ १७८ ॥
खड्गं च दक्षिणे पाणौ विभ्रदिन्दीवरद्वयम्[५] ।
कर्त्रिकां खर्परं चैव क्रमाद्वामेण विभ्रतीम् ॥ १७९ ॥

---

५ विभ्रतीं हि वरद्वयम् पाठ उचितः ।

द्यां लिखन्तीं जटामेकां विभ्रतीं शिरसा स्वयम् ।
मुण्डमालाधरां शीर्षे ग्रीवायामपि सर्वदा ॥ १८० ॥
वक्षसा नागहारेण विभ्रतीं रक्तलोचनाम् ।
कृष्णवस्त्रधरां[६] कट्यां व्याघ्राजिनसमन्विताम् ॥ १८१ ॥
वामपादं शवहृदि संस्थाप्य दक्षिणं पदम् ।
विन्यस्य सिंहपृष्ठे तु लेलिहानां शवं स्वयम् ॥ १८२ ॥
अट्टहासां महाघोररावयुक्तां च भूषणाम् ।
एवं सञ्चिन्तयेत्कालीं कलिकल्मषनाशिनीम् ॥ १८३ ॥
सततं भक्तिनम्रैस्तु भाग्यैश्वर्यसुखेप्सुभिः ।
गुरुं नत्वा विधानेन चिन्त्या हि परदेवता ॥ १८४ ॥
माया बीजद्वयं देवि दक्षिणे कालिके पदम् ।
कूर्चबीजं तथा माया तदन्ते वह्निवल्लभा ॥ १८५ ॥
एषा काली महाविद्या सर्वसारस्वतप्रदा ॥ १८६ ॥
अथातः संप्रवक्ष्यामि शक्तवर्णमनुत्तमम् ।
क्रीं हूँ ह्रीं दक्षिणे कालिके क्रीं हूँ ह्रीं दह प्रिया ॥ १८७ ॥
यजनं पूर्ववत्प्रोक्तं न्यासध्यानजपादिकम् ।
विशेषन्नृसुरादीनामयमाकर्षणक्षमः ॥ १८८ ॥
क्रीं क्रीं क्रीं हूँ समुच्चार्य हूँ लज्जाद्वयमुच्चरेत् ।
दक्षिणे कालिके स्वाहा तिथिवर्णैः प्रकीर्त्तितः ॥ १८९ ॥
मन्त्रराजोऽयमाख्यातः पूर्ववत्स्यादुपासना ।
विशेषाद् गतराज्यानामयं राज्यप्रदो भवेत् ॥ १९० ॥
अथ वक्ष्ये महेशानि काली कल्मषनाशिनीम् ।
यस्याः कटाक्षमात्रेण भवेद् वागीश्वरोऽपरः ॥ १९१ ॥
धनं धान्यं सुतं जायां हयं हस्तिनमेव च ।
या या मनसि वाञ्छास्ति तां सर्वां लभते ध्रुवम् ॥ १९२ ॥
नातः परतरा विद्या तीर्थं नातः परात्परम् ।
नातः परतरं कार्यं मुनीनां मोक्षदायिनीम् ॥ १९३ ॥
गृहीनां च यतीनां च सर्ववाञ्छाफलप्रदा ।
नार्चनं पूजनं तस्य मन्त्रमात्रं जपेन्नरः ॥ १९४ ॥
करस्थाः सिद्धयः सर्वा भवन्त्यस्य कलौ युगे ।

---

६ कृष्णवस्त्रधरामित्यतः भीषणमित्यन्तो पाठः १८१-१८२ मा ख न प्राप्यते ।

ब्रह्मत्रयं समुद्धृत्य रतिवह्निसमन्वितम् ॥ १९५ ॥
नादबिन्दु समायुक्तं लज्जाकूर्चद्वयं परम् ।
पुनः क्रमेण उद्धृत्य वह्निजायावधिस्ततः ॥ १९६ ॥
षोडशीयं समाख्याता विद्या कल्पद्रुमोपमा ।
पूर्ववत्पूजनं तस्याः सर्वं न्यासादिकं प्रिये ॥ १९७ ॥
चतुर्दशी षोडशी च त्रिंशद्वर्णात्मिका च या ।
तासां लक्षप्रमाणं स्यान्पुरश्चरणकर्मणि ॥ १९८ ॥
अन्यासां सर्वविद्यानां वर्णलक्षं प्रकीर्त्तितम् ।
सर्वासां तु महापूजा दक्षिणावत् प्रकीर्त्तिता ॥ १९९ ॥
अथापरां प्रवक्ष्यामि विद्यां विंशतिवर्णिकाम् ।
यस्याः प्रसादमात्रेण भवेद्भूमिपुरन्दरः ॥ २०० ॥
मूलबीजद्वयं ब्रूयात्ततः कूर्चद्वयं वदेत् ।
लज्जायुगं समुद्धृत्य संबोध्यन्तपदद्वयम् ॥ २०१ ॥
पूर्ववत्षट् तथा बीजान्यन्ते च वह्नि सुन्दरी ।
ऋषिः स्याद्दक्षिणामूर्त्तिः पङ्क्तिश्छन्दः उदाहृतम् ॥ २०२ ॥
देवता कथिता सद्भिः काली दक्षिणपूर्विका ।
अथान्यत्सम्प्रवक्ष्यामि ह्येकविंशतिवर्णकम् ॥ २०३ ॥
ॐ ह्रीं ह्रीं हूँ युगं त्रिः क्रीं दक्षिणे कालिके वदेत् ।
त्रिः क्रीं हूँ हूँ शक्तियुग्ममस्य न्यासादि पूर्ववत् ॥ २०४ ॥
विल्वमूले शवारूढो वरमूले तथैव च ।
लक्षं मनुमिमं जप्त्वा सर्वसिद्धिश्वरो भवेत् ॥ २०५ ॥
पञ्चमं प्रतिनिध्यायं दक्षिणाम्नायसिद्धिदम् ।
मायाद्वन्द्वं कूर्चयुग्ममैन्द्रान्तं मदनत्रयम् ॥ २०६ ॥
मायाबिन्द्वीश्वरयुतं दक्षिणे कालिके पदम् ।
संहारक्रमयोगेन बीजसप्तकमुद्धरेत् ॥ २०७ ॥
एकविंशत्यक्षरात्मा साराद्यः कलिकामनुः ।
स्वाहान्तश्च त्रयोविंशत्यक्षरो मन्त्रराजकः ॥ २०८ ॥
विना प्रणवं देवेशि द्वाविंशत्यक्षरो मनु ः ।
स्वाहां विनेत्येकविंशत्यक्षरः कामदो मनुः ॥ २०९ ॥
विंशत्यर्णा महाविद्या स्वाहा प्रणववर्जिता ।
ध्यानपूजादिकं सर्वं दक्षिणावदुपाचरेत् ॥ २१० ॥

**अथ ताराभेदाः**

मायाबीजं समुद्धृत्य तकारं वह्निसंयुतम् ।
माया बिन्द्वीश्वरयुतं द्वितीयं बीजमुत्तमम् ॥ २११ ॥
कूर्चबीजं द्वितीयं तु फट्कारं तदनन्तरम् ।
संपूर्ण सिद्धिमन्त्रं तु रश्मिपञ्चकसंयुतम् ॥ २१२ ॥
ताराद्यः पञ्चवर्णोऽयं श्रीमन्नीलसरस्वती ।
सर्वभाषामयी शुद्धा सर्वम्नायैर्नमस्कृता ॥ २१३ ॥
श्रीबीजाद्या यदा विद्या तदा श्रीः सर्वतोमुखी ।
एषैव हि महाविद्या मायाद्या सकलेष्टदा ॥ २१४ ॥
वाग्भवाद्या महाविद्या वाग्रूपा सर्ववाङ्मयी ।
एषा क्रमगता प्राप्ता मतभेदा जगन्मयी ॥ २१५ ॥
तारास्त्ररहिता त्र्यर्णा महानीलसरस्वती ।
कुल्लुकेति समाख्याता त्रिषु लोकेषु गोपिता ॥[७] २१६ ॥

अत्र यद्यपि बधूबीजं चन्द्रहीनमुपात्तम्, तत्तु शापदानात्प्राक् ।
शापोत्तरे तु सर्वत्र सचन्द्रं वधूबीजमिति ज्ञेयम् । तथा च -
वशिष्ठाराधिता चोग्रा न तु शीघ्रफलप्रदा ।
अतस्तेनापि मुनिना शापो दत्तः सुदारुणः ॥ २१७ ॥
ततः प्रभृति विद्येयं फलदात्री च कस्यचित् ।
चन्द्रबीजं जयान्तस्थं बीजोपरि नियोजितम् ॥ २१८ ॥
ततः प्रभृति विद्येयं बधूरिव यशस्विनी ।
फलिनी सर्वविद्यानां जयिनी जयकाङ्क्षिणाम् ॥ २१९ ॥
विषक्षयकरी विद्या ह्यमृतत्त्वप्रदायिनी ॥ २२० ॥
अथातः सम्प्रवक्षामि दैत्यानां वरसिद्धये ।
ब्रह्मणोपासितां तारां बल्यादिभिरूपासिताम् ॥ २२१ ॥
ॐ त्रीं ह्रीं हूँ समुच्चार्य ह्रीं हूँ फट् नमवर्णकः ।
मुनिर्ब्रह्मा च गायत्री छन्दस्तारा च देवता ॥ २२२ ॥
न्यासँस्तु पूर्ववत् कुर्याद् ध्यानमस्या निरूप्यते ।
श्वेताम्बरां चन्द्रकान्तिं चन्द्रार्धकृतशेखराम् ॥ २२३ ॥
कर्तरीं च कपालं च कराभ्यां दधतीं भजे ।

७ केचिदिच्छन्ति तान्त्रिकाः पाठो मा. ख ।

नानालङ्कारशोभाढ्यां त्र्यक्षरां पद्मसंस्थिताम् ॥ २२४ ॥
जपपूजादिकं सर्वमस्याः पूर्ववदाचरेत् ।
मधुयुक् परमान्नेन होमाद् विद्यानिधिर्भवेत् ॥ २२५ ॥
[८]रक्तां वक्ष्ये स्वर्णवर्णां स्तम्भने मारणे स्थिताम्[९] ।
उच्चाटने धूम्रवर्णां शान्तो श्वेतां स्मरेदिमाम् ॥ २२६ ॥
अथातः संप्रवक्ष्यामि तारकस्य वराय तु ।
ब्रह्मणोपासितां तारां द्वादशार्णां सुदुर्लभाम् ॥ २२७ ॥
वाचे लज्जां रमां कामं हसराऔ स्वरान्विताः ।
विसर्गाढ्याः पञ्चमन्तु कूटमेतदुदीरितम् ॥ २२८ ॥
हूँ उग्रतारे हूँ फट् मन्त्रः प्रोक्तो जपादिकम् ।
सर्वं पूर्ववदेवास्य कलौ प्रत्ययकारिणी ॥ २२९ ॥
अथातः संप्रवक्ष्यामि ब्रह्मणा समुपासिताम् ।
हिरण्यकशिपोर्दातुं वरं सप्तार्णसंमिताम् ॥ २३० ॥
प्रणवं कवचं मायां क्लीँ प्राक्कूटं च पञ्चमम् ।
हूँ फडन्तः सर्वमस्य न्यासाद्यं पूर्ववद् भवेत् ॥ २३१ ॥
अथातः संप्रवक्ष्यामि सप्तार्णां रामसेविताम् ।
लक्ष्मीप्रभृतिनाशार्थं तेन मत्तः सदा हली ॥ २३२ ॥
ब्रह्मोपासितसप्तार्णा मध्ये कूटं च पञ्चमम् ।
तत्त्यक्त्वासौ स्तत्र चोक्त्वा बलरामेण सेविताम् ॥ २३३ ॥
शत्रुक्षयकरी चेयं तथा वाक्सिद्धिकारिणी ।
ध्यानपूजादिकं प्राग्वत्प्रयोगादिकमेव च ॥ २३४ ॥
अथातः संप्रवक्ष्यामि नारायणसुसेविताम् ।
पञ्चार्णां यत्प्रभावेण दैत्यानां करणं कृतम् ॥ २३५ ॥
त्रीँ हूँ फट् क्लीँ वाग्भवं च पञ्चार्णा सर्वसिद्धिदा ।
आसां त्रयाणां तु मुनिर्विष्णुः प्राग्वज्जपादिकम् ॥ २३६ ॥
अथातः संप्रवक्ष्यामि मया या समुपासिता ।
दत्ता च रविणाऽऽदित्यै सा विद्या तु षडक्षरी ॥ २३७ ॥
ॐ ह्रीँ हूँ ह्रीँ हूँ फडिति मुनिः सोऽहं च पूर्ववत् ।
ज्ञेयं न्यासादिकं सर्वं प्रयोगादि च पूर्ववत् ॥ २३८ ॥

---

८ इयं पङ्क्तिः मा. ख न वर्तते ।
९ मारणेऽसिताम् पाठोऽन्यत्रः स समुचितः ।

अथान्यं संप्रवक्ष्यामि चास्याः पञ्चाक्षरं मनुम् ।
जलबधार्थं तु मया सिद्धं कृतं सुराः ... ॥ २३९ ॥
त्रीं हूँ हूँ फडिति मनुः पञ्चाक्षरो मतः ।
मया पञ्चमुखैर्जप्तो दक्षमार्गेण यो सुराः ॥ २४० ॥
देवांशेषु च विप्रेषु तथा धर्मपरेषु च ।
यमानां नियमानां च तत्रस्था नान्यदेवताः ॥ २४१ ॥
वाममार्गाऽऽराधितास्तु कर्यं साधयितुं क्षमाः ।
दक्षिणाऽऽराधिता देवा रणसाहाøयकारकाः ॥ २४२ ॥
तेजो निधीन् रिपून् हत्वा नयन्ति ब्रह्म शाश्वतम् ।
क्षत्रियां क्षयार्थं तु मया रामाय चार्पिता ॥ २४३ ॥
पञ्चामृतं सुरास्थाने मांसस्थाने च चूरनम् ।
मत्स्यस्थाने खण्डकाद्यं धर्मपत्न्यां रतं मतम् ॥ २४४ ॥
अन्यत्पूर्ववदेव स्यात् गुह्यमेतत्प्रकाशितम् ।
लुब्धस्तारां न सेवेत लोकद्वयपरिक्षयात् ॥ २४५ ॥
अस्याः पूजादि प्राग्वत्स्यादुविशेषोऽत्र निरूप्यते ।
तारायाः सद्गुरोः सिद्धिस्त्रिरते श्रान्तता भवेत् ॥ २४६ ॥
अथातः संप्रवक्ष्यामि महातारामनुं सुराः ।
सिद्धिर्मार्गद्वयेनापि वर्णावर्णाधिकारतः ॥ २४७ ॥
त्रीं ह्रीं ह्राँ हूँ नमस्तारायै महापदमुच्चरेत् ।
तारायै सकलेत्युक्त्वा दुस्तरात्तारयद्वयम् ॥ २४८ ॥
तारद्वयं वह्निजाया द्वात्रिंशार्णो मनुर्मतः ।
न्यासपूजा जपाद्यं तु प्राग्वत्सर्वं समाचरेत् ॥ २४९ ॥

## अथ छिन्नमस्ताया भेदाः

अथ वक्ष्ये षोडशार्णं चतुर्भेदं मनूत्तमम् ।
श्रीं ह्रीं हूँ ऐं वज्रवैरोचनीयं ह्रीं च हूँ प्रिया ॥ २५० ॥
दहनस्येति तिर्थ्यणौ लक्ष्मीबीजादिके धनम् ।
लज्जाबीजादिके वश्यं हूँ माद्येनाघनाशनम् ॥ २५१ ॥
वाद्वीनाद्येन मोक्षं स्याच्चत्वारः प्रणवादिकाः ।
भवन्ति षोडशार्णाश्च चतुर्मुख मुखेरिताः ॥ २५२ ॥
उपास्याश्चतुराम्नायैर्मुनिर्ब्रह्मा समीरितः ।

न्यासपूजादिकं प्राग्वत्किञ्चित्काम्यमिहोच्यते ॥ २५३ ॥
गुरवे दक्षिणां दद्याद्वस्त्राणि विविधानि च ।
धर्मकामार्थमोक्षाणां गुरुरेवसमाश्रयः ॥ २५४ ॥
साधितोऽयं महामन्त्रः सर्वसिद्धिप्रदायकः ।
ददात्यष्टौ महासिद्धीः किं पुनः क्षुल्लकाः क्रियाः ॥ २५५ ॥
भुक्तो मुक्तौ च शान्तौ च श्वेतपुष्पं विनिर्दिशेत् ।
आकृष्टौ च वशीकारे रक्तमेव विनिर्दिशेत् ॥ २५६ ॥
स्तम्भने मोहने चैव पीतपुष्पं विनिर्दिशेत् ।
काम्यकर्मणि सर्वत्र ध्यानं स्यात्पुष्पवर्णकम् ॥ २५७ ॥
जाग्रच्छयानस्तिष्ठँश्च भुञ्जानो मैथुनेऽपि वा ।
सदाकालं जपेज्मन्त्रमापत्तस्य न विद्यते ॥ २५८ ॥
लिखित्वा स्वकरे मन्त्रं मुष्ठिबन्धं समाचरेत् ।
स्तम्भयेत्याशु शस्त्राणि यावनमुष्ठिं च मुञ्चति ॥ २५९ ॥
लिखित्वा स्वकरे मन्त्रमातुरं संस्पृशञ्जपेत् ।
विमुच्यते हठाद्व्रणो मुक्तरोगः सुखी भवेत् ॥ २६० ॥
अथातः संप्रवक्ष्यामि विश्ववर्णं महामनुम् ।
वज्रवैरोचनीये हूँ ह्रीँ फट् स्वाहा ध्रुवादिकः ॥ २६१ ॥
न्यासपूजादिकं प्राद्य त्किञ्चित्काम्यमुदीर्यते ।
शुष्केण ध्यानमात्रेण मन्त्रमेनं जपेच्चये ॥ २६२ ॥
महारोगशतैर्दष्टं मृतमुत्थापयेन्नरम् ।
रक्तेन वशमायान्ति सर्वे भूतलवासिनः ॥ २६३ ॥
पीतेन स्तम्भयेत्सर्वं नौकावाजिगजादिकम् ।
लिखित्वा स्वकरे यन्त्रं यावन्मुष्ठिं न मुञ्चति ॥ २६४ ॥
कृष्णेन ध्यानमात्रेण रिपूनुच्चाटयेन्नरः ।
मारयेदप्ययत्नेन कृष्णध्यानान्न संशयः ॥ २६५ ॥
तर्पणं च प्रकुर्वीत पयसा पायसेन च ।
घृतेन मधुना वापि सुरया तत्र साधकः ॥ २६६ ॥
ब्राह्मणः क्षत्रियो वैश्यः शूद्रश्चेति यथाक्रमम् ।
तर्पणस्य विधानेन हठात्सिद्धिः प्रवर्त्तते ॥ २६७ ॥
ततो होमं प्रकुर्वीत समिद्भिः कुसुमैस्तथा ।
श्रीफलानां फलानां च तथैवौदुम्बरस्य च ॥ २६८ ॥

सर्वसिद्धिप्रदो होमो विधातव्यः प्रयत्नतः।
शतमष्टोत्तरं कृत्वा जुहूयात्तर्पणोत्तरम्॥ २६९॥
पुष्पहोमविधिं वक्ष्ये सर्वकामफलप्रदम्।
नित्यमष्टोत्तरशतं मासषट्कं समाचरेत्॥ २७०॥
अथवा लक्षमात्रं तु कुर्यात्सिद्धिर्भवेद् ध्रुवम्।
आज्ययुक्तः सामिषश्च होमान्ते प्रत्यहं बलिः॥ २७१॥
श्वेताश्वमारकुसुमैर्जीवयेत्कालदंशितम्।
मध्वक्ततिलपुष्पैस्तु भवेत्संपत्तिरद्भुता॥ २७२॥
कर्णिकारैश्च सतिलैः सहस्रैः सुन्दरी लभेत्।
साज्यैर्बन्धूककुसुमैरयुतैः सुभगो भवेत्॥ २७३॥
बन्धूकपुष्पसतिलतण्डुलैर्मिश्रिताखिलैः।
रक्तचन्दनरक्तैश्च मारपुष्पैर्नृपो वशः॥ २७४॥

## अथ श्रीविद्याभेदमाह

सकला भुवनेशानी कर्मेशी बीजमुद्धृतम्।
अनेन सकला विद्याः कथयामि वरानने॥ २७५॥
शक्त्यन्तं भूर्यवर्णोऽयं कलमध्ये सुलोचने।
वाग्भवं पञ्चवर्णाढ्यं कामराजमथोच्यते॥ २७६॥
मादनं शिवचन्द्राद्यं शिवान्तं मीनलोचने।
कामराजमिदं भद्रे षड्वर्णं सर्वमोहनम्॥ २७७॥
शक्तिबीजं वरारोहे चन्द्राद्यं सर्वमोहनम्।
एतामुपाद्य देवेशि कामसर्वाङ्गसुन्दरः॥ २७८॥
कामराजो भवेद्देवि विद्येयं ब्रह्मरूपिणी।
कामराजाख्यविद्यायास्त्रितयं सुरवन्दिते॥ २७९॥
सहाद्यं शक्तिबीजं स्यात्कामराजे ततः परम्।
हित्वा चन्द्रमुखे कुर्याद् विद्येयं नन्दिपूजिता॥ २८०॥
कामराजाख्यविद्याया शक्तिं भूर्यश्च सुन्दरि।
हित्वा मुखे शिवेन्द्वाढ्या लोपामुद्रा प्रकाशिता॥ २८१॥
कामराजाख्यविद्याया वाग्भवेन वरानने।
विद्योद्धारं प्रवक्ष्यामि शक्तिमादनमध्यगम्॥ २८२॥
मादनं कामराजे तु विद्येयं चन्द्रराधिता।

हसाननं वाग्भवं तु शिवाद्यं सह मध्यगम् ॥ २८३ ॥
मादनं कामिनीराजं तार्तीयं श्रृणु पार्वति ।
हसाद्यं शक्तिबीजं तु कुबेरेण प्रपूजिता ॥ २८४ ॥

श्रीबीजमाया[१०]विशयोनिशक्तिस्तारं च माया कमलाऽथ विद्या ।
शक्त्यादिबीजैश्च विलोमतोक्त्या श्रीषोडशीयं च शिवप्रदिष्टा ॥ २८५ ॥

श्रीमाया मदनो बाला परा तारं शिवप्रिया ।
हरिप्रिया त्रिकुटा सा परावाणी मनोभवाः ॥ २८६ ॥
माया लक्ष्मी महाविद्या श्रीबीजषोडशी परा ॥ २८७ ॥

## अथ त्रिपुरभैरव्या भेदाः

[११]संपत्प्रदा नाम तस्याः श्रृणु निर्मलमानसे ।
शिवश्चन्द्रो वह्निसंस्थो वाग्भवं तदनन्तरम् ॥ २८८ ॥
कामबीजं तथा देवि शिवचन्द्रान्वितं ततः ।
पृथ्वीबीजं तु वन्ह्याद्यं तार्त्तीयं श्रृणु वल्लभे ॥ २८९ ॥
शक्तिबीजं महेशानि शिववह्नी नियोजयेत् ।
कुमार्याः परमेशानि हित्वा सर्गं तु बैन्दवम् ॥ २९० ॥
त्रिपुराभैरवी देवि महासंपत्प्रदा भवेत् ।
आताम्रार्कसहस्राभां स्फुरच्चन्द्रकलाजटाम् ॥ २९१ ॥
किरीटरत्नविलसच्चित्रचित्रितमौक्तिकाम् ।
[१२]गलद्रुधिरपङ्काढ्य मुण्डमालाविराजिताम् ॥ २९२ ॥
नयनत्रयशोभाढ्यां पूर्णेन्दुवदनान्विताम् ॥
मुक्ताहारलताराजत्पीनोन्नतघनस्तनीम् ॥ २९३ ॥
शुक्लाम्बर[१३]परीधानां यौवनोन्मत्तरूपिणीम् ।
पुस्तकं चाभयं वामं  दक्षिणे चाक्षमालिकाम् ॥ २९४ ॥
वरदानरतां नित्यां महासंपत्प्रदां स्मरेत् ॥ २९५ ॥
न्यासपूजादिकं सर्वं कुमार्या इव सुप्रभे ।
अन्यां संपत्प्रदां वक्ष्ये देवीं त्रिपुरभैरवीम् ॥ २९६ ॥

१० स्मर पाठोऽन्यत्र ।
११ यथासौ त्रिपुरा बाला तथा त्रिपुरभैरवी पाठोऽन्यत्र ।
१२ स्रवद् पाठोऽन्यत्र ।
१३ रक्ताम्बरः पाठ उचितः ।

हकारं च सकारं च खकारं च हरौ[14] तथा।
एकारस्वरसंयुक्ता बिन्दुनादविभूषिता ॥ २९७ ॥
पञ्चवर्णात्मकं कूटं प्रथमं परिकीर्त्तितम्।
द्वितीयं बीजमैकारं हसौँस्याच्च तृतीयकम् ॥ २९८ ॥
एवं मन्त्रः समाख्यातो द्विरावृत्त्या षडङ्गकम्।
प्राग्वदन्यान्वदेन्न्यासान् ध्यानमस्या निरूप्यते ॥ २९९ ॥
उद्यत्सूर्यसहस्राभां चन्द्रचूडां त्रिलोचनाम्।
नानालङ्कारसुभगां सर्ववैरिनिकृन्तनीम् ॥ ३०० ॥
स्रवद्रुधिरमुण्डादृ[15] ललितांस्तु[16] सुवाससाम्[17]।
डमरुञ्च त्रिशूलञ्च खड्गं खेटकमेव च ॥ ३०१ ॥
पिनाकं च शरान्पाशमङ्कुशं पुस्तकं तथा।
अक्षमालां दधद्धस्तैः शवसिंहासनस्थिताम् ॥ ३०२ ॥
एवं ध्यात्वा यजेत्पीठं प्रथमं पीठमन्त्रतः।
अघोरे एँ अँ च घोरे माया घोरद्वयन्तरे ॥ ३०३ ॥
श्री सर्वतः सर्वासर्वेभ्यो नमस्ते पदं वदेत्।
रुद्ररूपेभ्यो ह्रीं श्रीं च देवार्णः पीठमन्त्रतः ॥ ३०४ ॥
ततः पूज्यास्तु पीठस्य शक्तयः पृष्ठदेशतः।
वामां ज्येष्ठां च रौद्रीं च कालीं च वरलोचनाम् ॥ ३०५ ॥
कालाढ्यां च चलाढ्यां च यजेद्द्विकरणीं ततः।
बलप्रमथनीं चापि सर्वभूतदमां तथा ॥ ३०६ ॥
द्वादशैताः क्रमाद्देव्यो महतीं च मनोन्मनीम्।
पूजापीठे समुद्धृत्य प्राग्वदङ्गानि पूजयेत् ॥ ३०७ ॥
रत्यादित्रयमभ्यर्च्य तथानङ्गानिकान् यजेत्।
ब्रह्मादियुग्मं संपूज्य वसुपत्रेषु मातृकाः ॥ ३०८ ॥
भूविम्बं लोकपालाँश्च सायुधान् परमेश्वरि।
अन्यत्सर्वं प्रयोगादि त्रिपुराभैरवीसमम् ॥ ३०९ ॥
चैतन्यभैरवीमन्त्रं त्र्यक्षरः कथ्यतेऽधुना।
सहावैकारसंयुक्तौ प्रथमं बीजमीरितम् ॥ ३१० ॥

---

१४ फरौ पाठो मा. ख।

१५ गलद्र इति पाठोऽन्यत्र।

१६ कलिताम् पाठोऽन्यत्र।

१७ रक्तवाससाम् पाठोऽन्यत्र।

सहलैह्रीं समायुक्ता[१८] द्वितीयं बीजमुच्यते ।
सहरा क्षौं[१९] समायुक्ता विसर्गान्ता तृतीयका ॥ ३११ ॥
उद्यद्भानुसहस्राभां नानालङ्कारभूषिताम् ।
मुकुरोर्ध्वलसच्चन्द्ररेखां रक्ताम्बरान्विताम् ॥ ३१२ ॥
पाशाङ्कुशधरां नित्यां वामहस्तकपालिनीम् ।
वरदाभयशोभाढ्यां पीनोन्नतघनस्तनीम् ॥ ३१३ ॥
एवं ध्यात्वा यजेद्देवीं पूर्वसिंहासनस्थिताम् ।
द्विरावृत्त्या षडङ्गानि न्यसेत्सर्वाङ्गलक्षणम् ॥ ३१४ ॥
त्रिकोणं चैव षट्कोणं वसुपत्रं ततः परम् ।
चतुरस्रं चतुर्द्वारमेवं मण्डलमालिखेत् ॥ ३१५ ॥
प्रथमावरणं चात्र षडङ्गे परिकल्पयेत् ।
रत्यादिकास्ततः पूज्यास्त्रिकोणाग्रे वसन्तकम् ॥ ३१६ ॥
वामे कामवधुं दक्षे यजेद्बाणाँश्च पूर्ववत् ।
डाकिनीं राकिनीं चैव लाकिनीं काकिनीं ततः ॥ ३१७ ॥
शाकिनीं हाकिनीं वाऽपि[२०] पश्चिमादिक्रमाद्यजेत् ।
अनङ्गकुसुमादींश्च वसुपत्रेषु पूर्ववत् ॥ ३१८ ॥
परभृत्सारसाख्यौ च शुकमेधात्ह्ण्यौ युतः ।
अपाङ्गभूविलासैश्च मावहावौ च पूजयेत् ॥ ११९ ॥
पुरश्चर्यादिकं प्राग्वत्प्रयोगाँश्चापि साधयेत् ।
तद्वदेव च यन्त्रादि शेषं न्यासादिकं तथा ॥ ३२० ॥
अथातः सम्प्रवक्ष्यामि भुवनेश्वरभैरवीम् ।
हसावैकारसंयुक्तौ प्रथमं बीजमीरितम् ॥ ३२१ ॥
हसकलह्रीं समेतं  द्वितीयं बीजमीरितम् ।
हसावौकारसंयुक्तौ विसर्गान्तं तृतीयकम् ॥ ३२२ ॥
षड्दीर्घान्वितमध्येन बीजेनोक्तं षडङ्गकम् ।
जवाकुसुमसङ्काशां दाडिमीकुसुमप्रभाम् ॥ ३२३ ॥
चन्द्ररेखाजटाजूटां त्रिनेत्रां रक्तवाससाम् ।
नानालङ्कारसुभगां पीनोन्नतघनस्तनीम् ॥ ३२४ ॥
पाशाङ्कुशवराभीतिदधानां च शिवां श्रये ।

१८ सकला ह्री समायुक्ता पाठोऽन्यत्र ।
१९ सहरा औं समायुक्ता पाठोऽन्यत्र ।
२० चाऽपि पाठ उचितः ।

चैतन्यभैरवीवत्स्याद् यद्यन्नोक्तमिहाथ तत् ॥ ३२५ ॥
षडङ्गावरणं चात्र पूर्ववत् परितो यजेत् ।
रत्याद्या पूजयेद्देवि त्रिकोणे तदनन्तरम् ॥ ३२६ ॥
ब्रह्मविष्णुमहेशाद्यास्तत्र पूज्या बहिः पुनः ।
डाकिन्याद्या वसुदले षड्दले हाकिनीमुखाः ॥ ३२७ ॥
अनङ्गकुसुमाद्याश्च ब्राह्मादियुगलं ततः ।
भूविम्बे लोकपालाँश्च वटुकादींश्च पूजयेत् ॥ ३२८ ॥
चतुःषष्टि योगिनीभ्यो हृदन्तोयं दशाक्षरः ।
अष्टपत्रेषु भूविम्बे त्वेकोच्चारेण पूजयेत् ॥ ३२९ ॥
अष्टादशकोटिमहायोगिनीभ्यो नमोऽर्चयेत् ।
जपादिकं प्रयोगाश्च ज्ञेयाः प्राग्वत्तदेव हि ॥ ३३० ॥
अथातः संप्रवक्ष्यामि भैरवीं कमलेश्वरीम् ।
हसस्थानं सहेत्युक्त्वा सर्वमन्त्रापि पूर्ववत् ॥ ३३१ ॥
राज्ञा ज्ञाता ततः शप्ता तुहिनाभे भवन... ।
त्यक्तस्तपा वाममार्गो राजभीत्या तु मत्कृते ॥ ३३२ ॥
यतो लब्धं तया दुःखं कलौ ख्यातिं गमिष्यति ।
प्रणष्टेषु च देवेषु प्रत्यक्षेयं भविष्यति ॥ ३३३ ॥
अवर्णांश्चापि वर्णांश्च भजिष्यन्ति वरप्रदाः ।
त्यक्त्वा म-पञ्चकं पूजां कृत्वा ये जपतत्परा ॥ ३३४ ॥
अस्यास्तीरे पुरश्चर्यानवकात्सम्प्रसीदति ।
भुवनेशी भैरवी तु कृत्वा रूपान्तरं मम ॥ ३३५ ॥
कार्यार्थे बहवः शिष्याः कौलिका वामिनः कृताः ।
तस्माद्ध्यानाद्यर्चनादि प्राग्वद्दक्षिणमार्गतः ॥ ३३६ ॥
अथातः संप्रवक्ष्यामि  हसराद्यां च भैरवीम् ।
भुवनेश्वरभैरव्या बीजादौ हसरान्पठेत् ॥ ३३७ ॥
त्रयाणामपि बीजानां प्रथमं व्यञ्जनात्मकाम् ।
हृत्ताराद्या तदा विदा प्राग्वत्पूजादिकं मतम् ॥ ३३८ ॥
अथातः संप्रवक्ष्यामि सिद्धां कौलेशभैरवीम् ।
आद्यन्तबीजयो रेफरहिता हसरादिकाः ॥ ३३९ ॥
कौलेश्वरी भवेद्दिव्या कौलिकानां सुसिद्धिदा ।
संपत्प्रदाभैरवीवत्सर्वं ध्यानजपादिकम् ॥ ३४० ॥

## अथ महालक्ष्मीभेदाः

अथातः संप्रवक्ष्यामि सप्तविंशाक्षरं मनुम् ।
तारो रमा शक्तिलक्ष्मी कमले कमलालये ॥ ३४१ ॥
प्रसीद द्वितयं श्रीं ह्रीं श्रींमहालक्ष्मीहृत्तथा ।
गायत्रीच्छन्द उद्दिष्टं मुनिर्दक्षप्रजापतिः ॥ ३४२ ॥
लक्ष्मी देव्यथ पञ्चाङ्गं त्रिबीजपुटितैर्मनोः ।
वर्णैस्त्रिपञ्चरानाग्निराभैर्ध्यानमथ ब्रुवे ॥ ३४३ ॥
सिन्दूराभां च पद्मस्थां पद्मपत्रं च दर्पणम् ।
अर्घ्यपात्रं च दधतीं सद्धारमुकुटान्विताम् ॥ ३४४ ॥
नानादासीपरिवृत्तां काञ्चीकुण्डलमण्डिताम् ।
लावण्यभूमिकां वन्दे सुन्दराङ्गदवाहुकाम् ॥ ३४५ ॥
पूर्वोदिते यजेत्पीठे वक्ष्यमाणेन वर्त्मना ।
पुरोऽङ्गानि यजेत्पश्चाच्छ्रीधरादीन् ततः सुधीः ॥ ३४६ ॥
श्रीधरश्च हृषीकेशो वैकुण्ठो विश्वरूपकः ।
वासुदेवः संकर्षणः प्रद्युम्नाश्चानिरुद्धकः ॥ ३४७ ॥
तदग्रेऽष्टदले पूज्या भारती पार्वती तथा ।
ब्राह्मी सती दिक्षु चैता आग्नेयादिविदिक्षु च ॥ ३४८ ॥
दमकः सलिलश्चापि गुग्गुलुश्च कुटण्टकः ।
एते चत्वारस्तु गजा तृतीयेऽष्टदलेर्चयेत् ॥ ३४९ ॥
अनुरागो विसम्वादो विजयो वल्लभो मदः ।
हर्यो बलश्च तेजश्च यजेल्लोकेश्वरान् बहिः ॥ ३५० ॥
तदायुधानि तद्‌बाह्ये पूजयेच्चन्दनादिभिः ।
एवं संपूजयेल्लक्ष्मीं यो मर्त्यः स धनी भवेत् ॥ ३५१ ॥
लक्षं जपेन् फलं विल्वैर्जुहुयान्मधुरोक्षितैः।
दशांशं संस्कृते वह्नौ प्राक्प्रोक्तेनैव वर्त्मना ॥ ३५२ ॥
एवं सिद्धमनुं मन्त्री साधयेदिष्टमात्मनः ।
चन्दनाक्तैः सरसिजैर्लक्षं प्रजुहुयात्सुधीः ॥ ३५३ ॥
लभते वैरिणां राज्ये तथैव समनं विना ।
राज्यलक्ष्मीमनुं चैव प्राप्य राज्यसभां ब्रजेत् ॥ ३५४ ॥
तथा सामान्यतो नित्यं नात्र कार्या विचारणा ।
सह देवी श्रीलता च श्वेतदूर्वाऽपराजिता ॥ ३५५ ॥

भद्रा मधुव्रता शक्त बल्ली साञ्जलिमूशली ।
हरिचन्दन कालीय कर्पूररक्तचन्दनम् ॥ ३५६ ॥
कुष्वकं[२१] कोलकाश्मीरहरिद्राशिखरी समे ।
पिष्ट्वा सम्यक् च सञ्जप्तमष्टोत्तरसहस्रके ॥ ३५७ ॥
अनेन तिलकं कुर्यात्सर्ववश्यं भवेद् ध्रुवम् ।
पूर्वोक्ताश्चात्र सिद्ध्यन्ति प्रयोगा वाञ्छितार्थदाः ॥ ३५८ ॥
ॐ शुद्धवाससे प्रोक्ता नमो महाश्रियै च हृत् ।
चतुर्दशाक्षरां मन्त्रां लक्ष्मीहृदयनामकः ॥ ३५९ ॥
मनोः पदैश्च पञ्चाङ्गं पूर्ववद्ध्यानपूजनम् ।
जपत्रिलक्षमेतस्य पद्मैर्होमो दशांशतः ॥ ३६० ॥
मुनिश्छन्दादिकं प्राग्वत् प्रयोगा पूर्ववन्मताः ।
एतस्योपासकानां तु न वंशे स्याद्दरिद्रता ॥ ३६१ ॥
यौ तमौ तभये प्रोक्ता श्रियै श्रीर्नम इत्यपि ।
एकादशार्णो मन्त्रोऽयं जमदग्निर्मतो मुनिः ॥ ३६२ ॥
त्रिष्टुप्छन्दो नमो देवी षडङ्गविधिरुच्यते ।
यौ तमौ तभये नमौ हृदयाय नमस्तु हृत् ॥ ३६३ ॥
यौ तमौ तभये स्वाहा शिरसेऽग्निवधुः शिरः ।
यौ तमौ तभये हूँ फट् शिखायै च वषट् शिखा ॥ ३६४ ॥
यौ तमौ तभये हूँ स्यात्कवचं कवचाय हूँ ।
श्रियै नेत्रत्रयाय वौषट् प्रोक्ता नेत्रं तु विन्यसेत् ॥ ३६५ ॥
श्री नमोऽस्त्राय फट्चेति ह्यस्त्रेऽङ्गुल्यादिके तथा ।
ध्यानपूजादिके सर्वं महालक्ष्मीवदाचरेत् ॥ ३६६ ॥
नित्यं द्वादशसाहस्रं सप्तरात्रं मनुं जपेत् ।
तेन सिद्धो भवेन्मन्त्रः साधकस्य न संशयः ॥ ३६७ ॥
होमः पूर्वोदितैर्मन्त्रैर्दशांशं तर्पणादिकम् ।
कृत्वा ब्राह्मणभोज्यान्तं मन्त्रसिद्धिः प्रजायते ॥ ३६८ ॥
लक्ष्मीं सुवर्णाब्जकरां ध्यात्वा मन्त्रमिमं जपेत् ।
अष्टोत्तरसहस्रं च स लभेद् वाञ्छितां श्रियम् ॥ ३६९ ॥
जपन्नष्ट शतं विश्वं तिलकाद् वशयेद् ध्रुवम् ।
मासत्रयं तथा जप्त्वा ग्रामं मन्त्रीमवाप्नुयात् ॥ ३७० ॥

---

२१ कुष्टकं पाठो मा. ख ।

**अथ मातङ्गीभेदाः**

अथातः संप्रवक्ष्यामि वश्यमातङ्गिकामनुम्
ॐ राजमुखि राजाधिमुखि वश्यमुखीति च ॥ ३७१ ॥
मायां श्रीँ क्रौँ[२२] देवदेवि महादेवि ततो वदेत् ।
देवाधिदेवि सर्वेति जनस्य मुखमुच्चरेत् ॥ ३७२ ॥
मम वशं कुरुद्वन्द्वं स्वाहान्तोऽङ्कृतार्णकः ।
दिवसप्त कृतदेवेषु मन्त्रार्णैरङ्गकल्पना ॥ ३७३ ॥
विज्ञेयं राजमातङ्गीतुल्यं पूजाजपादिकम् ।
प्रयोगाँश्चापि जानीयाद्विशेषद्वशकृत् त्वियम् ॥ ३७४ ॥
माया नमो हिलि हिलि[२३] चण्डमातङ्गीनीति च ।
स्वाहेति तिथिवर्णोस्या न्यासपूजादिकं भवेत् ॥ ३७५ ॥
राजमातङ्गिका तुल्यं जपश्चायुतसङ्ख्यकः ।
घृतपायसहोमश्च प्रयोगाद्यं च  पूर्ववत् ॥ ३७६ ॥
अथातः संप्रवक्ष्यामि कर्णमातङ्गिकामनुम् ।
वाग्भवं हृदयं चाथ श्रीमातङ्गीपदं ततः[२४] ॥ ३७७ ॥
अमोघे सत्यवादिनि मम कर्णे- पदं ततः ।
अवतरपदं द्वेधा सत्यं कथय युग्मकम् ॥ ३७८ ॥
एह्येहि श्रीँ च मातङ्ग्यै नमस्त्र्यब्ध्यर्णको मनुः ।
अङ्गानि वाग्भवेनात्र पूजाद्यं च कृताकृतम् ॥ ३७९ ॥
लक्ष्यं जपः पयसाद्यैः[२५] होमः सिद्धो भवेन्मनुः ।
कर्णे तु कथयेद्देवी पृच्छकस्य शुभाशुभम् ॥ ३८० ॥
अथान्यत्सम्प्रवक्षामि सर्वमन्त्रोत्तमोत्तमम् ।
ऐँ ह्रीँ श्रीँ आँ समुच्चार्य ह्रीँ क्रौँ क्रीँ ह्रीँ रमां वदेत् ॥ ३८१ ॥
श्रीमातङ्गेश्वरि सर्ववशंकार्यग्निगेहिनी ।
त्रयो[२६]विंशाक्षरो मन्त्रो नाना मन्त्रप्रसाधकः ॥ ३८२ ॥
त्रिवृद्गायत्रिकाच्छन्दो दक्षिणामूर्त्तिको मुनिः ।
मातङ्गी देवता प्रोक्ता आँ ह्रीँ क्रौँ बीजकैर्भवेत् ॥ ३८३ ॥

२२ क्लीँ इति पाठो मेरौ ।
२३ द्वन्द्वं पाठो मेरौ ।
२४ वदेत् पाठोऽन्यत्र ।
२५ पायसाद्यैः पाठो मेरौ ।
२६ सप्त पाठ उचितः ।

द्विरुक्तैश्च षडङ्गस्य विधिः पूजाजपादिकम्।
अष्टनवत्यवर्णमन्त्रसमं कार्यं तथाऽखिलम्॥ ३८४॥
लक्षत्रयं जपेन्मन्त्रं मधुरत्रयलोलितैः।
मधूकपुष्पैर्होमः स्यात् सितया पायसेन च॥ ३८५॥
हुनेत्कदल्याश्च फलैर्मन्त्रसिद्धिः प्रजायते।
समस्तमन्त्रदानादौ सिद्धिः[२७] स्यात्साधकोत्तमः॥ ३८६॥
अथान्यं सम्प्रवक्ष्यामि मातङ्गीमन्त्रमद्भुतम्।
कामिनी रञ्जिनी स्वाहाऽष्टाक्षरोऽयमुदीरितः॥ ३८७॥
ऋषिः संमोहनश्छन्दो निवृत्प्रोक्ताऽस्य देवता।
सर्वसम्मोहिनी चाङ्गं द्विरावृत्तिपदैर्भवेत्॥ ३८८॥
श्यामाङ्गीं वल्लकीं दोर्भ्यां वादयन्तीं सुभूषणाम्।
चन्द्रावतंसां विविधैर्गायनैर्मोहतीं जगत्॥ ३८९॥
पूजा मातङ्गिनीपीठे रत्याद्यास्तु त्रिकोणके।
पञ्चबाणास्ततः पूज्याः केशरेष्वङ्गपूजनम्॥ ३९०॥
अनङ्गकुसुमाद्यास्तु पत्रेष्वग्रेषु मातरः।
लोकपालैश्च वज्राद्यैः सप्तावृत्तिरियं मता॥ ३९१॥
पूजयेदयुतं द्वन्द्वं दशांशं जुहुयात्ततः।
मधूकजैस्त्रिमध्वकैः सर्वं सम्मोहयेज्जगत्॥ ३९२॥
अत्रैव कृष्णमातङ्गी कौतुकं श्रृणु पार्वति।
प्रणवं पूर्वमुद्धृत्य नमो भगवती ततः॥ ३९३॥
कृष्णमातङ्गिनिशिरो वल्कलधारिचोद्धरे।
तत्सर्वजनमोहकारि माया षड्दीर्घयुक् ततः॥ ३९४॥
अमुकं पदमुद्धृत्य मे वश्यामुष्टिमुच्चरेत्।
कुरु स्वाहा युतो मन्त्रः सर्वेषां सुरपादपः॥ ३९५॥
ऋषिः कृष्ण इति ख्यातः सर्वदेवोत्तमोत्तमः।
विराट्छन्द इति ख्यातं मायया तु षडङ्गकम्॥ ३९६॥
ॐ बीजं भुवना शक्तिः स्वाहा कीलकमीरितम्।
त्रैलोक्यवश्यार्थमथ विनियोगः प्रकीर्त्तितः॥ ३९७॥

---

२७ सिद्धः पाठ उचितः।

वीणावादनकोविदां वदघटा लावण्यलीलाम्बरा ।
विम्बोष्ठी वनजाक्षिमुञ्चतनु व्याकीर्णकंशत्रजा ॥
लीलालोलसुवर्णकुण्डलधरा धर्मार्थकामोदया ।
चण्डी चण्डपराक्रमा भवतु नः सर्वार्थसंसाधिका ॥ ३९८ ॥

एवं ध्यात्वा जपेल्लक्षं ततः सिद्धो भवेन्मनुः ।
उच्छिष्टहस्तः प्रजपेदुच्छिष्टेन बलिं चरेत् ॥ ३९९ ॥
एवं प्रजपतस्तस्य सिद्धयो जनवश्यता ।
जापयेद्देवदेवेशि किं पुनः श्रोतुमिच्छसि ॥ ४०० ॥

### अथ भुवनेश्वरीभेदाः

वाग्भवं शम्भुवनिता रमाबीजत्रयात्मकम् ।
मन्त्रं समुद्धरेन्मन्त्री त्रिवर्गफलसाधनम् ॥ ४०१ ॥
षड्दीर्घभाजाबीजेन वाग्भवाद्येन कल्पयेत् ।
षडङ्गानि विधेयानि जातियुक्तो निदेशिकः ॥ ४०२ ॥

सिन्दूरारुणविग्रहां त्रिनयनां माणिक्यमौलिस्फुर-
त्तारानायकशेखरां स्मितमुखीमापीनवक्षोरुहाम् ।
पाणिभ्यां परिपूर्णरत्नचषकं रक्तोत्पलं विभ्रतीम्
सौम्यां रत्नघटस्थसव्यचरणां ध्यायेत्परामम्बिकाम् ॥ ४०३ ॥
रविलक्षं जपेन्मन्त्रं पायसैर्मधुरान्वितैः ।
तद्दशांशेन जुहुयात्तद्दशांशेन तर्पणम् ॥ २०४ ॥
वाग्बीजपुटिता माया विद्येयं त्र्यक्षरी मता ।
मध्येन दीर्घयुक्तेन वाक्पुटेन प्रकल्पयेत् ॥ ४०५ ॥
अङ्गानि जातियुक्तानि क्रमेण मनुवित्तमः ।
यथा पुरा समुद्दिष्टान् व्याख्यान् कुर्वीत मन्त्रवित् ॥ ४०६ ॥

श्यामाङ्गीं शशिशेखरां निजकरैर्दानं च रक्तोत्पलम् ।
रत्नाढ्यं चषकं परं भयहरं संविभ्रतिं शाश्वतीम् ॥
मुक्ताहारलसत्पयोधरनतां नेत्रत्रयोल्लासिनीं
वन्देऽहं सुरपूजितां हरवधूं रक्तारविन्दस्थिताम् ॥ ४०७ ॥

तत्त्वलक्षं जपेन्मन्त्रं जुहुयात्तद्दशांशतः।
पलासपुष्पैः स्याद्रक्तैः पुष्पैर्वा राजवृक्षजैः॥ ४०८॥
हृल्लेखाविहितं पीठे पूजयेत्परमेश्वरीम्।
मध्वादि पूजयेन्मन्त्री हृल्लेखाद्याः पुरोहिताः॥ ४०९॥
मिथुनादि यजेन्मन्त्री षट्कोणेषु यथा पुरा।
अङ्गपूजा केशरेषु पूज्याः पत्रेषु मातरः॥ ४१०॥
भैरवाङ्कसमारूढा स्मेरवक्त्रा मदारसा।
असिताङ्गो रुरुश्चण्डः क्रोधश्चोन्मत्तसंज्ञकः॥ ४११॥
कपाली भीषणः पश्चात्संहारश्चाष्टभैरवाः।
शूलं कपालं प्रेतं च विभ्राणाः क्षुद्रदुन्दुभिः॥ ४१२॥
गजत्वचाम्बरा भीमाः कुटिलालकशोभितः।
दीर्घाद्या मातरः प्रोक्ता ह्रस्वाद्या भैरवाः स्मृताः॥ ४१३॥
पूज्या षोडशपत्रेषु करालाद्याः पुरोदिताः।
तद् बाह्येऽनङ्गरूपाद्या लोके शास्त्राणि तद् बहिः॥ ४१४॥
एवमाराधयेद्देवीं शास्त्रोक्तेनैव वर्त्मना।
वशं नयति राजानं वनिताश्च मदालसाः॥ ४१५॥
अम्भसाऽऽज्येन जुहुयाल्लभते च सुवाञ्छितम्।
सुगन्धैः कुसुमैर्हुत्वा श्रियमाप्नोति वाञ्छिताम्॥ ४१६॥
मन्त्रेणानेन सञ्जप्तमश्नीयादथ मन्वहम्।
भवेदरोगो नियतं दीर्घमायुरवाप्नुयात्॥ ४१७॥
अनन्तो बिन्दु संयुक्तो मायाब्रह्माग्नितारवात्।
पाशादित्र्यक्षरो मन्त्रः सर्ववश्यफलप्रदः। ४१८॥
ऋष्याद्याः पूर्वमुक्ताः स्युर्बीजेनाङ्गक्रिया मता॥ ४१९॥

वराङ्कुशौ पाशमभीतिमुद्रां करैर्वहन्तीं कमलासनस्थाम्।
बालार्ककोटिप्रतिमां त्रिनेत्रां भजेहमाद्यां भुवनेश्वरीं ताम्॥ ४२०॥

हविष्यभुग् भजेन्मन्त्रं तत्त्वलक्षं जितेन्द्रियः।
तत्सहस्रं प्रजुहुयाज्जपान्ते मन्त्रवित्तमः॥ ४२१॥
हृल्लेखा विहिते पीठे नवशक्तिसमन्विते।

अर्चयेत्परमेशानीं वक्ष्यमाणक्रमेण ताम् ॥ ४२२ ॥
हृल्लेखाद्या यजेदादौ कर्णिकायां यथाविधि ।
अङ्गानि केशरेषु स्युः पत्रस्था मातरः क्रमात् ॥ ४२३ ॥
इन्द्रादयः क्रमात्पूज्यास्तेषामस्त्राणि तद्बहिः ।
एवं संपूजयेद्देवीं साक्षाद्वैश्रवणो भवेत् ॥ ४२४ ॥
रज्यते सकलैर्लोकैस्तेजसा भास्करोपमः ।
अनेनाधिष्ठितं गेहं निशिदीपशिखाकुलम् ॥ २२५ ॥
दृश्यते पाणिभिः सर्वैर्मन्त्रस्यास्य प्रभावतः ।
सर्षपैर्लोणसम्मिश्रैराज्याक्तैर्जुहुयान्निशि ॥ ४२६ ॥
राजानं वशयेत्सद्यस्तत्पत्नीमपि साधकः ।
अन्नवानत्र होमेन श्रीमान्पद्महुता भवेत् ॥ ४२७ ॥
राजवृक्षसमुद्भूतैः पुष्पैर्हुत्वा कविर्भवेत् ।
अरोगी तिलहोमेन घृतैरायुरवाप्नुयात् ॥ ४२८ ॥
प्राक्प्रोक्तान्यपि कर्माणि साधयेत्साधकोत्तमः ॥ ४२९ ॥

### अथ धूमावती भेदाः

धूंबीजत्रितयं प्रोच्य धुरयुग्मं समुच्चरेत् ।
धूमावती पदं प्रोच्य क्रौं स्वाहा फट् समन्विता ॥ ४३० ॥
मन्त्रः प्राथमिकः प्रोक्तो द्वितीयं श्रृणु सादरम् ।
प्रणवं धूम्रबीजं च धूमावती पदं वदेत् ॥ ४३१ ॥
देवदत्तो धावतीति स्वाहान्तो मनुराडयम् ।
ऋषिः क्षपणकः ख्यातो गायत्रीच्छन्द ईरितम् ॥ ४३२ ॥
धूमावती देवता च धूँ बीजं बीजमीरितम् ।
स्वाहा शक्तिः समुच्चारे विनियोगः प्रकीर्त्तितः ॥ ४३३ ॥
धां षट्कैस्तु षडङ्गानि ध्यानं श्रृणु वरानने ।
काकारूढाऽतिकृष्णाभा भिन्नदन्ता विरागिणी ॥ ४३४ ॥
मुक्तकेशी सुधूम्राक्षी क्षुत्तृषार्ता भयातुरा ।
चञ्चला चातिकामार्त्ता क्लिष्टा पुष्टा पिशङ्गिका ॥ ४३५ ॥
मलिना श्रमिणी रक्ता व्यक्तगन्धा विरोधिनी ।
धूतशूर्पाग्रहस्ता च ध्येया धूमावती परा ॥ ४३६ ॥
लक्षं जपेन्महेशानि जगदुच्चाटनं भवेत् ॥ ४३७ ॥

### अथ बगलामुखी भेदाः

वह्निहीनेन्द्र युग्माया बगलामुखि सर्वयुक् ।
दुष्टानां वाचमित्युक्त्वा मुखं स्तम्भय कीर्त्तयेत् ॥ ४३८ ॥
जिह्वां कीलय बुद्धिं च विनाशय पदं वदेत् ।
पुनर्बीजं ततस्तारं वह्निजायावधिर्भवेत् ॥ ४३९ ॥
ताराधिका चतुस्त्रिंशदक्षरा बगलामुखी ॥ ४४० ॥
गम्भीरां च मदोन्मत्तां तप्तकाञ्चनसन्निभाम् ।
चतुर्भुजां त्रिनयनां कमलासनसंस्थिताम् ॥ ४४१ ॥
मुद्गरं दक्षिणे पाशं वामे जिह्वां च वज्रकम् ।
पीताम्बरधरां सान्द्रवृत्तपीनपयोधराम् ॥ ४४२ ॥
हेमकुण्डलभूषां च पीतचन्द्रार्धशेखराम् ।
पीतभूषणभूषां च स्वर्णसिंहासने स्थिताम् ॥ ४४३ ॥
न्यासपूजादिकं सर्वं पूर्ववत्समुपार्जितम् ।
तारं च शक्रमायां च प्रासादं च ततः परम् ॥ ४४४ ॥
बगलामुखीपदं चोक्त्वा सर्वदुष्टपदं वदेत् ।
लकारं दीर्घसंयुक्तं बिन्दुना भूषितं तथा ॥ ४४५ ॥
बीजपञ्चकमुच्चार्य वाचोमुखपदं वदेत् ।
स्तम्भय द्वयमुच्चार्य पञ्चबीजानि चोच्चरेत् ॥ ४४६ ॥
बुद्धिं नाशय युग्मं च पञ्चबीजानि चोच्चरेत् ।
जातवेदमुखी मन्त्रो जगदैश्वर्यकारकः ॥ ४४७ ॥
अर्कपञ्चकवर्णेन वन्द्योऽयं मन्त्रनायकः ।
ऋषिरत्राग्निरुद्रस्तु पङ्क्तिश्छन्द उदाहृतम् ॥ ४४८ ॥
जातवेदमुखी मन्त्र देवता समुदाहृता ।
ॐ बीजं ह्लाँ च शक्तिश्च हाँ कीलकमुदाहृतम् ॥ ४४९ ॥
पूर्वन्यासविधिञ्चैव ध्यानं वक्ष्यामि पुत्रक ।
जातवेदमुखी मन्त्र देवता प्राणरूपिणी ॥ ४५० ॥
भजेऽहं स्तम्भनार्थं च स्तम्भिनीं विश्वरूपिणीम् ।
एवं ध्यात्वा जपेन्मन्त्रं त्रिंशल्लक्षं सुपावनम् ॥ ४५१ ॥
चर्मधूकमना भूत्वा चित्रितार्थप्रदं ध्रुवम् ।
गन्धर्वाशँचैव यक्षाँश्च गरुडोरगपन्नगान् ॥ ४५२ ॥
वेतालडाकिनीनाञ्च शाकिनी ब्रह्मराक्षसान् ।

अधुना स्तम्भयेत्येतत् सत्यं शङ्करभाषणम् ॥ ४५३ ॥
ताप्यस्तब्धमाया च वह्निबीजं च पञ्चकम् ।
प्रस्फुरत्रितयं चैव बीजं चैव त्रयोदश ॥ ४५४ ॥
ज्वालामुखी पदं चोक्त्वा वदेद्बीजत्रयोदश ।
सर्व शब्दं तदोच्चार्य दुष्टानां पदमुच्चरेत् ॥ ४५५ ॥
बीजं त्रयोदशं चोक्त्वा वाचोमुखपदं वदेत् ।
स्तम्भय द्वितयं चोक्त्वा पुनर्बीजं त्रयोदश ॥ ४५६ ॥
जिह्वां कीलय प्रोच्चार्य पुनर्बीजं त्रयोदश ।
बुद्धिं विनाशय युगं पुनर्बीजं त्रयोदश ॥ ४५७ ॥
वह्निजायासमायुक्तं ज्वालामुख्यमयो मनुः ।
शतोत्तरं भवेद्विंशद्बीजवर्गो मनुस्त्वयम् ॥ ४५८ ॥
अत्रिश्च ऋषिरेवात्र गायत्रीच्छन्द उच्यते ।
ज्वालामुखी देवता च स्तम्भनाय त्रिमूर्त्तिभिः ॥ ४५९ ॥
ध्यानं यत्नात्प्रवक्षामि न्यासं पूर्ववदाचरेत् ।
ध्यानं विना भवेन्मूको सिद्धमन्त्रोऽपि पुत्रक ॥ ४६० ॥
ज्वलत्पुञ्जसयेन्मुक्तां कालानलसमप्रभाम् ।
चिन्मयीं स्तम्भिनीं देवीं भजेऽहं विधिपूर्वकम् ॥ ४६१ ॥
एवं ध्यात्वा जपेन्मन्त्रमर्कलक्षं सुबुद्धिमान् ।
तर्पणं च गवां क्षीरैस्तालकेन हुनेत्सदा ॥ ४६२ ॥
तर्पणं च चतुर्लक्षं लक्षमेकं हुनेत्सदा ।
सहस्रत्रितयं चैव ब्राह्मणान् भोजयेत्ततः ॥ ४६३ ॥
त्रिमूर्त्तिं स्तम्भयेन्मन्त्री पञ्चतत्त्वनपि क्षणात् ।
आश्चर्यकं महामन्त्रं नराणां भुवि दुर्लभम् ॥ ४६४ ॥
इदानीं मन्त्रराजं च वृहद्भानुमुखद्वयम् ।
माया स्तम्भय बाणं च आश्चर्यं च कलौ युगे ॥ ४६५ ॥
तारं ह्लीं ह्लीं च प्रोच्चार्य ह्लँ ह्लैं ह्लौं च ततः परम् ।
ह्लः इत्युच्चेत्पुत्र ह्लौं ह्लीं ह्लं च ततः परम् ॥ ४६६ ॥
ह्रैं ह्लौं ह्लैं च ततश्चोक्त्वा वगलामुखि पदं वदेत् ।
सर्वशब्दं तदोच्चार्य दुष्टानां पदमुच्चरेत् ॥ ४६७ ॥
वाचो मुखं पदं चोक्त्वा स्तम्भयद्वयमुच्चरेत् ।
आद्यं बीजं मनोः संख्यामुद्धरेत् पुनराद्यवत् ॥ ४६८ ॥

जिह्वां कीलय चोच्चार्य पूर्ववद्बीजमुद्धरेत् ।
वह्निजायासमायुक्तं वृहद्भानुमुखो मनुः ॥ ४६९ ॥
सविता चात्र विख्यातो गायत्री छन्द एव च ।
देवता स्तम्भनास्त्रं च वृहद्भानुमुखी तथा ॥ ४७० ॥
बीजं च बगलाबीजं शक्तिर्माया कुमारक ।
कीलकं प्रणवं चैव विनियोगस्ततः परम् ॥ ४७१ ॥
पूर्ववन्न्यासविद्यां च सर्वं पूर्ववदाचरेत् ।
ध्यानं यत्नात्प्रवक्ष्यामि मन्त्रभेदेन पुत्रक ॥ ४७२ ॥
कालानलनिभां देवीं ज्वलत्पुञ्जसरोरूहाम् ।
कोटिबाहुसमायुक्तां वैरिजिह्वासमन्विताम् ॥ ४७३ ॥
स्तम्भनानन्दमयीं देवीं दृढपीनपयोधराम् ।
मदिरामदसंयुक्तां वृहद्भानुमुखीं भजेत् ॥ ४७४ ॥
एवं ध्यात्वा जपेन्मन्त्रमर्कलक्षं कुमारक ।
तर्पयेत्तद्दशांशं च गुडोदकसमन्वितम् ॥ ४७५ ॥
तालकेन हुनेत् पूर्वं दशांशं संस्कृताग्निना ।
ब्राह्मणान्भोजयेत्पश्चात्तद्दशांशेन कुमारक ॥ ४७६ ॥
मन्त्रान्ते च प्रकर्तव्यं सौभाग्यार्चनमादरात् ।
सौभाग्यार्चां विना पुत्र मन्त्रसिद्धिर्नजायते ॥ ४७७ ॥
पञ्चस्त्रमन्त्रसिद्धिस्तु दिवि देवेषु दुर्लभा ।
गोपयेत्सर्वदा पुत्र गुप्तवीर्यवती भवेत् ॥ ४७८ ॥
न कर्तव्यः प्रयोगोऽस्य शपथादिः कदाचन ।
यः करोति प्रयोगं च देवताशापमाप्नुयात् ॥ ४७९ ॥

## अथ दशविद्याया मन्त्रसंख्यामाह[२८]

दशलक्षप्रभेदैश्च कालीविद्या कलौ स्थिता ।
दशपूर्वैः सप्तलक्षैः सुन्दरी कीर्तिता भुवि ॥ ४८० ॥
त्रिणिखर्वं तु तारायाश्छिन्नायाः खर्वमात्रकम् ।
पञ्चाशीति सहस्रैश्च लक्षपञ्चकसंयुता ॥ ४८१ ॥
भुवनेशी महाविद्या वगलां श्रृणु सादरम् ।
तत्त्वलक्षा तु वगला सहस्रनवतिर्मता ॥ ४८२ ॥

२८ अथ इत्याद्या संयुता इत्यन्तो भागः (श्लोकः ४८०, ४८१) मा. ख नास्ति ।

धूमावती महाविद्या षडशीतिस्तु भैरवी।
मातङ्गी नेत्रलक्षा च कमला लक्षपञ्चका॥ ४८३॥
एता श्रृङ्खलिका योगा प्रस्तारास्तु विनिर्गता॥ ४८४॥

### अथ सन्ततिप्रदाऽऽदिनानाविध प्रयोगमाह

क्रीं हूँ ह्रीं त्र्यक्षरात्माऽयं मन्त्रः काल्याः प्रकीर्तितः।
प्राग्वज्जपादिकं चास्य विशेषात्सन्ततिप्रदः॥ ४८५॥

### अथ वन्ध्यात्वप्रशमनप्रयोगमाह

अथेदानीं प्रवक्ष्यामि कुब्जिकातन्त्रमुत्तमम्।
रक्तमाद्री च षष्ठी च डांकुरो जलकुमारक॥ ४८६॥
चतुर्विधो बाधकः स्यान्मुनिभिः परिकीर्तितः।
तेषां स्वभावं वक्ष्यामि यथाशास्त्रं निशामय॥ ४८७॥
एतेषां फलदं कार्यं नरैः सन्ततिकाङ्क्षया।
निः सारणं स्थापनं च बलिदानं विशेषतः॥ ४८८॥
कर्तव्यं गुरुवाक्येन ज्ञात्वा शास्त्रस्य लक्षणम्।
चतुर्विधो बाधकः स्याज्जायते स तु कालतः॥ ४८९॥
व्यथोत्करस्तथा नाभेरधः पार्श्वे स्तने तथा।
रक्तमाद्री प्रदोषेण जायते फलहीनता॥ ४९०॥
नेत्रे हस्ते भवेज्ज्वाला योनौ चैव विशेषतः।
नानासंयुक्तरक्तश्च षष्ठिनां दूषणं भवेत्॥ ४९१॥
उद्वेगो गुरुता देहे रक्तश्रावो भवेद्बहुः।
नाभेरधो भवेच्छून्यं दांकुरः स तु बाधकः॥ ४९२॥
सशूला च सगर्भा च सूक्ष्मदेहाल्परक्तता।
जलकुमारस्य दोषेण जायते फलहीनता॥ ४९३॥
मासैकेन भवेत्तस्य क्षतस्वानद्वयं तथा।
मलिना रक्तयोनिः स्यात् षष्ठिणी दूषणं भवेत्॥ ४९४॥
मासत्रयं चतुर्थं वा शतहीना भवेद्यदि।
कृशाङ्गी करपाणिः स्याद्ज्वालां डाङ्कुरदूषणम्॥ ४९५॥
सदा क्रुद्धा भवेत्तेन बहुकालं शतस्तथा।
गुरुस्तनी स्वल्परक्त जलकुमारस्य दूषणम्॥ ४९६॥

## अथ प्रशमनविधिः

त्रिकोणमथ षट्कोणं नवकोणं मण्डलाकृतिम् ।
यन्त्रानेतान् समालिख्य पूजयेन्मन्त्रपूर्वकम् ॥ ४९७ ॥

## षष्ठिमातृकाध्यानम्

गौराङ्गीं शशिशेखरां पुत्रस्तेय भुजद्वयाम् ।
ध्यायेत्रिजगतां धात्रीं सुतिकालयवासिनीम् ॥ ४९८ ॥

## डांकुरकुमारयोर्ध्यानम्

शुक्लवर्णं द्विवाहुँ च सुतिकागृहसंस्थितम् ।
स्त्रीरजः पायिनं शान्तं ध्यायेत्त्रिभुवनेश्वरम् ॥ ४९९ ॥
षोडशैरूपचारैस्तु पूजयेत्त्रिदिनावधि ।
सुवर्णरौप्यताम्रादि पट्टवस्त्रादिभूषणः ॥ ५०० ॥
अष्टोत्तरशतं मन्त्रं सहस्रं वा ऽपि भैरव ।
एवं पूजादिकं कृत्वा बलिं दद्याद्विचक्षणः ॥ ५०१ ॥
बलिं तु त्रिविधं दद्यात्खभूजलचरं तथा ।
बलिं दत्त्वा प्रयत्नेन भक्षयेदौषधं शुचि ॥ ५०२ ॥
तारं मायां तथा लक्ष्मीं हूँ-फट् स्वाहान्तिको मनुः ।
जपेदष्टोत्तरशतं रक्तमाद्रीविधिं विदुः ॥ ५०३ ॥
तारं कामबीजयुग्मं फट् स्वाहान्तो मनुर्मतः ।
मन्त्रोऽयं षष्ठिका देव्याः पुत्रसिद्धिप्रदायकः ॥ ५०४ ॥
ॐ ह्रीं मा विमलाबीजयुग्मं वज्रयोगिनी मनुः ।
स्वाहान्तोऽयं महामन्त्रो डाङ्कुरस्य तु वै जपेत् ॥ ५०५ ॥
तारं शूलाय वज्रेति हस्ताय तदनन्तरम् ।
स्वाहान्तोऽयं मनुर्देवि जलकुमारस्य निश्चितम् ॥ ५०६ ॥
स्नानकाले समुत्पन्ने देयमौषधमुत्तमम् ।
रक्तकार्पासमूलं च नागदानां तथैव च ॥ ५०७ ॥
विड्वलायाश्च मूलं च मरीचेन समन्वितम् ।
देयं दिनत्रयं यावदशुचि स्याद् वराङ्गना ॥ ५०८ ॥
स्नानोपरि च दातव्यो वार्त्तक्याः कीटमुत्तमम् ।

एकविंशदिनं यावद् दुग्धेन सह मेथिकाम् ॥ ५०९ ॥
मेथी तोलकमेकं च खण्डं च तोलकद्वयम् ।
घृततोलकमेकं च पिवेद्दुग्धसमन्वितम् ॥ ५१० ॥
मृतवत्सा मृतगर्भा काकवन्ध्या तथैव च ।
पुत्रहीना च वन्ध्या च परेणैव प्रकीर्त्तिता ॥ ५११ ॥
संहरेत्सर्वरोगाणां मेथीभक्षणमुत्तमम् ।
अश्वगन्धा वटव्यालोमूलं लक्ष्मणमूलकम् ॥ ५१२ ॥
भक्षयेत्सप्तरात्राणि दुग्धे पिष्ट्वा पुनः पुनः ।
अवश्यं सन्ततिस्तस्याः पुंहीना भर्गधारिणी ॥ ५१३ ॥

## अबालक संस्कारमन्त्रमाह

अथातः सम्प्रवक्ष्यामि वाङ्मत्याश्च मनूत्तमम् ।
वाग्बीजं प्रथमो मन्त्रो नारदोऽस्य मतो मुनिः ॥ ५१४ ॥
छन्दोऽनुष्टुव्देवता तु वाङ्मती परिकीर्त्तिता ॥
बीजपूर्वैश्च षड्दीर्घैः षडङ्गविधिरीरितः ॥ ५१५ ॥
श्वेताम्बरां श्वेतवर्णां श्वेतगन्धानुलेपनाम् ।
सुधाकुम्भञ्च पद्मञ्च वीणां पुष्ताकमेव च ॥ ५१६ ॥
करैर्दधन्तीं मीनस्थां मुक्तभरणभूषिताम् ।
एवं ध्यात्वा कर्णिकायां यजेद्देवी षडस्रके ॥ ५१७ ॥
रुद्रधारां मणिमतीं फल्गुं विष्णुमतीं तथा ।
प्रभावतीं भानुमतीं भूपुरे तु दिगीश्वरान् ॥ ५१८ ॥
लक्षत्रयं जपेन्मन्त्रं पञ्चखाद्यैस्तथा हुनेत् ।
तर्पणादि ततः कृत्त्वा सिद्धमन्त्रः प्रजायते ॥ ५१९ ॥
सद्योजातस्य बालस्य जिह्वायां बीजमालिखेत् ।
मधुना स्वर्णलेखन्या सोऽष्टवर्षः कविर्भवेत् । ५२० ॥
वाङ्मत्यां वाऽथ गङ्गायां पुरश्चर्यां करोति यः ।
द्वितीयस्य प्रतिग्राही भिक्षाशी वाऽथ मौनवान् ॥ ५२१ ॥
ब्रह्मचारी भूमिशायी श्वेताम्बरधरः शुचिः ।
वाक्सिद्धिं लभतेऽवश्यं दाता भोक्ता त्वयाचकः ॥ ५२२ ॥
रमा त्रयावाग्बीजानि वदेत् ङेन्तां वाङ्मतीम् ।
नमो ममेति च पदं धारणां च ततो धियम् ॥ ५२३ ॥

वाचमद्भुतां प्रदेहि स्वाहान्तस्तत्त्ववर्णकः।
मुन्यादिकं तथा पूजा पुरश्चर्या च पूर्ववत्॥ ५२४॥
स्खलजिह्वस्य वाचं हि लिखितं तुलसीदले।
वाचा कल्केन मन्त्रं तु लिखितं भानुवासरे॥ ५२५॥
हविष्यमन्त्रं भुञ्जीत मौनी लवणवर्जितम्।
सप्तभिर्भानुवारैश्च साक्षात्स्याद्धिषणोपमः॥ ५२६॥
अश्रुतग्रन्थबोधाय ब्रह्मचारी जितेन्द्रियः।
रवौ तु पायसे मन्त्रं लिखेत्स्वर्णशलाकया॥ ५२७॥
तदेव पायसं भुक्त्वा ध्यात्वा देवीं स्वपेन्निशि।
स्वप्नं तमर्थं श्रृणुयान्प्रातर्बीजं स्वयं स्मरेत्॥ ५२८॥

## अथ श्रुतिधरमन्त्रमाह

अथातः सम्प्रवक्ष्यामि मुख्यवागीश्वरीमनुम्।
ह्रीं वाचस्पते अमृतप्लुवः प्लू ह्रीं च संवदेत्॥ ५२९॥
द्वादशार्णो मन्त्रमुक्तो मुनिः कण्ठः प्रकीर्त्तितः।
मुख्यवागीश्वरी देवी विराट्छन्दः प्रकीर्त्तितम्॥ ५३०॥
प्लूः शक्तिर्वाक् च बीजं स्याद् हृत्तु वाचस्पते इति।
अमृतेति शिरः प्रोक्तं प्लुवः शिखा प्लूमेव च॥ ५३१॥
वाचस्पते अमृतेति नेत्रमस्त्रं प्लुवः प्लूः च।
ध्यानपूजादिकं प्राग्वत्प्रयोगः कथ्यतेऽधुना॥ ५३२॥
संवत्सरं हविष्याशी सहस्रं प्रत्यहं जपेत्।
जपान्ते दशवारं च जप्त्वा तेनोदकं पिवेत्॥ ५३३॥
तेन लोकोत्तरा मेधा जायते नात्र संशयः।
जपेद् गोमूत्रपक्वाशी तिथिलक्षं मनुं त्विमम्॥ ५३४॥
साज्यां कोलसमिद्भिस्तु हुनेदष्टसहस्रकम्।
भूतं भव्यं वर्तमानं सर्वं जानाति साधकः॥ ५३५॥
कपिलाज्ययुतं ब्राह्मीरसं प्रातस्तु यः पिवेत्।
चुलुकैकं मन्त्रितं च दशवारं समन्त्रकम्॥ ५३६॥
धारयेद्वेदशास्त्रादि प्रोक्तं चोक्तं च वारकम्।
सकृच्छ्रुतं तु यत्नेन न वै विस्मरति क्वचित्॥ ५३७॥

## अथ सम्पत्तिप्रदमन्त्रमाह

काम शक्र पदारूढरतिर्बिन्दु समन्वितम् ।
वाग्भवं बीजमुद्धृत्य पराप्रासादमुद्धरेत् ॥ ५३८ ॥
अनुलोमविलोमेन प्रोक्ता संवत्सरस्वती ।
षडक्षरी महाविद्या सर्वविद्योत्तमोत्तमा ॥ ५३९ ॥
दीनानां तु दरिद्राणां गताधिकारिणां तथा ।
सम्पत्सरस्वती विद्या महासम्पत्तिदायिनी ॥ ५४० ॥
कण्वो ऋषिर्महेशानि गायत्रं छन्द ईरितम् ।
संपत्सरस्वती देवी देवता परिकीर्त्तिता ॥ ५४१ ॥
ऐँ बीजं क्लीँ तथा शक्तिः हौँः कीलकमीरितम् ।
सम्पत्त्यर्थे महेशानि विनियोगः प्रकीर्त्तितः ॥ ५४२ ॥
षडक्षरेण देवेशि षडङ्गन्यासमाचरेत् ।
व्यापकं नवधा कृत्वा ध्यादेद्देवीं मनोहराम् ॥ ५४३ ॥
अनेककोटिमातङ्गं तुरगरथपङ्क्तिभिः ।
सेवितामरुणाकारां वन्दे सम्पत्सरस्वतीम् ॥ ५४४ ॥
इति ध्यात्वा महेशानि त्रिकोणं चक्रमालिखेत् ।
षट्कोणं च ततो लेख्यं वृत्ताष्टदलभूषितम् ॥ ५४५ ॥
भूपुरेण समायुक्तं यन्त्रसम्पन्मनोगतम् ।
सम्पत्सरस्वतीं देवीं त्रिकोणे परिपूजयेत् ॥ ५४६ ॥
दलेऽष्टमातृकाः पूज्या भैरवेण समन्विताः ।
चतुरस्रे लोकपालान् तदस्त्राणि च तद्बहिः ॥ ५४७ ॥
एवमावरणं पूज्य जपेल्लक्षत्रयं शिवे ।
दशांशेन महेशानि पलाशकुसुमैर्हुनेत् ॥ ५४८ ॥
पुरश्चरणसम्पन्नो प्रयोगार्हो न चान्यथा ।
लक्ष्यमेकं जपेन्मन्त्रं दशांशं पायसैर्हुनेत् ॥ ५४९ ॥
अश्वसाहस्रसंयुक्तो राजा भवति भूतले ।
षट्सहस्रं जपेन्नित्यं दशांशं कमलैर्हुनेत् ॥ ५५० ॥
मातङ्गरथवृन्दं च धनधान्यसमाहितः ।
तस्य गेहे महालक्ष्मीर्मण्डलाज्जायते शिवे ॥ ५५१ ॥
सहस्रं प्रजपेन्नित्यं विधानेन समाहितः ।

तस्य संवत्सराल्लक्ष्मीरचला जायते ध्रुवम् ॥ ५५२ ॥[२९]
सहस्रं जुहुयान्नित्यमनले शालितण्डुलैः ।
मण्डलान्नात्र सन्देहो भूपतित्वमवाप्नुयात् ॥ ५५३ ॥
विल्वमूले जपेन्मन्त्री नित्यं दशसहस्रकम् ।
मासार्धं सकलां लक्ष्मीं प्राप्नोति साधकः पराम् ॥ ५५४ ॥
हुनेद्विल्वसमिद्भिर्यस्तन्मूलेऽष्टोत्तरं शतम् ।
तद्गृहे महदैश्वर्यं त्रिभिर्मासैर्भवेदपि ॥ ५५५ ॥
दशवारं स्पृशेदन्नं जप्त्वा भुङ्क्ते नरो यदि ।
तद्गृहेऽन्नसमृद्धिः स्यादक्षया नात्र संशयः ॥ ५५६ ॥
नदीतीरे जपेन्मन्त्रमेकाग्रमनसा शुचिः ।
दशांशं गोघृतं हुत्वा वशीकुर्याज्जगत्त्रयम् ॥ ५५७ ॥
घृतेन जुहुयान्नित्यं चतुः सहस्रमादरात् ।
अणिमादि गुणैश्वर्यं मासादाप्नोति साधकः ॥ ५५८ ॥

## अथ रोगशान्तिमन्त्रमाह

अथ लोकोपकाराय वक्ष्ये ध्यानजपादिकम् ।
स्वस्य रोगादिके जाते शान्तिर्येनाभिजायते ॥ ५५९ ॥
स्थित्वा मृद्वासने ध्यायेद्गुरुचन्दनपूर्वकम् ।
मस्तके स्थितसम्पूर्णचन्द्रमण्डलमध्यगम् ॥ ५६० ॥
श्रीप्रासादपराबीजं षोडशस्वरसंयुतम् ।
मुक्ता स्फटिककर्पूरकुन्देन्दु धवलं शुभम् ॥ ५६१ ॥
सचन्द्रबीजसञ्जातसुधास्नापितविग्रहम् ।
आत्मानं भावयेद्देवं परस्याऽऽत्मानमेव वा ॥ ५६२ ॥
श्रीप्रासादपरामन्त्रमष्टोत्तरसहस्रकम् ।
तरुणोल्लाससहितां मण्डले प्रजपेद्यदि ॥ ५६३ ॥
अपमृत्युमहारोगजरामरणजां भयम् ।
ग्रहापस्मारवेतालभूतोन्मादादि सम्भवम् ॥ ५६४ ॥
जराधिव्याधिरहितः पुत्रपौत्रादिसंयुतः ।
जीवेद्वर्षशतं साग्रं पूजितः सर्वमानवैः ॥ ५६५ ॥
जरोन्मादादिरोगेषु जपेच्छिरसि चिन्तयेत् ।

२९ श्लोकः ५५२ मा. ख न प्राप्यते ।

शूले वाते व्रणे ग्रन्थौ तत्स्थानेऽपि विचिन्तियेत् ॥ ५६६ ॥
पूर्ववर्तिमहारोगसर्वाङ्गव्यापिनीं स्मरेत् ।
तत्क्षणाच्छान्तिमायाति सर्वरोगान्न संशयः ॥ ५६७ ॥
दशेन्द्रियेषु यो ध्यायेल्लभेदिन्द्रियसौष्ठवम् ।
सदा सञ्चिन्तयेन्मूर्ध्नि स भवेदजरामरः ॥ ५६८ ॥
अथातः सम्प्रवक्ष्यामि भर्त्तुरस्याः परं मनुम् ।
तारा प्रासादबीजं च वं व्योमव्यापिनं द्विठः ॥ ५६९ ॥
एकादशार्ण मन्त्रोऽयं न्यासध्यानार्चनादिकम् ।
प्रासादमन्त्रवज्ज्ञेयमर्धलक्षं पुरस्कृतिः ॥ ५७० ॥
दशांशं जुहुयादाज्यैस्तर्पणादि ततश्चरेत् ।
सिद्धमन्त्रेणौषधं तु दशवाराभिमन्त्रितम् ॥ ५७१ ॥
पृथक्त्वगुणतामेति निर्वीर्यमपि नान्यथा ।
अथवाऽनेन सञ्जातं यदैकादशधारकम् ॥ ५७२ ॥
रोगिणे चौषधं दत्तं ततस्तूर्णं गुणं भवेत् ।
प्रातः कालेन चुलुकोदकमेकादशावधि ॥ ५७३ ॥
मन्त्रयित्वा पिवेत्तस्य प्रत्यहं द्वादशाब्दकम् ।
कलीपलितनिर्मुक्तो जीवेद्वर्षशतं युवा ॥ ५७४ ॥
त्रिवर्षाच्च महारोगा कुष्टाद्या यान्ति संक्षयम् ।
ज्वराद्येकादशाहेन रोगहृन्नान्यतो मनुः ॥ ५७५ ॥

## अथ शीतलाया मन्त्रमाह

अथ वक्ष्ये महेशस्य वस्त्रप्रक्षालिका तु या ।
शीतलेति च विख्याता मसूर्यादिपिठेश्वरी ॥ ५७६ ॥
तारा माया रमाशीतलायै हृच्च नमोक्षरः ।
उपमन्यु मुनिश्छन्दो बृहती शीतलासुरी ॥ ५७७ ॥
षड्दीर्घयुक्तया लक्ष्मीबीजाभ्यां स्यात् षडङ्गकम् ।
ध्यायेच्च शीतलां देवीं रासभस्थां दिगम्बराम् ॥ ५७८ ॥
मार्जनी सूर्पहस्तां च रक्तपुष्पादिचर्चिताम् ।
तैलादिमलसंयुक्तवस्त्रपोटलिशीर्षकाम् ॥ ५७९ ॥
त्रिकोणान्तर्यजेद्देवीं कोद्रवां च मसूरिकाम् ।
सराविकां च कोणेषु भूपुरे त्वष्टभैरवान् ॥ ५८० ॥

अयुतं प्रजपेन्मन्त्रं पायसेन दशांशतः।
होमं कृत्वा तर्पणाद्यैर्मन्त्रसिद्धिः प्रजायते॥ ५८१॥
नाभिमात्रे जले स्थित्वा यः सहस्रं जपेन्मनुम्।
तेन सम्मार्जितास्त्रिर्वा स्फोटा नश्यन्ति तत्क्षणात्॥ ५८२॥
साधितो येन मन्त्रोऽयं तस्य वश्या हि शीतला।
तेनाभिमन्त्रितं भस्म यद् गृहे तत्र सा न हि॥ ५८३॥

## अथविषहरमन्त्रः

अथ वक्ष्ये गरहरं वह्निमन्त्रं चमत्कृतम्।
खः खं स्याद् ह्यक्षरो मन्त्रो मुनिरग्निः प्रकीर्तितः॥ ५८४॥
पङ्क्तिश्छन्दो देवताग्निः खो बीजं शक्तिका तु खम्।
षड्दीर्घस्वरयुक्तेन खकारेणाङ्गकल्पनम्। ५८५॥
ध्यानार्चनादिकं सर्वं स्याद्वैश्वानरमन्त्रवत्।
जपेद्द्वादशसाहस्रं तद्दशांशं घृतैर्हुनेत्॥ ५८६॥
तर्पणादि ततः कृत्वा प्रयोगं तु समाचरेत्।
स्वस्य वामे करतले ध्यायेत्पञ्चदलं स्थितम्॥ ५८७॥
पद्म तत्कर्णिकायां तु सविसर्गं खकारकम्।
स्वानुस्वारं खकारं च ध्यायेत्पद्मदलेषु च॥ ५८८॥
सुधामयं च तज्ज्वाला पश्चाद्धस्ते विभावयेत्।
सम्पूर्णं चामृतमयं विषयुक्तं स्पृशञ्जपेत्॥ ५८९॥
अष्टोत्तरशतं जप्त विषभीतिं विनाशयेत्।
विग्रहाँश्चैव भूतानां सर्पवृश्चिकवेदनाम्॥ ५९०॥
ज्वालाजीर्णविसर्पं च शूलं दण्डादिसम्भवम्।
नेत्ररोगादिकं पीडां सर्वाङ्गस्थां हरेदपि॥ ५९१॥

## अथ कृत्याशान्तिमन्त्रमाह

अथातः सम्प्रवक्ष्यामि परकृत्यानिवारिणीम्।
देवीं प्रत्यङ्गिरानाम्नीं सर्वापत्तिविघातिनीम्॥ ५९२॥
ॐ अँ कँ वँ तथा टँ तँ पँ ह्मँ फों ह्रीं समुच्चरेत्।
हूँ स उक्ता हूँ तथाऽस्त्रं स्वाहान्तः षोडशाक्षरः॥ ५९३॥

मुनिर्विधाता छन्दोऽष्टिदेवताः षट् प्रकीर्त्तिताः।
महावायुर्महालक्ष्मीर्महाकाशस्तथैव च॥ ५९४॥
महासमुद्रनामा च महापर्वत एव च।
महाग्निश्चेति हूँ बीजं ह्रीं शक्तिः परिकीर्त्तिता॥ ५९५॥
लज्जया तु षडङ्गानि षड्दीर्घान्वितया चरेत्।
मन्त्रदेवींस्ततो मन्त्री ध्यायेत्सुस्थिरमानसः॥ ५९६॥
तारारत्नार्चिरात्र्यान्तमम्भः प्रस्रवणैर्युतम्।
व्याघ्रादि पशुभिर्व्याप्तं सानुयुक्तं गिरिं स्मरेत्॥ ५९७॥
मत्स्यकूर्मादिबीजाढ्यं नवरत्नसमन्वितम्।
घनच्छायां सकल्लोलमकूपारं विचिन्तयेत्॥ ५९८॥
ज्वालावली समाक्रान्तं जगत्त्रितयमद्भुतम्।
पीतवर्णं महावह्निं संस्मरेच्छत्रुशान्तये॥ ५९९॥
स्वरा समुत्थरे  वौघमलिने मूर्ध्वभूदिवम्।
पवनं संस्मरेद्विश्वजीवनं प्राणरूपतः॥ ६००॥
नदीपर्वतवृक्षादिकलिता ग्रामसङ्कुला।
आधारभूता जगतो ध्येया पृथ्वीह मन्त्रिणा॥ ६०१॥
सूर्यादिग्रहनक्षत्रकालचक्रसमन्वितम्।
निर्मलं गगनं ध्यायेत्प्राणिनामाश्रयप्रदम्॥ ६०२॥
एवं षड् देवता ध्यात्वा सहस्राणि तु षोडशः।
जपेन्मन्त्रं दशांशेन षड्द्रव्यैर्होममाचरेत्॥ ६०३॥
ब्रीहयस्तण्डुला आज्यं सर्षपाश्चरवस्तिलाः।
एतैर्हुत्वा यथाभागं पीठे पूर्वोदिते यजेत्॥ ६०४॥
अङ्गदिक्पालवज्राद्यैरेवं सिद्धो भवन्मनुः।
शत्रूपद्रवमापन्नो युज्यात्तन्नष्टये मनुम्॥ ६०५॥
अकारं पर्वताकारं धावन्तं शत्रुसम्मुखम्।
पतनोन्मुखमत्युग्रं प्राच्यां दिशि विचिन्तयेत्॥ ६०६॥
ककारं शुद्धकल्लोलं प्लाविताखिलभूतलम्।
समुद्ररूपिणं भीमं प्रतीच्यां दिशि संस्मरेत्॥ ६०७॥
तुरीयपञ्चमाद्यर्णैः पृथ्वी गगनरूपिणौ।
शत्रुवर्गं बन्धमानौ चिन्तयेन्नियतात्मवान्॥ ६०८॥
तदग्रिमं वर्णयुतं शत्रोर्निश्वासपद्धतिम्।

निरुन्धानं स्मरेन्मन्त्री विदधद्रिपुमाकुलम् ॥ ६०९ ॥
मायादिवर्णत्रितयं शत्रोर्नेत्रे श्रुती मुखम् ।
प्रत्येकं तु निरुन्धानं चिन्तयेत्साधकोत्तमः ॥ ६१० ॥
वर्म संक्षोभितं त्वस्रं रिपोराधारदेशतः ।[30]
उत्थाप्य वह्निं तद्देहं प्रदहन् समनुस्मरेत् ॥ ६११ ॥
एवं वर्णान् स्मरन्मन्त्रं जपेद्वर्णसहस्रकम् ।
मण्डलत्रितयादर्वाङ्मारयत्येव विद्विषम् ॥ ६१२ ॥
एवं यः कुरुते कर्म प्राणायामजपादिभिः ।
संशोधयित्वा स्वात्मानं स्वरक्षायै हरिं स्मरेत् ॥ ६१३ ॥
अथ प्रत्याङ्गिरामालामन्त्रः सिद्धः प्रकीर्त्यते ।
ॐ नमः कृष्णवाससे स्तुते विश्वसहस्र  किम् ॥ ६१४ ।
हिंसिनि सहस्रावने महाबलेऽपराजिते ।
प्रत्यङ्गिरे परसैन्य पर कर्मपदं वदेत् ॥ ६१५ ॥
विध्वंसिनि परमन्त्रोत्सादिनीति ततो वदेत् ।
सर्वभूतेति दमनि सर्वदेवान् वदेत्ततः ॥ ६१६ ॥
बन्धयुग्मं सर्वविद्यां विश्छिन्धि क्षोभयद्वयम् ।
परायन्त्रणीति वदेत्स्फोटयद्वितयं ततः ॥ ६१७ ॥
सर्वश्रृङ्खलां त्रोटय त्रोटय ज्वलदुच्चरेत् ।
ज्वालाजिह्वे करालेति वदने प्रत्यङ्गुच्चरेत् ॥ ६१८ ॥
गिरे ह्रीं नम इत्येष सपादशतवर्णवान् ।
ब्रह्माऽनुष्टुप्मुनिश्छन्दो देवी प्रत्यङ्गिरा मता ॥ ६१९ ॥
बीज शक्ती तारमाये कृत्यानाशे नियोजनम् ।
षडङ्गाना विधिश्चात्र षड्दीर्घान्वितमायया ॥ ६२० ॥
सिंहारूढाऽतिकृष्णाङ्गी ज्वाला वक्त्रा भयङ्करा ।
शूलखड्गकरा वस्त्रे[31] दधती नूतने भजे ॥ ६२१ ॥
अयुतं प्रजपेन्मन्त्रं सहस्रं तिलराजिकाः ।
हुत्वा सिद्धमनुर्मन्त्रं प्रयोगेषु शतं जपेत् ॥ ६२२ ॥
ग्रहभूतादिकारिष्टं सिञ्चेन्मन्त्रं जपञ्जलैः ।
विनाशयेत्परकृतं यन्त्रमन्त्रादिसाधनम् ॥ ६२३ ॥

---

३० वह्निं संक्षोभितं वस्त्रं रिपुमस्तकदेशतः । इति पाठो मेरौ ।
३१ शूलशस्त्रकरा खड्गं पाठो मेरौ ।

## अथ ग्रहमातृकामन्त्रमाह

अथातः समप्रवक्ष्यामि ग्रहमातृसुसाधनम् ।
ग्रहमातरि तुष्टायां किं ग्रहैर्दुरितैरपि ॥ ६२४ ॥
ग्रहमातरिरुष्टायां सुग्रहैः किं प्रयोजनम् ।
मङ्गला पिङ्गला धान्या भ्रामरी भद्रिका तथा ॥ ६२५ ॥
उल्का सिद्धा सङ्कटा च विकटा गर्भपालिका ।
रुद्रनेत्रान्विताश्चाष्टौ जन्मर्क्षाच्च क्रमाद्दशाः ॥ ६२६ ॥
फलं नामानुरूपं स्यादेकोपचयतया तयोः ।
पिङ्गला सूर्यजननी महाधिव्याधिकारिका ॥ ६२७ ॥
तुष्टा चेच्छत्रुवर्गस्य रुष्टा कुर्याच्च साधके ।
क्षैं बीजन्तु समुच्चार्य पिङ्गले वैरिवारिणि ॥ ६२८ ॥
प्रसीद फडिति प्रोक्त स्त्रयाग्निशक्तिवर्णकः ।[३२]
दीर्घषट्कयुजा पूर्वबीजेनैव षडङ्गकम् ॥ ६२९ ॥
पिङ्गवर्णां पिङ्गकेशीं पिङ्गनेत्रां धनुः शरान् ।
हस्ताभ्यां दधतीं पद्मयुगलं तां भजाम्यहम् ॥ ६३० ॥
अथ पूजाविधिं वक्ष्ये सर्वासामेव तन्त्रतः ।
जपापुष्पाणि शस्तानि धूपो गुग्गुलसम्भवः ॥ ६३१ ॥
घृतप्रदीप्तमधुना[३३] नैवेद्याः पायसादयः ।
अलङ्कारास्तथा रक्तास्तथा वस्त्राणि चन्दनम् ॥ ६३२ ॥
स्वर्णालङ्करणैश्चापि सद्रव्यैर्बहुपञ्चकैः ।
तर्पयेत्परमेशानीं तत्तन्मन्त्रैः सहस्रधा ॥ ६३३ ॥
सुवर्णपात्रे निश्छिद्रे हस्तायामे मनोरमे ।
कृत्वा यन्त्रं यथोक्तं तु योगिनीं तत्र पूजयेत् ॥ ६३४ ॥
तत्तन्मन्त्रवरं जप्त्वा विघ्नशान्त्यै सहस्रशः ।
सप्ताहेन प्रजायेत त्रिविधोत्पातवारणम् ॥ ६३५ ॥
ततश्च कुण्डं विधिवत्कृत्वा च चतुरस्रकम् ।
अथवा स्थण्डिले शुद्धे सुलिप्ते गोमयाम्बुभिः ॥ ६३६ ॥
चतुर्हस्तप्रमाणेन योजयेत्स्थिरमानसः ।
योगिन्यन्तु संस्थाप्य कृत्वा पूर्वोदिताः क्रियाः ॥ ६३७ ॥

---

३२ प्रोच्यणुस्त्रयोदशवर्णकः पाठो मेरौ । अयं पाठ उचितः ।

३३ घृतप्रदीपो मधुरा पाठो मेरौ ।

अन्यासां दशवारं तु विरुद्धायाः सहस्रधा ।
विल्वपत्रैस्तत्फलैश्च कमलैर्नागकेशरैः ॥ ६३८ ॥
जुहुयात्पायसान्नेन तथैव कुलवस्तुना ।
सहस्रमयुतं वाऽपि लक्षं वा कामनाक्रमात् ॥ ६३९ ॥
अथातः सम्प्रवक्ष्यामि मध्यदेवीं प्रपूजयेत् ।
इच्छां ज्ञानं क्रियां शक्तिं त्रिषु कोणेषु पूजयेत् ॥ ६४० ॥
मन्मथान्पञ्च तदधः पञ्चकोणेषु पूजयेत् ।
षडङ्गं पूजयेत्पश्चादष्टपत्रेऽन्ययोगिनीः ॥ ६४१ ॥
तद्बाह्ये भूपुरे लोकपालानस्त्राणि पूजयेत् ।
पूजाप्रकारो होमश्च सर्वासामयमेव हि ॥ ६४२ ॥
विशेषः पुनरधास्ति शत्रुच्छेदाभिचारकैः ।
खड्गचर्मधरामुग्रां ध्यायेत्षड्भुजधारिणीम् ॥ ६४३ ॥
गरुडासनमासीनां वैरिनिग्रहकारिकाम् ।
लक्षमेकं प्रजप्यादौ जपेल्लक्षं हि तर्पयेत् ॥ ६४४ ॥
सर्वशत्रुविनाशः स्याद्दुःखं नाप्नोति कुत्रचित् ।
अथातः सम्प्रवक्ष्यामि चन्द्रमातुश्च साधनम् ॥ ६४५ ॥
मायाद्यो वह्निजायान्तो मङ्गले मङ्गलालये ।
एकादशाक्षरो मन्त्रो मङ्गलायाः प्रकीर्त्तितः ॥ ६४६ ॥
कृत्वाद्येन षडङ्गानि दीर्घषड्कयुजा तथा ।
ध्यायेद्देवीं त्रिनयनामुद्यदादित्यसन्निभाम् ॥ ६४७ ॥
दरस्मेरमुखाम्भोजां सिन्दूरसुन्दरां धराम् ।
पद्मद्वयधनुर्बाणान्दधतीं भुजपल्लवैः ॥ ६४८ ॥
सुगुञ्जन्मञ्जुमञ्जीरां काञ्चीगुणविराजिताम् ।
एवं ध्यात्वा महेशानीं पूर्ववत्परिपूजयेत् ॥ ६४९ ॥
ततो लक्षं मनुं जप्त्वा तारमायापुरस्सरम् ।
योगिनीक्षेत्रवटुकगणाधिपबलिं हरेत् ॥ ६५० ॥
सर्वासामेव पूजान्ते मङ्गलैव प्रसीदति ।
योगिन्यास्तु प्रसादार्थं वर्णं लक्षं जपेन्मनुम् ॥ ६५१ ॥
दुर्योगिन्यानुकूलार्थं जपेत्तत्सङ्ख्यकायुतम् ।
अदृष्टप्रतिबद्धस्तु शुभायाश्च फलस्य च ॥ ६५२ ॥

प्राप्तये प्रजपेत्तावत्सहस्रं प्रत्यहं[३४] जपम् ।
प्रकर्तव्यो वर्णशतं यावत्तुष्टास्ति योगिनी ॥ ६५३ ॥
तुष्टाया वर्णदशकं[३५] रोगिणं चाभिमन्त्रयेत् ।
वर्णतुल्येन मन्त्रेण यस्याः सेवापरो भवेत् ॥ ६५४ ॥
तस्याः पीडानिवृत्तिः स्याद्वर्णाभ्यन्तर्गतैर्दिनैः ॥
एवं विधिर्नवानां तु विज्ञेयः सुरसत्तमाः ॥ ६५५ ॥
योगिनीं तुल्यफलदा वाममार्गे च दक्षिणे ।
अथातः सम्प्रवक्ष्यामि भ्रामरीं भौममातरम् ॥ ६५६ ॥
क्ष्रीं भ्रामरि पदं चोक्त्वा जयतां मे[३६] अधीश्वरि ।
भ्रामय क्लीं षेडशार्णो मन्त्रोऽस्याः परिकीर्त्तितः ॥ ६५७ ॥
पिङ्गलावत्सर्वमस्याः सिद्धेयं शर्करा दश ।
मन्त्रयित्वा तथा मार्गे दशदिक्षु च संत्यजेत् ॥ ६५८ ॥
प्रातस्ततो ब्रजेन्मार्गं मार्गस्थाः सर्व एव हि ।
सर्वं मोहं समायान्ति व्याघ्रः सर्पाश्च तस्कराः ॥ ६५९ ॥
शुल्किनो दुष्टभूपाश्च नित्यमेवं समाचरेत् ॥
उपानत्कतले यस्य लिखित्वा नाम च व्रजेत् ॥ ६६० ॥
योजनैकं जपन्मन्त्रं स भ्रमेच्च वसुन्धराम् ।
अथातः सम्प्रवक्ष्यामि भद्रिकां बुधमातरम् ॥ ६६१ ॥
ब्लं बीजं तोयभूयोगाज्जातमादौ समुच्चरेत् ।
भद्रिके मे मम भद्रं देहीति च पदं पुनः ॥ ६६२ ॥
वदेच्च परभद्राणि नाशयेद्वितयं ततः ।
स्वाहान्तो जिनवर्णोऽयं भद्रिकाया मनुर्मतः ॥ ६६३ ॥
षड्दीर्घयुक्तबीजेन षडङ्गविधिरीरितः ।
मङ्गलावच्छुभानां स्याद्ध्यानं तु फलदायिनाम् ॥ ६६४ ॥
पिङ्गलावत्समुद्दिष्टं जपाद्यं प्रोक्तवर्त्मना ।
अथातः सम्प्रवक्ष्यामि धान्याख्यां गुरुमातरम् । ६६५ ॥
श्रीं धनदे समुच्चार्य धान्ये स्वाहाष्टवर्णकः ।
षड्दीर्घाढ्याद्यबीजेन षडङ्गविधिरीरितः ॥ ६६६ ॥
नास्ति धान्यासमा काचिदिह लोके धनप्रदा ।

३४ सहस्रं तु मनुं सुधीः पाठो मेरौ ।
३५ वर्णशतकं पाठो मेरौ ।
३६ सपत्नान्मे पाठो मेरौ ।

पुरश्चर्यात्रयं कृत्वा प्राग्जन्मार्जितपातकम् ॥ ६६७ ॥
दहेत्तु धान्या ददते धन्यत्वं साधकाय च ।
वृहस्पतीश्वरात्पश्चात् काश्यां धान्यं विलोकयेत् ॥ ६६८ ॥
पुरश्चर्यां तत्र कृत्वा यशोधायः प्रजायते ।
अथातः सम्प्रवक्ष्यामि सिद्धां शुक्रस्य मातरम् ॥ ६६९ ॥
ह्रीं सिद्धिदे सर्वं मम समुक्त्वा साधयद्वयम् ।
हृदन्तोऽयं षोडशार्णः सिद्धः सिद्धामनुर्मतः [३७] ॥ ६७० ॥
बीजेनैव षडङ्गानि जपाद्यं प्रोक्तवच्चरेत् ।
नास्ति सिद्धोपासकानां कर्मसिद्धिस्तु कुत्रचित् ॥ ६७१ ॥
उपासकाय सिद्धाया येनाम्नायेन जायते ।
तेनाम्नायेन देवानां पाके स्यात्सर्वमेव हि ॥ ६७२ ॥
षट्कर्म सिध्यते तस्य मनोराराधनं विना ।
अथातः सम्प्रवक्ष्यामि चोल्कां मन्दस्य मातरम् ॥ ६७३ ॥
अं मम रोगं नाशय भञ्जयैकादशाक्षरः ।
सर्वरोगापहो मन्त्रो मार्जनात्सम्प्रपद्यते ॥ ६७४ ॥
उल्कामन्त्रो यस्य सिद्धो न गदास्तस्य मन्दिरे ।
शीतलायां महामार्यां महिषं लक्षणान्वितम् ॥ ६७५ ॥
उल्काप्रीत्यै तमुत्सृज्य नगरे भ्रामयेत् पुनः ।
नानावाद्यैः परिर्वतं वस्त्रादिभिरलङ्कृतम् ॥ ६७६ ॥
उत्सृजेत्तं यमाशायामुपद्रवशमो भवेत् ।
अथातः सम्प्रवक्ष्यामि सङ्कटां राहुमातरम् ॥ ६७७ ॥
ह्रीं सङ्कटे च रोगं मे परमं नाशयद्वयम् ।
षोडशार्णस्तु मन्त्रोऽयं सर्वदुःखापनोदयः ॥ ६७८ ॥
कारागृहे जपेल्लक्षं बन्धमोक्षः प्रजायते ।
वीरेश्वरादुदक्काश्यां सङ्कटा यत्र संस्थिता ॥ ६७९ ॥
तत्र षोडश लक्षाणि जप्त्वा होमस्तु दूर्वया ।
तस्य सिद्धो भवेन्मन्त्रस्तन्मुखाद्यदि निःसृतः ॥ ६८० ॥
अमुकस्यामुकं कष्टं गते तद्गतमेव हि ।
अथातः सम्प्रवक्ष्यामि विकटां केतुमातरम् ॥ ६८१ ॥
तारो नमो भगवति विकटे वीरपालिके ।

---

३७ हृदयान्तो मन्त्रवर्णः सिद्धाया मनुरीरितः । इति पाठो मा. क ।

प्रसीदयुगलं मन्त्रः प्रकृत्यर्णः प्रकीर्त्तितः ॥ ६८२ ॥
काश्यां वीरेश्वरासन्नां पश्चिमे विकटास्थिता ।
तत्र मन्त्रमिमं जप्त्वा ग्रहतप्ताश्च बालुकाः ॥ ६८३ ॥
उदरञ्चापि बन्ध्यायाः प्रसवन्त्यास्तथा शिरः ।
पित्रादिभिस्त्यक्तबालास्तथा मातृविवर्जिताः ॥ ६८४ ॥
साधकस्य करस्पृष्टा नीरोगाश्चिरजीविनः ॥ ६८५ ॥

## अथ सर्वशान्तिकृन्मन्त्रमाह

क्रीँ हूँ ह्रीँ हूँ फडित्युक्त्वा स्वाहान्तः सप्तवर्णकः ।
न्यासादिकं दक्षिणावत् विशेषाच्छान्तिकारकः ॥ ६८६ ॥

## अथ वेतालराधिनमाह ।

**भैरव उवाच**

वेतालादिमहासिद्धिः कथं भवति चण्डिके ।
तन्मे कथय देवेशि यदि स्नेहोऽस्ति मां प्रति ॥ ६८७ ॥

**देव्युवाच**

निम्बवृक्षोद्भवं काष्ठं श्मशाने साधकोत्तमः ।
भौमवारे मध्यरात्रे शवासनयुगाङ्किते ॥ ६८८ ॥
खनित्वा चाष्टलक्षं वै जपेन्महिषमर्दिनीम् ।
तत्सहस्रं हुनेद् वत्स तत्रैव पितृकानने ॥ ६८९ ॥
काष्ठमुद्धृत्य तेनैव दण्डपादुकचिह्नितम् ।
कृत्वा दुर्गाष्टमीरात्रौ श्मशाने निःक्षिपेत्ततः ॥ ६९० ॥
एतद्दण्डो महाभाग योगिनीहृदयप्रियाः ।
मम हस्तस्थितो नाथ ममाज्ञां परिपालय ॥ ६९१ ॥
एवमामन्त्र्य वेतालं यत्र यत्र प्रयुज्यते ।
तं तं चूर्णी विधायाथ क्षणादायाति कौलिकम् ॥ ६९२ ॥
गच्छ गच्छ महाभागे पादुके वरवर्णिनि ।
मत्पादस्पर्शमात्रेण ध्राँ ध्रीँ ध्रूँ शतयोजनम् ॥ ६९३ ॥

## अथ खड्गसाधनम्

अष्टलोहं समालोड्य पञ्चाशदङ्गुलाकृतिम्।
खड्गं कृत्वा तत्र यन्त्रं लिखित्वा प्रजपेन्मनुम्॥ ६९४॥
तत्सहस्रं ततो हुत्वा महाशतकलेवरे।
खनित्वा जीववृक्षाग्रे बन्ध्या शुष्कं विभावयेत्॥ ६९५॥
कुलाष्टम्यामर्धरात्रे चितामध्ये समाहितः।
...तिपूर्वं समामन्त्र्य हुनेत् पितृवने ततः॥ ६९६॥
मधुरत्रयसंयुक्तं विल्वपत्रेण संयुतम्।
[३८]पादादिमूर्ध्दापर्यन्तं होमान्ते बलिमाहरेत्॥ ६९७॥
बल्यन्ते परमा माया देवी महिषमर्दिनी।
आयाति बलिपूर्णास्या वरहस्ता वरोन्मुखी॥ ६९८॥
दृरुं वत्सेति शब्देन खड्गमुत्तोल्य धारयेत्।
घोरदंष्ट्रे महाकालि करवालस्वरूपिणि॥ ६९९॥
काँ कीं कूँ कुरु कल्याणि विपक्षे छेदविस्तरम्।
एवमामन्त्र्य खड्गस्तु यमुद्दिश्य क्षिपेन्नरः॥ ७००॥
छित्त्वा छित्त्वा पुनश्छित्त्वा गच्छत्याहृयते पुनः॥ ७०१॥

## अथ सङ्ग्रामविजयमन्त्रमाह

तारो दुर्गे द्वयं प्राप्ता रक्षिणीत्यग्निगेहिनी।
दशाक्षरो मनुः प्रोक्तो भजतामिष्टसिद्धिदः॥ ७०२॥
नारदर्षिर्विराट् छन्दो जयदुर्गा च देवता।
ताराद्यैः पञ्चमन्त्रस्य पदैः सर्वेण संमता॥ ७०३॥
जातिमुक्तेरङ्गल्कृप्तिः काम्य कर्माण्यथोच्यते।
दुर्गे च हृदयं प्रोक्तं दुर्गे च शिर ईरितम्॥ ७०४॥
दुर्गायै स्याच्छिखा वर्म भूतरक्षिणी कीर्त्तिता।
तारादि दुर्गेद्वितयं रक्षिष्यक्षि प्रकीर्त्तितम्॥ ७०५॥
तारादियुगलं दुर्गे रक्षिण्यस्त्रमुदीरितम्।
मेघश्यामां ग्लौ किरीटां त्रिनेत्रां सिंहवाहिनीम्॥ ७०६॥
चक्रं दलं खड्गशूलौ भुजाग्रैर्दधतीं भजे।

---

३८ पदादि इत्यतो धारयेदित्यन्तः पाठो मा. ख न प्राप्यते।

रागे[३९] पीठे यजेद्देवीमुक्तमार्गेण मन्त्रवित् ॥ ७०७ ॥
प्रजपेत्पञ्चलक्षं च तद्दशांशं हुनेद् घृतैः ।
तर्पणादि ततः कुर्यात् ततः सिद्धो भवेन्मनुः ॥ ७०८ ॥
ततः सिद्धमनुर्मन्त्री प्रयोगानाचरेत्सुधीः ।
इमं मनुं जपेद् भूयः प्रविशेच्छत्रुसङ्गमम् ॥ ७०९ ॥
अशेषेण रिपुं हन्यान्नात्र कार्या विचारणा ।
विवादे व्यवहारादौ जप्तो विजयदो भवेत् ॥ ७१० ॥
अनया विद्यया लब्धा पताकाध्वजदुन्दुभिः ।
श्रृङ्गशङ्खादिकं सर्वं यानं सेना च सैन्यकम् ॥ ७११ ॥
सञ्जातं तच्च सङ्ग्रामे सम्यग् विजयकृद् भवेत् ।
अथास्याः प्रोच्यते भेदो पद्याद्यारिस्थले पतेत् ॥ ७१२ ॥
ऋणं वा जायते तारान्नमः प्रोक्त्वा च पूर्ववत् ।
द्वादशार्णो भवेन्मन्त्रः सङ्ग्रामविजयप्रदः ॥ ७१३ ॥

### अथ गतराज्यप्रदमन्त्रमाह

अथातः सम्प्रवक्ष्यामि इन्द्राणीं नष्टराज्यदाम् ।
ईँ इन्द्राणीं नम इति मन्त्रः प्रोक्तः षडक्षरः ॥ ७१४ ॥
गुरुमुनिश्च गायत्री छन्दो देवीन्द्रवल्लभा ।
ईँ बीजं शक्तिरिन्द्राणी नमः कीलकमुच्यते ॥ ७१५ ॥
वज्रपाशवरामीति हस्ता श्यामा वराम्बरा ।
चतुर्दन्तगमाकल्पछाया संस्था हिरण्यभा ॥ ७१६ ॥
कोणषटकेष्वङ्गपूजा तद्बाह्येऽष्टदले यजेत् ।
बगलां छिन्नमस्तां च तारां दक्षिणकालिकाम् ॥ ७१७ ॥
धूमावतीं भद्रकालीं महाकालीं प्रतिक्रियाम् ।
तत्तन्मन्त्रैस्तु तद्बाह्ये लोकेशानायुधानपि ॥ ७१८ ॥
लक्षषट्कं जपेनमन्त्रं मालतीकुसुमैर्हुनेत् ।
त्रिमध्वक्तैस्तावदेव राज्यार्थं राजवृक्षजैः ॥ ७१९ ॥

---

३९ दीर्गे पाठो मा. ख ।

## अथाञ्जनसाधनम्

अथवा कृष्णमार्जारमेकघातेन घातयेत् ।
कुजे चतुष्पथे रात्रौ निखनेन्मन्त्रितं ततः ॥ ७२० ॥
तत्र मोचां समारोप्य यावत्पत्रं प्रजायते ।
तावद् भुक्त्वा हविष्यान्नं प्रतिरात्रं जपेत्सुधीः ॥ ७२१ ॥
अष्टोत्तरसहस्रन्तु एकाकी ढीथवर्जितम् ।
उत्पलं पत्रमालोक्य छित्वा निश्छिद्रमाहरेत् ॥ ७२२ ॥
तत्र भुक्त्वा हविष्यान्नं दद्दिने तटिनी तटे ।
तमानीय सुहृत्सङ्गं क्षालयन्मन्त्रमुच्चरेत् ॥ ७२३ ॥
प्रतिस्रोतो मुखं वत्स यदस्थि प्रतिगच्छति ।
तदानीं च यजेत्तत्र कालिकां घोरनिःस्वनाम् ॥ ७२४ ॥
अभिमन्त्र्य सहसं तु कालीमन्त्रं समन्ततः ।
सिद्धाञ्जनो भवेन्मन्त्री नात्र कार्या विचारणा ॥ ७२५ ॥
चन्दनागुरुकस्तूरीमिश्रणं चास्थिघर्षणम् ।
कृत्वा तिलकमादाय सर्वं जयति साधकः ॥ ७२६ ॥
कुलमीनं कुलालं च कुलमद्यं कुलेश्वर ।
कुलस्थाने समानीय कुलद्रव्यं प्रयत्नतः ॥ ७२७ ॥
अष्टोत्तरसहस्रन्तु जप्त्वा भूमितलस्थितः ।
भूमौ फूत्कारमात्रेण विवरं तत्र जायते ॥ ७२८ ॥
शतयोजनदूरे वा यत्र साध्यस्थितिर्भवेत् ।
तत्रैव गमनन्तस्य भूतलान्तः प्रसर्पण ॥ ७२९ ॥
एवं विवरमध्ये वा गवाक्षकुहरेऽपि च ।
काय सङ्कोचमासाद्य गच्छत्यविकलो नरः ॥ ७३० ॥
दुर्गामन्त्रं विना वत्स कालीमन्त्रं तथैव च ।
सिद्धयः कुलनाथेश जायन्ते न कथंचन ॥ ७३१ ॥
यथा काली तथा दुर्गा यथा दुर्गा तथोन्मुखी ।
यथा तारा तथा नीला यथा नीला तथोन्मुखी ॥ ७३२ ॥
दुर्गायाः कालिकायाश्च ध्यानं सममिहोदितम् ॥ ७३३ ॥

### अथाञ्जनसिद्धिः

नेत्ररम्याश्चेटिकाः स्युर्वेदाग्न्यर्णो मनुर्मतः।
नेत्ररम्यमञ्जनं च देहि युग्मं निधिं वदेत्॥ ७३४॥
दर्शयद्वितयं प्रोच्य फडिति पदमुच्चरेत्।
दूरीकुरु-युगं पञ्च स्वाहेति कथितो मनुः॥ ७३५॥
पुरश्चरणमेतस्य ह्ययुतं त्रितयं भवेत्।
घृताक्तगुग्गुलैर्होमो देवतां साधयेत्ततः॥ ७३६॥
कानने करवीराणां रात्रौ वैशाखमासि तु।
चतुर्दश्यां जपेद्देवीं नेत्रे रम्यं शतत्रयम्॥ ७३७॥
भौमस्तु वासरः प्रोक्तो ह्यथवा शुक्रवासरः।
घृताक्तगुग्गुलैर्होमं ततः कुर्याच्छतत्रयम्॥ ७३८॥
ददाति मन्त्रिणे तस्मै स्वाञ्जनं नेत्रबोधकम्।
निधिं भूमिगतं वस्तु दूरदेशगतं तथा॥ ७३९॥
आलोकयति मन्त्री स सद्यो भवति भूपतिः॥ ७४०॥
अथातः सम्प्रवक्ष्यामि वर्णमातङ्गीका मनुम्।
[४०]वाग्भवं हृदयं चाथ श्रीमातङ्गीपदं वदेत्॥ ७४१॥
अमोघे सत्यवादिनि मम कर्णपदं ततः।
अवतरपदं द्वेधा सत्यं कथययुग्मकम्॥ ७४२॥
एह्येहि श्री च मातङ्ग्यै नम स्त्र्यब्ध्यर्णको मनुः।
अङ्गानि वाग्भवेनात्र पूजाघ्नं च कृताकृतम्॥ ७४३॥
लक्षं जपः पायसाज्यैर्होमे सिद्धो भवेन्मनुः।
कर्णे तु कथयेद्देवी पृच्छकस्य शुभाशुभम्॥ ७४४॥

### अथ जातिस्मरणमन्त्रमाह

योगिनी कोटराक्षस्य चेटी स्याद् विधिपूर्वका।
विधिपूर्वके समुच्चार्य चावर्त्तनखरे तथा॥ ७४५॥
ह्रीं स्त्रीं स्वाहेति तिथ्यर्णे मन्त्रोऽस्या ध्यानमुच्यते।
स्वच्छतोयैश्च संपूर्णं वामे धत्ते कमण्डलुम्॥ ७४६॥
स्वर्णकुण्डलदीप्ताढ्यगण्डन्तां विधिपूर्वकाम्।

---

४० कर्णमातङ्गीमन्त्रः श्लोकः ७४१-७४४ पुनरुक्तः।

जपेल्लक्षमितमनुं नदीतीरे मनोरमे ॥ ७४७ ॥
होमयेच्च त्रिमधुरैः प्रयोगं तत आचरेत् ।
कृष्णातीरे महातीर्थेऽथ वा पञ्चनदे शुभे ॥ ७४८ ॥
माघमासे द्वितीयायां कृष्णपक्षे निशान्तरे ।
कृत्वा तया कुशुलन्तु निक्षिपेत्तज्जलान्तरे ॥ ७४९ ॥
कृत्वा सायन्तनं कर्म कुशुलं पूजयेत्ततः ।
तत्र देवीं स्मरन्मन्त्री कुशुलान्तर्विशेद् ध्रुवम् ॥ ७५० ॥
तत्र बद्धासनो योगी शान्तो वाधामुपेक्ष्य हि ।
जपेन्मन्त्रसहस्रं तु देवताविधिपूर्वकाम् ॥ ७५१ ॥
पञ्चवक्त्रां त्रिनेत्रां च पञ्चदस्त्रभुजां शिवाम् ।
ततः सा देवता तस्मै ददाति च कमण्डलुम् ॥ ७५२ ॥
जलपूर्णान्ततस्तस्य जलेनासेचयेद्धिवम् ।
स नरस्तत्क्षणादेव सप्तजन्मसमुद्भवाम् ॥ ७५३ ॥
जातिं वदति तत्कालं तत्तत्कर्म करोति च ॥ ७५४ ॥

### अथ जलोत्पत्तिकारकगत्तामन्त्रमाह

अथातः सम्प्रवक्ष्यामि वामाचार घनाशनम् ।
बहिर्यजनकर्तारः सिद्धाः स्युर्यत्प्रभावतः ॥ ७५५ ॥
तारो नमो भगवति वाग्भवं च हिलिद्वयम् ।
हिलिद्वयं च गङ्गे मां पापं च द्वितयं वदेत् ॥ ७५६ ॥
स्वाहान्तस्तारको वर्णो मनुः पापप्रणाशनः ।
ईश्वरोऽस्य मुनिश्छन्दो सितं गङ्गा च देवता ॥ ७५७ ॥
रामवेदाङ्गवत्यङ्ग नेत्रार्णैरङ्गकल्पनम् ।
रक्ताम्बरां रक्तवर्णं शूलकुम्भवराभयान् ॥ ७५८ ॥
करैः सन्दधतीं स्मेरां कच्छपस्थां सुरादिभिः ।
तद्रूपाभिः सपापस्य नाशाय सुनिषेविताम् ॥ ७५९ ॥
कर्णिकायां यजेद्देवीं षडस्रेऽष्टाङ्गपूजनम् ।
ततोऽष्टास्रे तु धवलां यमुनां गण्डकीमपि ॥ ७६० ॥
सरयुं तमसां चपि गण्डकीं वाग्मतीमपि ।
कौशिकीं च समभ्यर्च्य तद्बाह्येऽष्टदले यजेत् ॥ ७६१ ॥
सुराब्धिं मासं वाब्धिं च दुग्धसिन्धुसमुद्भवम् ।

दधिसिन्धुं चाज्यसिन्धुं मद्यसिन्धुमिराभवम् ॥ ७६२ ॥
धातुसिन्धुं रत्नसिन्धुमिरासिन्धुं वसोद्भवम् ।
माध्वीसिन्धुं क्षालसिन्धुं सुधायाः संविदुद्भवम् ॥ ७६३ ॥
दिगीश्वरां भूपुरे च पूजितैवं सरिद्वरा ।
अलीभाद्वाममार्गे च कृतं पापं विनाशयेत् ॥ ७६४ ॥
वर्णलक्षं जपेद्धोमः पद्मैः प्रोक्तो दशांशतः ।
............................................ ॥ ७६५ ॥
देशे गत्वा जलार्थं तु पुरश्चयां समालभेत् ।
होमादिसर्वं निर्वर्त्य गङ्गामावाहयेत्ततः ॥ ७६६ ॥
तत्र कूपादिकं कृत्वा भवेत्तदमृतोपमम् ।
कल्पस्तापितयागाढं समस्तगदनाशनम् ॥ ७६७ ॥
इयमादिमसप्तार्णं त्यक्तोक्तान्तु नखाक्षरी ।
प्राग्वन्मुन्यादिकं बाणवेदत्रित्रित्रिबाहुभिः ॥ ७६८ ॥
मन्त्रार्णैः स्युः षडङ्गानि पुरश्चर्याण्डलक्षकम् ।
होमद्रव्यादिकं प्राग्वत्सिद्धमन्त्रः समाचरेत् ॥ ७६९ ॥
प्रयोगान् जलमध्ये तु स्थित्वा जप्यायुतं मनुम् ।
त्र्यहादवर्षाकालेऽपि वृष्टिर्भवति भूयसी ॥ ७७० ॥
अयुतं च मनुं जप्त्वा सहस्रं जलजैर्हुनेत् ।
संपाताज्यं पिवेद् या स्त्री गौर्वा क्षीरनिधिर्भवेत् ॥ ७७१ ॥
अनेन मन्त्रितं तोयं वर्षमेकं पिवेच्च या ।
तस्याः पुत्राः प्रजायन्ते भीष्मतुल्यपराक्रमाः ॥ ७७२ ॥
एतन्मन्त्रजपाशक्तो पादतीर्थं क्षिपेद्धृदि ।
भूताविष्टस्य तत्कालं मुक्तो भवति नान्यथा ॥ ७७३ ॥
तारो हिलिमिलिद्वन्द्वे गङ्गे देवि नमो मनुः ।
तिथिवर्णोऽस्य मुन्यादि पूजा पूर्ववदीरितम् ॥ ७७४ ॥
त्रिद्विभ्यक्षिकृताह्यर्णैः षडङ्गविधिरीरितः ।
एतस्य भजनाज्जन्तोर्नातीर्थे मरणं भवेत् ॥ ७७५ ॥
तारो लज्जा रमा हार्दं ततो भगवती पदम् ।
संबुध्यन्तं गंगदपि ते नमाहुं तथास्रकम् ॥ ७७६ ॥
अष्टादशार्णमन्त्रोऽयं मुन्याद्यं पूर्ववन्मतम् ।
जपादिना सिद्धमन्त्र प्रयोगानाचरेदपि ॥ ७७७ ॥

पुत्रजीवफलैर्होमात्पुत्रासिरयुता भवेत् ।
गुडुच्या रोगनाशः स्यात्मद्मा पद्मादिहोमतः ॥ ७७८ ॥
लक्ष्मीप्राप्तिः श्रीफलैश्च सर्षपैरभिचारकम् ।
जातिप्रसूनैर्वश्यं स्याज्जपापुष्पैर्जयो भवेत् ॥ ७७९ ॥

## अथ वृष्टिकारकमन्त्रमाह

कङ्कालो नाम चैत्यस्य वेदी तत्साधनं ब्रुवे ।
कङ्काली जलदेवीति जलं पूरय पूरय ॥ ७८० ॥
धँ धँ सप्तदशार्णोऽयं जपेद् वर्णसहस्रकम् ।
अवृष्टिकाले रात्रौ च रवौ नद्यां जले जपेत् ॥ ७८१ ॥
कण्ठमात्रेऽयुतं चैकं ध्यायन्देवी समाहितः ।
कङ्काली वारुणं पाशं बिभ्रतीं जलरूपिणीम् ॥ ७८२ ॥
विद्युच्छतस्वरूपाभां घोरगर्जनभीषणाम् ।
प्रभाते वृष्टिरायाति सा हि पञ्चदिनावधि ॥ ७८३ ॥
अथान्यत्सम्प्रवक्ष्यामि सर्वमन्त्रोत्तमोत्तमम् ।
ऐँ ह्रीँ श्रीँ आँ समुच्चार्य ह्रीँ क्रीँ क्लीँ ह्रीँ नमो वदेत् ॥ ७८४ ॥
श्रीमातङ्गेश्वरि सर्ववशङ्कर्यग्निगेहिनि ।
त्रयोविंशाक्षरो मन्त्रो नानामन्त्रप्रसाधकः ॥ ७८५ ॥
निवृद्गायत्रिकाच्छन्दो दक्षिणामूर्त्तिको मुनिः ।
मातङ्गी देवता प्रोक्ता श्रीँ ह्रीँ क्रीँ बीजकैर्भवेत् ॥ ७८६ ॥
द्विरुक्तैश्च षडङ्गस्य विधिः पूजाजपादिकम् ।
अष्टनवत्यर्णमन्त्रसमं कार्यं तथाऽखिलम् ॥ ७८७ ॥
लक्षत्रयं जपेन्मन्त्रं मधुरत्रयलोलितैः ।
मधुपुष्पैस्तु होमः स्यात् सितया पायसेन च ॥ ७८८ ॥
हुनेत्कदल्याश्च फलैर्मन्त्रसिद्धिः प्रजायते ।
समस्तमन्त्रदानादौ सिद्धिः स्यात् साधकोत्तम ॥ ७८९ ॥

## अथ देवताऽऽवेशमन्त्रमाह

अथातः सम्प्रवक्ष्यामि कौमार्या विधिमुत्तमम् ।
कौँ कौमार्यै नम इति षडर्णो मन्त्र ईरितः ॥ ७९० ॥
मुनिब्रह्मा च गायत्री छन्दः कौमारिका भवेत् ।

देवता कौमिदं बीजं कौमार्यै शक्तिरुच्यते । ॥ ७९१ ॥
मन्त्रवर्णैः षडङ्गानि हृदि ध्यायेच्च देवताम् ।
शक्त्यक्षस्रवराभीतिकरां बन्धूकसन्निभाम् ॥ ७९२ ॥
मयूरध्वजिनीं रक्तवस्त्रामौदुम्बरस्थिताम् ।
हरित्कञ्चुकिकां रम्यां नानाऽलङ्कारभूषिताम् ॥ ७९३ ॥
आदावङ्गानि चाभ्यर्च्य पञ्चकोशे यजेत् पुनः ।
अहल्यां द्रौपदीं सीतां तारां मन्दोदरीमपि ॥ ७९४ ॥
ब्रह्मादिकषष्टदले दिक्पतीन् सायुधानपि ।
मुख्या पूजा भवेदस्याः कुमार्यामेव नान्यतः ॥ ७९५ ॥
कुमार्यभावेऽन्यदेशे पूजयन्तु समीरिता ।
लक्षषट्कं जपः प्रोक्तः पञ्चखाद्यैस्तथा हुनेत् ॥ ७९६ ॥
मधुरत्रयसंयुक्तैः सिद्धो मन्त्रस्तदा भवेत् ।
तर्पणं मार्जनं कृत्वा कुमारीणां च भोजनम् ॥ ७९७ ॥
अथ मोदनकं वक्ष्ये देवाविर्भावकारणम् ।
पाकक्रिया प्रकर्तव्या चतुर्भक्ष्यसमन्विता ॥ ७९८ ॥
भार्यया साधकेन्द्रस्य पातिव्रत्यादियुक्तया ।
अप्रसूताः स्त्रियः पञ्च आह्वयेत् सकुमारिकाः ॥ ७९९ ॥
अलङ्कृताः पवित्रास्ता एकपङ्क्त्योपवेशयेत् ।
तदादौ  विघ्नपस्थानं मन्त्रे तु वटुकस्य च ॥ ८०० ॥
तां सम्पूज्य महत्पात्रं पवित्रं तत्र चानयेत् ।
स्वस्वद्विगुणमानेन मध्वाज्यसमितं दधि ॥ ८०१ ॥
दुग्धं च निः क्षिपेत्तत्र नैवेद्यं तत्र निः क्षिपेत् ।
कुमारिकाया हस्तेन मन्थयेयुः स्त्रियश्च तत् ॥ ८०२ ॥
मन्थयेयुः स्त्रियस्तच्च देवावेशः प्रजायते ।
देवावेशे जायमाने सुगन्धो वाति मारुतः ॥ ८०३ ॥
सर्वं मनोगतं वक्ति देवता सुप्रसीदति ॥
सिद्ध्यन्ति सर्वकार्याणि मोदकानां शतेन च ॥ ८०४ ॥
नखैर्भवेद् द्विवाहुस्तु पञ्चाशद्भिः सुतास्तथा ।
आशीत्यागतराज्याप्तिर्विंशत्या लभ्यते धनम् ॥ ८०५ ॥
अष्टोत्तरशतेनापि साधकेन तु मे लयेत ।
कौमारिका चेष्टदेवं कौमार्या ईरितो विधिः ॥ ८०६ ॥

**अथ मुक्त्युपायमाह**

क्वचिद्दक्षं क्वचिद्वामं क्वचित्सौरं च शाम्भवम् ।
ऊर्ध्वाम्नायं क्वचिद्दक्षमुत्तरं पश्चिमं क्वचित् ॥ ८०७ ॥
अध आम्नायकं चापि गाणपत्यं च वैष्णवम् ।
पारसीकं क्वचिद् बौद्धं पाखण्डं च क्वचित् क्वचित् ॥ ८०८ ॥
क्वचिन्निर्दैवतं मार्गं वैदान्तं वैदिकं क्वचित् ।
द्वीपधर्मान् खण्डधर्मान् कुलधर्मान् क्वचित् क्वचित् ॥ ८०९ ॥
देशधर्मान् कालधर्मान् व्रातिधर्मान् क्वचित् क्वचित् ।
तत्तत्प्रकरणे स्तौषि क्वचिन्निन्दसि तं पुनः ॥ ८१० ॥
तन्त्रोक्तममिदं तन्त्रं प्रसन्नश्चेत् सुरोपरि ।
तदा तत्त्वं मम ब्रूहि निः सन्देहान्  मुनीन् कुरु ॥ ८११ ॥

**श्रीशिव उवाच**

अहो कालस्य माहात्म्यं तन्त्रे तन्त्रे त्वया पुनः ।
पृच्छ्यते तत्तदाधिक्यं साहंकारं ब्रवीमि तत् ॥ ८१२ ॥
वेलेयं सत्त्विकं काचिज्जाता कालस्य यत्त्वया ।
उपकाराय सर्वेषां पृच्छं तत्त्वं ब्रवीमि तत् ॥ ८१३ ॥
यथा वेदे तथा लोके यथा कालं प्रजायते ।
यथा ब्रह्माण्डगोलोऽयं लिख्यते यत्र मध्यतः ॥ ८१४ ॥
सत्ये तत्र च पश्य त्वं पतितं किं यदन्तरम् ।
तथान्तरेण कालेन वेदेनेतर शास्त्रतः ॥ ८१५ ॥
अन्तरं पश्य देवेशि श्रृणु तत्त्वं सनातनम् ।
यथा चावाहतः शब्दो नरे क्षप्यः प्रवर्त्तते ॥ ८१६ ॥
स नित्योऽपि पतेत्कर्णे न कदापि मुमूर्षतः ।
महापुरुषकालस्य तथा वेदध्वनिः स्मृतः ॥ ८१७ ॥
कलेर्दशसहस्राणि यथा वर्षाणि यान्ति च ।
वेदो नारायणः साक्षात्कालावयवजन्तुभिः ॥ ८१८ ॥
न श्रूयते तदा देवि ज्ञेयः कालः समागतः ॥
वाग्जृम्भादितपर्दादि शब्दाश्चोत्यप्ति नश्वरा ॥ ८१९ ॥
वेदभिन्नानि शास्त्राणि तथा जानन्तु देवताः ।
यस्य शास्त्रस्य लोकेस्मिन् प्रचारो यावदस्ति हि ॥ ८२० ॥

तावत्तन्मार्गिणां सौख्यं वेदमार्गो ह्यकुण्ठितः।
तस्य तन्मार्गकर्तारः शिष्यास्तन्मन्त्रदायिनः॥ ८२१॥
तानानयन्ति स्वमार्गे यतस्तावत्सुखं भवेत्।
नृणां ज्ञानं यथा षड्भिरिन्द्रियैः परिज्ञायते॥ ८२२॥
तथा षडङ्गैर्वेदार्थज्ञानं भवति निश्चितम्।
कर्मेन्द्रियाणि च यथा नृणां पञ्चमितानि तु॥ ८२३॥
तद्वत्काले महेशस्य पञ्चाम्नाया मयेरिताः।
ऊर्ध्वाम्नाये समुद्दिष्टं वाचिकं कर्म तस्य तत्॥ ८२४॥
तत्र प्रमाणं वेदाः स्युस्तदंशाः स्मृतयस्तथा।
तदङ्गानि प्रमाणानि गायत्र्याद्याश्च देवताः॥ ८२५॥
ब्रह्मबीजं तथा क्षेत्रं संस्कारा ब्रह्मसम्भवाः।
ब्राह्मणाचरणं ब्रह्मविद्याभिर्ब्राह्मणो भवेत्॥ ८२६॥
यस्य वश्या वयं यस्य वाचमर्थोऽनुधावति।
एकस्मिन् लक्षणे हीने वागर्थमनुधावति॥ ८२७॥
द्विहीने लक्षणे देवि स्वाचाराद् ब्राह्मणो भवेत्।
लक्षणत्रयहीनो यस्तन्त्रमार्गेण सिद्ध्यति॥ ८२८॥
चतुर्लक्षणहीनानां मार्गाः स्युः कौलिकादयः।
एतल्लक्षणभिन्नेन यथादेशं यथा कुलम्॥ ८२९॥
यथा जाति यथा कालं कर्तव्यो धर्मसङ्ग्रहः।
मिथ्या संभाषणं स्तेयं सर्वमार्गेषु गर्हितम्॥ ८३०॥
यत्किञ्चिज्जन्म यत्कर्म न जपो न तपः क्रिया।
जीवन्मुक्तः सत्यवक्ता सर्वं सत्ये प्रतिष्ठितम्॥ ८३१॥
अहिंसा परमो धर्मः स च वाक्कायकर्मभिः।
दृढो यस्य न चाचारो न जातिः सोऽपि मुक्तवत्॥ ८३२॥
परसत्ता यत्र तत्तु विष्टावत् यस्य चेतसि।
स पुष्कलोऽपि जानीहि जीवन्मुक्तो न संशयः॥॥ ८३३॥
षडिन्द्रियज्ञानवतां सृष्टिर्भवति मैथुनात्।
त्यक्तं तन्मनसा येन जीवन्मुक्तः स कोऽपि हि॥ ८३४॥
देवाः पूजनमिच्छन्ति तस्माद् बद्धाः प्रतिग्रहात्।
शुकवद् यो प्रतिग्राही जीवन्मुक्तः स एव हि॥ ८३५॥
शौचं प्रकुर्वतो नित्यं विष्टाबुद्धिः कलेवरे।

देहाभिमानो गलितो जीवन्मुक्तः स एव हि ॥ ८३६ ॥
यथेच्छालाभसन्तुष्टः स्तौति नो न च निन्दति ।
न सुत्सुखे न रुग्दुःखे कर्मनाशात् स मुच्यते ॥ ८३७ ॥
हित्वा विषयसौख्यं यस्तपस्तपति निर्जने ।
न फलं कामयेत्किञ्चित् जीवन्मुक्तः स एव हि ॥ ८३८ ॥
यावद्देहस्य निर्वाहस्तावत्कालं परिक्षिपेत् ।
वेदस्याभ्यासतः सर्वं यो नयेत्स तु मोक्षवान् ॥ ८३९ ॥
कोऽहं कि दृश्यते कर्त्रा कोऽस्य याति क्व चेतसि ।
इति सम्भावयन्नित्यं महाकालेलयं व्रजेत् ॥ ८४० ॥
[४१]एते तु सुगमोपाया नात्र चित्तं स्थिरं भवेत् ।
कामक्रोधाग्निसन्तानं महामायाविमोहितम् ॥ ८४१ ॥
दुर्विज्ञेया दुर्निवारा महाकालस्य गेहिनी ।
तदंशाराधनात्सा तु प्रसन्ना चेद् विमुञ्चति ॥ ८४२ ॥
सुबुद्धिभिः प्रियैः पुत्रैर्यथा माता प्रतार्यते ।
तथा प्रतार्यते ज्ञेयं जीवन्मुक्तः स जायते ॥ ८४३ ॥
कृतं बन्धार्थमनया खानं पानं च मैथुनम् ।
तेनैव चेदियं बद्ध्वा स्वयं मुक्तास्तदा भवेत् ॥ ८४४ ॥
वामिकैः कौलिकैस्तस्मादज्ञातैश्च गुरुं विना ।
समस्तैरथ वा ज्ञातैर्बध्यते येन चेतनैः ॥ ८४५ ॥
बन्ध्येयं[४२] बन्धनैः स्वस्य त्रोटयेद् बन्धनानि च ।
भावयेच्च महाकालं जीवन्मुक्तः सदा भवेत् ॥ ८४६ ॥
बन्धमोक्षप्रकारास्तु तत्रेयं कलिता मया ।
यैर्ज्ञाता गुरुमार्गेण तैर्बद्धेयं सुदुस्तरा ॥ ८४७ ॥
सुकृतान्मानवो भूत्वा ज्ञानी चेन्मोक्षमाप्नुयात् ।
चतुःशीति च लक्षेषु शरीरेषु शरीरिणाम् ॥ ८४८ ॥
न मानुष्यं विनाऽन्यत्र तत्त्वज्ञानं तु लभ्यते ।
अत्र जन्मसहस्राणां सहस्रैरपि पार्वति ॥ ८४९ ॥
कदाचिल्लभ्यते जन्म मानुषं पुण्यसञ्चयात् ।
सोपानभूतं मोक्षस्य मानुष्यं प्राप्य दुर्लभम् ॥ ८५० ॥

४१ कलौ पापसमाकीर्णे न समाधिर्न योगता । यदि योगो भवेद्देवि न हि तत्र फलं लभेत् ॥ तस्माच्च कारणाद्देवि मन्त्रयोगं समभ्यसेत् ॥ इति पाठो मा. क अधिकः ।

४२ बद्धो=यं पाठ उचितः ।

यस्तारयति नात्मानं तस्मात् पापतरोऽत्र कः।
नरः प्राप्योत्तमं जन्म लब्ध्वा चेन्द्रियसौष्ठवम् ॥ ८५१ ॥
न वेत्यात्महितं यस्तु स भवेद् ब्रह्मघातकः।
विना देहेन कस्यापि पुरुषार्थो न विद्यते ॥ ८५२ ॥
तस्माद्देह धनं राज्यं पुण्यकर्मणि योजयेत्।
रक्षयेत्सर्वदात्मानमात्मा सर्वस्य भाजनम् ॥ ८५३ ॥
रक्षणे यत्नमातिष्ठेज्जीवन् भद्राणि पश्यति।
पुनर्ग्रामं पुनः क्षेत्रं पुनर्वित्तं पुनर्गृहम् ॥ ८५४ ॥
पुनः शुभाशुभं कर्म न शरीरं पुनः पुनः।
शरीररक्षणायासः सततं क्रियते जनैः ॥ ८५५ ॥
यावत्तिष्ठति देहोऽयं तावत्तत्त्वं समभ्यसेत्।
ब्रह्मविष्णुमहेशादिदेवता भूतजातयः ॥ ८५६ ॥
नाशमेवानुधावन्ति तस्मात्तत्त्वं समभ्यसेत्।
यावन्न जायते दुःखं यावन्नायान्ति चापदः ॥ ८५७ ॥
यावन्नेन्द्रियवैकल्यं तावत्तत्त्वं समभ्यसेत्।
[४३]इत्थं सर्वं समाख्यातमन्त्येष्टिमधुना श्रृणु ॥ ८५८ ॥

### अथान्त्येष्टिमाह

कृताया च मया देवि विकर्मैर्मुच्यते चयात्।
कृत्वा पापसहस्राणि अन्त्येष्टिं लभते यदि ॥ ८५९ ॥
तदा स मुच्यते पापात्स्वर्गं याति न संशयः।
अथवा सुकृती जन्तुस्तदेष्यति ममान्तिकम् ॥ ८६० ॥
हत्वा समस्त विघ्नानि नात्र कार्या विचारणा।
अविकेयो यथा मन्त्री देहधर्ममुपाश्रितः ॥ ८६१ ॥
अन्त्येष्टिरत्र कर्तव्या तच्छिष्याद्यैर्विधानतः।
कर्ता नित्यक्रियां कृत्वा पञ्चरत्नैर्विशोधयेत् ॥ ८६२ ॥
प्रेतं नेत्रादिमार्गेण लोकान्तरविनिर्गतम्।
आकृष्य स्थापयेत्प्रेते जीवात्मानं गुरुक्तितः ॥ ८६३ ॥
पञ्चप्रवणयोगेन वियद्वह्ननिलात्मभिः।
मोक्षदे-पदमुच्चार्य चक्षुरादिसमुच्चरेत् ॥ ८६४ ॥

४३ इत्थम् इत्यारम्य अन्त्येष्टिप्रकरणं सर्वमेव मा. क इत्यत्र न प्राप्यते।

प्रेतनाम समुच्चार्य वदेदावाहयामि च ।
अनेनाऽऽवाहयेत्प्रेतं तत्र प्राणाँश्च विन्यसेत् ॥ ८६५ ॥
अङ्गप्रकल्पनं कुर्यान्मायया दीर्घसंयुजा ।
प्रतिष्ठाप्य घटं मन्त्री परेतं स्नापयेत्सुधीः ॥ ८६६ ॥
पञ्चगव्यैरघोरेण वर्द्धिन्याऽभिषिच्य तम् ।
शुद्धतोयेन संस्नाप्य भस्मना स्नापयेत्पुनः ॥ ८६७ ॥
प्रेतं दक्षिणमूर्ध्दानं न्यस्य दर्भास्तरे सुधीः ।
नववस्त्रस्रगालेपैरलङ्कृत्य विभूषणैः ॥ ८६८ ॥
अभ्यर्च्य गन्धपुष्पाद्यैर्मूलमन्त्रेण साधकः ।
सम्यग्विधानं सङ्कल्प्य मृतकं तत्र स्थापयेत् ॥ ८६९ ॥
ग्रामं प्रदक्षिणीकुर्वन् शङ्खभेर्यादिनिः स्वनैः ।
प्रेतस्थानं समाविश्य दक्षिणोत्तरमायतम् ॥ ८७० ॥
उपलिप्य समां भूमिं तत्र लाजातिलाक्षतान् ।
विकिरेत् सर्षपोपेतानविमानमथ न्यसेत् ॥ ८७१ ॥
संस्थाप्य तत्र चित्यग्निं परिस्तीर्य विलोमतः ।
पात्राण्यासादयेन्मन्त्री दक्षिणे विष्णुदैवतम् ॥ ८७२ ॥
प्रणितापात्रमासाद्य संपूज्य कुसुमादिभिः ।
दर्भैराच्छादिते मन्त्री वह्निकोणे प्रविन्यसेत् ॥ ८७३ ॥
दक्षभागे यजेद्देवं भैरवं मण्डलं क्रमात् ।
उक्तेन विधिना कृत्वा वह्नेर्द्विजिह्वादि कल्पनम् ॥ ८७४ ॥
तिलमण्डलसम्मिश्रं श्रपयेच्चरुमुत्तमम् ।
मृत्युञ्जयेन मन्त्रेण शतमष्टोत्तरं सुधीः ॥ ८७५ ॥
साज्येन चरुणा हुत्वा पञ्चरत्नैर्विशेषतः ।
जुहुयान्मूलमन्त्रेण क्रमादावरणान्तिकम् ॥ ८७६ ॥
एवं विलोमतो मोहान् सर्वमन्त्रान् गुरोस्तनौ ।
क्रमेण विलयं नीत्वा जुहुयाद् वाग्भवेन च ॥ ८७७ ॥
हुत्वाऽथ मूलमन्त्रेण प्रतिदेहं विलोमतः ।
तत्त्वानि विलयं नीत्वा सर्वमात्मनि योजयेत् ॥ ८७८ ॥
पुण्यपापं परेतस्य जुहुयान्मन्त्रमुच्चरन् ।
ततः पूर्णाहुतिं दत्त्वा योजयेत् परमे पदे ॥ ८७९ ॥
शिवशक्त्यात्मके शुद्धे पुनरावृत्तिवर्जिते ।

सच्चित्सुखमये साक्षात् तत्त्वातीते निराकुले ॥ ८८० ॥
इति संयोजतः प्रेतः शिष्येण परमे पदे ।
सन्त्यज्य मलकालुष्यं शम्भुभावाय कल्पयेत् ॥ ८८१ ॥
आज्येन जुहुयाद्दुर्गामघोरास्त्रेण मूलतः ।
अनुलोमविधानेन प्रायश्चित्ताय साधकः ॥ ८८२ ॥
परेत देहमानेन शयनं परिकल्पयेत् ।
वह्नेर्दक्षिणदिग्भावे कुलवृक्षसमुद्भवैः ॥ ८८३ ॥
शङ्कुभिर्दक्षिणाग्रैस्तु विल्वजैर्वा कुशैस्तथा ।
आस्तीर्य्य शयनं मन्त्री त्रिगुणीकृत्य तन्तुना ॥ ८८४ ॥
संवेष्ट्य पूजयेद् गन्धपुष्पाद्यैरूपचारकैः ।
आच्छाद्य नववस्त्रेण तत्र यन्त्रं लिखेत् सुधीः ॥ ८८५ ॥
पद्मं त्रिकोणं षट्कोणं कर्णिकं साष्टपत्रकम् ।
सार्ध्दलेखं ततस्तत्र पुष्पाण्याकीर्य सर्वतः ॥ ८८६ ॥
प्रेतं दक्षिणमूर्ध्दानं विन्यसेद्देहसाधकः ।
रक्षामन्त्रेण संकल्प्य ज्वालामालिनीविद्यया ॥ ८८७ ॥
प्रज्वाल्याघोरमन्त्रेण देहत्यागादितो बुधः ।
अघोरास्त्रेण मन्त्रेण मन्त्री पाशुपतेन वा ॥ ८८८ ॥
यावद्भष्मीभवत्येषां तावद्धोमं करोत्विह ।
स्तोत्रमन्त्रजपं कुर्युः समयज्ञाः समागताः ॥ ८८९ ॥
भष्मीभूते परे तस्मिन् देवान् सम्यक् समर्चयेत् ।
नित्याग्निं रक्षयेन्मन्त्री सम्प्राप्ते सप्तमेऽहनि ॥ ८९० ॥
निर्वाप्य पयस्थास्थीनि वेष्ठयेन्नव वाससा ।
तद्भष्मनि क्षेपेत्क्वापि विशुद्धे सलिलाशये ॥ ८९१ ॥
अस्थिकूटं खनेन्मन्त्री देवमातृगृहेऽथ वा ।
स्वगृहे वा निखन्यैतत्त्रिसन्ध्यं पूजयेदिदम् ॥ ८९२ ॥
पूर्वपूजां मृतदिने प्रतिमासं प्रकल्पयेत् ।
सम्पूर्णे वत्सरे कुर्यान्महोत्सवमहन्द्रितः ॥ ८९३ ॥
ततोऽस्थिकूटमुद्धृत्य नद्यां वा विधिसंस्पृशि ।
निः क्षिपेन्निखनेत्क्वाऽपि विशुद्धे धरणीतले ॥ ८९४ ॥
केनापि कीकसेनास्य प्रतिमां पादुकेऽथ वा ।
कृत्वा संपूजयेन्मन्त्री गुरुभक्तिपरायणः ॥ ८९५ ॥

देशान्तरमृतानां च जीवतामपि साधकः ।
दर्भपुञ्जैः पलाशैर्वा शालिपिष्ठेन वा पुनः ॥ ८९६ ॥
देहं कृत्वा यथापूर्वं शेषं कुर्याद्विचक्षणः ।
अथवा मनसा कुर्यदिकान्ते स्वयमास्तिकः ॥ ८९७ ॥
वाग्भवं दीपिनीज्वालामालिनीति पदन्ततः ।
क्रोधेहंसेन्दुहेत्यर्णान् संपुटत्वेन योजयेत् ॥ ८९८ ॥
एतानि तत्र बीजानि प्रणवो जीवकेशवौ ।
हंसेन्दु गान्तकुटिलवह्निबिन्दून् भगाश्रितान् ॥ ८९९ ॥
शिवशक्तिक्षमेन्द्राद्युवह्निर्वातार्तिसञ्चयम् ।
ज्वालामालिनीमन्त्रोऽयं कथितो मन्त्रकोविदैः ॥ ९०० ॥
मायाबीजं स्फुरद्वन्द्वं प्रस्फुरद्वितयं तथा ।
घोरघोरतरेत्यन्ते तनुरूपपदं वदेत् ॥ ९०१ ॥
चटप्रचट द्वितयं कहद्वन्द्वं वमद्वयम् ।
वन्धद्वयं समुच्चार्य घारयद्वयमुच्चरेत् ॥ ९०२ ॥
वर्मास्त्रान्तः समुद्दिष्टो वर्मात्माऽघोरमन्त्रकः ।
तारिणीं पशुवर्णान्ते कवचास्त्राक्षरौ वदेत् ॥ ९०३ ॥
मनुः पाशुपतास्त्रोऽयं क्षुद्रग्रहनिवारकः ।
पञ्चान्तकेन्द्रपावर्णान् यमधान्तसमन्वितान् ॥ ९०४ ॥
इन्द्ररुषान् सुधीः कुर्याद्वामकर्णेन्दुसंयुतान् ।
पञ्चरत्नमिदं प्रोक्तां मनोऽभिलषितप्रदम् ॥ ९०५ ॥

## अथ वामिनाम्

मृतस्य देशिकेन्द्रस्य शरीरं स्नाप्य वारिणा ।
कुलरत्नैर्विमिश्रेण गन्धपुष्पयुतेन च ॥ ९०६ ॥
श्रीखण्डकुङ्कुमाद्यैश्च सुरया लेपयेत्तनुम् ।
षोढान्यासविधानेन कृत्वा न्यासं विशेषतः ॥ ९०७ ॥
उपलिप्य महीं पश्चाद् कुलरत्नैः स गोमयैः ।
कृत्वा संस्तरणैः पुष्पैस्तिलदर्भैंश्च निःक्षिपेत् ॥ ९०८ ॥
अचर्येन्मण्डलं तत्र संवर्त्तममितद्युतिम् ।
संवर्त्तं पूजयेत्तत्र कुब्जीरसमितिज्ञया ॥ ९०९ ॥
सोऽहं देवी कुलाम्नाये प्रयोगाष्टकमध्यगः ।

पूज्यो भूतः कुलेशानि तिष्ठामीति न संशयः ॥ ९१० ॥
एवं कृत्वा ततः पश्चाद् देशिकेन शवं क्षितौ ।
संस्थाप्याऽऽच्छाद्य वस्त्रेण शिविकां परिकल्पयेत् ॥ ९११ ॥
तमाऽऽरोप्य पताकाभिः सशोभां शिविकां प्रिये ।
उत्क्षिप्य पुत्रकाचार्य्यैश्चतुर्भिर्विनयान्वितैः ॥ ९१२ ॥
महाप्रेतवने नीत्वा वाद्यमानैश्च वाद्यकैः ।
भूमेः परिगृहं तत्तु कार्यं कर्मविशारदैः ॥ ९१३ ॥
प्रोक्षणं मार्जनं चैव शोधनं चोपलेपनम् ।
अस्त्रेण कारयेत्सर्वं कवचेनावगुण्ठनम् ॥ ९१४ ॥
श्रीखण्डागुरुकाद्यैश्च सामान्यैर्वाथ चन्दनैः ।
देवदारुभवैश्चैव सरलैर्वा मनोहरैः ॥ ९१५ ॥
यथालाभेन चान्यैश्च शुकाष्ठैश्च सुसंहतै ।
तत्रानन्तासनं दत्त्वा धर्मादौ पाटकैर्युतम् ॥ ९१६ ॥
जलजं कल्पयेत्सर्वं तत्रोपरि शवं न्यसेत् ।
उत्तानमुत्तरशिरं दक्षिणाशान्तजानुकम् ॥ ९१७ ॥
नाभिसंस्थौ करौ कार्यौ उत्तानौ संपुटेन तु ।
स्थाप्य बाह्यस्थितं शवं गन्धैश्चैव मनोरमैः ॥ ९१८ ॥
श्रीखण्डकुङ्कुमैश्चैव कर्पूरमृगजैर्मदैः ।
पश्चाच्च हृदये तस्य ह्येभिर्द्रव्यैस्तथा परैः ॥ ९१९ ॥
कुलजैर्मण्डलं कार्यं षडस्रं तत्र चालिखेत् ।
पूजयेत् श्रीक्रमं तत्र उपचारैः पुरोदितैः ॥ ९२० ॥
ये मया कथिता देवि श्रीमूलक्रमपूजने ।
दीपाँश्च दापयेत्तत्र पूर्वाद्यष्ट यथाविधि ॥ ९२१ ॥
पात्राणि मन्त्रपूर्वाणि दिक्षु तत्र निवेशयेत् ।
महाप्रेतवनस्थानं भूतानां दापयेद् बलिम् ॥ ९२२ ॥
आनीयात्पावकं पश्चात् संस्कुर्याच्च यथोदितम् ।
पावकोऽपि क्रमं पूज्यः यथा च मृतके किल ॥ ९२३ ॥
पश्चाध्दोमः प्रकर्त्तव्यस्तिलक्षीरघृतादिभिः ।
तदेव पातकं देवि चित्तिमध्ये प्रवेशयेत् ॥ ९२४ ॥
इत्येवं संस्कृतिं कृत्वा समागत्य गृहे पुनः ।
चक्रपूजा प्रकर्त्तव्या योगिदेशिकपुत्रकैः ॥ ९२५ ॥

अनेन क्रमयोगेन पूजा कार्या पुनः पुनः।
तृतीयेऽह्नि तथा षष्ठे द्वादशे वा यथाक्रमम्॥ ९२६॥
तृतीयदिवसे गत्वा दाहस्थाने कुलाम्बिके।
आहृत्य भष्मचास्थीनि निखन्य च विनिक्षिपेत्॥ ९२७॥
तस्योपरि ततः पीठं कृत्वा स्थाप्य च पादुके।
अनेन विधिना देवि यस्यान्त्येष्टिर्भविष्यति॥ ९२८॥
स निर्धूय महापायं ममान्ते आगमिष्यति।
न संसारे पुनः क्वापि सृष्टिमार्गे भविष्यति॥ ९२९॥
न चाहमनृतं क्वापि वदामि कुलनन्दिनि॥ ९३०॥

तन्त्राणि यानि सकलानि नतानि मर्त्यैः,
सत्येव यानि न पुनः प्रकटानि तानि।
देशान्तरे कति कतीहन सर्वमस्ति,
ग्रन्थे त्वपूर्णवचने किमु दूषणं मे॥ ९३१॥
एकस्याः पदपद्मपूजनविधेर्निःशेषतो निर्णय
शम्भुः पञ्चमुखोऽप्यनेककवयुर्मृत्युञ्जयो न क्षमः।
दिग्विद्याक्रमनिर्णयोचिततया ग्रन्थे प्रवृत्तोऽस्मि य-
त्तच्चाञ्चल्यतरं कृतं बुधवरैः क्षन्तव्यमेव ध्रुवम्॥ ९३२॥

*इति श्रीतन्त्रचिन्तामणौ मातृकावर्णध्यानादि दशविद्यादि*
*नानामन्त्रभेदमुक्त्युपायन्त्येष्टिनिर्णयनाम चत्वारिंशत्तमः प्रकाशः।*



समाप्तश्चायं ग्रन्थः।
शुभमस्तु सर्वजगताम्।
शुभम्।